## GAEKWAD'S ORIENTAL SERIES.

Published under the Authority of the Government of His Highness the Maharaja Gaekwad of Baroda.

GENERAL EDITOR:
B. BHATTACHARYYA, M. A., Ph. D.,
Rājaratna.

---

No. LVIII

# श्रीपद्मानन्दमहाकाव्यम् ।

# PADMĀNANDA MAHĀKĀVYA

BY

## AMARACANDRA SŪRI

CRITICALLY EDITED
WITH INTRODUCTIONS, INDICES AND APPENDICES
BY

H. R. KĀPADĪĀ, M. A.,
POST-GRADUATE LECTURER AT THE BHANDARKAR ORIENTAL
RESEARCH INSTITUTE, FORMERLY ASSISTANT PROFESSOR OF
MATHEMATICS, WILSON COLLEGE, BOMBAY.



BARODA
ORIENTAL INSTITUTE
1932

# भूमिका

"लक्ष्मीभृद् वीतरागः क्षतमतिरखिलार्थज्ञताऽऽश्लिष्टमूर्त्ति-
र्देवेन्द्राच्र्योऽप्रसादी परमगुणमहारत्नदोऽकिञ्चनेशः ।
तत्त्वातत्त्वेतिवक्ता न वितथवचनो योगिनां भावगर्भ-
ध्येयोऽनङ्गश्च सिद्धेर्जयति चिरगतो मार्गदेशी जिनेन्द्रः ॥ १ ॥"

श्रमणभगवन्महावीरस्य शारदेन्दुकलाकुन्दमरन्दस्यन्दसुन्दरवाग्विलासिनि त्रिकालबाधाबाधिनि यशोविजयशालिनि स्वर्गापवर्गदायिनि शासने समभूवन् सुगृहीतनामधेयाः परमध्येयाः सर्वाङ्गसुन्दरा विश्वविश्वविश्वाससंश्रया विशुद्ध-विज्ञानप्रचण्डमार्तण्डखण्डिताखिलकुमतान्धकारा भुवनत्रयातिशायिगुणगरिमावतारा भूरयः सूरयः । तद्वंशे श्रीमद्'वायट'गच्छमलश्चक्रुर्विद्यामन्त्रबलिनः सज्जनव्रातधुर्या आचार्यवर्याः श्रीजिनदत्तसूरयः । एतेषामन्तेवासिन आर्हत-प्रवचनसमुन्नतिकारिणः श्वेताम्बरसम्प्रदायानुगामिनः श्रीवाग्देवीदत्तवरविराजिनः सूरिमन्त्रसाध्यसूरिपदशालिनः काव्यकल्पलतादिविधायिनः श्रीअमर-चन्द्रसूरय आसन् यानुद्दिश्य प्रस्तूयतेऽयं प्रस्तावः । एभिः परोपकारकरणप्रवीणान्तःकरणैः सञ्जप्त''सिद्धसारस्वत'मन्त्रमहिम्ना करतलामलकीकृतानेकसमय-रहस्यैः सुधासोदररसधारानिःस्यन्दिभिः सुसङ्गतवाक्यसन्दोहैः सदलङ्कृतानि पद्यानि सर्गबन्धेनोपनिबध्नद्भिः कविचक्रचक्रवर्तिभिः श्रीमद्'ऽणहिलपाटक'-निवासि'वायट'वंशावतंसपद्मप्रधानप्रधानप्रार्थनया विरचितं नगरादिवर्णनीयनि-कुरम्बव्यावर्णनेन पद्मानन्दमहाकाव्यं श्रीजिनेन्द्रचरितापराह्वयम् ।

ननु पद्मानन्दमहाकाव्यमित्युक्ते प्रस्तुतसन्दर्भस्य महाकाव्यत्वं प्राप्तम् । तत्र तावदेतस्य काव्यत्वमपि स्यान्न वेत्यत्रैव सन्देह इति चेत् सङ्गच्छन्तेऽत्र विविधानि काव्यलक्षणानि । तानि चेमानि—

"[३]शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥ १० ॥"

इति काव्यादर्शे प्रथमे परिच्छेदे महाकविश्रीदण्ड्याचार्यः ।

---

१ श्रीहरिभद्रसूरिवरविरचिते सर्वज्ञसिद्धिप्रकरणे प्रथमं पद्यम् । २ प्रेक्ष्यतां ३५८तम-पृष्ठगतं १४६तमं पद्यम् । ३ काव्यम् ।

"काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते"

इति काव्यालङ्कार(सू. १)वृत्तौ प्रारम्भे श्रीवामनः।

"काव्यस्यात्मा ध्वनिः"

इति [1]ध्वन्यालोके प्रथम उद्द्योते श्रीयुत आनन्दवर्धनः।

"निर्दोषं गुणवत् काव्य—मलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन्, कीर्त्तिं प्रीतिं च विन्दति ॥ २ ॥"

इति सरस्वतीकण्ठाभरणे प्रथमे परिच्छेदे श्रीभोजदेवः।

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि"

इति [2]काव्यप्रकाशे प्रथम उल्लासे श्रीमम्मटभट्टः।

(३) "वाक्यं रसात्मकं काव्यम्"

इति साहित्यदर्पण आद्ये परिच्छेदे श्रीविश्वनाथः।

"अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्"

इति [3]काव्यानुशासने षोडशे पृष्ठे मुनिचक्रशक्रश्रीहेमचन्द्रसूरिः।

"साधुशब्दार्थसन्दर्भं, गुणालङ्कारभूषितम्।
स्फुटरीतिरसोपेतं, काव्यं कुर्वीत कीर्तये ॥ २ ॥"

इति वाग्भटालङ्कारे प्रथमे परिच्छेदे श्रीवाग्भटः कविः।

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्"

इति [4]रसगङ्गाधरे आद्ये आनने पण्डितजगन्नाथः।

"निर्दोषा लक्षणवती, सरीतिर्गुणभूषिता।
सालङ्काररसानेक—वृत्तिर्वाक् काव्यनामभाक् ॥७॥"

इति चन्द्रालोके पीयूषवर्षेत्यपरनामधेयः श्रीजयदेवः।

"काव्यं रसादिमद् वाक्यं, श्रुतं सुखविशेषकृत्।
हितायं सुकविः कुर्यात्, तद्धेतुः प्रतिभादिकम् ॥ १ ॥"

इति [5]अलङ्कारशेखरे श्रीकेशवमिश्रः।

---

१ काव्यमालायां २५तमग्रन्थाङ्करूपेणायं ग्रन्थः प्रसिद्धिं नीतः। २ आनन्दाश्रमसंस्कृत-ग्रन्थावल्यां ग्रन्थाङ्के ६६तमे नवमे पृष्ठे। ३ काव्यमालायां ७०तमे ग्रन्थाङ्के। ४ काशी-संस्कृतग्रन्थावल्यां १९०३तमे खिस्ताब्दे मुद्रितः। ५ काव्यमालायां ५०तमे ग्रन्थाङ्के।

एवमेव श्रीमहिमभट्ट-शौद्धोदनि-प्रभाकरादिभिर्निर्दिष्टस्य च काव्य-लक्षणस्य साकल्येन सद्भावः प्रस्थापयितुं शक्यते । तत्र तावदुपरितनेभ्यो लक्षणेभ्यः कतिपयलक्षणानुसारेणास्य ग्रन्थस्य परीक्षणं क्रियते—

उपरिनिर्दिष्टकाव्यप्रकाशादिगतलक्षणानुसारेणास्मिन् ग्रन्थे प्रायः प्रतिपदं प्रेक्षावतां प्रेक्षणपथगोचरीभवत ओजआदिगुणगणस्य रूपकोपमाद्यर्थालङ्कार-यमकानुप्रासादिशब्दालङ्कारसन्दोहस्य च दिग्दर्शनार्थं कतिपयानि स्थलान्यवत-रणपूर्वकाणि निर्दिश्यन्ते । तत्रौजोगुणविशिष्टनिदर्शनं यथा—

"उद्दण्डदोर्मण्डन(ल ?)कुण्डलीभवत्—कोदण्डदण्डोद्धतकाण्डमण्डलैः ।
विखण्डितद्विड्नृपतुण्डताण्डव—स्तवान्ववायेऽजनि दण्डको नृपः ॥२१२॥"

इति तृतीये सर्गे ।

माधुर्यगुणविभूषिते पद्ये इत्थम्—

"ताराऽध्वताराततटिनीभुजङ्ग—तरङ्गगङ्गासिकताकणानाम् ।
सङ्ख्यां स कृत्वा कुरुतां स्वकर्म, यो धर्ममीप्सुः कृतगेहकृत्यः ॥ १७ ॥"

इति द्वितीये सर्गे । चतुर्थे सर्गे सप्तविंशस्य पद्यस्य च निम्नलिखितः पूर्वार्द्धः—

"एतानि मानिनीनां, मानवितानस्य तानवकराणि ।"

प्रसादगुणविशिष्टानि पद्यानि त्वेवम्—

"वनक्रोडे वासं यदकृत कृती तेन तपसा
ततस्तत्केशानामलभत कलापी किल तुलाम् ।
अतश्चूलामौलिः प्रमदकलितो नृत्यतितमां
समेते जीमूते सुहृदि हृदयानन्दजननम् ॥ १६७ ॥

स्वरेणाम्बरचुम्बिना प्रतिदिशं जातैश्चतुर्भिर्जल-
क्रोडे तत्प्रतिबिम्बितैर्यदचरत् 'पञ्चाग्नि'सञ्ज्ञं तपः ।
तल्लक्ष्मीसदनं बभूव नलिनं लेभे न शोभां पुन-
स्तद्वक्त्रस्य ततः क्षपास्वलिमिषं भुक्त्वा विषं मूर्च्छति ॥ १६८ ॥

पुरस्कृत्य स्फीतं कुचकलशरूपं किल फल-
द्वयं सेवावृत्त्यै नवपरिचये यौवनमदः ।
तदीये शृङ्गारिण्युरसि सततावासरसिकं
त्रिलोकीजेतारं विषमशरनेतारमभजत् ॥ १६९ ॥

तद्वक्रेण तिरस्कृतः सितरुचिस्तल्लोचनस्पर्द्धिनं
स्वोत्सङ्गेऽकृत यं कुरङ्गममुना जज्ञे कलङ्की ततः ।
सख्यं तत्स्मितसौरभारिभिरसौ कृत्वा समं कैरवै-
स्तद्दन्तद्युतिमण्डलापहरणं काङ्क्षन् बभूव क्षयी ॥ १७० ॥"

इति सर्गेऽष्टमे ।

अलङ्कारा विविधा दरीदृश्यन्तेऽस्मिन् ग्रन्थे । तत्रापि मालोपमा-ऽर्थान्तर-न्यास-दृष्टान्त-समस्तरूपका-ऽनुप्रासादयो विशेषतः । अकारादिक्रमेणैतदुल्लेखः कतिपयस्थलनिर्देशात्मकः क्रियते । तथाहि—

अतिशयोक्तिः ३—१०,३२; १६–२०.

अनुप्रासः २—१७, ३३, ४५, ५५, ९०, २८६; ३–२, ५, १९; ४–६, ७, ११,३९,१४९,१५४, १५५, १५६, १५७, २१२; ७–२८३; ८–६५; ११–४. १८–१४२.

अन्योन्यालङ्कारः ६–१५७; १६–७६.

अपह्नुतिः ८–९३; ११–५६.

अप्रस्तुतप्रशंसा ४–१०५.

अर्थान्तरन्यासः २–८५,८६; ३–८३, १०८, २२५; ४–३५, १००, १३०; ५–१३२,१८; ६–३७, ८३,९१,१३७; ७–२२,१३८,१५६,४८०,४८१; ८–१५८; १०–५८; ११–३४; १४–२४९; १५–१३, ९९, ११५, १४४, १६५; १६–८५; १७–२९, २५४; १८–४०.

अर्थापत्तिः ३–२३२; १६–२६४.

असङ्गतिः ६–१०३.

उत्प्रेक्षा २–७०,८७,८८; ३–५१,५२; ४–५३; ९–९०,९१; १७–३९०.

उपमा ५–१५.

एकावली ४–१८५.

एकावलीसङ्कीर्णा मालोपमा ५–११.

काव्यलिङ्गम् १७–२१.

कैतवापह्नुतिः—२–७८;४–५५; १६–७७.

---

१ द्व्यर्थकानां पदादीनामत्र समावेशोऽकारि मया। २ उक्तं च काव्यादर्शे—
"श्लोकेषु नियतस्थानं, पदच्छेदं यतिं विदुः। तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥ २० ॥"

सन्देहः १५-६०.

समस्तरूपकम् २-१६१; ३-१७९,(१); ४-५७,५८,६३; ८-१२०,१२१; १६-२४७.

समासोक्तिः १३-४४८.

सहोक्तिः-३-२३७;४-२१६.

सापह्नवा उत्प्रेक्षा ११-१४; १८-११६.

सारः ४-१०७.

सत्यप्येवं गुणसन्दर्भगुम्फितेऽस्मिन् ग्रन्थे पीयूषपूर्णे रत्नाकरे कालकूटकणस्येव न दोषदूषणगणस्याप्यसद्भावः। तथाहि—

पदादाववश्यविधेयाया यतेर्निम्नलिखितेषु स्थलेष्वकरणं छन्दःशास्त्रनियमभङ्गः काव्यविषयकदोषश्च—

"वसुधाधिपतिर्विम—लवाहनोऽनुत्तरामरः" (स. १, श्लो. ९०)

"स्तस्योत्कीर्तिरचीकरज्जिनचरित्राणां चतुर्विंशतिम्" (स. १, पृ. १३, श्लो. २)

"पृथ्व्यां पूर्वेषु विदे—हेषु द्वीपेऽस्ति 'धातकी'खण्डे" (स. ४, श्लो. ११७)

"संसारेऽस्मिन् संसा—रिणां चतुरशीतियोनिलक्षेषु" (स. ४, श्लो. १५२)

तेषामथ क्षितिभृतां मिथः सप—क्षाणां क्षणात् क्षयकृते स पुष्कलः"

(स. ५, श्लो. १११)

"युक्तावेव विपद्य सद्य उदपद्येतां स्वभावार्जवा-" (स. ५, श्लो. १४०)

"स्वर्लोकजैत्रो विजयोऽस्ति पुष्क—लावत्यभिख्यः श्रितपुष्कलश्रीः"

(स. ६, श्लो. १२८)

"अलक्ष्यलक्ष्मणा बाले—न्दुनेवेशालिकस्थली" (स. ७, श्लो. ४०६)

"ईशानप्रभुरुत्तरां तु रमणीयाह्वे दिशं संश्रिते

नित्योद्द्योत इति श्रुते तु चमरेन्द्रो दक्षिणाशास्पृशि" (स. ७, श्लो. ६११)

"रोम कोमलतरं दधतो गा—न्धारगानमिव यानमनोज्ञाः" (स. ८, श्लो. ६१)

"तद् वपुर्नहि तदा त्ववसर्पि—ण्यां क्रमेण न भवत्यनुभावः" (स. ८, श्लो. १४५)

"कुण्डान्तराऽऽविरकरोदिह कश्चन त्रा—यस्त्रिंशनाकसदनो ज्वलनं ज्वलन्तम्।"

(स. ९, श्लो. ९७)

"दारुमुख्यहरणं कृषिं वणि—ज्यादिकर्मपटवीमकल्पयत्" (स. १०, श्लो. ७४)

उपरितनावतरणगतयतिदोषपरिहारार्थं किमप्युच्यते। तत्र तावद् वैद्यमहामहोपाध्यायश्रीमद्गङ्गादासविरचितायां छन्दोमञ्जर्यां नैष दोषः स्वीकृतः। उक्तं च तत्र—

"श्वेतमाण्डव्यमुख्यास्तु, नेच्छन्ति मुनयो यतिम्।
इत्याह भट्टः स्वग्रन्थे, गुरुर्मे पुरुषोत्तमः॥ २०॥"

किञ्च सुप्रसिद्धकवयितृकृतिष्वपि यतिभङ्गो दृश्यते। तथाहि—

"सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
लीलालूनपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम्।
याञ्चादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं कथ्यताम्?॥ ४१॥"

इति श्रीमुरारिकृते अनर्घराघवाख्ये काव्ये (पृ. १३३) तृतीयेऽङ्के तृतीयपादे कलहायन्ते इत्यत्र हावर्णावसाने संलक्षिता यतिः।

अपरञ्च श्रीजयदेवविरचिते गीतगोविन्दे (स. १२) निम्नलिखिते पद्ये चतुर्थे चरणे सप्तमचतुर्दशयोर्यतिदोषः—

"साध्वी माध्वीक! चिन्ता न भवति भवतः शर्करे! कर्कराऽसि
द्राक्षे! द्रक्ष्यन्ति के त्वाममृत! मृतमसि क्षीर! नीरं रसस्ते।
माकन्द! क्रन्द कान्ताधर! धरणितलं गच्छ यच्छन्ति यावद्
भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग् वचांसि॥ १२॥"[१]

"चारित्रमुत्तालमपालयं चिरं, जग्राह चान्तेऽनशनं तपःशिखाम्"
—(स. ३, श्लो. १८४)

"पुत्ररत्न! निखिलेन्द्रनतोऽहं, त्वत्प्रभावविभवेन बभूव" (स.८, श्लो. १९)

---

१ एवंविधो दोषोऽन्यत्रापि, यथाहि—१४-४९, २४३; १८-१८३।

२ छन्दोमञ्जर्यामिदमपि निदर्शनं वर्तते—

"कन्याद्रिप्रतिरोधिताः कति नदीपाथोनिधिप्लाविताः
कन्येवाटवितां गताः कति न वा भूदेवदेवैर्वृताः।
भूम्यो भूमिपतीन्द्र! तावकयशःप्रस्तावनामण्डली
कोष्ठीकृत्य जगद्धनं कतिवराटीभिर्मुदं यास्यति॥"

अत्र तुरीये पादे द्वादशाक्षरे यतिभङ्गः कविनाऽनेन समादृतः।

"निमित्तमावामनिभालने विभो–र्बभूविवास्या धिगिति स्खलद्रुतेः"

—( स. १२, श्लो. १६४ )

"मेदस्विनं खेदमहं महात्मन्! चकार कामं मम तत् क्षमस्व"

—( स. १७, श्लो. ३६६ )

अत्र 'जग्राह' 'बभूव' 'बभूविव' 'चकार' इत्युत्तमपुरुषे परोक्षप्रयोगोऽसमीचीनः। उक्तं च 'परोक्षे लिट्' (पा० ३–२–११५) इति श्रीपाणिनिकृताष्टाध्यायीसूत्रस्य सिद्धान्तकौमुदीसञ्ज्ञकव्याख्यायां २७७तमेऽङ्के—

"उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । सुप्तोऽहं किल विललाप, बहु जगद पुरस्तात् तस्य मत्ता किलाहम् ।"

"देवीगणे गुरुमुदा धवलाद् ददाने, तेषां समं करसरोरुहमोक्षणेन ।
मोक्षं शचीपतिरचीकरदश्वलानां, बन्धो बभूव सुमहान् मनसां मिथस्तु॥१००॥"

इति नवमसर्गगते पद्ये 'अचीकरत्' इति प्रेरकप्रयोग औचित्यं न वहति ।

एवं सत्यपि, उक्तदोषेषु यतिभङ्गात्मकस्य च्छन्दोदूषणस्य कैश्चिद् दोषरूपतयाऽनङ्गीकृतत्वेन, व्याकरणसाहित्यशास्त्रादिविषयकदूषणानां केषाञ्चनानित्यत्वेन, केषाञ्चित् कैरपि दोषरूपेणानभ्युपगतत्वेन, कतिपयानां निरोधस्यैव प्रायोऽशक्यतयाऽवश्यंपातेन, शेषाणां च कवे रभसप्रवृत्त्या निरङ्कुशतया वा प्रयुक्तानां क्षन्तव्यत्वेन भवति परिहारः समस्तानामपि दोषाणाम्[1] । स तु दोषाणामत्यन्ताभावस्य द्रविडप्राणायामवत् कृच्छ्रसाध्यत्वेन, दोषाणामीषत्सद्भावस्याप्यरुचिग्रस्ततया च सहृदयहृदयानां हृदयङ्गमतामावहति न वेति प्रश्नः ।

किञ्च न चैवंविधदोषाणामिहैवोपलब्धिः । एतत्पूर्वापरेषु च समानजातीयेषु काव्येषु तत्कर्तृणां कवीश्वराणां प्रमादशब्दाभिधेयं प्रवर्तनं न्यूनाधिकरूपेण दृष्टिपथमवतरति । अत एव साधु प्रोक्तं कविनाऽपि सता सतां धुरीणेन श्रीनयचन्द्राचार्येण स्वकीये हम्मीरमहाकाव्ये (स. १४)—

"[2]प्रायोऽपशब्दादिकृतोऽपि दोषो, न चिन्तनीयो मम मन्दबुद्धेः ।
न कालिदासादिभिरप्यपास्तो, योऽध्वा कथं वा तमहं त्यजामि ?॥३८॥"

---

१ उक्तं च साहित्यदर्पणे काव्यलक्षणप्रसङ्गे यदुत "तस्मादव्याप्तिर्लक्षणा दोषः" ।

२ सन्तुल्यतां यत् प्रोक्तं केनचन—

"अपशब्दशतं माघे, भारवौ तु शतत्रयम् ।
कालिदासे न गण्यन्ते, कविरेको धनञ्जयः ॥"

एवं चास्य श्रीजिनेन्द्रचरित्रस्य विविधकाव्यलक्षणानुसारेण काव्यत्वे प्रस्थापितेऽस्य महाकाव्यत्वप्रसाधनार्थं मीमांस्यते। तत्र काव्यादर्शे प्रथमे परिच्छेदे महाकाव्यलक्षणं यथा—

"सर्गबन्धो महाकाव्य-मुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तु-निर्देशो वाऽपि तन्मुखम्॥ १४॥
इतिहासकथोद्भूत-मितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं, चतुरोदात्तनायकम्॥ १५॥
नगरार्णवशैलर्तु-चन्द्रार्कोदयवर्णनैः।
उद्यानसलिलक्रीडा-मधुपानरतोत्सवैः॥ १६॥
विप्रलम्भैर्विवाहैश्च, कुमारोदयवर्णनैः।
मन्त्रिदूतप्रयाणाजि-नायकाभ्युदयैरपि॥ १७॥
अलङ्कृतमसङ्क्षिप्तं, रसभावनिरन्तरम्।
सर्गैरनतिविस्तीर्णैः, श्रव्यवृत्तैः सुसन्धिभिः॥ १८॥
सर्वत्र भिन्नवृत्तान्तै-रुपेतं लोकरञ्जकम्।
काव्यं कल्पान्तरस्थायि, जायेत सदलङ्कृति॥ १९॥"

अथाधुनाऽवतार्यते परीक्षाभूमौ श्रीजिनेन्द्रचरित्रम्। अत्रैकोनविंशतिः सर्गसङ्ख्या[२]। प्रथमं तावदेकैकस्मिन् सर्गे कियन्ति पद्यानीति सूच्यते येन सर्गा अतिविस्तीर्णाः सन्ति न वेति निर्धारणं सुशकं भवेत्। तथाहि-

(१)१३०+३, (२)३२४+२, (३)२४०+२, (४)२४५+२, (५)१४०+२, (६)२५९+२+१, (७)६९३+२, (८)१७२+२, (९)१२३+२, (१०)१२७+२, (११)

---

१ सन्तुल्यतां यदुक्तं काव्यकल्पलतायां (प्र. १, स्त. ५)—
"अथ वर्ण्यानि कथ्यन्ते, तानि यानि कवीश्वरैः। महाकाव्यप्रभृतिषु, प्रबन्धेषु बबन्धिरे॥
राजाऽमात्यपुरोहितौ नृपवधू राजाङ्गजः सैन्यपो देशग्रामपुरीसरोऽब्धिसरिदुद्यानान्यरण्याश्रयाः।
मन्त्री दूतरणप्रयाणमृगयाश्वेभार्त्विनेन्दूदया वीवाहो विरहः स्वयंवरसुरापुष्पाम्बुखेला रतम्॥"
एतानि प्रायः सर्वाण्यपि दरीदृश्यन्तेऽत्र व्यावर्णितानि सप्रसङ्गं, तेन सिध्यतितरां निर्विवादं महाकाव्यत्वमस्य।

२ अनेन साहित्यदर्पणे षष्ठे परिच्छेदे निर्दिष्टं निम्नलिखितं महाकाव्यलक्षणमपि न व्यभिचरति—
"नातिस्वल्पा नातिदीर्घा, सर्गा अष्टाधिका इह॥ ३२०॥
नानावृत्तमयः क्वापि, सर्गः कश्चन दृश्यते।"

८७+२, (१२)१६५+२, (१३)४६९+२, (१४)३११+२, (१५)२७०+२, (१६) २८०+२, (१७)४०७+१+१, (१८)३२१+२, (१९)६२+१। अत्र ११, १९ इति सर्गद्वयं एकशतानधिकपद्यसङ्ख्यात्मकम्; १, ५, ८, ९, १०, १२ इति सर्गषट्कं द्विशताः; ३, ४, ६, १५, १६ इति सर्गपञ्चकं त्रिशताः; २, १४, १८ इति सर्गत्रितयं चतुःशताः; १३, १७ इति सर्गयमलं पञ्चशताः; ७ इति सर्गाद्वैतं सप्तशताः।

चतुर्विंशतिजिनेन्द्रेभ्यः श्रीपुण्डरीकादिगणधरेभ्यः श्रुतदेवतायै च नमस्कारकरणात्मकमङ्गलरूपेण चतुर्विंशतितीर्थपतिचरित्रप्रणयनरूपवस्तुनिर्देशद्वारा मुखम्। कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिवरविरचितः श्रीत्रिषष्टिशलाकापुरुषचरित्राख्यो महाप्रबन्ध ऐतिहासिकसामग्रीसमृद्धः कविनाऽऽश्रीयते। श्रीऋषभस्वामिनामाऽऽद्यो जिनेशो नायको यः समस्ति सत्तमः शान्तचेतसाम्, विशिष्टः प्रतिष्ठावताम्, अग्रगण्यो गुणवताम्, आद्यो विद्यावताम्, आश्रयोऽपूर्वः स्थेयःसंयमश्रियाम्।

अस्मिन् काव्ये महाकाव्याङ्गभूतवर्णविषयान्तर्गतनगरादिवर्णनानि यथा—

(१) नगरवर्णनम्—२—११—१३; ३—७—२३; ५—२—४; १३—३३३—३४०; १७—३४—४०
(२) अर्णववर्णनम्— १५—५५—६१
(३) शैलवर्णनम्—१८—२५३—२५६
(४) ऋतुवर्णनम्—
(अ) वसन्तः ७—१४—१९ ११—३—१७
(आ) वर्षा २—९५—१०५; ११—२६—३८
(इ) ग्रीष्मः २—८४—९४; ११—१८—२५
(ई) शरद् ११—३९—५०
(उ) हेमन्तः ११—५१—६०
(ऊ) शिशिरः ११—६१—७०
(५) सूर्योदयः २—२९३—२९७
(६) उद्यानक्रीडा ३—६१—७२
(७) सलिलक्रीडा ३—७३—८५
(८) विवाहः ९—२—१०५
(९) मन्त्रिवर्णनम् ३—९७—१७५; १७—५—२९
(१०) दूतवर्णनम् १७—४१—१०१;
(११) प्रयाणवर्णनम् २—६१—१०६; १७—१०२—१७२
(१२) आजिवर्णनम् १७—२०१—२२०, २८८—३६०
(१३) स्वर्गवर्णनम् ४—१७—३२,

प्रायः शृङ्गार—हास्य—करुणा—रौद्र—वीर—भयानक—बीभत्सा—ऽद्भुत—शान्त—

वात्सल्य–भक्तीति सर्वेषां रसानां यथास्थानमुद्भवः कृतः कविवरेण । तत्र प्राधान्येन वर्णितानां कतिपयानां निर्देशो यथा—

शृङ्गारस्य ४–४२–७०, करुणस्य ४–७६–९१, बीभत्सस्य ४–१६१–१७५, अद्भुतस्य ४–१२–१४, भक्तेः ७–६६०–६७०, १४–६६–८२,१७१–१८१ ।

चतुर्दशं सर्गं विहाय प्रायः शेषेषु समस्तेषु सर्गेष्वेकवृत्तमयानि पद्यान्यवसाने त्वन्यवृत्तकानि । चतुर्दशे सर्गे वृत्तवैविध्यं वर्तते, परन्तु न तद् दोषायेत्यवगम्यते साहित्यदर्पणात् शिशुपालवधगतचतुर्थसर्गस्य किरातार्जुनीयगतपञ्चमसर्गस्य च तथाविधरचनावलोकनाच्च ।

एवं चास्य महाकाव्यत्वस्य सिद्धौ सञ्जातायामप्येतन्निवेदनं नानावश्यकं यदुत कलिकालसर्वज्ञश्रीहेमचन्द्रसूरीश्वरसन्दब्धे काव्यानुशासने ३३०तमे पृष्ठे प्रदर्शितं निम्नलिखितं—

"पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्यवृत्तसर्गाश्वाससन्ध्यवस्कन्धबन्धं सत्सन्धि शब्दार्थवैचित्र्योपेतं महाकाव्यम्"

—महाकाव्यलक्षणमपि सङ्गच्छते । किञ्च साहित्यदर्पणे श्रीविश्वनाथकविनाऽभिहितं महाकाव्यस्वरूपमपि न व्यभिचरति । एवं चास्य सरसस्फुटप्रसादगुणप्रधानबन्धबन्धुरस्य यमकश्लेषादिदुष्करालङ्कारसमलङ्कृतस्य भिन्नान्तिमवृत्तसमेत[2]समानजातीयपद्यबद्धस्य नानाविधविदग्धोदारार्थव्यञ्जकसु[3]भाषितावलीशबलीकृतस्य रसानुरूपसन्दर्भगर्भितस्य शा[4]न्तरसप्रधानस्य पुरुषार्थचतुष्टयी-

---

१ प्रेक्ष्यतां त्रयोदशपृष्ठगता टिप्पणी ।

२ क्वचिदन्तरान्तराऽन्यच्छन्दोनिबन्धस्य प्रायोग्रहणं क्वचिद्ग्रहणं च न दूषणार्हम् ।

३ उदाहरणार्थं कतिपयानि पदानि पद्यानि चावतार्यन्ते, कतिपयानां तु केवलं स्थाननिर्देशः क्रियते । "श्रेयांसि बहुविघ्नानि" (१–५५); "सतां हि योगः सुकृतप्रयोगः" (२–१८); "धनप्रदः प्राणिषु धर्म एव" (२–३८), "न जीवितादिष्टतमं समस्ति" (२–२००), "सन्तः क्षमासन्ततिचारुचित्ताः" (२–२२०); "कला हि मूलं खलु जीविकायाः" (६–२१);

"मूर्खो वरं दुश्चरितो न विद्वान्, वरं गृहस्थो न यतिः कुशीलः ।
निःस्वो वरं नो धनवानदाता, क्लीबो वरं स्त्रीकृतरुग् न शक्तः ॥ २–१४७ ॥"

"परोपकारैकपराः परेषां, दोषान् गुणत्वेन विवर्तयन्ते ।
सुस्वादुतां भस्म गुडा नयन्ति, क्षारं घना वारिधिवारि यद्वत् ॥ २–१५३ ॥"

३–२६,५७,८५,९८,१०५,१७३,१७४,१८५,२१६; ३–१०३ ।

४ शान्तरसस्य श्रेष्ठत्वं व्यावर्णि श्रीमद्भट्टतौतेन ।

मुख्यमोक्षाभिव्यञ्जकस्य च पद्मानन्दाभिधस्य महाकाव्यस्य प्रतिसर्गप्रान्तिमपद्ये बालभारतवद् '[1]वीर'शब्दस्य निवेशितत्वात् काव्यादर्शेऽग्रिमे परिच्छेदे प्रोक्तेन निम्नलिखितेन—

"कविभावकृतं चिह्न-मन्यत्रापि न दुष्यति ।
मुखमिष्टार्थसंसिद्ध्यै, किं हि न स्यात् कृतात्मनाम् ? ॥ ३० ॥"

इति लक्षणेनापि न विसंवादः ।

अपरञ्च पूर्वोदीरितदोषेषु सत्स्वपि कलङ्क इव शशाङ्कस्य कण्टककदम्ब इव कमलनालस्यास्य महाकाव्यस्यामूलचूलं नानारसातिशयं प्रस्रवतः, आकण्ठं सुमनसां मनस्सु मुदमादधतः, मधुमधुरं हितमुपदिशतः, विविधविज्ञेयवस्तुवृन्दमवगमयतः, विवेकपूर्वकमसारतापरित्यागं शिक्षयतः, प्रवीणतयाऽनेकविधशास्त्रसमुचितोपादेयमुपवर्णयतः, एवं च कलानिधिनिर्मलं निजनिर्मातुर्यशःपुञ्जमधिजगत्त्रितयं प्रथयतश्च प्रस्तुतस्य सन्दर्भस्य न किञ्चिदूनमादेयत्वमिति मे मतिः ।

अथैतन्महाकाव्यविधातारः पापपङ्कप्रक्षालनाम्भसा सौवदर्शनेन प्रशमरसपेयूषवर्षिण्या वाचा च कदा कतमां कियतीं च सरत्नां रत्नाकरवलयां वसुमतीन्धरां कांस्काञ्जनांश्च पावयामासुरिति जिज्ञासायामनेकग्रन्थपर्यालोचने प्रवृत्ते मलधारिश्रीराजशेखरसूरिभिः १४०५तमे विक्रमाब्दे विरचिते प्रबन्धकोशापरनामधेये श्रीचतुर्विंशतिप्रबन्धेऽयमुल्लेखः—

"श्री'अणहिल्लपत्तना'सन्नं '[2]वायटं' नाम महास्थानमास्ते चतुरशीतिमहास्थानानामन्यतमत् । तत्र पर[3]पुर[4]प्रवेशविद्यासम्पन्नश्रीजीवदेव[5]सूरिसन्ताने श्रीजिनदत्तसूरयो जगर्जुः । तेषां शिष्योऽमरो नाम प्रज्ञालचूडामणिः । स

१ अन्यैरपि पूर्वापरमहाकविभिरियं पद्धतिरादृता दरीदृश्यते, तथाहि—

श्रीभारविणा किरातार्जुनीये 'लक्ष्मी'पदप्रयोगोऽकारि, श्रीयुतेन शिशुपालवधे 'श्री'-शब्दस्य, श्रीप्रवरसेनेन महासेतुबन्धे 'अणुराय'( अनुराग )चिह्नस्य, श्रीरत्नाकरेण हरविजये 'रत्न'पदस्य, विष्णुजये 'विष्णु'पदस्य श्रीत्रिविक्रमभट्टेन, दमयन्तीकथायां च 'हरचरणसरोज'शब्दस्य । जैनैरपि मुनिमतल्लिकैः कक्षीकृतेयं शैली । एतदुदाहरणार्थं विलोक्यतां श्रीशोभनस्तुतेर्मदीया भूमिका ( पृ. १९ ) ।

२ इदमद्याप्यणहिल्लपाटकतो दशक्रोशं द्वादशक्रोशं वा खेटकप्रायं वर्तते, तत्र च स्फाटिकरत्नप्रतिमाप्रतिभासितं चरमजिनश्रीमद्वर्द्धमानस्वामिनश्चैत्यं जीर्णा महती वापी च दृष्टिपथं समायाति जनानाम् । एतद् 'वायडा'वणिजां कुलदेवतास्थानम् । ३ परपुरप्रवेशविधिर्योगशास्त्रे ( प्र. ५, श्लो. २६४–२७३ ) दृश्यते । ४ "पुरं शरीरे" इति हैमः । ५ एषां सविस्तरचरित्रं श्रीचतुर्विंशतिप्रबन्धे तृतीये प्रबन्धे ( पृ. १३–१७ ) समस्ति, सङ्क्षिप्तं तु प्रस्तुतकाव्यान्ते प्रयुक्तायां सूरिविरचितायामेव प्रशस्त्यां प्रेक्षन्तां प्रेक्षावन्तः । पुनरुक्तभयान्नात्र लिख्यते ।

श्रीजिनदत्तसूरिभक्तात् कविराजादरिसिंहात् 'सिद्धसारस्वतं' मन्त्रमग्रहीत्। तद्गच्छमहाभक्तस्य विवेकनिधेः कोष्ठागारिकस्य पद्मस्य विशालतमसदनैकदेशे विजने एकविंशत्या ऽऽचाम्लैर्निद्राजया-ऽशनजय-कषायजयादिदत्तावधानस्तं मन्त्रमजपत्। विस्तरेण होमं च चक्रे। एकविंशतितम्यां रात्रौ मध्यप्राप्तायां नभस्युदिताच्चन्द्रबिम्बान्निर्गत्य स्वरूपेणागत्याऽमरं भारती करकमण्डलुजलममलमपीप्यत्, वरं च प्रादात्—सिद्धकविर्भव, निःशेषनरपतिपूजागौरवितश्चैधि। इति वरं दत्त्वा गता भगवती। जातः कविपतिरमरः। रचिता काव्यकल्पलता नाम कविशिक्षा, छन्दोरत्नावली, सूक्तावली च। कलाकलापाख्यं च शास्त्रं निबद्धम्, बालभारतं च[2][3]। बालभारते आदिपर्वणि (स० ११) प्रभातवर्णने[4]—

१ पुत्रोऽयं लवणसिंहस्य लावण्यसिंहापरनामधेयस्य। यदाहाऽमरपण्डितः सुकृतसङ्कीर्तने अष्टमदशमसर्गयोः प्रान्ते—

"लावण्यसिंहतनयाननसोमरश्मि–स्तोमं खलास्यकमलालिकलापहारी।
श्रीवस्तुपालसचिवाधिपकीर्त्तिदुग्ध–सिन्धुं तरङ्गयति नित्यमयं प्रबन्धः॥ ४॥"
"यत् कवेर्लवणसिंहजन्मनः, काव्यमेतदमृतोदधीर्घिका।
वस्तुपालनवकीर्तिकन्यया, धन्यया किमपि यत्र खेलितम्॥ ४॥"

२ मुद्रापितमिदं मुम्बय्यां निर्णयसागरमुद्रणालयाधिपतिना। तत्प्रशस्तिसर्गे तन्निर्माणकारणं परिमाणं त्वेवं स्पष्टमाकल्यते सूरीणामेव वचनात्—

"श्री'वाग्भ(?य)ट'स्थाननिवासिनस्ते, सम्भूय भूयस्तरहर्षभाजः।
कदाचिदागत्य निवेशवेश्म, जगुर्द्विजास्तं मुनिचक्रशक्रम्॥ ४२॥
मरुद्धाताऽस्माकं भुवनजयिनौ यस्य तनयौ
तयोः सङ्गो यस्यामजनि हनुमद्भीमभटयोः।
तथा सङ्क्षेप्यासौ पृथुरपि महाभारतकथा
यथा स्वल्पाभिः स्यात् तिथिभिरतिथिः कर्णपथयोः॥ ४३॥
आज्ञापितस्तदिह कर्म्मणि सूरिभिस्तैः, ख्यातः क्षितावमरचन्द्र इति स्वशिष्यः।
श्रीबालभारत इति प्रततान काव्यं, 'वीरा'ङ्कमेतदविनश्वरमात्मनोऽङ्कम्॥ ४४॥
शस्ते प्रशस्तिसर्गेऽत्र, रङ्गत्कविगुरुक्रमे।
निश्चित्य स्पष्टतां नीता, नवाशीतिरनुष्टुभाम्॥ ४५॥
चतुर्युक्तचत्वारिंशत्–सर्गैरासन्ननुष्टुभाम्।
षट्सहस्री नवशती, पञ्चाशद् बालभारते॥ ४६॥"

३ एतद्ग्रन्थकारोपस्कृत उक्तव्यतिरिक्तः स्यादिसमुच्चयाभिधेयो ग्रन्थोऽपि दृष्टिपथपान्थतां समायाति।

४ उक्तं चास्मिन् महाकाव्ये आदिपर्वणि (स. २, श्लो. ६३)—

"नवकीर्त्तिदत्तसतताभृतप्लवः, परिलूनदानववितानविप्लवः।
अधुनाऽपि केन कुसुमैर्न पूज्यते, यदसिर्धृतः शिरसि वेणिमूर्त्तिभिः॥"

"दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥ ६ ॥"

इत्यत्र वेण्याः कृपाणत्वेन वर्णनाद् 'वेणीकृपाणोऽमरः इति विरुदं[1] कवि-वृन्दाल्लब्धम्, दीपिकाकालिदासवत् घण्टामाघवच्च । कवित्वप्रसिद्धेश्च महाराष्ट्रादिनरेन्द्राणां पूजा उपतस्थिरे । तदा श्रीवीसलदेवो राजा गूर्जरा-धिपति'र्धवलकक्के' राज्यं शास्ति । तेनाऽमरकवेर्गुणग्रामः श्रुतः । ठक्कुरं वइ-जलं प्रधानं प्रेष्य प्रातराहूतः कवीन्द्रः । आसनादिप्रतिपत्तिः कृता । सभा महती । अमरेण पठितम्-

वीक्ष्यैतद्भुजविक्रमक्रमचमत्कारं निकारं मयि
प्रेम्णो नूनमियं करिष्यति गुणग्रामैकगृह्याशया ।
श्रीमद्वीसलदेव ! देवरमणीवृन्दे त्वदायोधन-
प्रेक्षाप्रक्षुभिते विमुञ्चति परीरम्भान्न रम्भां हरिः ॥ १ ॥
त्वत्प्रारब्धप्रचण्डप्रधननिधनिताऽरातिवीरातिरेक-
क्रीडत्[2]कीलालकुल्यावलिभिरलभत स्यन्द[3]माकन्द[4]मुर्वीं ।
दम्भोलिस्तम्भभास्वद्भुजगभुजजगद्भर्त्तुराभर्त्तु[5]रेनां[6]
तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥ २ ॥

रञ्जिता सभा, प्रीणितः पृथ्वीपालः । ततो राज्ञा प्रोक्तम्-यूयं कवीन्द्राः श्रूयध्वे । अमरोऽभिधत्ते-सत्यमेव यदि गवेषयति देवः । ततो नृपेण सोमे[7]-

---

१ इदं बिरुदं हम्मीरमहाकाव्ये (स० १४) वर्णितम्—

"वाणीनामधिदेवता स्वयमसौ ख्याता कुमारी ततः
प्रायो ब्रह्मवतां स्फुरन्ति सरसा वाचां विलासा ध्रुवम् ।
कुक्कोकः सुकृती जितेन्द्रियचयो हर्षः स वात्स्यायनो
ब्रह्मज्ञप्रवरो महाव्रतधरो वेणीकृपाणोऽमरः ॥ ३१ ॥"

२ रुधिर० । ३ प्रस्रवण० । ४ मूलपर्यन्तम् । ५ धारकस्य । ६ पृथ्वीम् । ७ काव्य-प्रकाशटीका-काव्यादर्श-रामशतकादिग्रन्थप्रणेताऽसौ सोमेश्वरदेव एव वीरधवले राजनि वस्तुपाले चामात्ये सति गूर्जरेश्वरपुरोहितपदभाक् कीर्तिकौमुदीकाव्यं सुरथोत्सव-काव्यं च विनिर्मितवान् । तत्र सुरथोत्सवे पञ्चदशे प्रशस्तिसर्गे वस्तुपालतेजःपालादीनां रम्या स्तुतिः कृताऽस्ति । तद्दिदृक्षुभिः निर्णयसागरमुद्रिता बालभारतभूमिका द्रष्टव्या । स्थान-सङ्कोचभयान्नात्रावतार्यते ।

श्वरदेवे दृष्टिः सञ्चारिता। ततः सोमेश्वरेण समस्याऽर्पिता। यथा—'शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः'। अमरेण सद्यः समस्या पूरिता—

कैषा भूषा [1]शिरोऽक्ष्णां तव भुजगपते! रेखयामास भूत्या?
द्यूते मन्मूर्ध्नि शम्भुः सदशनवशता(९१०)नक्षपातान् विजित्य।
गौरी त्वानङ्ग दृष्टी जितनखनवभू(१९२०)स्तद्विशेषात् तदित्थं
शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः॥

ततो 'वामन'स्थलीयकविसोमादित्येन समस्या दत्ता—'धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः'। अमरेणोक्तम्—

[2]भवस्याभूद् भाले हिमकरकलाऽग्रे गिरिसुता—
ललाटस्याश्लेषे हरिणमदपुण्ड्रप्रतिकृतिः।
कपर्दस्तत्प्रान्ते यदमरसरित् तत्र तदहो
[3]धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः॥

ततः 'कृष्ण'नगरवास्तव्येन कमलादित्येन समस्या वितीर्णा—'मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्'। अमरेण पुपूरे—

तटविपिनविहारोच्छृङ्खलं यत्र यादो—
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्।
बत बक! न कदाचित् किं श्रुतोऽप्येष वार्द्धिः
प्रतनुतिमिनि [4]तल्ले क्वापि गच्छ क्षणेन॥

अथ 'वीसल'नगरीयेण नानाकेन समस्या विश्राणिता—'गीतं न गायतितरां युवतिर्निशासु'। अमरेण पूरिता—

श्रुत्वा ध्वनेर्मधुरतां सहसाऽवतीर्णे
भूमौ मृगे विगतलाञ्छन एष चन्द्रः।
मा गान्मदीयवदनस्य तुलामितीव
गीतं न गायतितरां युवतिर्निशासु॥

---

१ अत्र शिरोक्ष्णामिति शिरसा युक्तानामक्ष्णामिति मध्यमपदलोपी समासः कार्यः, द्वन्द्वे तु प्राण्यङ्गत्वादेकत्वं प्राप्नोति। २ शिवस्य। ३ ललाटं धनुः, तिलकप्रतिबिम्बं भृङ्गः, जटाजूटो गिरिः, गङ्गा च समुद्र इति तात्पर्यार्थः। ४ लघुसरसि।

एवमष्टोत्तरं शतं बहुकविदत्ताः पूरिताः समस्याः श्रीअमरेण । ततो राज्ञाऽभिहितम्—सत्यं कविसार्वभौमः श्रीअमरः । तत्र दिने सन्ध्याऽवधि सभा निषण्णा स्थिता, राजा लङ्घितः, सभ्यलोकोऽपि। 'रसावेशेन कालो व्रजन्नपि न लक्ष्यते' । द्वितीयदिने सद्यः काव्यमयैः प्रमाणोपन्यासैः प्रामाणिका जिताः । तृतीयदिने राज्ञा पृष्टम्—अस्माकं सम्प्रति का चिन्ताऽस्तीति कथ्यताम् । अमरेण भणितम्—देव! कथं दूरं गताः स्वर्गे ऐरावणस्य दक्षिणे कर्णे लुकिताः। भूपतिः स्वस्वसंवादेऽमोदत, शिरोऽधुनोत् । नित्यं गमनागमनेन जिनधर्म्मासन्नः कृतो राजा चैत्येषु पूजाः कारयति ॥

एकदा नृपेण पृष्टम्—भवतां कः कलागुरुः ? । अमरेण गदितम्—अरिसिंहः कविराज इति । राजाऽऽह—तर्हि प्रातरानेयः । अमरचन्द्रेणानीतः प्रातः कविराज उपराजम् । तदा राजा खड्गेन भ्रमयन्नास्ते । राज्ञा पृष्टम्—अयं कविराजः ? । कविराजेन व्याजह्रे—ओमिति । राजाऽऽह—तर्हि वद कालोचितं किञ्चित् । अरिसिंहः कवयति—

त्वत्कृपाणविनिर्माण—शेषद्रव्येण वेधसा ।
कृतः कृतान्तसर्पस्तु, करोद्वर्त्तनवर्त्तिभिः ॥ १ ॥

अच्छाच्छाभ्यधिकार्पणं किमपि यः पाणेः कृपाणे गुणः
सञ्चक्राम स यद् ददौ द्युपदवीं प्रत्यर्थिषु क्ष्मार्थिषु ।
तत्सङ्गान्न स बद्धमुष्टिरभवद् येनारिपृथ्वीभुजां
पृष्ठेषु स्वमपि प्रकाममुदितः प्रोद्दामरोमोद्गमः ॥ २ ॥

कलयसि किमिह कृपाणं, वीसल! बलवन्ति शत्रुषु तृणानि ।
यानि मुखगानि तेषां, न चैष लङ्घयितुं समर्थः ॥ ३ ॥

देव! त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुज-
स्तत्र क्रीडति कज्जलाकृतिरसिर्धाराद्विजिह्वः फणी ।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संवेष्टयन्
दीर्घं व्योमविसारि निर्मलयशोनिर्मोकमुन्मुञ्चति ॥ ४ ॥

---

१ एतत्प्रत्ययार्थं विलोकनीयं **काव्यकल्पलताया** आदावेव द्वितीयं पद्यम् । एतद्रचिते **सुकृतसङ्कीर्तन**काव्ये प्रत्येकसर्गप्रान्ते पद्यचतुष्टयं व्यरचयदसौ सूरिः, उल्लिलेख चैवं स्वयम्—

"प्रतिसर्गं प्रबन्धेऽस्मि-न्नरिसिंहविनिर्मिते ।
इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥"

अद्भुतकवितादर्शनात् कविराजो राजेन्द्रेण नित्यसेवकीकृतः । ग्रासो महान् प्रत्यष्ठायि ॥

एकदा वीसलदेवेन भोजनान्ते तृणं करे धृत्वाऽरिसिंहोऽभिदधे-इदं तृणं सद्यो वर्णय, यदि रुचितभङ्ग्या वर्णयसि तदा ग्रासद्वैगुण्यम्, अन्यथा सर्व-ग्रासत्याजनम् । इत्युक्तिसमकालमेवाहतप्रतिभतया स ऊचे—

क्षारोऽब्धिः शिखिनो मखा विषमयं श्वभ्रं क्षयीन्दुर्मुधा
प्राहुस्तत्र सुधामियं तु दनुजत्रस्तैव लीना तृणे ।
पीयूषप्रसवो गवां यदशनाद् दत्त्वा यदास्ये निजे
देव ! त्वत्करवालकालमुखतो निर्याति जातिर्द्विषाम् ॥

चमत्कृतो भूपालः, ग्रासद्वैगुण्यं कृतम् । कालान्तरेऽमरेण कोष्ठागारिकपद्म-मन्त्रिप्रार्थनया पद्मानन्दाख्यं शास्त्रं रचितम् । एवं कविताकल्लोलसाम्राज्यं प्रतिदिनम् ॥ इत्यमरचन्द्रकविप्रबन्धः ॥"

श्रीरत्नमन्दिरगणिकृतायामुपदेशतरङ्गिण्यां द्वितीये सुकृतदानोपदेशे प्रसङ्गवशादिदं लिखितमस्ति, यथा–

"एकदाऽमरचन्द्रमुनौ पर्षदि तत्कालकृतनव्यश्लोकैर्व्याख्यानं कुर्वति द्विपदी प्रोक्ता–

'अस्मिन्नसारे संसारे, सारं सारङ्गलोचना ।'

वन्दनार्थमागच्छता द्वारस्थेन वस्तुपालेन मन्त्रिणा श्रुता । अहो रागी स्त्रीकथाकृन्मुनिः इति ध्यात्वा न वन्दितः ।

ज्ञातमन्त्रिचित्ताभिप्रायेणाऽमरचन्द्रेण प्रोक्तम्–

'अस्मिन्नसारे संसारे, सारं सारङ्गलोचना ।
यत्कुक्षिप्रभवा एते, वस्तुपाल ! भवादृशाः ॥'

---

१ प्रसङ्गोऽयं व्यावर्णित उपदेशतरङ्गिण्यामपि ( द्वितीयोपदेशे ) ।

२ अब्धि-यज्ञ-पाताल-चन्द्रेषु शास्त्रवर्णितस्य सुधास्थानत्वस्य विशेषणैर्मुधात्वं वर्णयित्वा हस्तस्थतृणेऽमृतत्वं वर्णयति ।

३ "दिङ्-नन्दा-ऽर्कमितेषु ( १२९८ ) विक्रमनृपात् संवत्सरेषु प्रया-
तेषु स्वर्गमवाप वीरधवलाऽमात्यः शुभध्यानतः ।
निम्बं मौलमथाऽभवद् विधिवशाद् व्यञ्ज्यं सुभद्राचले–
द्वैः स्तोकैर्गलितैः कदापि न मृषा शङ्का सतां प्रायशः ॥ ६२ ॥"

इति पण्डितश्रीविवेकधीरगणिविरचिते श्रीशत्रुञ्जयतीर्थोद्धारप्रबन्धे । ३ प्रान्तिमे भागे ।

तुष्टेन पादोपवेशनं कारितम् ।" शीघ्रकवित्वविषये एषोऽपि दृष्टान्तः । श्रीनयचन्द्रकविकृतयो रम्भामञ्जरीनाटक-हम्मीरमहाकाव्ययोः—

"कार्यात् कारणसंविदं विदधते नैकान्तमुत्सृज्य यत्
तत् तेषामिव नोऽपि कर्हिचन किं चेतश्चमत्कारकृत् ।
नैवं चेन्नयचन्द्रसूरिसुगुरोर्वाणीं विधायामृतं
श्रीहर्षं तमथाऽमरं तमपि तत् किं संस्मरेयुर्बुधाः ? ॥

नयचन्द्रकवेः काव्यं, रसायनमिहाद्भुतम् ।
सन्तः स्वदन्ते जीवन्ति, श्रीहर्षाद्याः कवीश्वराः ॥
लालित्यममरस्येह, श्रीहर्षस्येह वक्रिमा ।
नयचन्द्रकवेः काव्ये, दृष्टं लोकोत्तरं द्वयम् ॥"—

प्रथमजवनिकायां श्लो. १६–१८

इत्यत्र 'स्वदन्ते' 'जीवन्ति' इति वर्त्तमानप्रयोगाच्छ्रीहर्षाऽमरचन्द्रयोरपि नयचन्द्रसमकालीनत्वं वर्णयन्ति केचनानवबुद्धसिद्धान्ततत्त्वाः, परन्तु चतुर्दश-शतकपूर्वकालत्वाऽभावेन द्वादशख्रिस्तशतकोत्पन्नश्रीपद्मानन्दमहाकाव्यकवि-तुरमरचन्द्रस्य च नयचन्द्रसमानकालत्वाऽभावादेतत्समानसमयौ कौचिद् भिन्नावेव भवेताम् ॥

इत्यमरचन्द्रप्रबन्धतो वीसलनरपतिराज्येऽमरचन्द्रसत्ता निश्चीयते । किञ्च वीसलभूपालराज्यसमयनिर्णयात्मक उल्लेखस्तु श्री'अर्बुदा'ऽचलोपरि 'विमलवसहिका'यां प्रविशतो वामभागे मूलप्रशस्तिस्थानात् पञ्चदेवकुलिकाऽर्वाग् देवकुलिकाबाह्यशालायां श्यामोपलखण्डे—

"॥ ६० ॥ संवत् १३५० वर्षे माघसुदि १ भौमे अद्येह श्रीमद्'णहिल्लपाटका'धिष्ठित-परमेश्वर-परमभट्टारक-उमापतिवरलब्धप्रौढप्रतापाक्रान्तदिक्चक्रवाल-क्ष्मापालमालवेशवरूथिनीगजघटाकुम्भस्थलविदारणैकपञ्चानन-समस्तराजावलीसमलङ्कृत-अभिनवसिद्धराज-महाराजाधिराज-श्रीमत्सारङ्गदेवविजयकल्याणराज्ये तत्पादपद्मोपजीविनि महामात्यश्रीवाघूये श्रीकरणादिसमस्तमुद्राव्यापारान् परिपन्थयति सतीत्येवं काले प्रवर्त्तमानेऽस्यैव परमप्रभोः प्रसाद-पत्तलायां भुज्यमान अष्टादशतममण्डले महाराजकुलश्रीवीसलदेवः शासन-पत्रं प्रयच्छति, यथा—

स ७५ महाराजकुलश्रीवीसलदेवः संवत् ( १३५० ) वर्षे माघसुदि १ भौमे अद्येह श्री'चन्द्रावत्यां' 'ओसवाल'ज्ञातीयसाधुश्रीवरदेवसुतसाधुश्रीहेमचन्द्रेण, तथा महा० भीमा, महा० सिरवर, श्रे० गजसिंह, श्रे० सिरपाल, श्रे० गोहल, श्रेष्ठी वस्ता, महं० वीरपालप्रभृतिसमस्तमहाजनेन भक्त्याऽऽराध्य विज्ञप्तेन श्री'अर्बुद'स्योपरि सन्तिष्ठमानवसहिकाद्वये निश्रयमाणघनतरं मुक्त्वा उत्प्रकृतकरस्य शासनपत्रं प्रयच्छति यथा—यच्छ्री'विमलवसहिका'यां श्रीआदिनाथदेवेन श्रीमातादेव्याः सत्कतलहडाप्रत्ययं उद्धदेयद्र० ( २८ ) अष्टाविंशतिर्द्रम्माः । तया श्री'अर्बुदे'ऽन्यठक्कुरसेलहृयतलारप्रभृतीनां कापडां प्रत्ययं उद्धदेयद्र० ( १६ ) षोडश द्रम्माः । तया कल्याणके अमीषां दिन ये (?) दिनं प्रति देयकणहृतां दातव्यानि । तथा महं० 'श्रीतेजपाल'वसहिकायां श्रीनेमिनाथदेवेन श्रीमातादेव्याः सत्कवर्षं प्रति देयद्र० ( १४ ) चतुर्दश द्रम्माः । तथा दिनैकेन कणहृतां देय ( १० ) तथा श्री'अर्बुदे'ऽन्यठक्कुरसेलहृयतलारप्रभृतीनां कापडां प्रत्ययं देय ( ८ ) अष्टौ द्रम्माः । तथाप्रमदाकुलसत्कनामा ( ६ ) षट्कनामकं प्रतिमलप्रत्ययं द्र० ( ५ ) पञ्च द्रम्माः । वस्त्ररुद्ध (?) वर्षं प्रति दातव्याः । तथा वसहिकाद्वये पूजारकानां पार्श्वान्निःसृतकरो मुक्तो भणित्वा श्री'अर्बुदे'ऽन्यठक्कुरेण सेलहृयतलारप्रभृतिभिः किमपि न याचनीयं न गृहीतव्यं । अद्यदिनपूर्वं वसहिकाद्वयपार्श्वात् ॥"

उपरिलिखनविधेरूर्ध्वं श्रीअर्बुदेऽन्यठक्कुरेण सेलहृयतलारप्रभृतिभिः तथा 'चन्द्रावत्यां' श्रीमुन्द्राजकुलेन महन्तकसेलहृयतलारडोकराप्रभृतिभिश्च किमपि न याचनीयं न गृहीतव्यं च । अनेन परिचितविधिना प्रतिवर्षं वसहिकाद्वयपार्श्वाद् ग्रामठक्कुरप्रभृतिभिः गृह्यमाणैः कल्याणकप्रभृतिमहोत्सवेषु समायातसमस्तसङ्घस्य प्रहरकतलारकप्रभृतिकं रूढ्यं सर्वं करणीयम् । कारापणीयं च । उपरि च दिन उत्तीर्यमाणसमस्तसङ्घमध्यात् यस्य कस्यापि किञ्चिद् गच्छति तत् सर्वं 'अर्बुदे'ऽन्यठक्कुरेण लोहमयं रूढ्या समर्चनीयम् (समर्पणीयम्) । अस्मद्वंशजैरपि अन्यैश्च भाविभोक्तृभिर्वसहिकाद्वये उन्मुक्तकरोऽयं आचन्द्रार्कं यावत् अच्छातव्यं पालनीयम् । यथा उक्तं च भगवता व्यासेन—

'बहुभिर्वसुधा भुक्ता, राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमी, तस्य तस्य तदा फलम् ॥ १ ॥

वन्ध्याटव्युं[1]ष्णतोयासु, शुष्ककोटरवासिनः ।
कृमिसर्पाः प्रजायन्ते, देवदायोपहारिणः ॥ २ ॥
न विषं विषमित्याहु–र्देवस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति, देवस्वं पुत्रपौत्रकम् ॥ ३ ॥'

एतानि श्रुतिवाक्यानि अवलोक्य अस्मद्वंश्यैरन्यवंश्यैरपि भाविभोक्तृभिः असत्कृत उद्यकरस्याऽस्य प्रतिबन्धः कदापि न करणीयः न कारापणीयश्च । दत्वा च ॐ दमुक्तवान्–

मद्वंश्या अन्यवंश्या वा, ये भविष्यन्ति पार्थिवाः ।
तेषामहं करे लग्नो, मम दत्तं न लुप्यताम् ॥ १ ॥

ठ० जयसिंहसुतपरिपान्थिकेन लिखितम् । हीनाक्षरप्रमाणमिति ७ महाराजकुलश्रीवीसलदेव द्र० महं० सांगण । अत्र साक्षिणः–श्रीअचलेश्वरदेवीयराउ० नन्दिश्रीवशिष्टदेव्याः सत्क अवो० नीलकण्ठः पमाणा ग्रामीयपल्याः, राजप्रभृतिभिः समस्तपल्याः ॥"

एवंविधविलिखितशासनपत्रविलोकनतो गूर्जरदेशभूपावल्यादिविलोकनतश्च श्रीमद्वीसलदेवनरपतिराज्यं त्रयोदशख्रिस्तशतके स्फुटं निश्चीयते । एवं च त्रयोदशख्रिस्तशतकनिश्चितवीसलदेवराज्ये श्रीमदमरचन्द्रसूरीणां स्थितिनिश्चयात् त्रयोदशख्रिस्तशतक एव श्रीपद्मानन्दकाव्यनिर्माणनिश्चयः ।

अपरश्च 'अणहिल्ल'पत्तने अष्टापदजिनालयान्तःस्थितश्रीमत्प्रतिमाया उपरि—

"संवत् १३४९ चैत्रवदि ६ शनौ श्री'वायटीय'गच्छे श्रीजिनदत्तसूरिशिष्यपण्डितश्रीअमरचन्द्रमूर्त्तिः पं. महेन्द्रशिष्यमदनचन्द्राख्येन कारिता । शिवमस्तु ।"—

इत्येवमुल्लेखदर्शनात् सम्भवति तत्रभवतामितोऽर्वागेव स्वर्गगमनमजायतेति ।

श्रीपद्ममन्त्रिप्रार्थनया दिवानिशमामग्नगृहकार्यसमयानां श्रावकवर्याणामल्पसमयावकाशेऽपि वाचनश्रवणादिभिः पूतानि चेतांसि स्युरिति विभाव्य १७२६-श्लोकसङ्ख्यायामेव लघूनि चतुर्विंशतिजिनचरितानि वितेनिरे विभुभिः श्रीअमरचन्द्रैर्विस्तरतोऽपि विद्वज्जनमनोहराणि महाकाव्यरूपाणि । तत्रालभामहि

[1] उष्णतोया वैतरणी नदी ।

वयं सर्वाण्यपि तानि लघूनि, यान्यत्रैव प्रान्ते क-परिशिष्टरूपेण मुद्रितानि। विस्तृतं तु प्रथमजिनचरितमेवैकोनविंशतिसर्गसंवलितं महाकाव्यरूपं वर्णनीयवस्तूनामलङ्कारादिगुणगणगुम्फितं श्रुतिमधुरललितवचनविरचनात्मकं पद्मानन्दमहाकाव्यमेव। अनेकधाऽन्विष्टेष्वपि विविधेषु पुस्तकभाण्डागारेषु नैवावाप्तानि विस्तृतान्यपरजिनचरितानि सूरिशार्दूलसूत्रितानीति निरुपायत्वं मन्दभाग्यत्वं च मादृशां जनानाम्। अवश्यंभावीनि तु तानीति निश्चीयतेतरां श्रीचतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरितगतनिम्नलिखितपद्यपरामर्शेन—

"पूर्वं श्रीवृषभादीना-मर्हतां चरितानि ते।
पुरः श्रीपद्म! सङ्क्षेपाद्, वक्ष्ये विस्तरतस्ततः॥ २॥"

किञ्चेदं समर्थ्यते पद्मानन्दमहाकाव्यस्य प्रथमसर्गगतनिम्नलिखितपद्यसप्तकद्वारा द्वितीयसर्गस्थाद्यपद्यद्वयरूपेण च-

"चतुर्विंशतितीर्थेश-चरितामृतसागरे।
मद्गीर्मिथ्यापथभ्रान्ता, स्नाति श्रान्तिमलच्छिदे॥ ३०॥"

"श्रीपद्मेनार्थितः स श्री-जिनेन्द्रचरिताह्वयम्।
वाक्सहायो महाकाव्यं, निर्ममे निर्ममेश्वरः॥ ४३॥
तत्रोक्ताऽस्ति चतुर्विंश-त्यर्हतां चरितावली।
श्रावकाः! श्रावये तां वः, श्रवणामृतसारणिम्॥ ४४॥"

"यथा तेनार्थितोऽत्यर्थ-मकरोदमरो मुनिः।
चरित्राणि जिनेन्द्राणां, शृणुत श्रावकास्तथा॥ ५६॥"

"चतुर्विंशतितीर्थेश-चरित्रश्रवणोत्सवः।
मत्पुण्यवनपर्जन्यः, पूर्यतां त्वत्प्रसादतः॥ ६१॥"

"साहाय्यतोऽहमप्यस्या, निष्प्रत्यूहमथार्हताम्।
प्राच्यैर्भवैर्विचित्राणि, चरित्राणि प्रपञ्चये॥ ८५॥"

"बालोऽहं कलयामि चापलमिदं कर्तुं युगादिप्रभो-
र्यावद् वीरविभुं जिनेश्वरचरित्राणां चतुर्विंशतिम्।
सिद्धान्तोपनिषन्निषण्णविशदप्रज्ञोदयैर्दीयतां
दोषज्ञैरिह दोषदूषणगणं हत्वा गुणैर्भूषणम्॥ १३०॥"

"अथोज्जगारेति गिरं प्रमोद–सुधास्रवन्तीममरो मुनीन्द्रः ।
समासतस्ते कथितानि पद्म–मन्त्रिश्वरित्राणि जिनेश्वराणाम् ॥ १ ॥
आकर्णयैतानि शशाङ्ककीर्त्ते !, सङ्कीर्त्यमानानि सविस्तराणि ।
चित्रं चरित्रं त्रिजगत्पवित्रं, युगादिनाथस्य वदामि पूर्वम् ॥ २ ॥"

इति श्रीमुखप्रतिपादितादेव लेखदीप्रदीपात् सुस्पष्टं निःशङ्कं निधार्यतेऽवशिष्ट-चरित्रप्रणयनम् । अतस्तादृक्प्रत्युत्पादकेन प्राच्यविद्यासंशोधनरसिकेन भृशमनुगृहीतात्मानं मंस्ये तदीयोपकृतिपवित्रपात्रतच्चरित्रमुद्रापणेन चाद्भ्रहर्षप्रकर्षं वक्ष्यामि । गीर्वाणगीर्नैपुण्यमभिलषतां सहैव कथारसमपि च निपिपासूनां जनानां पद्मानन्दाभिधं महाकाव्यमिदं गुणविसरविराजि महीयांसमुपकारमाधास्यति निजमुद्धारं च विधास्यतीत्यवधृत्य मुद्रणमन्तरेण नास्य समुपलम्भः सुलभ इत्यवगत्य च प्राप्तमात्रमपि संशोध्य मुद्रापयित्वा तत्रभवतां शेमुषीशालिनां करकमलयुगले समर्प्यते ।

## श्रीअमरचन्द्रसूरीणां ग्रन्थसन्दर्भः

(१) *अलङ्कारप्रबोधः ।
(२) *कलाकलापः ।
(३) कविशिक्षा काव्यकल्पलताऽऽख्या, मुद्रिता ।
(४) काव्यकल्पलतापरिमलः ।
(५) *काव्यकल्पलतामञ्जरी ।
(६) काव्यकल्पलतावृत्तिः, मुद्रिता ।
(७) चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरितानि, मुद्रितान्यत्रैव ।
(८) छन्दोरत्नावली ।
(९) पद्मानन्दमहाकाव्यं श्रीजिनेन्द्रचरित्रेत्यपराह्वयं, मुद्रितमत्रैव ।
(१०) बालभारतं, मुद्रितम् ।
(११) सुकृतसङ्कीर्तनप्रतिसर्गान्ते पद्यचतुष्टयं, मुद्रितम् ।
(१२) *सूक्तावली ।
(१३) स्यादिशब्दसमुच्चयः, मुद्रितः ।

* एतच्चिह्नाङ्किता ग्रन्था अद्यावधि नोपलब्धिं गताः ।

**काव्यकल्पलतायाः परिचयः—**

अलङ्कारविषयोऽयं महाग्रन्थः कविशिक्षेत्यपरसञ्ज्ञकः। उक्तं चास्यैव प्रारम्भे स्वयं ग्रन्थकर्तृभिः—

"वाचं नत्वा महानन्द–करसत्काव्यसम्पदे।
कविशिक्षामिमां वच्मि, काव्यकल्पलताह्वयाम्॥ १॥"

समर्थ्यते चायमुल्लेख एतद्वृत्तिगतेन निम्नलिखितेनाद्येन पद्येन—

"विमृश्य वाङ्मयं ज्योति–रमरेण यतीन्दुना।
काव्यकल्पलताख्येयं, कविशिक्षा प्रतन्यते॥ १॥"

वृत्तिविधाने कवीश्वरोऽरिसिंहः सहायीभूत इति कथने निम्नलिखितं पद्यं प्रमाणम्—

"सारस्वतामृतमहार्णवपूर्णिमेन्दो–
र्मत्वाऽरिसिंहसुकवेः कवितारहस्यम्।
किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद्
व्याख्यास्यते त्वरितकाव्यकृतेऽत्र सूत्रम्॥ २॥"

३३५७श्लोकप्रमिता काव्यकल्पलतावृत्तिः स्वोपज्ञा न वेति सन्देहस्य सर्वथा निराकरणार्थं तत्प्रमाणपरिज्ञापनार्थं चोद्ध्रियेते तद्गते प्रान्तिमे पद्ये पुष्पिकापल्लविते। यथाहि—

"श्रीमद्'वायट'गच्छवारिधिविधोः पादारविन्दद्वये
येन श्रीजिनदत्तसूरिसुगुरोः शृङ्गारभृङ्गायितम्।
श्रीश्वेताम्बरमौलिरत्नममरः श्रीवीरतीर्थङ्कर–
प्रह्वात्माऽकृत काव्यकल्पलतिकावृत्तिं सतां सम्मताम्॥ १॥"

"काव्यकल्पलतावृत्तौ, ससूत्रायामनुष्टुभाम्।
त्रिसहस्री त्रिशती च, सप्तपञ्चाशदुत्तरा॥ ५॥"

"इति श्रीजिनदत्तसूरिशिष्यमहाकविश्रीमदमरचन्द्रविरचितायां काव्यकल्पलताकविशिक्षावृत्तौ अर्थसिद्धिप्रताने चतुर्थे सप्तमास्तबकः सप्तमः। सम्पूर्णश्चायमर्थसिद्धिप्रतानश्चतुर्थः।"

अस्यालङ्कारशास्त्रस्य काँस्कान् विभागांश्चक्रुः कवय इति निदर्शनार्थमवतार्यते पद्यमिदम्—

"चत्वारोऽत्र च्छन्दःशब्दश्लेषार्थसिद्धिनामानः ।
क्रमशस्तताः प्रतानाः पञ्चचतुःपञ्चसप्तभिः स्तबकैः ॥"

अनेन ज्ञायते यदुतास्य चत्वारः प्रतानाः । तत्राद्ये छन्दःसिद्धिप्रताने स्तबकाः पञ्च, द्वितीये शब्दसिद्धिप्रताने चत्वारः, तृतीये श्लेषसिद्धिप्रताने पञ्च, चतुर्थेऽर्थसिद्धिप्रताने च सप्त । स्तबकानां नामानि तु यथा—

"अनुष्टुप्शासनं छन्दो–ऽभ्यासः सामान्यशब्दकः ।
वादो वर्ण्यस्थितिः पूर्व–प्रताने स्तबका मताः ॥ ३ ॥
रूढयौगिकमिश्राख्या, यौगिकाह्वानमालिका ।
अनुप्रासो लाक्षणिको, द्वितीये स्तबकाः स्मृताः ॥ ४ ॥
श्लेषव्युत्पादनं सर्व–वर्णनोद्दिष्टवर्णने ।
अद्भुतं चित्रमित्येते, तृतीये स्तबका मताः ॥ ५ ॥
तुर्ये पुनरलङ्कारा–भ्यासवर्णाकृतिक्रियाः ।
प्रकीर्णकाभिधः सङ्ख्या, समस्ये स्तबकाः स्थिताः ॥ ६ ॥"

एवं विशदीभवति शास्त्रसङ्ग्रहः । अनेनैव ग्रन्थकारेणैतत्प्रणयनपूर्वं विरचितानां ग्रन्थानां नामानि यान्यत्र दृश्यन्ते तान्यवतरणसमेतानि यथा—

"अन्यच्छन्दो मत्कृतच्छन्दोरत्नावल्यां ज्ञेयम् ।"
"एते शब्दा मत्कृतकाव्यकल्पलतापरिमलात् ज्ञेयाः ।"
शब्दाश्च बहवः काव्यकल्पलतामञ्जर्यां ज्ञेयाः ।
"शेषानलङ्कारान् मत्कृतादलङ्कारप्रबोधादवबुध्याभ्यस्येत् ।"

अस्मिन् ग्रन्थे चतुरचेतश्चमत्कारी परिधिश्लोकः समस्ति अष्टचक्रारबन्धबन्धुरः । स चायम्—

"विश्वावरोधाय विरोधबाधका
विपत्तमोजालविकर्ततोर्जिताः ।
विधूदयध्यामविशुद्धकीर्तिमा
विभान्ति सन्तः सविवेकवैभवाः ॥
वाचं स्मृत्वा यतीन्द्रेण, काव्यकल्पलता कृता ।
तारश्रीरमरेणेयं, भावनीया सतां गणैः ॥"

**स्यादिशब्दसमुच्चयस्य परिचितिः—**

अस्मिन् व्याकरणविषयके ग्रन्थे स्वरान्त-व्यञ्जनान्त-सर्वनामगण-सङ्ख्या-शब्देत्युल्लासचतुष्टयं स्यादिशब्ददीपिकाऽवचूर्ण्या च समलङ्कृतं विद्यते। श्रीसिद्ध-हेमचन्द्राभिधशब्दानुशासनपाठकानां कातन्त्रव्याकरणाभ्यासिनां चोपयोगी ग्रन्थोऽयं श्रीमद्भगवान्दासात्मजपण्डितलालचन्द्रमहाशयैः संशोधितः २४४१तमे वीराब्दे च प्राकाश्यं नीतः ।

अस्याद्यं पद्यं यथा—

"श्रीसारदां हृदि ध्यात्वा, स्यादिशब्दसमुच्चयम् ।
करोत्यमरचन्द्राख्यो, यतिः[1] श्वेताम्बराग्रणीः ॥"

एतत्प्रान्ते पुष्पिका यथा—

"इति 'वायड'गच्छीयश्रीजिनदत्तसूरिशिष्यसरस्वतीकण्ठाभरणविद्वच्चक्रा-वतंसश्वेताम्बरशिरोमणिपण्डितश्रीमदमरचन्द्रानुस्मृते स्यादिशब्दसमुच्चये० ।
श्री'वायडीये' गच्छे श्रीमज्जिनदत्तसूरिशिष्यवरः ।
अरचयदिदममरमुनिः समुच्चयं स्यादिशब्दानाम् ॥"

**छन्दोरत्नावल्याः परिचयः—**

अद्यावधि ग्रन्थस्यास्य सत्ताया निर्धारणे काव्यकल्पलतावृत्तिगत उल्लेख-श्चतुर्विंशतिप्रबन्धे च निर्देशः प्रमाणरूपोऽभूत् । अधुना न्यायतीर्थ-न्यायविशारदश्रीउपाध्यायमङ्गलविजयद्वारा 'श्रीविजयधर्मलक्ष्मीज्ञानमन्दिर'-सत्का प्रतिरेका प्राप्ता। सा चाष्टादशपत्रात्मिका १९७०तमे वैक्रमीयाब्दे लिखिताऽस्ति । अस्या आधारेण किञ्चिद् वक्तुं प्रक्रम्यते। यथाहि—सञ्ज्ञा-समवृत्ता-ऽर्धसमवृत्त-विषमवृत्त-मात्रावृत्त-प्रस्तारादि-प्राकृतच्छन्द-उत्साहादिप्रति-पादन—षट्पदीचतुष्पदीद्विपदीवर्णनेत्यभिधानेषु नवस्वध्यायेषु विभक्तोऽयं ७५० श्लोकप्रायप्रमितच्छन्दोविषयको ग्रन्थः । आरम्भस्तु यथा—

"श्रीशारदापदप्रौढ—प्रसादपरमेश्वरः ।
छन्दोरत्नावलीमेतां, रचयत्यमरो मुनिः ॥ १ ॥
श्रीपिङ्गलादिसन्दब्ध—शास्त्राम्भोधिसमुद्धृतैः ।
छन्दोरत्नैः कृता सेयं, जयतात् कविकण्ठिका ॥ २ ॥"

प्रथमाध्यायप्रान्तस्य उल्लेख एवम्—

"इति श्रीजिनदत्तसूरिशिष्यपं०अमरचन्द्रविरचितायां छन्दोरत्नावल्यां सञ्ज्ञाध्यायः प्रथमः ।"

---

१ 'गणिः' इति पाठान्तरम् ।

अन्ते त्वित्थम्—

"इति श्रीछन्दोरत्नावल्यां षट्पदी-चतुष्पदी-द्विपदीवर्णनो नवमोऽध्यायः समाप्तः ॥ छ ॥ संवत् १९७० वर्षे माघ(स) कार्तिकसुदि ७ दिने ॥ सू(शु)भं भवतु ॥ कल्याणमस्तु ॥ श्री ॥ श्री ॥"

विविधावतरणसमलङ्कृतेयं छन्दोरत्नावली, उदाहरणार्थं वीक्ष्यतां निम्नलिखितं प्रथमपत्रगतमवतरणम्—

"वंशस्थकादिचरणान्तनिवेशितस्य, गत्वं लघोर्नहि तथा श्रुतिशर्म्मदायि ।
श्रोतुर्वसन्ततिलकादिपदान्तवर्ति, तो गत्वमत्र विहितं विबुधैर्यथा तत् ॥"

दृष्टान्तरूपेण प्रभूतानि प्राकृतपद्यानि दरीदृश्यन्तेऽन्तिमयोरध्याययोः ।

पद्मानन्दाभिधस्यास्य ग्रन्थस्य क-परिशिष्टसमेतस्य संशोधनार्थं प्रतियुगलस्योपयोगोऽकारि मया । तत्र क-सञ्ज्ञका प्रतिः 'श्रीमोहनलालजी जैन सेन्ट्रल लाइब्रेरी'ति नाम्न्याः संस्थायाः कार्यवाहकश्रीयुतजीवनचन्द्रद्वारा प्राप्ता शुद्धाशुद्धा पाठप्रपातादिपूर्विका १६९ पत्रात्मिका वैक्रमीये १५०७तमेऽब्दे लिखिता चित्रत्रितयसमलङ्कृता च समस्ति । ख-सञ्ज्ञका प्रतिर्दक्षिणविहारिमुनिराजश्रीअमरविजयानां विद्याविलासिभिः शिष्यरत्नैर्मदीयसाहित्यविषयकप्रवृत्तौ च सदोपकारिभिर्लिखिता मुद्रणपुस्तिका । एतत्कार्ये तैर्महानुभावैः तिस्रः प्रतय उपयुक्ता इति तेषां मह्यं निवेदनम् । तत्र शान्तमूर्तिश्रीहंसविजयमुनिपुङ्गवैः प्रेषिते द्वे ययोरेका नवीना शुद्धतरा, द्वितीया त्वतीव जीर्णा शुद्धप्राया च । तृतीया प्रतिः 'पाली'नगरस्थपुस्तककोषसत्का 'प्राग्वाट'वंशीयश्रावकश्रीयुततेजमालसमर्पिता ।

एवं क-ख-प्रतियमलाधारेण सम्पादितं शुद्धिपत्रसङ्कलितं विषमस्थानेषु टिप्पनकैर्निष्टङ्कितार्थसार्थं गीर्वाणाङ्ग्लभाषाद्वयसन्दब्धप्रस्तावनापरिशिष्टादिसामग्रीसमृद्धं चेदं पद्मानन्दमहाकाव्यं सादिसान्तं समीक्षन्तां समीक्षकाः । कर्णेहत्य निपीयन्ताममन्दानन्दसन्दोहनिःस्यन्दिनं नानारसनिचहं सहृदयहृदयाः । सततं समभ्यसन्तां संस्कृतभाषाव्युत्पत्तिमभिलषन्तः सहैव च काव्यकोशच्छन्दोऽलङ्कारलौकिकपारलौकिकज्ञानार्थिनो विद्यार्थिनः । नयतामेवं परिश्रममेनं मदीयं फलेग्रहिताम् । क्षमन्तां क्षमासन्ततिचारुचित्ता निसर्गोपनिपाताश्छाद्मस्थिकस्खलनाः । उपेक्षन्तां च मुद्रणयन्त्रसञ्जातास्तन्नियुक्तजनसमाचरिता वा मात्राऽनुस्वाराङ्कादिपतनपरावर्तनादीरशुद्धीरिति प्रार्थयामि सदसद्विवेकविचक्षणगुणगणचणान् सज्जनान् विबुधवृन्दारविन्दमकरन्देन्दिन्दरो हीरालालः ।

# INTRODUCTION

It may be stated at the outset that our author S'rī Amaracandra Sūri, pupil of S'rī Jinadatta Sūri, was well-known for his erudition, so scholars both oriental and occidental could not help referring to him in their works. His popularity even amongst the non-*Jainas*, particulary the *Hindus*, is due to his beautiful and lucid *mahākāvya Bālabhārata*, which represents the *Vedic* point of view, in spite of the fact that the author was not only a Jaina but also a Jaina sādhu.[1] In support of its popularity it may be added that this work was translated into Greek.[2] The present work *Padmānanda mahākāvya*, too, was well-known to scholars; for, it has been referred to by the late Professor Peter Peterson in his first Report of 1883 on p. 58, and verses from this interesting poem have been [3]quoted extensively in his work by S'rī Bhāvaprabha Sūri, the author and the commentator of *Jaina-dharmavarastotra* who flourished in the latter half of the 18th century. Under these circumstances, it is necessary to point out the sources of information pertaining to our author and his literary activities.

(1) [4]Sukṛtasaṁkīrtana of S'rī Arisiṁha.

(2) [5]Bālabhārata of S'rī Amaracandra Sūri.

---

1 This bespeaks his spirit of toleration and absence of bigotism.

2 See Introduction p. 41.

3 See the following pages of my edition of *Jainadharmavarastotra* wherein his other works are also included:—

4 (II 176, XIV 298), 38 (XIII 287), 47 (XIII 288), 58 (XII 67), 66 (XIV 22), 70 (XI 55), 98 (II 164), 105 (XVIII 112, 114), 106 (XVIII, 173 179), 108 (XVIII 110), 118 (XVII 230, 231, 233, 235), 119 (XVII 303, 340 346), 120 (XVII 361-363, 392-394).

4 This is a poem in 11 cantos, consisting of 555 *s'lokas* in all; the last 4 or 5 verses of each canto are written by our author (Amaracandra Sūri), wherein he glorifies Vastupāla, the famous minister of Vīradhavala of the Vāghela dynasty and his son Vīsaladeva. For a full account of this poem, the reader is referred to *Indian Antiquary* (Vol. xxxi, pp. 477-495). This work is published in S'rī Jaina Ātmānanda Sabhā series as No. 51, in A. D. 1917.

5 This work was composed by our author during the reign of king Vīsaladeva (A. D. 1243-1261) and is published in the Pandit Vols. IV, VI

(3) [1]Kāvya-kalpalatā of Amaracandra Sūri with his own commentary.

(4) [2]Syādis'abdasamuccaya of Amaracandra Sūri.

(5) [3]Prabandhacintāmaṇi of S'rī Merutuṅga, pupil of S'rī Candraprabha.

(6) [4]Upades'ataraṅgiṇī of S'rī Ratnamandira Gaṇi.

(7) [5]Caturvims'ati-prabandha also known as Prabandhakos'a of S'rī Rājas'ekhara Sūri, pupil of S'rī S'rītilaka of the *Harṣapurīya gaccha*.

(8) Indian Antiquary Vol. VI (A. D. 1877) pp. 210-212 and Vol. XXXI [6]pp. 477-495.

(9) Dr. R. G. Bhandarkar's Report of 1883-84 (p. 6).

(10) [7]Z. D. M. G. Vol. XXVII (p. 170 ff.)—the article by Dr. Albrecht Weber.

(11) Indische Streifen Vol. III (p. 211ff).

(12) Catalogue of the Sanskrit Mss. in the Library of the India Office, Nos. 1183 and 3846.

---

(Benares 1869-1871) and in the Kāvyamālā Series (Bombay A. D. 1894, the 2nd edition in A. D. 1926). For further information see Sanskrit Introduction p. 17.

1 This was edited in A. D. 1886 by Rāma S'āstrī (Benares). There is another edition of Vāmana S'āstrī, Bombay, 1891.

2 This has been edited with Introduction in Sanskrit by Pandit Lālacandra B. Gāndhī,, who published it in *Vīra saṁvat* 2441 (A. D. 1915).

3 This was composed in *Saṁvat* 1361 at Vaḍhavāṇ. It was published in A. D. 1888 with Gujarati translation by Dinānāth Rāmacandra. This was translated into English by C. H. Tawney and was published in the Bibliotheca Indica Series, 1901.

4 This is printed and published by Shāh Harakhchand Bhūrābhāi at the Dharmābhyudaya Press, Benares, in *Vīra saṁvat* 2437.

5 This was composed in *Saṁvat* 1405 and is published in S'rī Hemacandrācārya Granthāvalī and also by Pandit Hirālāl Hànsaraj, Jamnagar in A. D. 1913. A critical edition along with a Gujarāti translation entrusted to me by the Forbes Gujarāti Sabhā is in press.

6 This is a translation in English of *Sukṛtasaṅkīrtana* of Arisiṁha, the German article of the late Prof. Bühler C. I. E., LL. D., by E. H. Burgess. It was published in the Sitzungsberichte of the Imperial Academy of Sciences of Vienna (Vol. cxix, 1887).

7 Zeitschrift der Deutschen Morgenländischen Gesellschaft.

(13) Geschichte der indischen Litteratur Vol. III (p. 74) by Dr. M. Winternitz.

(14) Detailed Report of Operations in Search of Sanskrit Mss. in the Bombay Circle (August 1882–March 1883) by Prof. Peterson (p. 58).

(15) Catalogi Codicum Manuscriptorum by Prof. Aufrecht (p. 210b, no. 497).

(16) Notices of Sanskrit Mss. by Dr. Rajendralala Mitra, LL. D., C. I. E., (vol. VII, p. 282).

(17) [1]Studies in the History of Sanskrit Poetics by Dr. Sushil Kumār De, M. A., D. Litt.

(18) A Descriptive Catalogue of Sanskṛta and Prākṛta Mss. by Prof. H. D. Velankar M. A.

## LIFE OF S'RĪ AMARACANDRA SŪRI

From the 13th *prabandha* of *Prabandha-kos'a* of S'rī Rājas'ekhara Sūri, we learn that our author was a pupil of S'rī Jinadatta Sūri, the famous author of [2]*Vivekavilāsa* and belonged to the genealogy of the well-known S'rī Jīvadeva Sūri. Once upon a time he received the charm called [3]*Siddha-sārasvata* from Arisiṁha, a devotee of his *guru*. He recited this *mantra* for 21 days by taking his station in a lonely corner of the big mansion of Padma, the minister. For all these days, he practised the penance known as *ācāmla*. Consequently, the goddess of Learning came to him and graced him with the two boons: (1) to become a perfect poet and (2) to become an object of honour to all rulers. Later on, our author composed *Kavis'ikṣā* (instruction or discipline for poets) also known as *Kāvya-Kalpalatā*, *Chandoratnāvalī*, *Sūktāvalī*, *Kalākalāpa*, *Bālabhārata* and *Padmānanda mahākāvya*. Thus it seems that Rajas'ekhara Sūri was not aware of or did not attach much importance to his other works viz., *Alaṅkāraprabodha* and *Syādis'abdasamuccaya;* the same remark holds good in the case of the work known as *Caturviṁs'ati-jinendrasaṅkṣiptacaritāni*, if it is not included by him in *Padmānanda mahākāvya*.

---

1 This was published by Luzac & Co., London in 1923 A. D.

2 This work along with his author is quoted in *Mādhavācārya's Sarva-dars'anasaṅgraha*. See Govt. O. (Hindu) Series No. I, pp. 46 and 86 resp.

3 This is referred to on p. 358 of the text.

Amaracandra Sūri has described a braid of hair as a sword in [1]*Bālabhārata*, so he has been designated as *Veṇī-Kṛpāṇa*; his predecessors Kālidāsa and Māgha, too, had similarly earned the titles Dīpikā-Kālidāsa and Ghaṇṭā-Māgha, respectively.

On hearing about the poetical genius of Amaracandra Sūri, Vīsaladeva, the ruler of Dhavalakva (modern Dholkā) sent his minister Thakkura Vaijala to invite him to his court. On his coming, his ability as an extempore poet was examined; for, different poets at the court confronted him with *samasyās*, 108 in all. He completed the proposed parts of stanzas so beautifully that he was given the due honour of a poet-laureate by king Vīsaladeva. Subsequently, Arisiṁha, whom our author respected as his *kalā-guru* was introduced to the king, to his complete satisfaction.

Our author Amaracandra belongs to the *Vāyaṭa gaccha*, Vāyaṭa being a name of a place near Pātan (Aṇahilla-pattana). I have not come across materials that throw light on his parentage, his birth-date, the year of his renunciation, his pupil or pupils, his life-period, etc.; so, they are left to be brought to light by further investigators.

This is however certain that he flourished in the 13th century. For, as Prof. Peterson mentions in his first report (p.58), there is a Ms. of *S'rī Jinendracaritra* otherwise called the [2]*Padmanābhakāvya* in Cambay written in *Samvat* 1277 (i. e. A. D. 1241), and so this work must have been a creation of the author of the 13th century. Moreover, our author is a disciple of S'rī Jinadatta Sūri whose work *Vivekavilāsa* composed in A.D. 1220 is quoted by Mādhavācārya of the 14th century. It is, moreover, a fact that our author was present at the court of king Vīsaladeva for whom the date assigned is A. D. 1243–1261. According to *Prabandhacintāmaṇi*, he was well-respected by Vastupāla, the able minister of Vīradhavala, and his son Vīsaladeva, who are said to have flourished in the 13th century by the late Sir Vincent Smith in his work "The Early History of India".

Before concluding this account of our author, it may be noted that he has named himself in various ways such as

1 See Ādiparvan, 11th canto, v. 6 or Sanskrit Introduction p. 17.

2 This is a slip, the real name being *Padmānanda-mahākāvya*. See his third report 1884–86 (p. XI) where he corrects himself.

जनान् धनाद्यैः स्वजनान् ममत्वैः, स्पृहाविमुक्तान् ममतोज्झितांश्च ।
लोकोत्तरैः सच्चरितैः करोति, सेवाऽभिषङ्गप्रवणान् प्रवीणः ॥ ४४ ॥
त्वदीयसद्वृत्तततिप्रवृत्ति–प्रवर्त्तिताः सम्प्रति [1]संम्प्रतीत ! ।
सार्थेश ! सार्थेन समं तवैव, विहर्तुकामा वयमागमामः ॥ ४५ ॥
आचार्यवर्यस्य वचो निशम्य, सम्यग् धनोऽप्येवमुवाच वाचम् ।
भाग्यैः प्रभो ! प्राग्भवपङ्क्तिभूतै–र्भवादृशां सङ्गतिरङ्गिनां स्यात् ॥ ४६ ॥
ततो यतीन्द्र ! त्वदुपागमेन, सार्थो मदीयोऽस्तु निरस्तपाप्मा ।
रवेः प्रवेशेन [2]वियत्प्रदेशः, कथं न मुच्येत तमश्चयेन ? ॥ ४७ ॥
सदाऽन्नपानादिकृते यतीनां, कार्यं भवद्भिः शुभभाववद्भिः ।
भविष्यथेत्थं मयि [3]सूपका[4]राः, स [5]सूपकारानिदमादिदेश ॥ ४८ ॥
आकर्ण्य वाणीमिति भावपूर्णां, वाचंयमोऽवोचत वाचमेताम् ।
कृतिन्नसङ्कल्पमकारितं च, कृतं च साधोरशनादि कल्प्यम् ॥ ४९ ॥
अप्रासुकत्वेन पयोऽपि वापी–प्रपा-सरः-कूप-नदी-नदस्थम् ।
न कल्पते सार्थपते ! यतीनां, महात्मनामार्हतशासनेऽस्मिन् ॥ ५० ॥
सार्थेश्वरस्यावसरेऽत्र नेत्र–नासा-[6]रसज्ञाप्रमदप्रदानि ।
सद्वर्णसौरभ्यरसै [7]रसाल–फलानि केनाप्युपदीकृतानि ॥ ५१ ॥
प्रीत्या भृतः प्राभृतकर्तृभर्तृ–भक्तिर्[8]स्फुटाकारफलैः फलैस्तैः ।
प्रोवाच तद्वत् परिपाकरम्यां, गिरं स सार्थाधिपतिर्यतीन्द्रम् ॥ ५२ ॥

सहकारमहिमा

वर्णेन गन्धेन रसेन विश्वे, स्वाद्येषु हृद्यं सहकारमेव ।
नास्यान्तराले यदि बीजशल्यं, [10]रम्भा[11]फलस्येव खलत्वमेति ॥ ५३ ॥*
परोपकारैकरसक्रमस्य, [12]किमेकमाम्रस्य तरोर्न कम्रम् ? ।
विश्वेऽत्र [13]विश्वेषु महोत्सवेषु, पत्राणि कल्याणकराणि यस्य ॥ ५४ ॥
यत्पल्लवाः पल्लवयन्ति दर्पं, कन्दर्पवीरस्य जगज्जयाय ।
यस्याङ्कुरः पञ्चमरागगान–निदानतां श्लिष्यति कोकिलानाम् ॥ ५५ ॥

१ हे यशस्विन् ! । २ आकाशप्रदेशः । ३ शुभोपकारकारकाः । ४ क–'कारां' । ५ पाचकान् । ६ जिह्वा० । ७ आम्र– । ८ क–'स्फुटी०' । ९ फलवत् । १० कदलीफलवत् । ११ 'रम्भाफलस्यापि प्रत्यन्तरे पाठान्तरं' इति क–पार्श्वस्थः पाठः । १२ अपि तु सर्वमेव मनोहरम् । १३ सकलेषु ।

यन्मञ्जरी षट्चरणातिथीनां, तूर्णं प्रपूर्णं कुरुतेऽभिलाषम् ।
तृषा-क्षुधातापसमापकानि, माधुर्यधुर्याणि फलानि यस्य ॥ ५६ ॥

विशेषकम्

यदात्मनः प्रीतिकरं वरं च, यद् वस्तु पात्राय तदर्पणीयम् ।
मुनीश्वरास्तेन फलान्यमूनि, गृह्णीत मेऽनुग्रहमातनुध्वम् ॥ ५७ ॥
श्रीधर्मघोषो धनमभ्यधत्त, सिद्धान्तसिद्धां गिरमप्रमत्तः ।
फलाद्यशस्त्रोपहतं न युक्तं, स्प्रष्टुं कृतिन् ! स्वादयितुं कुतो नः ? ॥५८॥[2]
अहो यतीनां व्रतदुष्करत्वं, कर्तुं न शक्यं दिनमेकमन्यैः ।
तरन्ति तैर्यो हैदिनीहृदीशं, धुर्या भुजालस्य भुजा न तत्र ॥ ५९ ॥
इति स्तुतिं सन्दधता धनेन, बभाषिरे भक्तिभृता यतीन्द्राः ।
दास्ये तदन्नादि यदेव कल्प्यं, प्रसीदताद्य प्रचलन्तु पूज्याः ॥ ६० ॥

धनसार्थवाहस्य वसन्तपुरचलनोपक्रमः

इत्युक्तिपारे प्रवणः प्रणम्य, सार्थाधिनाथो विससर्ज सूरीन् ।
ततः प्रतस्थे च स भूरिभेरी—भाङ्कारसम्भारभृतान्तरीक्षः ॥ ६१ ॥
न्ययुङ्क्त लोकः शकटस्य भारो—द्धाराय धुर्यांस्त्वरया तदानीम् ।
सुशिक्षितान् सत्पथयानशीलान्, यूनो गृहस्येव गृही तनूजान् ॥ ६२ ॥
सप्ताङ्गराज्योद्वहनेऽपि ते स्यु—र्दीना महीना बहुसैन्यहीनाः ।
सुखं वहन्तः शकटं शताङ्ग—मुत्कन्धरास्तद्धवला बभूवुः ॥ ६३ ॥
लसद्गुणौघैर्धवलैर्निबद्धं, सन्मार्गगानां शकटव्रजानाम् ।
पङ्क्तौ निजं कश्चिदनो न्यधत्त, महत्तमानां गुरुवद् विनेयम् ॥ ६४ ॥
नं नः पुरस्त्वं भरभारितानां, गत्वाऽधिकोऽसीति विकाशिदन्ताः ।
वेगाद् व्रजन्तः करभा[11] नभोऽग्रे, वातं हसन्ति स्म किलोर्ध्ववक्त्राः ६५
रावैस्तुरङ्गेण खरेण तुल्यै—रुत्कर्षयन्ती पितृमातृपक्षौ ।
त्वराऽधिकानां भरभारिकाणां[12], चाग्रेसरी [13]वेसरपङ्क्तिराभात् ॥ ६६ ॥

---

१ भ्रमरप्राघूर्णकानाम् । २ क—'युग्मम्' । ३ नावः । ४ समुद्रम् । ५ ख—'मुनीन्द्राः' । ६ वृषभान् । ७ राजानः । ८ शकटम् । ९ क—'ततः' । १० क—'कासि०' । ११ त्रिहायणा उष्ट्राः । १२ क—'भारकाणाम्' । १३ अश्वतराणां श्रेणिः ।

भारं वहामो न भरं[1] सृजामो, निजेशितुस्तादृशहृद्यखाद्यैः ।
इत्युज्ज्वलीभूतमुखाः प्रभूत-त्वराः खरा भारभृतो विचेलुः ॥ ६७ ॥
छिद्रोज्झिताभिर्गुणसम्भृताभिः, प्रद्युम्नभावं[2] दधतीभिरन्तः ।
गोणीभिरुद्भासितपार्श्वदेशाः, पुंवत् खराः स्फूर्त्तिमधुः[3] प्रियाभिः ॥६८॥*
परिक्वणन्नूपुरपादपाताः, प्रणद्धचित्राभरणाः करभ्यः[4] ।
मार्गं भजन्ते स्म रयाभिपूर्णा, राजीवनेत्रा इव जीवितेशम् ॥ ६९ ॥
कल्याणपर्याणमिषेण[5] पृष्ठ-देशादिवोद्भ्रान्तममान्तमन्तः ।
महःसमूहं दधतोऽङ्घ्रिधूली-भरेण भानुं पिदधुस्तुरङ्गाः ॥ ७० ॥
स्तम्भैर्निकेतस्य सुतैः कुलस्य, मन्त्रीश्वरै राज्यनयस्य यद्वत् ।
सार्थेशभाण्डप्रकरस्य भारः, सुदुर्वहोऽप्युक्षवरैरुदूहे[6][7] ॥ ७१ ॥
श्रीधर्मघोषोऽध्वनि सार्थलोक-क्षुण्णे क्षमाभृत्प्रवरः प्रवृत्तः ।
जैनागमार्थश्रवणप्रणीत-मिथ्यात्वमन्थे[8] मनसीव बोधः ॥ ७२ ॥*
धिष्ण्यैरिवेन्दुः शुभवृत्तशोभैः, करैरिवार्कः कृतविश्वबोधैः ।
विष्कैरिवेभः[9] समदत्वहीनैः, शिष्यैर्वृतः सूरिपतिः प्रतस्थे ॥ ७३ ॥
सार्थाधिनाथस्य सुहृन्निदेश[10]-मासाद्य हृष्टो हृदि माणिभद्रः ।
पृष्ठस्थितः सार्थजनार्थसार्थान्, गवां कुलानीव जुगोप[11] गोपः ॥ ७४ ॥
द्रव्यं यथा प्राक्सुकृता-ऽप्रमादौ, राज्यं यथा विक्रम-गुप्तमन्त्रौ ।
पक्षद्वयस्थौ परितोऽश्ववार-वाराव-वारावृवतः[12] स सार्थम् ॥ ७५ ॥*
यथाऽरुणोऽर्कस्य तमःशमाय, राज्ञो यथाऽरातिहृते प्रतापः ।
तथाऽस्य सार्थस्य पुरःसरत्वं, दधौ धनोऽनिष्टनिषूदनाय ॥ ७६ ॥
सदा मदप्येष[13] परोपकार-कर्तेति तं सार्थपतिं शशाङ्कः ।
शिश्राय वाणिज्यकृतां वलक्ष[14]-च्छत्रीच्छलात् कल्पितभूरिमूर्त्तिः ॥ ७७ ॥
कालं मितं जीवनदानशीला, चयं धनस्त्वीदृगसौ सदेति ।
द्रष्टुं तमुत्का जलदा[15] मयूर-पत्रातपत्रालिमिषादुपेताः ॥ ७८ ॥

---

१ व्ययम् । २ सुवर्णभावं, पक्षे कामविकारम् । ३ अधारयन् । ४ 'करिण्यः' इति ख-टि-पाठः । ५ सुवर्णपल्ययन० । ६ वरवृषभैः । ७ उह्यते स्म । ८ ख-'प्रतीत०' । ९ कलभैः । १० ख-'सुहृन्निवेश०' । ११ ररक्ष । १२ रक्षतः । १३ मत्तः सकाशात् । १४ श्वेतातपत्रमिषात् । १५ मेघाः ।

बुद्धेन धर्मैकधिया धनस्य, धृत्वाऽनुकम्पां निजवाहनत्वात् ।
नुन्ना यमेनेव तृषातुराणां, प्राणान् ददुस्तत्र जलैर्लुलायाः ॥ ७९ ॥*
क्रमेलकग्रांकृतिकासरोक्ष–घण्टाटणत्कारतुरङ्गहेषाः ।
धने जगन्मैत्र्यमवेक्ष्य मन्ये, बुद्धा विरोधं मिलिता विमुच्य ॥ ८० ॥
ऊर्ध्वं ययौ तुङ्गतरङ्गरङ्गत्–खुरेण रेणुप्रकरेण पृथ्वी ।
मां सर्वतो व्याप्य धनस्य कीर्त्तिः, कियद् वियद् व्यापदितीव वेत्तुम् ८१
दूरस्थितश्वापददस्युवृन्दै–रुदस्त्रहस्तैः सुभटैः परीतः ।
सुखं स सार्थः स्फुरदश्मसार–प्राकारमध्यस्थ इव प्रतस्थे ॥ ८२ ॥
व्यधाद् धनः सर्वजनस्य रक्षा–परायणो नित्यमिति प्रयाणम् ।
इष्टं पदं प्रेप्सुरनिष्टहन्ता, यतिर्यथा संयममस्ततन्द्रः ॥ ८३ ॥

वसन्तपुरमार्गे ग्रीष्मवर्णनम्

तस्याध्वनीति व्रजतोऽध्वनीन–भीष्मो भृशं ग्रीष्म ऋतुः प्रवृत्तः ।
स्रोतस्विनीनां सरसां पयांसि, संशोषयन् पोषितभूमितापः ॥ ८४ ॥*
दिनाधिनाथो दिनवृद्धिमाप्य, प्रतापवांस्तापयति स्म विश्वम् ।
जायेत को वा जनसौख्यकारी, तीव्रस्वभावो वसुभिः प्रपूर्णः ॥ ८५ ॥
सूरस्फुरत्क्रूरकराश्रयोष्णा, विश्वोपतापं पुपुषुः समीराः ।
क्वोग्रप्रभावप्रभवत्प्रभाणां, भव्या स्थितिः स्यादनवस्थितानाम् ? ॥८६॥*
हिमाद्रिगामी हिमहिंसनाय, सहायमग्नेः ककुभोऽग्निमर्कः ।
जग्राह सार्धं ध्रुवमस्य तस्मा–दुष्णत्वमंशुस्राः सुतरामपुष्णन् ॥ ८७ ॥
निःश्वासवायुप्रसरप्रणुन्नां, जिह्वामकर्षन् महिषा मुखान्तात् ।
अन्तः प्रवृद्धोल्बणतापवह्नि–ज्वालामिवाग्रे परिकम्पमानाम् ॥ ८८ ॥*
तटाकपङ्केषु तपर्तुमूर्त्ति–प्रतप्तकाया न्यपतँल्लुलायाः ।
दरिद्रिताऽऽर्त्ता इव सन्ततार्त्त–ध्यानप्रवृद्धोल्बणकल्मषेषु ॥ ८९ ॥
प्रपां प्रपां प्राप्य पयांसि पायं–पायं स्म तृप्यन्ति न सार्थपान्थाः ।
जनिं जनिं जन्मभृतोऽभिगम्य, सम्भुज्य सम्भुज्य सुखानि यद्वत् ॥९०॥

---

१ यमराजप्रेरिताः । २ महिषाः । ३ उष्ट्र०महिष-वृषभ० । ४ पथिकजनभीष्मः । ५ नदीनाम् । ६ किरणैः, पक्षे धनैः । ७ सूर्य० । ८ पवनाः । ९ सूर्यः अग्निकोणतः अग्निं सहायं गृहीत्वा । १० किरणाः । ११ ग्रीष्मर्तु० ।

उद्दामभास्वद्भवतापतप्ताः, श्रितेषु पीयूषमिव स्रवन्तीः ।
छायास्तरूणां पथिका गुरूणां, वाणीरिवाधास्य धृतिं दधुस्ते ॥ ९१ ॥
तर्जामवज्ञाय नियन्तुरुच्चै-श्छायां [1]प्रियां प्रत्युदिताभिलाषाः ।
प्रकामतप्ताः परिहृत्य मार्ग-मुन्मार्गभाजो वृषभा बभूवुः ॥ ९२ ॥
कामाभितप्तस्य शुचिक्रमस्य, कराभिमर्शाद् [2]रुचिवल्लभस्य ।
स्वेदाम्बुपूरेण परिप्लुताङ्ग्यः, किल व्यलीयन्त विलोलनेत्राः ॥ ९३ ॥
पलाश-हिन्ताल-तमाल-ताल-तालीदलाऽऽलीकृततालवृन्तैः ।
[3]कैराग्रलोलैः पथि पान्थसार्था, मुहुर्व्यभिन्दन् घनघर्ममर्म ॥ ९४ ॥

मेघवर्णनम्

नदीर्द्रुमान् मञ्जनितान् नितान्तं, नयत्ययं शोषमतः सरोषः ।
रविं व्यधाद् वृद्धतडित्कुधाऽग्नि-ज्वालाकरालः स्फुरितो[4]ऽब्दकालः ॥९५॥
[5]प्रद्योतनं मूर्त्तमिव प्रतापं, प्रागेव [6]संहृत्य तपस्य तेने ।
धाराधरो धन्वधरोऽम्बुधारा, वर्षन् शरासारमिवापहारम् ॥ ९६ ॥*
[7]प्रीतिं वपुस्तापमपास्य पूर्वं, पश्चात् तु पङ्कं परिपोष्य पीडाम् ।
घनो [9]यथा काम[8]कथाऽभिषङ्ग-श्चकार संसारभृतामवारः ॥ ९७ ॥
सदा यदाधारतयाऽस्ति [10]सत्ता, [11]विपाट्य तान्येव तटानि दूरम् ।
उन्मार्गमीयुः स्वरसै[12]स्तटिन्यः, क्व सद्गतिर्वल्गति [13]निम्नगानाम्? ॥९८॥
[14]मरुत्पथाग्रात् पतितैर्विलोलै-[15]र्जलैर्मिलत्कण्टकचक्रवालैः ।
प्रभूतपङ्कैरभितोऽपि मार्गा, नैवाभिगम्याः [16]प्रभुवद् बभूवुः ॥ ९९ ॥
नियन्तृवर्यैरपि तर्ज्यमाना, मग्नानि पङ्के वृषभा बलाढ्याः ।
ऋष्टुं न शेकुर्नितमामनांसि, यथा युवानो विषये मनांसि ॥ १०० ॥
अलक्ष्यभावं भृशमध्वगानां, तोयेन पङ्केन समन्ततोऽध्वा ।
द्वेषेण रागेण शरीरभाजां, बभार संसार इवास्तपारः ॥ १०१ ॥
स्वस्थानसम्प्रापकमेव मार्ग-मप्युश्चतां वञ्चितचञ्चलत्वाः ।
जलप्रवाहाः खलवत् परेषां, विघ्नान्य[17]निघ्ना व्यधुरध्वगानाम् ॥ १०२ ॥

---

१ पक्षे स्त्रियम् । २ सूर्यस्य, पक्षे इष्टभर्तुः । ३ ख-'कराललोलैः' । ४ वर्षाकालः । ५ सूर्यम् । ६ आच्छाद्य । ७ पूर्वं प्रीतिं चकार । ८ काममार्गप्रवृत्तिरिव । ९ ख-'पथा' । १० नदीनां सत्ता । ११ क-'विपाद्य' । १२ नद्यः । १३ निम्नं-नीचैर्गच्छन्तीति निम्नगाः । १४ आकाशात् । १५ जलैः, पक्षे जडैः । १६ नृपा इव । १७ अवशाः ।

समुद्धरन्ति स्म शताङ्गचक्रा-ण्युर्वीनिमग्नानि महाबलेन ।
पान्था यथाऽऽपत्पतितानि सन्तः, सुहृत्कुलानि द्रविणार्पणेन ॥ १०३ ॥
आजानुसंलीननवीनपङ्काः, पथि प्रयातुं पथिका न शक्ताः ।
वर्षाप्रकर्षादपि गन्तुमुत्का, मेघैरिवोपेत्य पदेषु रुद्धाः ॥ १०४ ॥
अग्रस्थितैः सद्गुणसङ्ग्रहेण, क्रमेलका वर्त्मनि कृष्यमाणाः ।
भ्रश्यत्क्रमाः पेतुरपातुकत्वं, कुतोऽस्तु सर्वाङ्गबहिर्मुखाणाम् ? ॥ १०५ ॥
धनोऽध्ववैषम्यमवेक्ष्य तस्थौ, तत्रैव संसूत्र्य वने निवासान् ।
संसारवैरस्यमिव प्रवीणो, विमुक्तिकामः परमात्मतत्त्वे ॥ १०६ ॥
कष्टेऽपि वर्षासमये जनास्ते, निरन्तरालैरुटजैः प्रक्लृप्तैः ।
पुण्यैरगण्यैरिव पुण्यवन्तः, संसारवासेऽपि सुखेन तस्थुः ॥ १०७ ॥
निर्जन्तुभूमौ जनितं निजार्थं, यन्माणिभद्रेण समर्पितं तत् ।
शुद्धोटजोपाश्रयमाप्य तस्थौ, श्रीधर्मघोषः सह साधुवृन्दैः ॥ १०८ ॥*
बोधो विनेये विनयस्पृशीव, श्रद्धाविशुद्धे मनसीव धर्मः ।
उपाश्रये सूरिवरोऽध्युवास, तत्रागमप्रोक्तगुणोपपन्ने ॥ १०९ ॥
नैवोपपन्नानि नवानि तत्रा-नीतानि पूर्वं सह शम्बलानि[4][5] ।
क्रमादसत्तामगुरध्वगानां, भाग्यानि भोगाद् द्वि(द्यु?)सदां दिवीव ॥ ११० ॥
ततः प्रचेलुः फल-मूल-कन्द-दलार्थिनः सार्थजना वनान्तः ।
अन्नार्थिनः क्षुत्प्रसरेण दीना, वित्तेन हीना इव पत्तनान्तः ॥ १११ ॥
सार्थस्य दौस्थ्यं सुहृदा प्रदोषे, तन्माणिभद्रेण समग्रमुक्तम् ।
आकर्ण्य कर्णद्वयवज्रसूची-समं स मूर्च्छागतवद् धनोऽस्थात् ॥ ११२ ॥
परव्यथोन्माथमतेरमुष्य, चिन्तातताश्लेषहतान्यवृत्तेः ।
ईर्ष्यावशेनेव निषेवते स्म, निद्रा चिराल्लोचनगोचरत्वम् ॥ ११३ ॥
स रात्रिशेषावसरे विनिद्र-स्तुरङ्गशालापरिपालकेन ।
इदं वचः केनचिदुच्यमानं, शुश्राव हृद्भावविभावविज्ञः ॥ ११४ ॥
दशामुपेतो विषमामपीति, स्वामी ममायं प्रतिपन्नमुच्चैः ।
कृपालयः पालयते पयोद-दूनोऽपि नूनं दिनवद् दिनेशः ॥ ११५ ॥

---

१ शकटचक्राणि । २ उत्सुकाः । ३ पुरुषैः । ४ ख-'सम्बलानि' । ५ पाथेयानि ।

इदं निशम्येति धनो निदध्यौ, केनाप्युपालब्धमिदं मदग्रे ।
ततोऽत्र सार्थे मम कः प्रकामं, दुःस्थोऽस्त्यदश्चेतितुमाहतोऽभूत् ॥ ११६ ॥
अथास्य सार्थे सममागताना-मेकैकशः संस्मरतो नराणाम् ।
प्राप्ताः स्मृतिं सूरिवरास्ततोऽसौ, दध्याविदं सानुशयाशयश्च ॥ ११७ ॥
तेऽत्यन्तदुःस्थाः खलु धर्मघोषा-चार्या मया सार्द्धमुपागता ये ।
यस्मादसङ्कल्प्यमकारितं वा, कृतं च धान्याद्युपभुञ्जतेऽमी ॥ ११८ ॥
ये च स्पृशन्त्येव न कन्द-मूल-फलादि सार्थे मम नान्नमस्ति ।
भिक्षाभुजः संयमजीविनस्तद्, वर्तन्त एते यतयः[1] कथं ही ? ॥ ११९ ॥
सहाऽऽनयं यानहमध्वकृत्यं, स्वीकृत्य तानस्मरमप्यहो न ।
नैवाद्ययावद् वचसाऽपि तेषा-मकार्षमौचित्यमपीति धिङ् माम् ॥१२०॥
मनोहरं वाऽप्यमनोहरं वा-ऽप्यङ्गीकृतं पालयते पुमान् यः ।
पुण्यस्य तस्येक्षणपुण्यमीप्सुः, प्रद्योतनो नित्यमुपैति मन्ये ॥ १२१ ॥
एतत् करोमीति कृतप्रतिज्ञो, यः स्वीकृतं नैव करोत्यसत्त्वः ।
यात्यस्य संस्पर्शजकश्मलानां, प्रक्षालनायेव रविः पयोधिम् ॥ १२२ ॥*
भ्रष्टप्रतिज्ञस्तदहं मुनीनां, कथं स्वमास्यं बत दर्शयिष्ये ? ।
सद्योऽथवा पापमिदं दुनोमि, दिनोदये तत्पदवन्दनेन ॥ १२३ ॥
एवं धनस्यानुशयस्य तापं, तमस्विनी[2] सोढुमनीश्वरा[3]ऽऽगात् ।
श्रितोऽस्य सत्कर्मविलोकनाय, प्राक्शैलमौलिं[4] किल कर्मसाक्षी[5] ॥ १२४ ॥
त्रपां मुनीनामनुपासनोत्थां, त्यक्त्वा धनोऽध्यासितशुद्धवस्त्रः ।
उत्कण्ठया सङ्घटिताभिषङ्गां, समालिलिङ्गोत्सुकतामतुच्छाम् ॥ १२५ ॥
उपास्यमानः पुरुषैः प्रधानै-र्धनो विशुद्धांशुकधारिमूर्त्तिः ।
उपाश्रयं सूरिवरस्य भेजे, दिवामुखे भानुरिवान्तरीक्षम् ॥ १२६ ॥*
[6]ब्रह्मद्रुमोत्थैर्दलचक्रवालैः, समाश्रितानां पितृनामसाम्यम् ।
ब्रह्मद्रुमाणां मुनिपुङ्गवानां, प्रीत्या ध्रुवं रुद्धजलप्रवेशम्[7] ॥१२७॥ —युग्मम्
गुणैरनन्तं तपसा तपन्तं, सिद्धान्तसारं धुतपापभारम् ।
श्रीधर्मघोषं कृतधर्मपोषं, पुण्याभिमर्शः स धनो ददर्श ॥ १२८ ॥

---

१ ख–'यतीनां' । २ रात्रिः । ३ वराका । ४ पूर्वाद्रिशिखरम् । ५ भानुः । ६ क–'ब्रह्म(?)-द्रुमो०' । ७ पार्श्वपिप्पलदलैः रुद्धजलप्रवेशमुपाश्रयम् ।

उपेक्षितं दोषकदम्बकेन, समीक्षितं पुण्यकुटुम्बकेन ।
संरक्षितं सद्गुणसञ्चयेन, कटाक्षितं मुक्तिविलासवल्या ॥ १२९ ॥
विवर्जयन्तं विषयानुयोगं, सन्तर्जयन्तं दुरिताभियोगम् ।
उपार्जयन्तं सुकृतप्रयोगं, प्रस्फूर्जयन्तं परमात्मयोगम् ॥ १३० ॥

—विशेषकम्

वैराग्यशस्त्रं[1] श्रुतशाणघर्षै—स्तीक्ष्णं न यावत् क नु तावदेतत् ।
दुष्कर्ममर्माणि निकृन्ततीति, प्रवृत्तसूत्राध्ययनांश्च कांश्चित् ॥ १३१ ॥
दानेषु सर्वेष्वपि सार्वभौमं, ज्ञानस्य दानं गदितं जिनेन्द्रैः ।
अतो विनेयेषु जिनागमस्य, रहस्यसङ्ख्यानपरांश्च[2] कांश्चित् ॥ १३२ ॥
सतां चरित्रैः प्रथितैः श्रुतैश्च, स्यात् सच्चरित्राचरणप्रवृत्तिः ।
इत्यादृतान् धर्मकथाप्रथासु, तदेकतानश्रवणांश्च कांश्चित् ॥ १३३ ॥
याताश्च यास्यन्त्यपि यान्ति वा ये, मुक्तिं त एतत्परिचर्ययैव[3] ।
ततः समौनान् परमेष्ठिमन्त्रं, मुहुः परावर्तयतश्च कांश्चित् ॥ १३४ ॥
वाक्केवलज्ञानमृते न सम्य—गित्युद्गते ज्ञानचतुष्टये[4]ऽपि ।
न च्छद्मगास्तीर्थकृतो गदन्ति, तेनाग्रमौनग्रहणांश्च कांश्चित् ॥ १३५ ॥*
पञ्चप्रकारैरपि[5] कायभेदै—र्युक्तान्यतः कामयते न मुक्तिः ।
ततो[6]ऽर्हतोऽन्तःप्रणिधाय कायो—त्सर्गप्रवृत्त्यभ्यसनांश्च कांश्चित् ॥ १३६ ॥
मुक्तिः श्रुतालापतपोजपोक्ति—मुख्यैः कुतोऽस्त्यात्मलयो न यावत् ।
इत्यात्मनाऽऽत्मानमनुप्रविष्टान्, ध्यानैकनिष्ठानिरतांश्च कांश्चित् ॥ १३७ ॥*
शीर्णारतीन् शान्तरसप्रशान्त—स्वान्तप्रसर्पद्भवभावदावान् ।
श्रितान् समुत्कैरिव मुक्तिसौख्यै—र्धन्यो धनः संयमिनोऽप्यऽपश्यत् ॥ १३८ ॥

—अष्टभिः कुलकम्

श्रीधर्मघोषस्य पदौ नखेन्दु—द्योतैर्युकुल्यालहरीसुहृद्भिः ।
नमन् धनोऽलक्षि वलक्षमूर्तिः, क्षिप्तैः कटाक्षैरिव पुण्यलक्ष्म्या ॥ १३९ ॥
धनो मुनीनां पदपद्मवृन्दं, स्पृशन्नमोवागतिमञ्जुगुञ्जः ।
द्विरेफवन्नम्रशिरोविभागः, पुष्टोऽभवत् पुण्यमरन्दलाभैः ॥ १४० ॥

---

१ वैराग्यशस्त्रम् । २ रहस्यकथनतत्परान् । ३ परमेष्ठिमन्त्र० । ४ मति-श्रुता-ऽवधि-मनः-पर्यवसञ्ज्ञके । ५ औदारिक-वैक्रिया-ऽऽहारक-तैजस-कार्मणाभिधैः । ६ ख—'अतो' । ७ गङ्गा० । ८ पुष्परस० ।

धनेन धन्येन तपोधनानां, प्रकल्पिता वन्दनमालिका सा ।
श्रेयःप्रवेशाय निजाङ्गदेशे, निवेशिता वन्दनमालिकाऽऽसीत् ॥ १४१ ॥
स्वरैर्मुनीनामपि धर्मलाभा–शीर्वादपीयूषपराभिषेकः ।
धनो भवाध्वप्रभवेन जज्ञे, मलेन[2] तापेन च दूरितात्मा[3] ॥ १४२ ॥
ततो धनः सत्क्रमचारचारु–[4]राचार्यवर्यांह्रिसरोरुहान्ते ।
आनन्दसन्दर्भवशो निविश्य, मरालवन्मञ्जुलमाललाप ॥ १४३ ॥
मया तदाऽऽकार्य कदापि पूज्याः, प्रमादमद्योच्छ्रयमूर्च्छितेन ।
पाना-ऽन्नदानैर्वपुषा हृदाऽपि, न सत्कृता न प्रणताः स्मृता न ॥ १४४ ॥
क्रूरग्रहावग्रहवान्[5] यथाऽब्दो, गर्ज परिस्फूर्ज्य जलं न मुञ्चेत् ।
कृत्वा द्युतिं न स्पृशति प्रकाशं, घनाघनच्छन्नतनुर्यथाऽर्कः ॥ १४५ ॥
ज्योत्स्नां समुच्छ्रास्य मुदं न धत्ते, [6]विधुन्तुदाक्रान्तवपुर्यथेन्दुः ।
दत्त्वा गिरं न स्मरणं जगाम, प्रमादमग्नो हहहा तथाऽहम् १४६–युग्मम्
मूर्खो वरं दुश्चरितो न विद्वान्, वरं गृहस्थो न यतिः कुशीलः ।
निःस्वो वरं नो धनवानदाता, क्लीबो वरं स्वीकृतसुग् न शक्तः ॥१४७॥
इति स्वनिन्दानिरतं नितान्त–माचार्यवर्या गिरमूचिरे तम् ।
त्वयाऽध्वनि श्वापद-दस्युतो नः, संरक्षता दक्ष! न सत्कृतं किम्? १४८
प्रीणाति पृथ्वीं पयसा पयोभृत्, पयोधिरेवात्र निबन्धनं तत् ।
विश्वस्य पुष्णात्यरुणः प्रकाशं, न कारणं किं तरणिस्तदत्र? ॥ १४९ ॥
ज्योत्स्नां प्रयच्छत्यमृतं जनस्य, न स्यात् परो हेतुरिहामृतांशोः ।
अलीन् सुमाली मधुना धिनोति, निमित्तमत्र द्रुमतोऽस्ति कोऽन्यः? १५०
ददाति सार्थेश्वर! सार्थलोको, यदन्न-पानाद्युचितं सदा नः ।
त्वमेव सर्वं तदिदं ददासि, वृथा विषादं हृदि मा कृथास्तत् ॥ १५१ ॥
–विशेषकम्

धनोऽभ्यधाद्[7] यद्गुणतां यतीन्द्रा!, ममैष युष्मासु पुपोष दोषः ।
द्वेषादयस्तन्न निजस्वभाव–विभ्रंशभीत्या भवतो भजन्ते ॥ १५२ ॥

---

१ नमनावलिः । २ पापेन । ३ त्यक्तात्मा । ४ सद्वृत्या चारुः–मनोहरः । ५ क्रूरग्रहैर्वृष्टिनिरोधवान् । ६ राहुणा आक्रान्तो देहो यस्य सः ७ ख–'धनोऽव्यधात्' ।

परोपकारैकपराः परेषां, दोषान् गुणत्वेन विवर्तयन्ते ।
सुस्वादुतां भस्म गुडा नयन्ति, क्षारं घना वारिधिवारि यद्वत् ॥ १५३ ॥
चिरप्रमादाचरणेन सञ्ज्ञा[1], तथापि लज्जा न विमुञ्चते माम् ।
ऋषीनतः प्रेषयत प्रतीक्ष्या[2]!, यथा पयोऽन्नैः प्रतिलाभयामि ॥ १५४ ॥+
सूरिर्वचोऽवोचदथेति वर्त–मानेन योगेन भवांस्तु वेत्ति ।
ददाति नोऽन्नाद्यमकारितं चा–कृतं तथा प्रासुकमुद्विवेकः[3] ॥ १५५ ॥
दास्ये तदेवोपकरिष्यते य–न्मुदेत्युदित्वा सदनं धनोऽगात् ।
गतौ ततोऽस्यानुपदं मुनी द्वौ, श्रेयो-विवेकाविव मूर्तिमन्तौ ॥ १५६ ॥
न चान्न-पानादि तदा तदर्हं, दैवादभूत् किञ्चिदितस्ततोऽथ ।
धनो भ्रमन् व्यग्रमना [4]निदध्यौ, स्त्यानं घृतं पुण्यमिवोज्ज्वलं स्वम् १५७
सर्पिः[5] किमेतत् परिकल्पते वः[6], इतीरिते सार्थसुरेश्वरेण ।
इच्छाम्यदो वाक्यमदो जगाद, पतद्ग्रहं साधुरधारयच्च ॥ १५८ ॥
दातुः पतत्केवलमेव नान्नं, गृह्णाति दातारमपि क्लमे[7] यः ।
पतद्ग्रहं तं स यतिर्गभीरं, बभार सार्थप्रभुवत् सुवृत्तम् ॥ १५९ ॥
धन्योऽस्मि पुण्योऽस्मि फलं ममाद्य, जातं जनु-र्जीवितयोः श्रियोऽपि ।
इति स्मरन् स्मेरतरास्यनेत्रो, धनो ददौ साधुवराय सर्पिः ॥ १६० ॥
तदा प्रमोदाधिगमाद् धनस्य, रोमाङ्कुराणां ततिराविरासीत् ।
धर्मेण वृद्धिं धरताऽन्तरालाद्, बहिर्निरस्ता किल कश्मलाली[8] ॥ १६१ ॥
दानेन तेनात्मनि तस्य तत्र, काले यदुप्तं किल बोधिबीजम् ।
तत् तेन हर्षाश्रुजलैर्निषिक्तं, तत्तत्फलौघेन फलिष्यतीदम् ॥ १६२ ॥*
नवोल्लसद्भावघनेऽत्र काले, हर्षाश्रुतोयप्रसरस्य वर्षात् ।
संसारदावः स्वमपारभाव[9]–मपास्य शान्तित्वमधाद्[10] धनस्य ॥ १६३ ॥
धनस्य नव्यैः सुरभिस्वभावैः, क्रीडागतक्रोडमृगेन्दुगौरैः ।
पतद्ग्रहः स्त्यानघृतैरशोभि, ब्रह्माण्डभाण्डं तु भृशं यशोभिः ॥ १६४ ॥

---

१ उत्पन्ना। २ हे पूज्याः!। ३ प्रगता असवः–प्राणा यत्र तत् प्रासुकम्। ४ ददर्श, "निध्यानमवलोकनं" इति हैमे ( का० ३, श्लो० २४१ ) पाठात्। ५ घृतम्। ६ युष्माकम्। ७ ग्लानौ सत्याम्। ८ पापानां श्रेणिः। ९ ख–'सूमपार०'। १० ख–'सान्तत्व०'।

तथा घृतैस्तैरमृतैर्धनस्य, यशोऽङ्गजोऽगादजरामरत्वम् ।
अद्यापि यावत् स यथा त्रिलोक्यां, स्वैरं व्यलासीद् विलसिष्यतीह १६५

दानाद्भुतो धर्मगजो धनस्य, पुष्टस्तथा स्त्यानघृतस्य पिण्डैः ।
यथैष दुष्कर्मवनान्यमुष्य, समूलमुन्मूलयिता बलिष्ठः ॥ १६६ ॥

दानावसाने मुनिवन्दनाय, धनस्य नम्रस्य भुवि प्रसक्ताः ।
हर्षाश्रुसेकस्पृशि हारमुक्ता, यशोलताबीजनिभा बभूवुः ॥ १६७ ॥

स्वयंवराण्यङ्गजुषां सुखानि, 'सर्वार्थसिद्धि'प्रसवानि यस्मात् ।
तं धर्मलाभं [1]व्रतिनौ धनाय, दत्त्वा श्रितौ स्वीयमुपाश्रयं तौ ॥ १६८ ॥

स्थानं मुनीनां [2]गुरुणा [3]बुधेन, [4]शनैश्चरेणा[5]श्रितमङ्गलेन ।
[6]काव्येन संशोभि [7]विकर्तनेन, मुक्तं धनोऽगान्निशि खं शशीव ॥१६९॥

धनोऽनुजानीत वदन्नदोऽसौ, प्रविश्य नत्वा सुगुरून् न्यषीदत् ।
धर्मं ततोऽग्रेऽस्य गिरा नवाब्द–निर्घोषयाऽऽख्यादिति धर्मघोषः ॥१७०॥

श्रीधर्मघोषसूरीणामुपदेशः

वनानि विघ्नानि [8]घृणैकनिघ्नो, निघ्नन् भवारण्यपथे शरण्यः ।
इष्टं पदं प्रापयतेऽङ्गिसार्थान्, सार्थेश ! धर्मस्त्वमिवापनिद्रः ॥ १७१ ॥

धर्मो विशिष्टः पितृ-मातृ-पत्नी–सुहृत्-सुत-स्वामि-सहोदरेभ्यः ।
सनातनोऽयं सह याति मृत्यौ, दुःखापहोऽमी पुनरीदृशा न ॥ १७२ ॥

धर्मो महामङ्गलमङ्गभाजां, धर्मो जनन्युद्दलिताखिलार्तिः ।
धर्मः पिता पूरितचिन्तितार्थो, धर्मः सुहृद् वर्तितनित्यहर्षः ॥ १७३ ॥*

विद्युद्विलासस्थिति जीवितव्यं, सन्ध्येव लक्ष्मीः क्षणदृष्टनष्टा ।
तरङ्गभङ्गप्रतिमं प्रभुत्वं, धर्मस्ततः शाश्वत एव सेव्यः ॥ १७४ ॥

[10]ताराऽध्वतारा-तटिनीभुजङ्ग–तरङ्ग-गङ्गासिकताकणानाम् ।
सङ्ख्यां स कृत्वा कुरुतां स्वकर्म, यो धर्ममीप्सुः कृतगेहकृत्यः ॥१७५॥

---

१ ख 'श-मिनौ' । २ अध्यापकेन, पक्षे बृहस्पतिना । ३ विदुषा, पक्षे चन्द्रात्मजेन । ४ मन्दगमनेन, पक्षे सूर्यपुत्रेण । ५ श्रेयसा, पक्षे लोहिताङ्गेन । ६ ग्रन्थविशेषेण कवित्वेन वा । ७ दुष्टेन, पक्षे सूर्येण । ८ दयैकवशः । ९ ख–'चिन्तितपूरितार्थो' । १० ताराऽध्वा–आकाशः तस्य ताराणां तटिनी–नदी तस्याः भुजङ्गः–स्वामी समुद्रः तस्य कल्लोलानां गङ्गायाः सिकतानां कणानां च ।

धर्मस्य चातुर्विध्यम्

देहस्पृशां दुर्गति-[1]पातकाभ्यां, धर्त्ता ततो धर्म इति प्रतीतः ।
दानादिभेदैः स [2]चतुःप्रकार—संसारविस्तारहरश्[3]चतुर्धा ॥ १७६ ॥*
दानं विपच्छेदनिदानदानं, शीलं सुखोन्मीलनशा[4]लिशीलम् ।
तपः [5]स्फुरत्पङ्कतपातपश्चि, सद्भावना स्याद् भवभावनाशा ॥ १७७ ॥
अर्थिव्यथापारनिदानदानो, [6]नकारकारागृहचित्तवृत्तिः ।
अदेयदेयस्वपरप्रभेद—मुक्तो [7]विमुक्तैरपि किं न मान्यः ? ॥ १७८ ॥
अर्तीरुपेतस्य रिपोरपि स्व—तपो वपुः श्रीव्ययतोऽपि निघ्नन् ।
[8]अक्षुण्णदाक्षिण्यनिधिर्विधत्ते, दिशो यशोभिर्विशदाः सदाऽपि ॥ १७९ ॥
स्वात्मप्रशंसापरदूषणार्थि—नकारयाञ्चावचनेषु मूकाः ।
नराः परानन्दसुधापयोधि—तरङ्गरङ्गद्यशसो जयन्ति ॥ १८० ॥
तज्ज्ञानदाना-ऽभयदान-धर्मो—पष्टम्भदानैस्त्रिविधं तु दानम् ।
एतद् ददौ यः खलु तस्य दातुः, सुदुर्लभं सिद्धिपदं न जातु ॥ १८१ ॥
ज्ञानस्य दानं तु वदन्ति दानात्, तद्भा(द्धा?)वनादेशन[9]साधकानाम् ।
ज्ञानस्य दानात् परमस्ति दानं, नाहो महानन्दकृतौ निदानम् ॥१८२॥*
यतः श्रुतज्ञानवशेन वेत्ति, जीवादि[10]तत्त्वानि हिता-ऽहिते च ।
ततः प्रबुद्धो विरतिं प्रयाति, तयाऽर्पितां तूर्णमुपैति मुक्तिम् ॥ १८३ ॥
एकत्र जन्मन्यहरेकमेव, दत्तं धनाद्यर्थिजनान् [11]धिनोति ।
ज्ञानं तु तेषां तनुते वितीर्ण—मामुक्तिसौख्यानि भवान्तरेषु ॥ १८४ ॥*
बहिर्गतान्येव कृताङ्गतापः, [12]पतिस्त्विषां हन्तितमां तमांसि ।
अन्तर्गतान्यप्युदितात्मशैत्यं, ज्ञानं तु तानि प्रसभं भनक्ति ॥ १८५ ॥
अध्यापनेनाध्ययनेन कोटिं, परां श्रुतज्ञानमयं निनाय ।
इत्याप्तलोभं तमुपैति मन्ये, तत् केवलज्ञानमु[13]पात्तवेगम् ॥ १८६ ॥

---

१ क—'पातुकानां' । २ देव-नारक-तिर्यङ्-मनुष्यगतिभेदैः । ३ दान-शील-तपो-भावनाभिः । ४ ख—'लीलम्' । ५ स्फुरत्पापशोषक० । ६ नकारं कारागृहं मन्वानः । ७ सिद्धैरपि । ८ अखण्डित० । ९ ज्ञानोपकरणानाम् । १० प्रीणयति । ११ जीवा-ऽजीव-पुण्य-पापा-ऽऽस्रव-संवर-निर्जरा-बन्ध-मोक्षाख्यानि । १२ सूर्यः । १३ शीघ्रतरम् ।

ज्ञानं द्वितीयं जगते ददाना, अहो लभन्ते लघु पञ्चमं तत् ।
वशीकृतां तेन च पञ्चमीं तां, गतिं भजन्तेऽनुगृहीतलोकाः ॥ १८७ ॥
त्रिधा मनो-वाक्-तनुभिस्त्रिधैर्षु, स्वान्याऽनुमत्या करणादिभिश्च ।
यद् वर्जनं जीवगणे वधस्य, जिनैस्तदेवाभयदानमुक्तम् ॥ १८८ ॥

जीवादिस्वरूपम्

जीवा द्विधा स्थावरसंज्ञया च, त्रसाख्यया च द्वितये द्विधाऽमी ।
भवन्ति पर्याप्ततयाऽप्यपर्या-प्तत्वेन पर्याप्तय ईरिताः षट् ॥ १८९ ॥
पर्याप्तताकारणमेषु ताश्चा-ऽऽहारा-ऽङ्ग-खं-प्राण-वचो-मनांसि ।
एकेन्द्रियाणां विकलाक्ष-पञ्चा-क्षाणां चतस्रः किल पञ्च षट् च ॥१९०॥*
एकेन्द्रियाः स्युः किल पञ्चभेदाः, पृथ्व्य-ऽम्बु-तेजः-पवमान-वृक्षाः ।
चत्वार एतेषु भवन्ति पूर्वे, द्विधा पुनर्बादर-सूक्ष्मभेदात् ॥ १९१ ॥
प्रत्येक-साधारणभेदभिन्ना, महीरुहोऽपि द्विविधा भवन्ति ।
साधारणा अप्यनयोः प्रदिष्टा, द्विधा तथा बादर-सूक्ष्मरूपाः ॥ १९२ ॥
त्रसाः पुनर्द्वि-त्रि-चतुर्मिताक्षाः, पञ्चेन्द्रियाश्चापि चतुःप्रकाराः ।
पञ्चेन्द्रियास्तत्र पुनर्द्विभेदा-स्ते सञ्ज्ञिनोऽपि स्युरसञ्ज्ञिनोऽपि ॥१९३॥
जानन्ति शिक्षालपनोपदेशान्, सर्वात्मनः प्राणसमन्विता ये ।
ते सञ्ज्ञिसञ्ज्ञा अमुतः परे स्यु-रसञ्ज्ञिनस्ते विकलाक्षसञ्ज्ञाः ॥ १९४ ॥
स्युः स्पर्शनाख्यं रसनाभिधानं, घ्राणाह्वयं दृक्-श्रवणाभिधे च ।
खानि क्रमात् स्पर्श-रसौ च गन्धो, रूपं च शब्दो विषयास्त्वमीषाम् १९५*
सद्द्वीन्द्रियाः स्युः कृमि-शङ्ख-शुक्ति-कपर्द-गण्डूपदकादयस्तु ।
सत्त्रीन्द्रिया मत्कुण-कीटिकाद्या, मत्कोट-यूकाप्रमुखा विचित्राः ॥१९६॥
स्युर्मक्षिका-भृङ्ग-पतङ्ग-दंश-लूताप्रकाराश्चतुरिन्द्रियाश्च ।
जल-स्थल-व्योमचरास्तु तिर्यग्-योन्युद्भवा ये विचरन्ति शेषाः ॥१९७॥
देवा नरा नारकिकाश्च सर्वे, पञ्चेन्द्रियास्ते स्युरनेकभेदाः ।
एवं सुबुद्धिर्मतजीवभेदः, कुर्वीत नैतेषु वधं कदाचित् ॥ १९८ ॥*

---

१ केवलज्ञानम् । २ केवलज्ञानेन । ३ मुक्तिनाम्नीम् । ४ एषु-त्रिषु दानेषु । ५ खम्-इन्द्रियम् । ६ ख-'रूपात्' । ७ असुष्मात् ।

यद्व् वर्ज्यतेऽमीषु[1] वधस्त्रिधा तत्-पर्यायनाशाद्थ दुःखकृत्तेः ।
मनोऽर्तितो वा त्रिजगत्प्रियं तत्-तीर्थङ्करेणाभयदानमुक्तम् ॥ १९९ ॥
धन्येन येनाभयदानमङ्गि-व्रजाय दत्तं किल तेन तस्मै ।
किं किं न दत्तं यदहो त्रिलोक्यां, न जीविताद्दिष्टतमं समस्ति ॥२००॥
सर्वेऽपि [2]जीवाहुतयोऽत्र जीवा-स्ततो मिथोऽप्यस्ति भयं न केषाम् ।
तद् येन भेजे विरतिस्त्रिलोक्या-स्तेनाभयोद्घोषणमेव तेने ॥ २०१ ॥
वित्तादिदानप्रभवा भुवोऽन्तः, परोपकारा न कति प्रतीताः ? ।
अमी शतांशेऽपि समीभवन्ति, भयार्तजन्तोरभयार्पणैः किम् ? ॥ २०२ ॥
पितुः कलाधातुरभीतिदातु-र्मातुश्च किं प्रत्युपकारकर्म ।
इति स्मरन्तो हृदि केऽपि खेदं, तदंह्रिभक्त्यैव यदि क्षिपन्ति ॥ २०३ ॥
संसारनिस्तारकरं तु 'धर्मो-पष्टम्भदानं' प्रथितं तृतीयम् ।
तद् दायक-ग्राहक-देय-काल-भावैर्विशुद्धं किल पञ्चधा स्यात् ॥ २०४ ॥
श्रद्धाऽद्भुतं चित्तमिदं तथेदं, वित्तं विशुद्धं शुभपात्रमेतत् ।
अहो त्रयं यस्य ममोपपन्नं, ततः कृतार्थः खलु दायकोऽस्मि ॥ २०५ ॥
ध्यायन्निदं यच्छति दायको य-ज्ज्ञाना[3]श्रितो न्यायसमाश्रितश्रीः ।
नैवानुतापेन कदापि तप्तो, दानं भवेद् दायकशुद्धमेतत् ॥२०६॥-युग्मम्
[4]तपःपरः [5]पञ्चसमित्युपेत-स्त्रिगुप्तिगु[6]प्तः सुचरित्रशीलः ।
यद्ग्राहको दान्तमनाः प्रशान्तो, दानं मतं ग्राहकशुद्धमेतत् ॥ २०७ ॥
यद्वस्तुवस्त्रा-ऽशन-पान-खाद्य-स्वाद्यादि-पात्रा-ऽऽसन-कम्बलादि ।
जायेत दोषैर्वियुतं [7]द्विचत्वा-रिंशन्मितैर्देयविशुद्धमेतत् ॥ २०८ ॥

---

१ ख-'द्रव०' । २ जीवाहाराः । ३ ख-'ज्ञानान्वितो' । ४ क-'ततः परं' । ५ ईर्या-भाषै-षणा-ऽऽदाननिक्षेपो-त्सर्गरूपसमितिपञ्चकेन युक्तः । ६ मनो-वाक्-कायगुप्तिभिर्गुप्तः । ७ द्विचत्वारिंशद्दोषवाचका **विचारसारे** ( पृ. ७२-७३ ) गाथास्तच्छाया चैवम्—

"सोलस उग्गमदोसा सोलस उप्पायणाइ दोसा य ।
दस एसणाइ दोसा बायालीसं इय हवंति ॥ २९३ ॥"

[ षोडशोद्गमदोषाः षोडशोत्पादनायाश्च दोषाश्च ।
दशैषणाया दोषा द्विचत्वारिंशदिति भवन्ति ॥ ]

प्रदीयते किञ्चन यच्च काले, पात्राय तत्कालविशुद्धमाहुः।
आशंसया यद् रहितं प्रवृद्ध-श्रद्धाऽधिकं भावविशुद्धमेतत् ॥ २०९ ॥
धर्मोऽङ्गतोऽन्नात् तदतो हि धर्मो-पष्टम्भदानाय सदा यतेत।
तद् येन कुर्वन् वितनोति तीर्था-व्युच्छित्तिमाप्नोति परं पदं च ॥२१०॥

---

उग्गमदोस त्ति-

"आहाकम्मु १ देसिय २ पूईकम्मे ३ य मीसजाए ४ य।
ठवणा ५ पाहुडियाए ६ पाओयर ७ कीय ८ पामिच्चे ९ ॥ २९४ ॥
परियट्टिए १० अभिहडे ११ उब्भिन्ने १२ मालोहडे १३ य अच्छिज्जे १४।
अणिसिट्ठ १५ अज्झोयरए १६ सोलस पिंडुग्गमे दोसा ॥ २९५ ॥"

[ उद्गमदोषा इति—

आधाकर्म १ औद्देशिकं २ पूतिकर्म ३ च मिश्रजातं ४ च।
स्थापना ५ प्राभृतिका ६ प्रादुष्करणं ७ क्रीतं ८ प्रामित्यम् ९ ॥
परिवर्तितं १० अभ्याहृतं ११ उद्भिन्नं १२ मालापहृतं १३ चाच्छेद्यम् १४।
अनिसृष्टं १५ अध्यवपूरकः १६ षोडश पिण्डोद्गमे दोषाः ॥ ]

उप्पायणादोस त्ति-

"धाई १ दूई २ निमित्ते ३ आजीव ४ वणिमगे ५ तिगिच्छा ६ य।
कोहे ७ माणे ८ माया ९ लोभे १० य हवंति दस एए ॥ २९६ ॥
पुव्विं पच्छासंथव ११ विज्जा १२ मंते १३ य चुन्न १४ जोगे १५ य।
उप्पायणाइ दोसा सोलसमे मूलकम्मे १६ य ॥ २९७ ॥"

[ उत्पातनादोषा इति—

धात्री १ दूती २ निमित्तं ३ आजीवः ४ वनीपकः ५ चिकित्सा ६ च।
क्रोधो ७ मानो ८ माया ९ लोभः १० च भवन्ति दशैते ॥
पूर्वं पश्चात्संस्तवः ११ विद्या १२ मन्त्रश्च १३ चूर्णानि १४ योगः १५ च।
उत्पादनाया दोषाः षोडशो मूलकर्म १६ च ॥ ]

दस एसणादोस त्ति—

"संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मीसे ७।
अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥ २९८ ॥"

[ दश एषणादोषा इति—

शङ्कितं १ म्रक्षितं २ निक्षिप्तं ३ पिहितं ४ संहृतं ५ दायकं ६ उन्मिश्रम् ७।
अपरिणितं ८ लिप्तं ९ छर्दितं १० एषणादोषा दश भवन्ति ॥ ]

विशेषार्थिना विलोकनीयः **प्रवचनसारोद्धारः** ( पृ. १३७-१५४ ) सटीकः।

१ क-'शुद्धि०'। २ धर्मः शरीराद् भवति। ३ शरीरमन्नात्। ४ क-'सुदा'। ५ धर्मोपष्टम्भदानम्।

शीलं भवक्लेशविनाशशीलं, सावद्ययोगाद् विरतिं वदन्ति ।
सा देशतः सर्वत एव वा स्यात्, किल क्रमाच्छ्रावक-संयतानाम् ॥२११॥

श्राद्धानां द्वादश व्रतानि

तां देशतः प्राहुरणुव्रतानि, पञ्च त्रिसङ्ख्यानि गुणव्रतानि ।
चत्वारि [1]शिक्षोपपदव्रतानि, प्रबुध्यतां द्वादशधेति सेयम् ॥ २१२ ॥
[2]जीवावधः सूनृतवागचौर्यं, ब्रह्मानुषङ्गोऽप्यपरिग्रहोऽपि ।
पञ्चेति पञ्चेन्द्रियजित्वराणा–मगारिणां प्राहुरणुव्रतानि ॥ २१३ ॥
अथादिमं दिग्विरतिस्तु भोगो–पभोगयोर्या विरतिर्द्वितीयम् ।
अनर्थदण्डाद् विरतिस्तृतीयं, गुणव्रतानां त्रयमेतदुक्तम् ॥ २१४ ॥+
सामायिकाख्यं प्रथमं तु देशा–वकाशिकं पौषधसञ्ज्ञमन्यम् ।
चतुर्थमेवातिथिसंविभागः, शिक्षाव्रतानीति चतुर्मितानि ॥ २१५ ॥
धर्मो हि जीवः शुभशर्मलक्ष्म्या, धर्मस्य जीवः खलु जीवरक्षा ।
सर्वप्रकारैस्तदियं प्रपाल्या, धर्मं विना नैव शुभोपलब्धिः ॥ २१६ ॥*
पङ्गुत्व-कुष्ठित्व-कुणित्वमुख्यान्, मत्वा सुधीर्जीववधस्य दोषान् ।
त्यजेन्निरागस्त्रसजीवहिंसां, सङ्कल्पतोऽनल्पमतिः सदाऽपि ॥ २१७ ॥
दयां विना देव-गुरुक्रमार्चा–तपांसि सर्वेन्द्रिययन्त्रणानि ।
[3]दानानि शास्त्राध्ययनानि सर्वं, सैन्यं गतस्वामि यथा वृथैव ॥ २१८ ॥
सदाऽप्यहिंसैकपरा नरा ये, श्रयन्ति ते श्लाघ्यतमत्वमुच्चैः ।
सुदीर्घमायुः सुबलं सुरूप–मरोगयोगं [4]सुभगं शरीरम् ॥ २१९ ॥+
असत्पुरापातकघातकोऽयं, महोपकारीति कृतापकारम् ।
श्लिष्यन्ति दृष्ट्वा सहसा हसन्तः, सन्तः क्षमासन्ततिचारुचित्ताः ॥२२०॥
परः परामर्तिमि[5]यर्ति येन, जागर्ति येनात्मनि नाम दैन्यम् ।
सत्यव्रतः सत्यमपीहते [6]त–न्न वध्यमानोऽपिसुधीः सुधीरः ॥ २२१ ॥
न्यासापहारो वसुधा-कुमारी–धेनुव्यलीकान्यनृतं च साक्ष्यम् ।
स्थूलानृतानीति विवेकवन्तः, पञ्च प्रजल्पन्ति कदापि नैव ॥२२२॥*

---

१ शिक्षाव्रतानीत्यर्थः । २ क–'जीवे वधः' । ३ ख–'दानादि०' । ४ ख–'शुभगं' ५ प्राप्नोति । ६ सत्यम् ।

यन्मूकता-काहलता[1]-ऽऽस्यरोग-समन्मनत्वान्यनृतप्रभावात् ।
समुद्भवन्तीत्यधिगम्य दक्षा, वदन्ति नासत्यवचः कदापि ॥ २२३ ॥
अस्माद् वपुश्छेदन-दुर्भगत्व-दारिद्र्य-दास्यानि समुल्लसन्ति ।
ज्ञात्वेत्यदत्तात्तफलानि सन्तः, स्थूलं न हि स्तेयमुपाचरन्ति ॥ २२४ ॥*
निजानि जानन्नपि जातजाति-स्मृतिर्भवेऽन्यत्र निधीकृतानि ।
सुखोपलभ्यान्यपि नाददीत, द्रव्याणि निर्व्याजनयो मनीषी ॥ २२५ ॥
प्राणान् यदर्थं मनुजास्त्यजन्ति, तत्प्राणतोऽप्यभ्यधिकं धनं तत् ।
प्राणापहारादपि तेन नूनं, धनापहारोऽधिकपातकाय ॥ २२६ ॥
अब्रह्मतश्छेदनमिन्द्रियस्य, नपुंसकत्वं बहुजन्मसु स्यात् ।
ततो विवेकी निजदारतुष्टो, भूयाद् ध्रुवं वा परदारवर्जी ॥ २२७ ॥
स्त्रीभिः प्ररूढार्तिभिरौषधत्वं, नीतस्य लुप्येत न यस्य चेतः ।
न तत्कलां[2] धर्मकलत्रचारी, न ब्रह्मचारी च शुभौ(भं) लभेते ॥ २२८ ॥
या दक्षिणं हस्तमदत्तपत्यु-र्भुनक्ति सर्वस्वममुष्य तस्याः ।
[3]विश्वस्तघाताद् व्यभिचारवत्याः, स्पर्शोऽपि पापाय पराङ्गनायाः ॥२२९॥
या काम्यतेऽनेकविटादिलोकैः, पण्येन या श्लिष्यति कुष्ठिनोऽपि ।
तस्या विलासैः स्वकलाप्रभुत्व-रूपाभिमानः कतमोऽस्तु पुंसः ? ॥२३०॥*
तेजस्विनोऽत्यूर्जितवीर्यवर्या, दीर्घायुषः संहनने दृढास्ते ।
नराः सुसंस्थानधरा भवन्ति, ये ब्रह्मचर्यं परिपालयन्ति ॥ २३१ ॥
यथा यथा भूरिपरिग्रहाशा-स्तथा तथाऽऽरम्भपराः पुमांसः ।
आरम्भतो दुःखशतोपलम्भः, स्वल्पं प्रकल्पेत परिग्रहं तत् ॥ २३२ ॥
द्वेषेण रागेण भवप्रवृद्धिः, परिग्रहेणोद्भवतः सदा तौ[4] ।
मूर्छासमुच्छ्रायमतो विहाय, परिग्रहे साग्रहतां निरुन्ध्यात् ॥ २३३ ॥
इयं महामोहकरीत्यरक्तः, परोपकारे प्रथमेति सक्तः[5] ।
प्रयुक्तभोगप्रसरेत्युदासः, सदाऽपि दक्षः श्रियमीक्षते स्वाम् ॥ २३४ ॥+
उपार्जयेत् कष्टशतानि कृत्वा, जगज्जनं दासयितुं धनं यत् ।
सदैव तद्वीक्षण-रक्षणाद्यै-स्तस्यैव दासः स्वयमेव स स्यात् ॥ २३५ ॥

---

१ शुष्कता । २ यस्य चित्तं न लुप्येत् तत्कलाम् । ३ हेतौ पञ्चमी । ४ राग-द्वेषौ । ५ रक्तः ।

विलूनतृष्णस्य सुखोपलब्धि–र्नरस्य सन्तोषपरस्य या स्यात् ।
सा स्वर्गलोकेऽस्तु कुतः सुराणां, परश्रियेर्ष्याकलुषीकृतानाम्[1] ॥ २३६ ॥

द्विपाच्-चतुष्पाद्-धन-धान्य-कुप्य–वास्तुस्थिति-क्षेत्र-हिरण्य-हेम्नाम् ।
परिग्रहः स्यान्नवधेत्यमीषां, सन्तोषधन्यो विदधीत मानम् ॥ २३७ ॥

यस्मिन् कृता दिक्ष्वखिलासु सीमा, न लङ्घ्यते 'दिग्विरति'व्रतं तत् ।
आद्यं निवृत्तिः परिमर्दनस्य, संसारिणामत्र चराचराणाम् ॥ २३८ ॥

दिग्यानमार्गावधितो बहिःस्था, ये स्थावराः प्राणभृतस्त्रसाश्च ।
ते ह्येकतो मृत्युभयं निवृत्त–मिति प्रमोदेन समुल्लसन्ति ॥ २३९ ॥

यत्रात्मशक्त्या कलयन्ति भोगो–पभोगसङ्ख्यां भविनो विविक्ताः ।
गुणव्रतं तत् कथयन्ति 'भोगो–पभोगमानं' मुनयो द्वितीयम् ॥ २४० ॥

अन्न-स्रगाद्यः सकृदेव धीरै-र्यो भुज्यते तं प्रवदन्ति 'भोग'म् ।
पुनः पुनर्यः पुनरेव भोग्यो–ऽङ्गनादिकः स्या'दुपभोग' एषः ॥ २४१ ॥

हैयंगवीनं मधु सीधु मांसं, विवर्जनीयं कृमिपूर्णगर्भम् ।
उदुम्बर-प्लक्ष-वटोद्भवं का–कोदुम्बरा-ऽश्वत्थफलं फलं च ॥ २४२ ॥

दधि व्यतिक्रान्तदिनद्वयं यद् , यत् कोथवत्[3] पुष्पितमोदनादि ।
यन्मिश्रमामेन च गोरसेन, दक्षैर्न भक्ष्यं द्विदलं सदा तत् ॥ २४३ ॥

स्वयं परेणाथ[4] फलं प्रसूनं, नाज्ञातमश्नन्ति विविक्तचित्ताः ।
फले विषस्याथ विवर्जिते वा, प्रवृत्तिरेतस्य कदापि मा भूत् ॥ २४४ ॥

सन्धान-वृन्ताकफलानि तुच्छ–फलानि मृत्स्नां करकान् हिमं च ।
अनन्तकायान् बहुबीजकानि, निषेधयन्त्यादृतजैनधर्माः ॥ २४५ ॥

पल्यङ्कशाकं लवणांह्रिपत्वक्[5], सुकोमलाम्लां किशलं समग्रम् ।
कुमारिकां शूकरसञ्ज्ञवल्ली–स्नुहीविरूढामृतवल्लयोऽपि ॥ २४६ ॥

तथा गडूची गिरिकर्णिका च, शतावरी चार्द्रसमग्रकन्दाः ।
सूत्रोदिता इत्यपरेऽपि तज्ज्ञै–रनन्तकायाः परिवर्जनीयाः ॥ २४७ ॥

–युग्मम्

---

१ एकस्मात् मनुष्यात् । २ भ्रक्षणम् । ३ ख–'कोषवत्' । ४ ख–'परेणापि' ।
५ वृक्षत्वचा ।

मुस्ता-रसोना-ऽऽर्द्रक-सूरणाख्याः, पिण्डालुकाश्चालुक-मूलकौ च ।
कच्छूरको गृञ्जन-वज्रकन्दौ, लोढो हरिद्राप्रमुखाश्च कन्दाः ॥ २४८ ॥*

तथेतरत् प्रावृषि तन्दुलीय-मुरूयस्य पत्रं बहुजन्तुमिश्रम् ।
[२]शिग्रोर्मधूकप्रभृतेश्च पुष्पं, मधूकबिल्वादि फलं च वर्ज्यम् ॥ २४९ ॥

उच्छिष्टमन्नं क्रियते चरद्भि-र्निरङ्कुशैः प्रेत-पिशाच-भूतैः ।
यस्मिन् न तस्मिन् दिवसावसाने, भुञ्जीत निर्णीतजिनागमार्थः ॥२५०॥

द्वे द्वे विमुञ्चन् घटिके दिनस्य, मुखेऽवसाने च वशीकृतात्मा ।
विभावरीभोजनदोषविज्ञो, भुञ्जीत योऽसौ सुकृतैः परीतः ॥ २५१ ॥

येऽश्नन्त्यशूकाः पशुवन्निशायां, भवन्ति ते हन्त भवान्तरेषु ।
उलूक-काको-रग-शूकरालि-गोधौ-तु-गृध्राः कथितं जिनेन्द्रैः ॥ २५२ ॥

यो यामिनीभोजनतो विरामं, प्रयत्नतः स्वीकुरुते यतात्मा ।
उपोषितोऽर्द्धं पुरुषायुषस्य, स स्यादवश्यं श्रितपुण्यराशिः ॥ २५३ ॥

अङ्गारकजीविकादिकर्मादानानां स्वरूपम्

भोगोपभोगस्पृहया श्रयन्ति, यतो धनाय व्यवसायकर्म ।
व्रते ततः पञ्चदशात्र कर्मा-दानानि वर्ज्यानि जगुर्यतीन्द्राः ॥ २५४ ॥

या जीविकाऽङ्गारक-काननाभ्यां, शकटाद्भतः स्फोटक-भाटकाभ्याम् ।
जायेत लाक्षा-रस-केश-दन्त-हालाहलानामपि या वणिज्याः ॥ २५५ ॥

निर्लाञ्छनं यं प्रति पीडनानि, दवस्य दानं सरसश्च शोषः ।
तथाऽसतीपोषणमित्यमूनि, धर्मेप्सवः पञ्चदश त्यजन्ति ॥ २५६ ॥

—युग्मम्

अङ्गारक-भ्राष्ट्र-सुवर्ण-कुम्भ-लोहादिकारित्व-ठंठारिताद्याः ।
तथेष्टिकापाक इति श्रुतज्ञैः, सा चेय'मङ्गारकजीविको'क्ता ॥ २५७ ॥

अच्छिन्नविच्छिन्नवनस्पतीनां, यद् विक्रयः पुष्प-फल-च्छदानाम् ।
निष्पेषणं निर्दलनं कणानां, ज्ञेया विविक्तै'र्वनजीविके'यम् ॥ २५८ ॥*

---

१ ख-'सूरणाद्याः' । २ 'सेकटा' इति भाषायाम् । ३ 'महुडा' इति भाषायाम् । ४ गोधा ओतुः-बिलाडश्च । ५ ख-'जितात्मा' । ६ शकटतः । ७ क-'स्फोटन०' । ८ क-'सरसस' । ९ कांस्यकारवाची 'ठठेरो'शब्द इति पञ्चनदीयाः ।

यत् खेटनं स्याच्छकटस्य तस्य, तदङ्गकानां घटनं तथा यत् ।
तद्विक्रयो यच्च जिनागमज्ञैः, सा जीविकोक्ता शकटाग्रयुक्ता[1] ॥ २५९ ॥
खातेन यत् कूपसरोमुखानां, तथा शिलानां परिकुट्टनेन ।
भूकायसम्मर्दभवेन वृत्तिः, सा स्फोटपूर्वा[2] किल जीविका स्यात् ॥२६०॥
यद् वेसराणां शकटोक्ष-वाजि–क्रमेलकानां खर-कासराणाम् ।
भारस्य [3]संवाहनतो हि वृत्ति–र्बोध्या बुधै'र्भाटकजीविके'यम् ॥ २६१ ॥
यद् विक्रयो दुष्कृतसद्म लाक्षा–मनःशिला-टङ्कण-धातुकीनाम्[4] ।
क्रियेत नीलिप्रभृतेश्च 'लाक्षा–वाणिज्य'मेतन्मुनिभिः प्रणीतम् ॥ २६२ ॥
कादम्बरी[5]-मज्ज-वसा-मधूनां, हैयंगवीनस्य च विक्रयो यत् ।
द्विपाच्चतुष्पात्परिविक्रयो यद्, वाणिज्यमुक्तं रसकेशयोस्तत् ॥ २६३ ॥
यदाकरे दन्त-नख-त्वग-ऽस्थि–रोम्णां कचानां ग्रहणं क्रियेत ।
त्रसाङ्गकानां व्यवसायहेतो–स्तद् 'दन्तवाणिज्य'मुदाहरन्ति ॥ २६४ ॥
हलाहलानां हरितालिकादे–र्लोहस्य यन्त्रा-ऽस्त्र-हलादिकानाम् ।
यद् विक्रयो जीवितघातकानां, 'विषस्य वाणिज्य'मिदं वदन्ति ॥२६५॥
गोः क[6]म्बलाश्रोत्रविभेदनासा–वेधोऽङ्कनं मुष्कविकर्तनं[7] च ।
पृष्ठस्य सञ्चालनमाहुरेतन्–'निर्लाञ्छनं' स्वच्छमतिप्रताना[8]ः ॥ २६६ ॥*
एरण्डबीजावलिसर्षपेक्षु–तिलाम्बुयन्त्रादिनिपीडनं यत् ।
प्रकल्प्यते यद् दलतैलक्लृप्ति–स्तां 'यन्त्रपीडां' परिकीर्तयन्ति ॥ २६७ ॥
पुण्यस्य बुद्ध्या व्यसनप्र[8]सक्त्या, दवस्य दानं भवति द्विधा तु ।
सरः-स्रवन्ती[9]-ह्रदमुख्यतोऽम्बु–प्लावः सरःशोषममुं गृणन्ति ॥ २६८ ॥
यत् कुर्कटानां शुक-सारिकाणां, मयूर-मार्जार-शुनां सृजन्ति ।
दास्याश्च पोषं द्रविणार्जनाय, तच्चा'सतीपोषण'माहुरार्याः ॥ २६९ ॥
स्वकीयकायप्रमुखार्थदण्ड–विपक्षरूपत्वमुपागतो यः ।
अनर्थदण्डोऽस्य विवर्जनं यद्, गुणव्रतं प्राहुरिदं तृतीयम् ॥ २७० ॥+

---

१ शकटजीवनमिति ।　२ स्फोटजीविका ।　३ ख–'यद्वाहनतो' ।　४ क–'धातकीनाम्' ।　५ मदिरा ।　६ क–'कम्बलश्रोत्र' ।　७ अण्डकोशस्य विच्छेदनम् ।　८ क–'प्रवृद्ध्या' ।　९ नदी० ।

अनर्थदण्डः स भवेच्चतुर्धा, वदन्त्यपध्यानमिहार्तरौद्रम् ।
पापोपदेशो वधकारि दानं, तथा प्रमादाचरणं चतुर्थम् ॥ २७१ ॥
इष्टास्यनिष्टोत्सनराज्यकाङ्क्षा, परो[1]पघाता-ऽनलदीपने च ।
रिपुप्रणाशः परतो मुहूर्तात्, त्यजन्त्यपध्यानमिदं विदग्धाः ॥ २७२ ॥
तुरङ्गमान् षण्डय देहि दावं, क्षेत्रं कृषैतत् परिपातय द्रूं[2]न् ।
दक्षस्य दाक्षिण्यमृते कदापि, पापोपदेशो नहि कल्पतेऽसौ ॥ २७३ ॥
वैश्वानरो-दूखल-लाङ्गलानि, यन्त्रा-ऽस्त्रमाला-मुसलादिकानि ।
हिंस्राणि दाक्षिण्यमृतेऽर्पयन्ति, कस्यापि कारुण्यपरायणा न ॥ २७४ ॥*
कुतूहलान्नाटक-गीत-नृत्ता-द्यवेक्षणं द्यूत-सुरादिसेवा ।
जलोत्सवा-ऽऽन्दोलन-केलि-काम-शास्त्रप्रसक्तिप्रमुखा विनोदाः ॥२७५॥
आयोधनेक्षा चैं[3]रणायुधादेः, स्त्री-भक्त-देशा-ऽवनिभृत्कथाश्च ।
स्वापः समग्रां रजनीं रुगध्व-श्रमौ विना वैरमरेः सुताद्यैः ॥ २७६ ॥
जैनालये दुष्टकथाविलास-निष्ठ्यूत-निद्रा-कलहादिकानि ।
पाना-ऽऽसन-स्वादिम-खाद्यसेवे-त्यादि प्रमादाचरणं निषिद्धम् ॥२७७॥*

—विशेषकम्

रौद्रार्तदुर्ध्यानविवर्जितस्य, सावद्यकर्मप्रतिषेधकर्तुः ।
या स्यान्मुहूर्तं समतां विदुस्तां, 'सामायिका'ख्यं व्रतमागमज्ञाः २७८*
यद् दिग्व्रते स्यात् परिमाणमस्य, सङ्क्षेपणं यद् दिवसेऽथ रात्रौ ।
श्राद्धो विवेकी विदधीत 'देशा-वकाशिकं' तद् व्रतमामनन्ति ॥२७९॥
तपश्चतुःपर्वसु यच्चतुर्था-दिकं कुकर्मप्रतिषेधनानि ।
ब्रह्मक्रिया-स्नान-शिरोमृजादि-त्यागो व्रतं '[4]पौषध'मेतदाहुः ॥ २८० ॥

---

१ क-'पुरो' । २ वृक्षान् । ३ कुर्कटादेः । ४ सन्तुल्यतां यदुक्तं **तत्त्वार्थाधिगम-सूत्रस** स्वोपज्ञभाष्ये ( अ. ७, सू. १६, पृ. ९२ )-

"पौषधः पर्वेत्यनर्थान्तरम् । सोऽष्टमीं चतुर्दशीं पञ्चदशीं अन्यतमां वा तिथिमभिगृह्य चतुर्थाद्युपवासिना व्यपगतस्नानानुलेपनगन्धमाल्यालङ्कारेण न्यस्तसर्वसावद्ययोगेन कुशसंस्तारफलकादीनामन्यतमं संस्तारकमास्तीर्य स्थानं वीरासननिषद्यानां वाऽन्यतममास्थाय धर्मजागरिकापरेणानुष्ठेयो भवति ।"

एतट्टीकायां **श्रीसिद्धसेन**गणिभिः प्रोक्तं ( पृ. ९२ ) यदुत "स पौषधोपवासः उभयपक्षयोरष्टम्यादितिथिमभिगृह्य—निश्चित्य बुद्ध्या अन्यतमां चेति प्रतिपदादितिथिम्, अनेन चान्यासु तिथिषु अनियमं दर्शयति, नावश्यंतयाऽन्यासु कर्तव्यः । अष्टम्यादिषु तु नियमेन कार्यः ।"

यत् स्वाद्य-पाना-ऽऽसन-स्वाद्यपात्र–पीठालयाच्छादनमुख्यदानम् ।
सदाऽतिथिभ्यो'ऽतिथिसंविभाग'–व्रतं तदेतत् प्रवदन्ति सन्तः ॥२८१॥
ज्ञानं क्रिया च द्वयमस्ति यत्र, तत् कीर्तितं केवलिभिः 'सुपात्र'म् ।
श्रद्धाप्रकर्षप्रसरेण दानं, तस्मै प्रदत्तं खलु मोक्षदायि ॥ २८२ ॥*
दीनादिकेभ्योऽपि दयाप्रधानं, दानं तु भोगादिकरं प्रदेयम् ।
दीक्षाक्षणे तीर्थकृतोऽपि पात्रा–ऽपात्रादिचर्चां ददतो न चक्रुः ॥२८३॥*
संवेग-निर्वेद-शमा-ऽनुकम्पा–ऽऽस्तिक्याङ्कसम्यक्त्वमुपाश्रितानाम् ।
इयं तु [1]देशाद् विरतिर्यतित्वा–नुरागभाजां गृहमेधिनां स्यात् ॥ २८४ ॥

[2]सर्वविरतिः

कुर्वन्ति सूक्ष्मेतरसूक्ष्महिंसा–दीनां विरामं मुनयो यदेषाम् ।
सा सर्वतः स्याद् विरतिर्द्विधाऽपि, चारित्रमोहस्य विघाततोऽसौ २८५*
यद् वा यदष्टादशधोपदिष्टं, सद्ब्रह्मचर्यं गणभृद्भिराद्यैः ।
तत् कामकेलिप्रलयाग्निकीला–कलापलीलं कलयन्ति शीलम् ॥ २८६ ॥
[3]सत्त्वप्रबोधप्रथितप्रकाशं, भित्त्वा तमस्तापयते रजो यत् ।
तद् [4]द्वादशात्मस्थितिसन्नभोग–मनस्तपो द्वादशधा वदन्ति ॥ २८७ ॥
रत्नत्रयभ्राजिषु भक्तिरेका, तत्कायकर्मक्रमकर्मठत्वम् ।
शुभैकचिन्ता भवगर्हणेति, स्याद् भावनाऽसौ भवनाशनाय ॥ २८८ ॥
चतुर्गतिक्लेशहतिक्षमं ये, चतुर्विधं धर्ममसुं भजन्ते ।
ज्ञानादिनाऽनन्तचतुष्टयेन, ते भास्वरं सिद्धिसुखं लभन्ते ॥ २८९ ॥
[5]धनोऽभ्यधाद् धन्यतमोऽस्मि धर्मः, शुद्धोऽद्य लेभे भवतां प्रसादात् ।
दुनोति चैतद् यदियन्ति जग्मु–र्दिनानि तत्त्वेन विना कृतानि ॥२९०॥
नत्वाऽथ सूरीन् सकलांश्च साधून्, शुभोपदेशामृतपूरपूर्णः ।
उपाश्रयाद् धाम धनो जगाम, यथाऽम्बुधेरम्बुधरोऽन्तरीक्षम् ॥ २९१ ॥
अर्हद्विभुं न्यस्य धनस्य चित्ते, बोधप्रदीपे निशि तत्र दीप्ते ।
सुस्थानलब्ध्याऽधिकहर्षधारी, धर्मो ध्रुवं जागरणं बभार ॥ २९२ ॥*

---

१ देशविरतिः । २ सर्वविरतिः । ३ शक्तिविकाश०, पक्षे जीवप्रबोध० । ४ सूर्य० ।
५ ख–'धन्यो' ।

धर्मप्राप्त्यनन्तरं धनस्याटवीलङ्घनपूर्विका स्वगृहप्राप्तिः

उदित्वरैरर्ककरैरथाभात्, प्राग् दिङ् नभो भिन्नतमःसमूहम् ।
श्रीधर्मघोषस्य शुभोपदेशै-र्मनो धनस्येव धृतप्रकाशम् ॥ २९३ ॥

ततेषु शङ्खध्वनिषु प्रबद्ध-स्पर्द्धं विवृद्धिं दधता स्वनेन ।
धनस्य तुष्टिप्रदमित्यपाठि, प्रातःक्षणे मङ्गलपाठकेन ॥ २९४ ॥

घ[1]नान्धकाराण्यधराणि कुर्वन्, प्रकाशयन् पङ्कजकाननानि ।
सृजन् जनाशा जनितप्रकाशाः, सूरः शरत्काल इवोल्ललास ॥ २९५ ॥

पद्मानि लोलैर्जलभृद्भिरस्त-प्रभाप्रभावं परिभाव्य मित्रम् ।
म्लानिं ययुस्तान्यधुनाऽत्रे[2] [3]तेषां, क्षयात् प्रतापस्पृशि विस्मितानि ॥२९६॥

म्लानानि [4]मित्रस्य घ[5]नापदि स्युः, स्फूर्जन्ति चोर्जस्पृशि त[6]त्र यानि ।
किं तानि नो सन्तु सरोरुहाणि, लक्ष्मीविलासप्रविका[7]शवन्ति ॥२९७॥*

तप्तैस्तपोभिः किल भानुपादैः, पयांस्यजायन्त सुनिर्मलानि ।
[8]तैरेव यातो जलसङ्गजातो, मार्गस्य पङ्कः सकलोऽपि लोपम् ॥ २९८ ॥

समुन्नते जी[9]वनदे न याः प्राक्, कुत्रापि मान्ति स्म र[10]सातिपूर्णाः ।
ता[11]रापथात् त[12]त्र गते स्रवन्त्य-स्तास्तद्वियोगात् कलयन्ति कार्श्यम् ॥२९९॥

घनोऽध्वगानध्वनि रोद्धुमाज्ञा-रेखा इवोर्व्या व्यधिता[13]म्बुवाहान् ।
घनात्यये तेऽप्यभवन्नसन्त-स्ततः स्फुरन्ति व्यवसायवन्तः ॥ ३०० ॥

धनो निशम्येत्यमुनाऽधुनाऽयं, मम प्रयाणावसरो न्यवेदि ।
मत्वेति यात्राकरणाय भेरी-मवादयत् सार्थकृतार्थवादः ॥ ३०१ ॥

तस्मादकस्माद् भवताऽन्तरीक्ष-कुक्षिम्भरेर्भेरिरवाज्जवार्त्तः ।
सार्थः प्रतस्थे स्व[14]पदार्थमुत्को, नवाब्दशब्दादिव हंसवा[15]रः ॥ ३०२ ॥

सार्थोऽन्तरा सञ्चरितेन सूरि-वरेण रेजे सयतिव्रजेन ।
प्राभातिको वायुरिवारविन्द-गन्धेन सम्बद्धमधुव्रतेन ॥ ३०३ ॥

---

१ निविड०, पक्षे मेघ० । २ सूर्ये । ३ मेघानाम् । ४ सूर्यस्य, पक्षे सुहृदः । ५ अभ्रापदि, पक्षे निबिडापदि । ६ सूर्ये । ७ क-'कास०' । ८ भानुकिरणैः । ९ मेघे । १० जलातिभृताः । ११ आकाशात् । १२ मेघे । १३ लघुजलप्रवाहान् । १४ स्वस्थानं प्रति गन्तुमुत्सुकः । १५ क-'भागः' ।

पश्चात् पुरः पार्श्वयुगे [1]चतुर्षु, पक्षेषु [2]रक्षां रचयन् जनस्य ।
सार्थेश्वरोऽरण्यमृषिर्व्रतस्य, धर्मेषु संसारमिवोत्ततार ॥ ३०४ ॥*
लब्ध्वा भवस्येव वनस्य पारं, सम्भाष्य तं संयमवद् धनं च ।
स सूरिरात्मेव निषेवते स्म, परं पदं सम्मदमेदुरश्रीः ॥ ३०५ ॥
हृदि स्मरन् सूरिवरं सदैव, सन्मार्गसञ्चारपरोऽप्रमादी ।
स्वल्पैर्दिनैः प्राप धनो 'वसन्त-पुरं' यथा शिष्यगणो गुणौघम् ॥३०६॥
वणिग् जनस्तत्र पुरे प्रवीणः, समर्प्य भाण्डं व्ययिताल्पवित्तम् ।
भाव्योरुलाभं प्रति भाण्डमादाद्, यथाऽतिथेरन्नमिवैष पुण्यम् ॥ ३०७ ॥
पुरात् ततः सार्थपुरन्दरोऽथ, वस्तूनि सङ्गृह्य महार्थदानि ।
शास्त्राणि शिष्यः सुगुरोरिवासौ, 'क्षितिप्रतिष्ठा'श्रयणो बभूव ॥ ३०८ ॥
आत्मीकृतानि द्रविणैः प्रदत्तै-रुपद्रवेभ्यः परिरक्षितानि ।
पण्यानि मित्राणि यथा धनस्य, काले बभूवुर्बहुलाभदानि ॥ ३०९ ॥
सुपात्रदानप्रसरेण वित्तं, श्रीवीतरागस्मरणेन चित्तम् ।
स्वं जन्म सद्धर्मसमाधिनाऽथ, कृतार्थयामास स सार्थनाथः ॥ ३१० ॥

द्वितीयो युगलिकभवः

क्रमेण पूर्णायुरयं विपद्यो-दपादि युग्मी कुरुषूत्तरेषु ।
'सीता'स्रवन्तीतटमुत्तरेण, [3]पूर्वत्र 'जम्बू'पृथिवीरुहस्य ॥ ३११ ॥
मर्त्याः सदा तत्र दिनत्रयान्ता-शिनस्त्रिगव्यूतसमुन्नताङ्गाः ।
पृष्ठे करण्डान् द्विशतीं तथा षट्-पञ्चाशतं बिभ्रति युग्मरूपाः॥ ३१२ ॥
भवन्ति पल्यत्रितयायुषोऽमी, गलन्ममत्वाल्पकषायभावाः ।
मद्याङ्गमुख्यैर्दशभेदभिन्नैः, कल्पद्रुमैः पूरितसर्वकामाः ॥ ३१३ ॥
ते जीवितान्तप्रसवाः सकृत् स्व-मेकोनपञ्चाशदहानि जातम् ।
प्रपाल्य चापत्ययुगं म्रियन्ते, सम्प्राप्नुवन्ति त्रिदशेषु जन्म ॥ ३१४ ॥
क्षेत्रेऽत्र शश्वत्सुषमे क्षमायां, माधुर्यधुर्याः सिकताः [4]सितावत् ।
[5]नीराश्रयाः शारदशर्वरीन्दु-प्रभाप्रभावप्रतिवीरनीराः ॥ ३१५ ॥

---

१ चतुर्षु दिक्षु, पक्षे धर्मेषु चतुर्षु ।  २ व्रतस्य रक्षां रचयन् ।  ३ ख-'पूर्वस्य'
४ शर्करावत् ।  ५ सरांसि ।

स्वभावशोभाशुभगायमाना, निर्भग्नशक्रोपवनाभिमानाः ।
भूम्योऽत्र रम्या मुदमर्पयन्ति, कल्पद्रुमाः कल्पमनल्पयन्ति ॥ ३१६ ॥
यच्छन्ति वाञ्छामिह कल्पवृक्षा, मद्याङ्गमुख्या दशधा जनानाम् ।
प्रियाऽधरस्वादु सुधाऽनवद्यं, मद्याङ्गसञ्ज्ञा वितरन्ति मद्यम् ॥ ३१७ ॥
सृजन्त्युरःस्वान्तसभाजनानि, भृङ्गाभिधाना मणिभाजनानि ।
तूर्याङ्गकास्तूर्यवराणि पूर्य-माणान्यनेकैर्लयगैर्विवेकैः ॥ ३१८ ॥
ज्योतिष्कका दीपशिखाश्च दीप-शतोत्तरं द्योतमुदीरयन्ति ।
चित्राङ्गसञ्ज्ञाः कुसुमैर्विचित्रां, यच्छन्ति मालां मुदितालिमालाम् ॥३१९॥
भोज्यं पुनश्चित्ररसाभिधाना, नानाप्रकारं सुरसोपचारम् ।
विश्राणयन्ति क्षतदूषणानि, मण्यङ्गकाः सन्मणिभूषणानि ॥ ३२० ॥*
आतन्वते रत्नमयानि गेहा-कारास्तु गेहानि तमोऽपहानि ।
वासांस्यनग्नाः प्रमदोर्मिमग्ना-शयानि सर्वर्तुदिनोचितानि ॥ ३२१ ॥
प्रागुक्तमेते[1] ददते परं[2] च, दशप्रकारा अपि कल्पवृक्षाः ।
एभ्यो दशभ्योऽप्यपरेऽपि[3] तत्र, जयन्ति सर्वेप्सितदानशीलाः ॥ ३२२ ॥
अनल्पकल्पद्रुमकल्प्यमान-मनःसमग्राभिमतार्थसार्थः ।
धनस्य जीवोऽन्वभवन् मुनीन्द्र-दानोच्छ्रिखं वैषयिकं सुखं सः ॥३२३॥

तृतीये भवे धनजीवो देवः

अशेषयित्वा मिथुनायुरेष, 'सौधर्म'कल्पे स धनस्य जीवः ।
देवोऽजनि प्राग्जननप्रदत्त-सत्पात्रदानप्रथमानपुण्यः ॥ ३२४ ॥

श्रीधर्मघोषगुरुदेशनया पुपोष
धर्मं यदेष धनजन्मनि धर्मवीरः ।
तेनार्पितां त्रिदशसंसदमाप्य तस्थौ
स्वःस्त्रीविलासरसलीनमनाः सुखं सः ॥ ३२५ ॥[4]

॥ इति श्रीजिनदत्तसूरिशिष्यमहाकविवेणिकृपाणापरनामपण्डितश्रीमदमर-चन्द्रविरचिते श्रीपद्मानन्दपरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते प्रथमधनसार्थवाहभव१द्वितीयमिथुनभव-२तृतीयसौधर्मदेवभव३कीर्तनो नाम द्वितीयः सर्गः ॥ २ ॥

---

१ क-'अप्युक्त' । २ अन्यदपि । ३ ख-'परे तु' । ४ वसन्ततिलका ।

कनकरुचिसनाभि[1]र्नाभिभू[2]र्नाभिभूतो[3]
विषमतमतमोभिर्वैभवं वस्तनोतु[4] ।
कति जगति समीपं यं समाश्रित्य दीपं
परमपदपद्व्यां[5] नाप्नुवन्ति प्रकाशम् ॥ १ ॥[6]

श्रीसद्म 'पद्म!' कलिकालकरालसर्प[7]-
सर्पत्कुवृत्तगरलोर्मिविमूर्च्छितोऽयम् ।
धर्मोऽधुना तव पवित्रचरित्रचञ्चत्-
पीयूषवीचिनिचयैः पुनरुज्जिजीव ॥ २ ॥[8]

ग्रन्थाग्रं ४५४ ॥



---

१ सदृशः । २ श्रीऋषभदेवः । ३ न पराभूतः । ४ ख–'वस्तनोति' । ५ पद्याम् ।
६ मालिनी । ७ ख–'दर्प०' । ८ वसन्त० ।

## तृतीयः सर्गः ३

श्रिये स नाभेयजिनोऽस्तु यस्त्रयो-दशक्रियास्थानविमुक् त्रयोदशे ।
जातो भवे तीर्थकरः परं गुण-स्थानाद् गुणस्थानमगात् त्रयोदशात् ॥१॥[1][2][3]
इतो 'विदेहे'षु परेषु 'गन्धिला-वती'प्रतीतो विजयः [4]श्रियोर्जितः ।
तत्रास्ति 'वैताढ्य'[5]वसुन्धराधरो, धरापुरन्ध्र्याः परमर्द्धिमण्डनम् ॥ २ ॥
सुरासुरैः सेवितपादसन्निधि-र्योगीव यो योगवशादिव स्थिरः ।
दधौ शिरोऽग्रे मणिरश्मिकैतवात्, तमो विभिद्याभ्युदितं महन्महः ॥३॥
[6]अनन्तसत्त्वप्रसरो महोन्नतः, स्थैर्यान्वितोऽन्यैरमतान्तराशयः ।
अप्यर्कमाक्रामति रत्नसन्तति-द्योतैः प्रतापैः पृथिवीपतिर्यथा ॥ ४ ॥
फलादिभिर्लालयितुः पितुर्यथा, पुत्रोऽङ्कमस्याधिगतो धृतार्जवः ।
'गन्धार'देशः प्रमदेन पेशलः, क्लेशस्य नो लेशमपि स्पृशेत् क्वचित् ॥५॥

---

१ समवायाङ्गसूत्रे ( सू. १३ ) प्रोक्तम्—

"तेरस किरियाठाणा पण्णत्ता, तं जहा-अट्ठादंडे १, अणट्ठादंडे २, हिंसादंडे ३, अकम्हादंडे ४, दिट्ठिविपरियासियादंडे ५, मुसावायवत्तिए ६, अदिण्णादाणवत्तिए ७, अज्झत्थिए ८, माणवत्तिए ९, मित्तदोसवत्तिए १०, मायावत्तिए ११, लोभवत्तिए १२, इरियाववहिए नामं तेरसमे १३ ॥

[ त्रयोदश क्रियास्थानानि प्रज्ञप्तानि, तद्यथा-अर्थदण्डे १, अनर्थदण्डे २, हिंसादण्डे ३, अकस्माद्दण्डे ४, दृष्टिविपर्यासिकादण्डे दृष्टिविपर्यासितादण्डे वा ५, मृषावादप्रत्यये ६, अदत्तादानप्रत्यये ७, आध्यात्मिके ८, मानप्रत्यये ९, मित्रद्वेषप्रत्यये १०, मायाप्रत्यये ११, लोभप्रत्यये १२, ऐर्यापथिके नाम त्रयोदशमे १३ ॥ ]

२ अयोगाख्यं चतुर्दशमिति । **गुणस्थानक्रमारोहे** चतुर्दशगुणस्थाननामनिर्देशो यथा—
"चतुर्दश गुणश्रेणि-स्थानकानि तदादिमम् । मिथ्यात्वाख्यं द्वितीयं तु, स्थानं सास्वादनाभिधम् २
तृतीयं मिश्रकं तुर्यं, सम्यग्दर्शनमव्रतम् । श्राद्धत्वं पञ्चमं षष्ठं, प्रमत्तश्रमणाभिधम् ॥ ३ ॥
सप्तमं त्वप्रमत्तं चा-पूर्वात् करणमष्टमम् । नवमं चानिवृत्त्याख्यं, दशमं सूक्ष्मलोभकम् ॥ ४ ॥
एकादशं शान्तमोहं, द्वादशं क्षीणमोहकम् । त्रयोदशं सयोग्याख्य-मयोग्याख्यं चतुर्दशम् ॥५॥"

—चतुर्भिः कलापकम्

३ इन्द्रवंशा (?) । ४ ख-'श्रियोऽर्जति' । ५ वैताढ्यः । ६ अनन्तपराक्रमप्रसरः, पक्षे अनन्तप्राणिप्रसरः । ७ अज्ञातान्तरिकस्वरूपः । ८ वैताढ्यस्य ।

दुष्कालशत्रौ बहुलासिधेनुभिः[1], प्रोच्चापसच्चक्रसरःश्रिया[2] जिते ।
येनारघट्टारवसङ्करेण यत्[3]–क्षेत्राणि सांराविणमेव तन्वते ॥ ६ ॥

गन्धिलावतीविजये नगरवर्णनम्

आस्ते पुरं तत्र[4] जितद्युसत्पुरं, समृद्धिभि'र्गन्धसमृद्धका'ह्वयम् ।
अम्भोजशोभा सुमुखीमुखाश्रया, यस्मिन् जयत्येव विधुं विरोधिनम् ॥७॥
तमीषु यत्र प्रियकेलिविच्रुटत्–स्त्रीहारमुक्ता गुरुकुट्टिमोपरि ।
उडुच्छलेन प्रतिबिम्बडम्बरं, हरिन्मणिस्पर्द्धिनि जग्मुरम्बरे ॥ ८ ॥
यस्मिन् विकीर्णाः परिरम्भसम्भ्रमा–न्मृगीदृशां हारमणिव्रजा निशि ।
प्रातः पतन्तो भुवि भान्ति मार्जनैः, शिरोगृहेभ्यस्तपनद्रुतोडुवत्[5] ॥ ९ ॥
निशासु यूनां परिरम्भणच्युतै–राकल्परत्नै[6]रिह भूरिभिर्वृताः ।
चन्द्राश्मवेश्माम्बुनदीः श्रयन् वहेद्[7], वृद्धिं च रत्नाकरतां च वारिधिः ॥१०॥
असावसौ वेति न वेत्ति मध्यगं, यूनामहो मामिह शङ्करः परः ।
इतीव तीव्रेण भयेन निर्ममे, निवासमस्मिन्ननिशं रतिप्रियः[8] ॥ ११ ॥
निरन्तराभिः सुरमन्दिरध्वज–च्छायाभिरस्मिन् गगनं विभासते ।
क्षिप्ताभिरूर्ध्वं मणिकुम्भसम्भव–प्रभाभरैर्मेचकिकण्ठमेचकम्[9] ॥ १२ ॥
चैत्योच्चयः पातकघातखेदज–स्वेदाम्बुबिन्दुः किल नद्धमौक्तिकः[10] ।
चेलाञ्चलं दण्डभुजेन चालयेत्, ध्वजच्छलादत्र समीरवाञ्छया ॥ १३ ॥
अस्मिन् न कूपाः प्रतिभान्ति भूतले, द्वाराणि [11]वैरोचनवेश्मनः पुनः ।
प्रासादसङ्गीतकवीक्षणक्षण–क्षयो[12]दयत्पन्नगवर्गहेतवे ॥ १४ ॥
निरन्तरश्रावपरैर्मदोदकै–रमुत्र सिक्ता नृपमार्गमेदिनी ।
प्रसर्पतां दर्पजुषां विषाणिनां, पादाहतैः कुट्टिमतां कुटुम्बयेत्[13] ॥ १५ ॥
रत्नावनौ काञ्चनकन्दुके हते, नष्टे रविं बिम्बितमत्र[14] तद्भ्रमात्[15] ।
दण्डैस्तुदन्तौ सहचालिनं गतौ, जयेन सीमामुभयौ शिशुव्रजौ ॥ १६ ॥

---

१ बहुचारुसुरभिभिः, पक्षे बहुलच्छुरिकाभिः । २ अतिजलभृतशोभनचक्रवाकयुक्ततटाकलक्ष्म्या, पक्षे उच्चधनुःश्रेष्ठचक्रबाणलक्ष्म्या । ३ गन्धारदेशक्षेत्राणि । ४ गन्धारदेशे । ५ सूर्यत्रस्तनक्षत्रवत् । ६ नेपथ्यरत्नैः । ७ प्राप्त इति मन्ये । ८ मदनः । ९ मयूरकण्ठसदृशं नीलम् । १० मौक्तिकमिषेण खेदजन्यखेदबिन्दुमान् चैत्योच्चयः । ११ रसातलस्य । १२ क–'क्षणो' । १३ रचयेत् । १४ रत्नावनौ । १५ काञ्चनकन्दुकभ्रमात् ।

इह द्विषन्नप्रकटे प्रभाभरैः, शाले विशाले स्फटिकेन निर्मिते ।
युद्धं स्वबिम्बेन विधाय विस्फुटत्-खड्गः करेण प्रहरन्नवैति तम्[1] ॥ १७ ॥
हृदा यदान्ध्यं न ददे दृशोः सतां, सम्पन्मदैः रत्ननिकेतवासिनाम् ।
तस्यैव ताभ्यामिह[2] गौरवादतः, समर्पिता व्याप्टतिभूतिरात्मनः ॥ १८ ॥
द्विषद्बलाम्भोदमहाबलो[3] बली, शताद् बलो[4] नाम बलोरुविक्रमः ।
भूवल्लभोऽभूदिह दुर्लभो भियां, निःशेषविद्याधरशीर्षशेखरः ॥ १९ ॥
यस्यार्हतस्याभ्युदितं विभासित-श्वेताम्बराडम्बरमुद्धुरं यशः ।
निरर्गलैर्गोपटलैः समुज्ज्वलै-रुच्चैरसत्तामनयन्महेश्वरः[5] ॥ २० ॥
भिन्नेन्द्रनीलद्युतिभासि यद्यशः[6]-क्षीरोदधौ तारकधारकं नभः ।
परिस्फुरत्फेनलवालिमालिनः, शैवालजालस्य तुलां समश्नुते ॥ २१ ॥
जेतुं यमं यस्य पराक्रमो भुज-स्तम्भेऽसिदम्भाद् युधि पुष्कराक्षरम् ।
परोपसंहारकशक्तिधारण-स्पर्द्धोद्धुरः पत्रमिवाध्यरोपयत् ॥ २२ ॥
तद्धर्मकर्म[7] प्रतिपक्षमर्मभि-न्निभाल्य भीता दुरुपद्रवा ध्रुवम् ।
देवोद्भवा मानवसम्भवाश्च न, क्लिश्नन्ति तद्देशनिवेशिनं जनम् ॥ २३ ॥
भ्रुवोऽस्य भूकान्तवरस्य कान्तया, सपत्नताऽतन्यत चन्द्रकान्तया ।
अब्जस्य बोधेन सदा यदानने, विलेसतुश्चन्द्र-सरोजयोः श्रियौ ॥ २४ ॥
सनाऽ[8]प्यनालोकितपङ्कसङ्करे, स्वभावजौज्ज्वल्यरसातिमञ्जुले ।
[9]प्रियांह्रिसौवर्णसरोरुहाश्रये, यन्मानसेऽलासि सतीव्रतश्रिया ॥ २५ ॥
सर्वाङ्ग[10]चङ्गा प्रगुणा गुणक्रमैः[11], प्रमत्तमातङ्गवरप्रचारयुक् ।
सहस्र[12]पत्राम्यपदातिपेशला, नृपस्य साऽऽसीन्नृपनीतिवत् प्रिया ॥ २६ ॥

धनस्य महाबलनामा चतुर्थो भवः

'सौधर्म'कल्पात् समयेऽत्र विच्युतो, धनस्य जीवोऽजनि नन्दनस्तयोः ।
महाबलाख्यः सकलाः कलाः श्रयन्, सोऽभूत् कलावानिव[13] लोचनोत्सवः २७

---

१ तं शालं जानाति । २ दृग्भ्यां स्वव्यापारः हृदयस्यैव प्रदत्तः इति तत्त्वम् । ३ पवनः । ४ शतबलः । ५ ख-'श्वरम्' । ६ शतबलयशोरूपक्षीरसमुद्रे । ७ शतबलधर्मकृत्यम् । ८ ख-'सदा' । ९ पतिपादात्मकसुवर्णकमलाश्रये । १० राजपक्षे सर्वाङ्गमनोहरा । ११ षड्गुणयुता । १२ राजपक्षे सहस्रसङ्ख्यवाहनातिपदातिचारवः । १३ चन्द्र इव ।

भूतोद्भवद्धाविनरावमाननं, [1]सङ्कल्पयोनिप्रभुकेलिकाननम् ।
जगत्तृणीकारविकारजीवनं, ततः प्रपेदे क्रमतः स यौवनम् ॥ २८ ॥
ज्ञातेषु शास्त्रेषु यथाऽनुचिन्तनं, कृतेषु धर्मेषु यथाऽनुमोदनम् ।
गुणेषु जातेषु यथा [2]नयाञ्जनं, प्राप्तेषु वित्तेषु यथा बुधार्चनम् ॥ २९ ॥
वृतेषु क्लृप्तेषु यथा सुदर्शनं, ज्ञातेषु तत्त्वेषु यथाऽऽत्मशीलनम् ।
चकार रम्येष्वपि [3]रम्यतोम्भनं, कुमारदेहावयवेषु यौवनम् ॥ ३० ॥

—युग्मम्

महाबलस्य अवयवानां वर्णनम्

शशंसतुस्तस्य तले समौ क्रमा–दूर्ध्वं पुनः कूर्मसमुन्नतौ क्रमौ ।
सर्वेषु कालेषु सुखागमं समं, विश्वाऽन्तरौन्नत्यमपि प्रवृद्धिमत् ॥ ३१ ॥
क्रोडीकृताशेषविशेषविष्टप–त्रयान्वितज्ञानभृतः सदा हृदः ।
क्षामत्वधामाऽधिकभारधारणाद्, बभार मध्यं स कुमारकेसरी ॥ ३२ ॥
वाग्देवतावाक्यचयस्य गोचरं, [4]यद्वक्षसो याति विशालता यदि ।
[5]यत्क्रोडकोणस्थमनोऽणुकोटरे, ताव[6]न्मरुद्वर्त्म सुखं स खेलति ॥ ३३ ॥
श्रेयःश्रियः सद्मनि [7]तत्र तोरण–स्तम्भद्वयीविभ्रमभृद् भुजद्वयम् ।
तस्योपरि प्रोन्नतमंसयोर्युगं, कल्याणकुम्भद्वितयप्रभं बभौ ॥ ३४ ॥
स्फुरद्द्विरेफान्तरकैरवाकृती, विलोचने तस्य भृशं विलेसतुः ।
श्रोत्रद्वयीसीमनि दीर्घदर्शिता–निदानशास्त्रश्रुतिशक्तिमीहितुम् ॥ ३५ ॥
अमुष्य सौन्दर्यगुणेन निर्जितो, [8]भुजिष्यभावं भजति स [9]चित्तभूः ।
ततोऽनुवृत्त्याऽ[10]स्य स कामिनीर्न का–श्चकार तद्ध्यानविधानमानसाः ॥ ३६
कन्यामुपायंस्त पितुर्नियोगतो, नाम्ना प्रतीतां [11]विनयाद् वतीति सः ।
रेजे तयाऽसौ गुणनद्धयाऽधिकं, पताकया देवनिकेतकेतुवत् ॥ ३७ ॥

विषयाणां हेयता

अथान्यदा तत्त्वविदां वरो हृदा, दध्यौ धराभृद्धवलः शताद् बलः ।
अहो महामोहवशंवदो जनः, प्रीतिं विधत्ते विषयेषु वैरिषु ॥ ३८ ॥

---

१ कामनृपक्रीडावनम् । २ क–'नयावनं' । ३ रम्यताया वर्धनम् । ४ महाबलवक्षसः । ५ वक्षोमध्य० । ६ नभः । ७ वक्षसि । ८ दासभावम् । ९ कन्दर्पः । १० महाबलस्य । ११ विनयवती ।

भक्तेर्दिदृक्षा कुविनेयपङ्क्तिषु, श्रियो जिघृक्षा कृपणत्वधारिषु ।
अपां पिपासा मृगतृष्णिकास्वियं, सुखस्य लिप्सा विषयेषु देहिनाम् ३९
[1]कैवर्तको मांसकणैर्[2]झषानिव, व्याधः सुगीताधिगमैर्मृगानिव ।
सूनाधिपो घासलवैर्[3]वीनिव, क्रूरो मृदुक्तिप्रकरैर्नरानिव ॥ ४० ॥
मूर्खः कुपथ्यैरिव रोगयोगिनो, मूढः कुबोधैरिव मुग्धधीयुतान् ।
आपातरम्यैः परिणामदारुणैः, क्लिश्नाति मोहो विषयैः शरीरिणः ॥४१॥

—युग्मम्

भोगाद् धनं क्षीणमवेक्ष्य विह्वल–स्तनोत्युपायांस्तदुपार्जने पुनः ।
[4]तत्कारणं पुण्यमवेत्य तद्विधं, न तद्विधानं विदधाति दुर्विधः ॥ ४२ ॥
यदर्थमर्थं प्रथयन्ति गत्वरं, कायः स चापायशतैर्विस्[5]र्स्यते[6] ।
तस्माद[7]मूभ्यामपि धीधना जनाः, सनातनं धर्ममनारतं श्रिताः ॥ ४३ ॥
अहो भवावर्तविवर्तवर्तिभिः, शरीरिभिर्मर्त्यभवः सुदुर्लभः ॥ ४४ ॥
अपारसंसारविकारपारग–स्तत्रापि देवो भगवान् जिनेश्वरः ॥ ४५ ॥
असुद्रसङ्क्लेशसमुद्रसेतव–श्चारित्रगौरा गुरवो दुरासदाः ।
जीवादितत्त्वैर्नवभिः प्रबोधकृत्, धर्मोऽर्हदुक्तः सुकृतैरवाप्यते ॥ ४६ ॥
समग्रमेतद् बहुपुण्ययोगतो, लब्धं मया चेत् फलमस्य नाददे ।
[8]तदा प्रमादेन ममाद्य [9]माद्यता, व्यर्थीकृतं पौरुषदक्षतादिकम् ॥ ४७ ॥
अयं कुमारोऽपि महाबलोऽधुना, यथार्थनामा नवयौवनोऽभवत् ।
राज्यं तदस्मिन् विनियोज्य [10]तन्महे, समीहितं निःस्पृहचित्तवृत्तयः ॥४८॥
इदं विनिश्चित्य हृदा महाबलं, बलादनिच्छन्तमपि प्रबोध्य तम् ।
राज्ये निजे प्राज्यमतिर्न्यवीविशद्, विद्याधरश्रेणिसहस्रलोचनः ॥ ४९ ॥
तस्याभिषेकप्रभवैः पयोभरै–रभिप्लुता भूमिरशोभताद्भुतैः ।
तं भाग्यलभ्यं परिभाव्य वल्लभं, स्वेदाम्भसा[11]ऽऽविर्भवतेव भाविता(ना) ५०

---

१ धीवरः । २ मत्स्यान् । ३ अजाः । ४ धनहेतुम् । ५ 'विनश्यते' इति क–टि–पाठः । ६ वेष्ट्यते । ७ धन-कायाभ्याम् । ८ क–'तस्मां' । ९ प्रबलेन । १० वयं कुर्महे । ११ प्रादुर्भवता ।

तद्भालदेशः शुशुभे जगद्दृशा–मानन्दनश्चन्दनपुण्यमण्डनः ।
मन्ये निवेशाय नरेश्वरश्रियः, सौवर्णपट्टश्रितगौरगंद्दिकः[1] ॥ ५१ ॥
यत्[3] पुण्डरीकं नृपपुण्डरीकिणी–प्राणेशितुर्गोभिरमुष्य मूर्द्धनि ।
विकाश्यभून्नित्यविलासकेतनं, तत्[5] पुण्डरीकं किल भूपतिश्रियः ॥५२॥
तत्पार्श्वयोरिन्दुमरीचिनिर्मलं, चलाचलं चामरयोर्द्वयं बभौ ।
प्रेङ्खत्कटाक्षच्छविमण्डलीयुगं, नरेश्वरश्री-विजयश्रियोरिव ॥ ५३ ॥
अम्भोधरध्वानतिरस्कृतिक्रिया–निरर्गलो मङ्गलदुन्दुभिध्वनिः ।
भर्त्ताऽभवद् वश्विरहद्धृतोऽधुने–त्याशंसितुं व्याप किलाखिला दिशः ५४
एवं निवेश्य स्वपदे तनूद्भवं, भवाद् विरक्तः सुतरां शताद् बलः ।
आचार्यवर्यस्य पदान्तिके मुदा, व्रतं प्रपेदे शिवशर्मकार्मणम् ॥ ५५ ॥
विषप्रकारानिव मोहकारिणः, सङ्ख्यातिगान् यो [7]विषयान् मुमोच सः ।
पश्च व्यमुश्चद् विषयानिति स्तुतिः, कुतश्चमत्कारकरी गरीयसाम् ॥५६॥
कारुण्य-माध्यस्थ-सुहृत्त्व-सम्मदै–र्विशुद्धसद्ध्याननिधानमानसम् ।
मुक्त्या किलोत्कण्ठितया तदाप्तये, दिष्टः प्रमोदस्तमुपाययौ महान् ॥५७॥
क्लेशं शुभध्यानरसैरभिप्लुतो, नैवाप्तवांस्तीव्रतपोभिरप्यसौ ।
राजर्षिरायुर्निजमित्यवाहयत्, ततः प्रपेदे सदनं दिवौकसाम् ॥ ५८ ॥
राज्यं पितुः प्राप्य महन्महाबलो, बलोत्तरैर्वीरवरैर्वियच्चरैः[8] ।
निषेवितः क्ष्मां प्रशशास वासवो, दिवं यथा [9]त्रिक्रमविक्रमक्रमः ॥५९॥
मन्त्रप्रयोगैः सचिवैरिवाङ्गिभि–र्वीरैः शरीरं सुकृतैः श्रितैरिव ।
निष्पिष्टविद्विष्टबलो महाबलः, सदाऽश्रयद् वैषयिकं सुखं स्वयम् ॥६०॥
'वैताढ्य'शैलस्य वनेषु सोऽन्वहं, रम्येषु रेमे रमणीभिरावृतः ।
'स्वर्णाचल'[10]स्य त्रिदिवालयेश्वरो, यथाऽप्सरोभिः परिवारितोऽभितः ॥६१॥
स्वयं प्रसूनान्यवचित्य निर्मितं, रसेन कण्ठे सुदृशाऽधिरोपितम् ।
माल्यं महीशः सशिलीमुखं वहन्, स[11] मूर्त्तिमान् धन्वधरोऽजनि स्मरः ६२

---

१ 'गादी' इति भाषायाम् । २ क–'गन्दिकः' । ३ यत् छत्रम् । ४ नृपार्कस्य । ५ तत् कमलम् । ६ क–'पौण्ड०' । ७ देशान् । ८ खेचरैः । ९ वासुदेवसदृशपराक्रमः । १० मेरुगिरेः । ११ महाबलः ।

मनो [1]मनोभूः प्रविवेश सुभ्रुवां, सदा [2]तदालोकनकाल एव सः ।
[3]स्वामी प्रवेशं कुरुते हि यत्र तत्, प्रागेव पश्यन्ति निदेशकारिणः ॥६३॥
नृपेण तेनाकृतिनिर्जितः स्मर-स्तस्यैव सेवारसिको दिवानिशम् ।
तदानुकूल्यं किल कर्तुमुद्यतः, स्त्रीणां [4]तदुत्कानि मनांसि निर्ममे ॥६४॥
सोऽन्यः कटाक्षाहतिभीगलत्करः, स्फुरद्रसोऽसाविति शङ्कमानया ।
धम्मिल्लबन्धप्रगुणः प्रियः स्त्रिया, चिरं चुचुम्बे [5]वलिता[6]ननं मुदा ॥६५॥
[7]परस्परालोकनमग्नचेतनं, करादजानन् गलितानि पूर्ववतः ।
वृथा प्रसूनानि ददौ प्रियः प्रिया, वृथा गृहीत्वैव शिरस्यरोपयत् ॥६६॥
अपि प्रसूनेषु नखक्षतं प्रिये, सृजत्यसूयां विदधे मनस्विनी ।
भृङ्गोऽपि पुष्पावचयोत्थितः पिबन्, प्रियामुखाब्जं [8]रसिनाऽप्यसं[9]यितः ६७
प्रिय! प्रयच्छेदमतीव मङ्गलं, प्रसूनमित्युक्तिभिरुच्छ्रिताङ्गुलौ ।
लतोन्मुखायां सुदृशि द्रुतं पपौ, नृपः परस्याश्छलबन्धुरोऽधरम् ॥ ६८ ॥
प्रसूनपाताद् गलदश्रु सुभ्रुवो, विलोचनं फूत्कृतिकारिकामिषात् ।
अचुम्बदच्छन्नमिवाच्छवाससा, पिधाय भूपश्चतुरः स्मरातुरः ॥ ६९ ॥
अलिं विलूनप्रसवादुपागतं, कयाऽपि वित्रासयितुं विदग्धया ।
करः क्वणत्कङ्कणकं न कम्पितो, विलोलयाऽऽलिङ्गि भियेव भूपतिः ॥७०॥
प्रसूनरेणुप्रकरा वनान्तरे, मृदुस्फुरद्वायुविवर्तनर्त्तिताः ।
वधूजनस्पर्शकृतोत्सवा बभु-र्दिवाकरस्येव करा विकम्पिनः ॥ ७१ ॥
नितम्बिनीनां वपुषि प्रसूनजै-र्वृते रजोभिः श्रमघर्मपङ्किले ।
हतद्विषन्मानमहाबलो बली, मुदं दधौ मन्मथमत्तसू[10]करः ॥ ७२ ॥
[11]विलासवापीः स [12]विलासवासवो, मुदा कदाचिज्जलकेलिकौतुकी ।
विलोलयामास विलासिनीवृतो, यथा करीन्द्रः करिणीपरिच्छदः ॥७३॥
[13]वापीपयस्युल्लसिते मृगीदृशां, नितम्बबिम्बैर्गुरुडम्बरैर्ध्रुवम् ।
तदंहिहस्ताननेत्रनिर्जिता, राजीवराजी निममज्ज लज्जिता ॥ ७४ ॥

---

१ मदनः । २ महाबलालोकनकाले । ३ अत्र स्वामी महाबलः, निदेशकारी तु कामः । ४ महाबले उत्सुकानि । ५ ख-'बलि०' । ६ क्रियाविशेषणमिदम् । ७ क्रियाविशेषणम् । ८ महाबलेन । ९ ईर्ष्यालुतां भेजे । १० ख-'शूकरः' । ११ क्रीडावापीः । १२ ख-'विलाषिवा'० । १३ उच्छलिते वाप्या जले ।

स स्वर्णशृङ्गीसलिलैः समुज्ज्वलै-र्लीलावतीभिः समकालमीरितैः ।
समन्ततः सम्भृतमूर्तिराबभौ, सम्भ्रान्तनेत्रान्तनिरीक्षितैरिव ॥ ७५ ॥
नरेशितुर्नीरसमीरणैरलं, चलेक्षणानां कुचमण्डलाद् गलन् ।
सचित्रपत्रैणमदो हृदन्तरा-दुद्धा(द्वा?)न्तशृङ्गाररसप्लवोपमः ॥ ७६ ॥
क्रीडासु पाणिप्रसरेण मुञ्चतः, सदम्भमम्भांसि निषेद्धुमक्षमा ।
काचित् प्रियस्योरसि वक्त्रपङ्कजं, ररक्ष दक्षा विनियोज्य रागिणी ॥७७॥
अनीश्वरा जेतुमनन्तकैतवं, पयोविलासैर्दयितं विलासिनी ।
कठोरवक्षोरुहकोटिभिर्मुहु-र्जघान धन्यं रुषितेव वक्षसि ॥ ७८ ॥
आकण्ठनिर्मग्नतनोर्मृगीदृशः, श्वासोर्मिसौरभ्यमिलन्मधुव्रतम् ।
जने सरोजं व्यपदिश्य रागवा-नचुम्बदाघ्राणमिषान्मुखं मुहुः ॥ ७९ ॥
चिराय पर्याकुलया जलोक्षणैः, क्षणात् कृतं साचि कयाचिदाननम् ।
नाबोधि सिञ्चन् रसमोहितो युवा, पश्यन् पुरः कर्णवतंसवारिजम् ८०
सरोरुहिण्यन्तरिता मुहुर्मुहुः, सिञ्चन्तमब्जं मुहुराननभ्रमात् ।
कुतूहलोत्तालमना मनःप्रियं, पयःप्रहारैर्विधुरं वधूर्व्यधात् ॥ ८१ ॥
विमर्दिताम्भोरुहकेशराङ्कुरैः, परिस्फुरत्फेनलवालिमालितैः ।
विलासिनीनव्यविलासतो बभौ, सस्वेदरोमाञ्च इवोर्मिसञ्चयः ॥ ८२ ॥
रोमाञ्चदण्डान्तरगैर्मृगीदृशां, नखक्षतैः स्नानपरिस्फुटीकृतैः ।
तीव्रार्द्धचन्द्रायुधमञ्जुलैर्जग-ज्जयाय दर्पं विततान दर्पकः ॥ ८३ ॥
विश्रस्तधम्मिल्लगलत्प्रसूनक-प्रभ्रष्टमालामिषतो मृगीदृशाम् ।
विमुच्य कामः शरचापसम्पदं, मदेन तासां ललितान्यशस्त्रयत् ॥ ८४ ॥
रुचिप्रियाभिः सह कान्तिकामुके, विलस्य निर्याति नभःसरोवरात् ।
समं समन्तान्निजकामिनीजनै-र्जवाद् युवा सोऽपि विनिर्ययौ जलात् ॥८५॥
सङ्गीतकैः सन्ततमूर्जितैः पुर-स्तूर्यत्रयज्ञो लयलीनमानसः ।
मग्नः परानन्दरसे स योगिव-न्नामंस्त कालं विपुलं विलङ्घितम् ॥ ८६ ॥
काम्पोरुकान्ति तनुरूपसम्पदं, स भाव्यभावानुगमेन नर्तकीम् ।
नृत्यं श्रयन्ती समवेक्ष्य सम्मदं, ज्ञानं परां शक्तिमिवाप योगयुक् ॥८७॥

---

१ प्रियस्य चित्ते । २ पयसि । ३ जलसंसेचनैः । ४ वक्रीकृतम् । ५ क-'मन्य०' । ६ सूर्ये । ७ अस्तं गते सति । ८ परिपुष्टम् ।

पुष्पैः फलैरप्यधिकं स्वभावतः, सौरभ्यसारैर्मधुरत्वबन्धुरैः ।
उपायनान्यस्य वनाधिदेवताः, सौभाग्यभाग्योर्मिवशीकृता व्यधुः ॥८८॥
मुखेन [1]पीयूषकरस्तिरस्कृतो, महाबलत्वेन किलानिलो जितः ।
[2]तं शैत्यसौरभ्यभरेण भेजतुः, श्रान्तं रतान्ते निशि सौधमूर्धनि ॥८९॥
प्रियाद्वयाराधनबाधया ध्रुवं, धृतावतारः श्रितभूरिदारधीः ।
स्मरो नृपः प्रीति-रती तु तत्प्रिया, आविश्य तं भेजतुरेव सेवया ॥९०॥
तैरेव पुण्यैर्धनजन्मदानजै–स्तुर्यं भवं यावदवार्यतां गतैः ।
उन्मेष्यमाणा विषया [3]मिथो धृत–स्पर्द्धं समीयुः सममेव तं नृपम् ९१
धर्मं प्रसन्नोऽमुमुपासितुं चिरं, न्ययुङ्क्त तत्तान् विषयान् विरागिणः ।
अस्मिन् विरक्तो विभुरस्त्विति ध्रुवं, न धर्मसेवाऽवसरोऽपि तैर्ददे ॥९२॥
धर्मस्य विश्वाधिपतेः प्रसादतः, सदा प्रपेदे सुखमुत्तरोत्तरम् ।
अहो कृतघ्नः स तु मोहमोहितो, धर्मस्य नामापि कदापि नास्मरत् ९३
'सौधर्म'तोऽ[4]स्मिन् धरणीं श्रिते धृतो–त्कण्ठं सुधर्माऽनुगतोर्ध्वलोकतः ।
रूपान्तरं रम्यमिवाधि[6]गम्य, भूवासवो भूषयति स्म तां सभाम् ॥ ९४ ॥
पार्श्वद्वये चामरधारिणीयुगं, करस्फुरत्कङ्कणजैर्झणत्कृतैः ।
प्रायः शयालुं [8]क्षितिपाशयालये, दिवा स्मरं जागरयाञ्चकार तम् ॥९५॥
सर्वे तमुर्वीदयितं सभासदो, नत्वा न्यषीदन्नभितो यथास्थिति ।
न तन्मुखाल्लोचनमन्यतोऽक्षिपन्, यथाऽऽत्मनो योगभृतो निजं मनः ९६
तस्य स्वयम्बुद्ध इति प्रबुद्धधी–स्तत्राविशन्मन्त्रिपुरन्दरः पुरः ।
परे च सम्भिन्नमतिः [10]शतान्मति–र्महामतिर्मन्त्रिवरास्त्रयः स्थिताः ॥

स्वयम्बुद्धमन्त्रिणा महाबलराज्ञे धर्मे प्रेरणा—

उदीतसम्यक्त्वसहस्रदीधितिः, प्रध्वस्तमोहान्धतमःसमुच्चयः ।
तदा महामात्यपदाऽऽविशन्महाः स्वयं स्वयम्बुद्ध इति व्यचिन्तयत् ९८
अकोपरोपप्रबलैर्गलन्मदैः, कौटिल्यमुक्तैर्गतलोभविप्लवैः ।
लभ्येत राज्यं सुकृतैस्तदुद्भवै–र्ध्रियेत तन्मन्त्रिवरैस्तु [11]तन्निभैः ॥ ९९ ॥

---

१ चन्द्रः । २ महाबलम् । ३ क–'मिषोद्धृत–' । ४ महाबले । ५ देवसभा । ६ ख–'भिगम्य' । ७ ख–'वासना' । ८ महाबलचित्तगृहे । ९ कामदेवं । १० शत-मतिनामा । ११ सुकृतसदृशैः ।

[1]अङ्गानि राज्यस्य महाऽऽत्मना स्वयं, सप्तापि गोप्यानि सदाऽपि मन्त्रिणा ।
[2]स्वामी विशेषादिह यद्विसंस्थुले, त्रुटद्गुणे हार इवाखिलं वृथा ॥ १०० ॥
श्रितो महामात्यपदं महीपतेः, प्राग्जन्मपुण्यप्रतिहस्तकोपमः ।
न स्वाम्युपेक्षां विदधीत भक्षक–स्वार्थैकदक्षाऽन्यनियोगिशिक्षया ॥१०१॥
दीक्षां जिघृक्षुः स विभुः [3]शताद् बलः, पुनः पुनर्मामिति सभ्यमभ्यधात् ।
महाबलोऽयं विषयैर्महाबलै–र्विसंस्थुलः स्यान्न यथा तथाऽकृथाः १०२
तैरिन्द्रियार्थैर्मम पश्यतोऽप्यसौ, धिग् विप्रलुब्धो न कुतोऽपि चेतति ।
धिग्मामुपेक्षापरमेष मन्त्रिणां, दोषो न [4]को यद् व्यसनी नरेश्वरः ? ॥१०३॥
तस्मान्मयाऽयं प्रतिबोध्य सत्पथे, नेयो विनेयो गुरुणेव साम्प्रतम् ।
दक्षा नृपान् यत्र नयन्ति तत्र ते, यान्त्येव रज्ज्वा [5]नियता वृषा इव १०४
यथा यथेशो व्यसनेन जीयते, तथा तथा क्षुद्रनियोगिनां श्रियः ।
सोपप्लवे स्युर्ग्रहनायके न किं, सर्वे ग्रहाद्या धृतकान्तकान्तयः ? ॥१०५॥
ये येऽत्र राजव्यसनोपजीविन–स्ते ते भविष्यन्ति ममापवादिनः ।
[6]कण्डङ्करीयाः फलितेषु भक्षकाः, क्षेत्रेषु रक्षाकृति न द्विषन्ति किम् ? १०६
तथापि वक्ष्यामि जिनागमानुगां, गिरं प्रबोधाय निजप्रभोरहम् ।
किं मूषकोपद्रवभीरुभिर्नरैः, सौधाधिवासः प्रतिषिध्यते क्वचित् ? ॥१०७॥
ध्यात्वा स्वयम्बुद्ध इति प्रबुद्धये, धराधवं बुद्धिधनोऽभ्यधत्त तम् ।
तद्वंश्यकल्याणविधानलग्नकैः, श्राव्यो हितं मन्त्रिवरैर्विभुर्वचः ॥ १०८ ॥
स्वामिन्नमी यद्विषयाः स्वयंवराः, देवस्य सेवारसिका दिवानिशम् ।
धर्मस्य जन्मान्तरसेवितस्य तत्–प्रसादविस्फूर्जितमेतदूर्जति ॥ १०९ ॥
प्राग्जन्मजाते सुकृते सति प्रभो !, विवेकिभिस्तत् पुनरर्ज्यते नवम् ।
[7]नीवीधनादस्य पुनः कुतोऽर्जनं, वापः क्व वा [8]प्रेङ्खतु बीजभोजिनः ११०
आस्वादितैः कालमसङ्ख्यमप्यसा–वात्मेन्द्रियार्थैर्हृदयप्रियैः प्रभो ! ।
न याति तृप्तिं दहनो यथेन्धनै–र्जलैर्यथाऽब्धिर्गगनं यथाऽनिलैः ॥१११॥

---

१ "स्वाम्य-ऽमात्य-सुहृत्-कोष-राष्ट्र-दुर्ग-बलानि च" इत्यमरकोशे (श्लो० ७५१)। २ स्वामी विशेषेण गोप्यः इति। ३ शतबलः। ४ ख–'किं'। ५ निबद्धाः। ६ धान्यावमर्दकाः। ७ मूलधनभक्षकस्य। ८ भवतु।

इन्दीवराक्षी विषयाधिदेवता, तस्यां हि यः स्यान्निबिडानुरागवान् ।
धर्मा-ऽर्थ-मोक्षक्षयकारणेष्वपि, व्यक्तं विरक्तिर्विषयेषु तस्य न ॥११२॥
मीनध्वजव्याधविभोर्भवाटवी-जीवान् किरातीव वधार्थमर्पयेत् ।
मुग्धत्वभाजो भुजकर्णकुन्तल-प्रोल्लासिपाशैः परिबध्य कामिनी ११३
इयं मनो गन्धगजेन्द्रबन्धकृद्, वारी हि नारी त्यज तां विदूरतः ।
गम्भीरया यद्गुरुनाभिगर्तया, यतः प्रपातो लघु दृष्टमात्रया ॥ ११४ ॥
धर्मोऽर्थमर्थो मदनं सुषाव यत्, पितामहं यः पितरं च लुम्पति ।
सुखे सुखाभासकरं दुरायतिं, तं सेवमानः कुशली क मानवः? ॥११५॥
नृपत्व-चक्रित्व-हरित्ववैभवं, धर्मः प्रदत्तेऽनुभवं नवं नवम् ।
जल्पैरनल्पैः किमु कल्पयत्ययं, स्वल्पैरहोभिः परमार्हतश्रियम् ॥ ११६ ॥
विधेहि तद्धर्मविधानधन्यतां, पिधेहि धीमन्! विषयानुषङ्गताम् ।
सन्धेहि सन्तोषसुहृत्त्वमुत्तमं, निधेहि लक्ष्मीं परलोकलब्धये ॥ ११७ ॥

द्वितीयनास्तिकमन्त्रिकथनम्

विस्तारमिथ्यात्वतमोविभिन्नस-न्मतिः स सम्भिन्नमतिस्ततोऽवदत् ।
मन्त्री गिरं नास्तिकताहृदन्तरा-प्ररूढहालाहलवल्लिमञ्जरीम् ॥ ११८ ॥
अयि स्वयम्बुद्ध! सुबुद्धिरीदृशी, त्वय्येव विस्फूर्जति नापरे नरे ।
कस्त्वामिमां निष्ठुरतामपाठयद्, भोगांस्त्यज त्वं वदसीति यद् विभुम् ११९
भोगोपभोगार्थिभिरात्मभिः श्रितः, स्वामी स भोगाद् विनिवार्यते कथम्?।
सेयं कुलामात्य! कुलीनताऽद्य ते, स्फुटाऽभवद् भोगनिवारणाद् विभोः१२०
विहाय भोगानिहलोकसङ्गतान्, क्रियेत यत्नः परलोककाङ्क्षया ।
प्रत्यक्षपाणिस्थफलोज्झनादियं, स्वप्नानुसम्भाव्यफलस्पृहा हहा ॥ १२१ ॥

धर्माधर्मपरलोकादीनामपलापः

क्रियेत धर्मः परलोकशर्मकृ-न्न तावदास्ते परलोक एव सः ।
साक्षादभावात् परलोकिनस्ततः, पुण्यस्य पापस्य भुनक्तु कः फलम्? १२२
स्वयं शरीरेषु वसुन्धरापय-स्तेजोमरुद्भ्यश्चयमेति चेतना ।
संयोगवद्भ्यो गुडपिष्टधातकी-तोयादिकेभ्यो मदशक्तिवद् ध्रुवम् १२३

१ हस्तिबन्धनरज्जुः । २ नारीम् । ३ प्रसूते स्म । ४ क-'स्मरं' । ५ उत्तरकाले दुःखोत्पादकम् । ६ कामम् । ७ भवं भवं प्रति ।

ततः शरीरी न शरीरतः पृथक्, कोऽप्यस्ति तत् कः परलोकमेष्यति ? ।
धर्मोऽप्यधर्मोऽपि न सौख्य-दुःखयो-र्हेतू विना जीवमिमौ खपुष्पवत् १२४
ग्रावा यदेकः स्नपनैर्विलेपनैः, पुष्पोच्चयैर्वस्त्र-सुवर्ण-मण्डनैः ।
कर्पूर-कृष्णागुरु-धूपधूपनैः, सम्पूज्यते पुण्यमकारि तेन किम् ? ॥ १२५ ॥
ग्राव्णः परस्योपरि मानवव्रजै-र्न्यस्य क्रमौ मूत्रपुरीषसूत्रणा ।
यद् रच्यते चूर्णकृते च खण्ड्यते, सन्दह्यते पापमकारि तेन किम् ? १२६
चेत् कर्मणोत्पत्ति-विपत्तयो भवे, भवन्त्यहो देहभृतामिति स्थितिः ।
तद् बुद्बुदानां बत केन कर्मणा, सद्यः समुत्पत्ति-विपत्तयो वद ॥१२७॥
तच्चेतना संयुतभूतसञ्चय-प्रपञ्चिता यावदियं विचेष्टते ।
विजृम्भ्यते तावदवार्यमिच्छया, तस्या[1] विनाशे भवसम्भवो न सत् १२८
तन्व्यः सुतन्वाः सुकुमारतागुणैः, शिरीषपुष्पाणि कठोरयन्ति याः ।
ताभिः सुखं खेलतु निर्भयं विभु-र्मरालरोमावलितूलिकाङ्ककः ॥ १२९ ॥
भोज्यानि भोज्यान्यमृतोपमानि च, पेयानि पेयानि यथारुचि प्रभो ! ।
आस्तां रसज्ञा तव देव ! सान्वया, मा मूर्खता स्वार्थविनाशतोऽस्तु ते १३०
उरः-शिरोदेशनिवेशचम्पक-प्रकारपुष्पप्रकरो नरोत्तम ! ।
कर्पूर-कृष्णागुरु-रङ्कु[2]नाभिभिः, सौरभ्यसम्भारमयो भवा[3]न्वहम् ॥ १३१ ॥
दृशा निपश्योपवनानि पल्लवै-र्नवानुरागाणि किल त्वयि प्रभो ! ।
शृङ्गाररसारस्थितचित्रनाटिका-श्रिरं विचित्रा अपि चित्रशालिकाः ॥१३२॥
गीतैर्मृदङ्गध्वनिवेणुवल्लकी-नादानुगैर्माद्यतु मेदिनीपते ! ।
समागमोत्कण्ठितकामिनीघटा-चटूक्तिभिः कर्णरसायनं तव ॥ १३३ ॥
धर्मोऽप्यधर्मोऽपि न तत्फलं च नो, कर्ता च भोक्ता च न विद्यते विभो ! ।
तज्जीव्यते यावदवारितं सदा, तावत् सुखं वैषयिकं निषेव्यते ॥ १३४ ॥
य एव जन्तुर्म्रियते पुनर्भवे, स एव जायेत तथैव चेतना ।
तं प्राच्यजन्मप्रभवानुयायिनी, समग्रमेतद् घटनां न गाहते ॥ १३५ ॥

नास्तिकमतखण्डनम्

ततः स सद्बुद्धिसुधाऽम्बुधिः स्वयं-स्वबुद्धोऽभ्यधाद् धार्मिकमूर्द्धमण्डनम् ।
परात्मवैरी बत नास्तिको वदन्, श्रोतारमात्मानमधः प्रपातयेत् ॥१३६॥

१ चेतनायाः । २ कस्तूरिकाभिः । ३ प्रतिदिनमेधि ।

नैवास्ति जीवो यदि भूतसञ्चया–द्हो पृथग् व्याप्य वपुःस्थितोऽखिलम् ।
सदा ततोऽहं सुखवानसौख्यवा–निति प्रतीतिर्वद कस्य जायताम् ॥१३७॥
आत्मा ध्रुवं दीव्यति सौख्य-दुःखवत्, सदा स्वसंवेदनवेद्य एव सः ।
न शक्यते केनचनापि बाधका–भावान् निषेद्धुं च शरीरतोऽपरः ॥१३८॥
अहं सुखी दुःख्यहमित्युदित्वरः, सम्प्रत्ययः कस्यचनापि जातुचित् ।
नायं समुन्मीलति भूतसञ्चया–धिकं विनाऽऽत्मानमबाधयाऽन्वितः[1] १३९
आत्मा स्वयं वेदनतः प्रतीयते, स्वाङ्गे पराङ्गे त्वनुमानतोऽमुतः ।
तथा च सर्वत्र हि बुद्धिपूर्विको–त्थायाः क्रियाया उपलम्भतः खलु ॥१४०॥
देह्यस्ति देहाद् व्यतिरिक्त इत्यहो, ऐक्यं न वाच्यं खलु देह-देहिनोः ।
अप्यत्र देहे तदवस्थयाऽन्विते, नैवोपलभ्येत हि चेतना क्वचित् ॥१४१॥
तद्धर्मकर्मेतरयोरयं स्वयं, कर्ता च भोक्ता च तयोः शुभाशुभे ।
इत्यात्मसिद्धौ परलोकसम्भवो, विपद्यते यो हि स एव जायते ॥ १४२ ॥
आत्मानमेकैव हि पूर्वजन्मतः, परत्र जन्मन्यनुयाति चेतना ।
बालस्वभावादिव यौवनोद्भवे, युवत्वकालादिव वार्द्धकागमे ॥ १४३ ॥
वपुष्मतः प्राक्तनजन्मसम्भवं[2], चैतन्यमुच्चैरनुवर्तते न चेत् ।
तज्जातमात्रः कथमर्भको भृशं, स्तने जनन्या वदनं निवेशयेत् ? ॥१४४॥
कदापि न स्फूर्जति भूतसञ्चया–दचेतनाचेतनसम्भवस्तथा ।
कार्यस्य यस्माज्जगतीह कारणा–नुरूपतेव प्रतिरूप्यतेतराम् ॥ १४५ ॥
पृथ्व्यादिकेभ्यो ननु चेतना भवेत्, प्रत्येकमेभ्यो मिलितेभ्य एव वा ।
पक्षो यदि स्यात् प्रथमस्ततो न किं, तावन्त एव प्रभवन्ति चेतनाः ? १४६
पक्षो द्वितीयो यदि सम्मतो भवेद्, भिन्नस्वभावैर्वसुधादिभिस्तदा ।
एकस्वभावो ननु चेतनः कथं, जन्यो ब्रुवे तां च पृथक् स्वभावताम् १४७
भूः स्पर्शरूपे रसगन्धसंयुते, वाः स्पर्शरूपे सरसे महः[3] पुनः ।
स्पर्शं सरूपं मरुदेकमेव च, स्पर्शं गुणान् सन्दधतीति भिन्नता ॥१४८॥
तोयादिकेभ्यो विसदृक् स्वरूपिणां, मुक्ताफलानां जननावलोकनात् ।
अचेतनादप्यचलादिकाद्[4] ध्रुवं, स्याचेतनस्य प्रसवः सदेति चेत् ॥१४९॥

---

१ ख–'ऽन्वितं' । २ ख–'प्रागभव०' । ३ तेजः । ४ पृथ्व्यादिकाद् भूतात् ।

युक्तं न तद् यज्जलमौक्तिकादिके–ष्वेकं वपुः पौद्गलिकं पृथक् कथम्?
किश्वाचलाद्याः किल पुद्गलात्मका–स्ते चेतनं किं प्रसवन्त्यपुद्गलम्? १५०
पिष्टोदकादेर्मदशक्तिरुद्भव–त्यचेतनादेव विचेतनैव या।
निदर्शनत्वेन च चेतते कथं, नियोजिता सा घटनां विगाहते? ॥१५१॥
ग्रावा यदेकः परिपूज्यते परो, विलिप्यते मूत्रमुखैरसत् तु तत्।
नाचेतने पुण्यमपुण्यमप्यहो, सुखं च दुःखं च कुतस्तयोः फले? ॥ १५२॥
देहाद् विभिन्नः परलोकवानसा–वात्मा तथाऽऽस्ते परलोक एव सः।
शुभाशुभं तत् कृतमस्ति निश्चितं, भोक्ता तथाऽऽत्मैव कृतस्य कर्मणः १५३
पत्तिर्यदेको ननु नायकः परो, यानं यदेको ह्यधिरोहकः परः।
अर्थी यदेको बत दायकः परो, रक्ष्यो यदेकः कटरक्षकः परः ॥ १५४॥
एको दरिद्रो द्रविणेश्वरः परो, निर्बुद्धिरेकोऽद्भुतबुद्धिमान् परः।
एकः कुरूपो वररूपवान् परो, दुःखाऽब्धिरेकोऽधिकसौख्यवान् परः १५५
इत्यादि पुण्येतरपुण्ययोः फलं, प्रत्यक्षमेवेह विलोकयन् जने।
यदात्मनैवानुभवन् न मन्यते, सोऽधिष्ठितस्तन्नरकाधिदे(दै?)वतैः ॥१५६॥
निराकुरु भ्रान्तधियां गिरः प्रभो!, तिरस्कुरु स्वैरविहारशीलताम्।
आविष्कुरु प्रौढविवेकवल्गितं, पुरस्कुरु प्रोज्ज्वलधर्मकर्मताम् ॥ १५७॥

तृतीयेन मन्त्रिणा बौद्धमतप्रपञ्चः

शतान्मतिः[3] प्राह न वस्तुगोचराद्, ज्ञानादिहात्मा क्षणभङ्गुरात् परः।
वस्तुप्रकारेषु शरीरधारिणां, विजृम्भते यत् स्थिरबुद्धिवासना ॥ १५८॥
निमित्तमत्र प्रथमापरक्षणो–द्भवं तदैक्यं नहि वास्तवं पुनः।
तं मन्त्रिणं बौद्धमतानुवादिनं, ततः स्वयम्बुद्ध इदं वचोऽवदत् ॥ १५९॥

क्षणिकमतखण्डनम्

मन्त्रिन्! विमुञ्च क्षणिकत्ववादितां, निरन्वयं वस्तु यदीह दृश्यते[4]।
तद्धेतुवृन्दस्य तृणोदकादितः, पीयूषपेयाप्रतिमं कुतः पयः? ॥ १६०॥
चेद् विश्वमेतत् क्षणिकं मतं ततः, सन्तानमेति क्षणनाशिता न किम्?।
सन्ताननित्यत्वमुरीकृतं च चेत्, ततः समग्रं क्षणभङ्गुरं कुतः? ॥१६१॥

---

१ क–'प्रभव०'। २ दुर्गमोऽयं पाठः। ३ शतमतिः। ४ ख–'जायते'।

भावाः क्षणध्वंसिन एव चेत् ततो, न न्यस्तवस्तुप्रतिमार्गणं भवेत् ।
कस्यापि नैव स्मरणं प्रजायते, न प्रत्यभिज्ञाऽपि कदापि सम्भवेत् ॥१६२॥
जन्मक्षणानन्तरनश्वरे क्रमे, पुत्रो न पित्रोरपरक्षणोद्भवः ।
पुत्रस्य वा नो पितराविति स्थिता-वसङ्गतिः सङ्गमुपैति सर्वतः ॥१६३॥
ऊर्ध्वं विवाहक्षणतः प्रतिक्षणं, विध्वंसिनोर्भर्तृ-कलत्रयोस्तयोः ।
भर्ता कलत्रस्य न सम्भवेत् तथा, भर्तुः कलत्रं नहि चेति विप्लवः १६४
करोति यः कर्म पवित्रमत्र स, क्षतः[1] क्षणध्वंसितया भवान्तरे ।
परः पुनस्तत्फलमश्नुते ततः[2], कृतस्य नाशोऽप्यकृतस्य चागमः ॥१६५॥

चतुर्थेन मन्त्रिणा मायावादमण्डनम्

महामतिः प्राह न तत्त्वतः किम–प्यस्त्यत्र मायेयमहो विजृम्भते ।
विलोक्यमानं निखिलं चराचरं, स्वप्नेन्द्रजालादिनिभं विभाव्यते १६६॥
शिष्यो गुरुः पुण्यमपुण्यमात्मजः, पिता कलत्रं रमणः परो[3] निजः ।
इत्यादिकं यद्व्यवहार इत्यसौ, किञ्चित् पुनश्चश्चति नैव तात्त्विकम् १६७॥
मांसं तटान्ते परिमुच्य जम्बुको, मीनोपलम्भाय लघु प्रधावितः ।
मीनो जलान्तः प्रविवेश सत्वरं, मांसं च गृध्रो हरति स तद् यथा १६८
हित्वैहिकं वैषयिकं सुखं तथा, येऽमुत्रसौख्यप्रसराय धाविताः ।
ते वञ्चयन्ति स्वमहो सदोभय–भ्रष्टा नरास्तीव्रतपोव्रतादिभिः ॥१६९॥

—युग्मम्

विश्वम्भराभ्रंशभयभ्रमोद्भवा–देकांह्रिणा नृत्यति लावको[4] यथा ।
धूर्तस्य वाक्यैर्नरकोदरव्यथा–भीतस्तथाऽङ्गी तनुते परं तपः ॥ १७० ॥

मायावादस्य निराकरणम्

आह स्वयम्बुद्ध इतीह वस्तु चे–न्न सत् ततः कार्यकरं कुतो भवेत्? ।
माया यदीदृक् परिजृम्भते ततो, न कार्यकृत् स्वप्नमतङ्गजः कथम् ?१७१
महामते! कारणकार्यतां न चेत्, त्वं मन्यसे वस्तुषु पारमार्थिकीम् ।
भुजङ्गमेभ्यस्तदहो बिभेषि किं?, किं वा विपक्षप्रकरात् पलायसे ? १७२
एभिर्वितण्डाविबुधैर्धरापते!, प्रतार्य लोको विषयैकगृध्नुभिः ।
शुभायतिप्राप्तिपराङ्मुखैरयं, स्वयं पतद्भिर्व्यसने निपात्यते ॥ १७३ ॥

१ नष्टः । २ क–'पुनः' । ३ ख–'ऽनुजः' । ४ वर्तकः ।

विवेकमालम्ब्य महागुणं महा-मोहान्धकूपादधुनाऽपि भूपते ! ।
समुद्धर [1]स्वं विषयप्रपञ्चनं, विमुञ्च नाद्यापि हि किञ्चिदप्यगात् ॥१७४॥
विजित्य [2]गजैरिव पङ्ककारिणां, तेषां [3]घनानां प्रसरं समन्ततः ।
श्रिते शरत्काल इवोदयं स्वय-म्बुद्धेऽत्र [4]राजाऽभजत प्रसन्नताम् १७५

महाबलस्य शङ्कोत्थानिका

नृपः प्रसन्नैरमृतं निरीक्षणै-र्वर्षन् स्वयम्बुद्धमभाषत स्वयम् ।
धीवारिधे ! मुग्धधियो विधुन्वता, धर्मोऽहमप्येष समुद्धृतस्त्वया ॥१७६॥
यस्यानुषङ्गेण निषेव्यते सुखं, तत्रास्ति धर्मे न मनागनादरः ।
किन्त्वस्य सेवाऽवसरो न रोचते, तारुण्यचारुण्युदिते वयस्यहो ॥१७७॥
फुल्लेन्द्रियार्थद्रुमसान्द्रवैभवं, तारुण्यमात्मोपवनं श्रिते स्मरे ।
रत्या समं धर्मभवार्थजे कुत-स्तत्र प्रवेशं कुरुतां [5]पितामहः ? ॥ १७८ ॥
रङ्गद्विवेकादिगुणद्रुमोल्बणे, सन्तुष्टपीयूषतरङ्गिणीवृते ।
पापक्रमश्वापदतापपू[6]रिते, धर्मोऽस्तु वृद्धत्ववने कृताश्रमः ॥ १७९ ॥
अमुत्र धर्मस्य फलं तदप्यदः, सन्देहदोलामधिरोहति स्फुटम् ।
प्रत्यक्ष[7]मीहागतमैहिकं सुखं, निषेधसि त्वं किमु यौवने नवे ? ॥ १८० ॥

शङ्कानिरासः

ततः स्वयम्बुद्ध इति क्षितीश्वरं, बद्धाञ्जलिर्बुद्धिधनो व्यजिज्ञपत् ।
आवश्यके धर्मफले विशांपते !, शङ्कां स्वकीये हृदि मा [8]वृथा कृथाः १८१
देवस्य किं न स्मृतिमेति शैशवे, यदेकदाऽऽवामगमाव नन्दने ? ।
तस्मिन्नपश्याव विभासुरं सुरं, त्वां सप्रसादः स जगाद सादरम् ॥१८२॥
ममासि पौत्रस्त्वमहो महाबल !, पितामहस्तेऽतिबलाह्वयोऽस्म्यहम् ।
राज्यं विमुक्तं कुकलत्रवन्मया, चारित्रमादाय मुदा सुमित्रवत् ॥ १८३ ॥
चारित्रमुत्तालमपालयं [9]चिरं, जग्राह चान्तेऽनशनं तपःशिखाम् ।
मृत्युं समेतः परमेष्ठिनः स्मर-न्नभ्रान्तधी'र्लान्तक'नायकोऽभवम् ॥१८४॥
त्वयाऽपि न स्थेयमतिप्रमादिने-त्युक्त्वा तिरोऽभूत् स विभासयन् नभः ।
मन्यस्व शश्वत् परलोकमीश ! तत्-प्रत्यक्षरूपे क्व विकल्पकल्पना ? १८५

---

१ आत्मानम् । २ क-'गर्जारव' । ३ बहूनां, पक्षे मेघानाम् । ४ नृपतिः, पक्षे चन्द्रः । ५ धर्मः, प्रेक्ष्यतां ५४तमपृष्ठगतं ११५तमं पद्यम् । ६ क-'दूरिते' । ७ क-'मैहाग०' । ८ ख-'कृथा वृथा' । ९ क-'स्वयं' ।

भूपस्ततोऽभाषत साधु साध्वहं, पैतामहं स्मारित एष यद् वचः ।
पितामहस्यापि तवापि वाग्भरै–र्लोकः परोऽमानि ततोऽसि मे गुरुः १८६
मिथ्यात्वमन्थी प्रथमो मनीषिणां, विज्ञाय राज्ञो धृतवासनं मनः ।
लब्धावकाशः सुकृतप्रकाशनं, वाक्यं ततो मन्त्रिपुरन्दरोऽवदत् ॥ १८७ ॥

महाबलस्य पूर्वजानां परिचयः

तवान्ववाये पृथिवीपतिः पुरा, नयज्ञ ! जज्ञे कुरुचन्द्रसञ्ज्ञया ।
पत्नी तदीया कुरुमत्यभिख्यया–स्तयोस्तनूजो हरिचन्द्रनामतः १८८॥
कृतान्तदुर्दान्तममुं स्वभावतो, विभाव्य भीत्येव कृपालुताऽत्यजत् ।
एनं महारम्भपरिग्रहाग्रहं, कार्याण्यनार्याण्यपि भेजुरञ्जसा ॥ १८९ ॥
राज्यश्रिया प्राज्यसुदुर्नयोऽप्ययं, न तत्यजे प्राक्तनपुण्यबद्धया ।
यथा कुलीनत्वनिलीनचित्तया, पतिः कुरूपोऽपि कुरङ्गनेत्रया ॥ १९० ॥
अथापतिष्यन्नरकव्यथाभर–प्रसारिनासीरकमात्रसन्निभः ।
तस्यावसानावसरे प्रसृत्वरे, नरेशितुर्धातुविपर्ययोऽजनि ॥ १९१ ॥
तस्याजनि श्लक्ष्णतमाऽपि तूलिका, सकण्टकेव प्रतिकूलताकृते ।
अप्यानुकूल्यप्रथमानमानसा, [2]नीलोत्पलाक्षीव [3]विरक्तचेतसः ॥ १९२ ॥
भोज्यप्रकारा मधुराः प्रपेदिरे, पापेन निम्बप्रतिबिम्बडम्बरम् ।
नृपस्य तस्य प्रतिपक्षपक्षतां, मिथोऽर्थलोभेन यथा सहोदराः ॥ १९३ ॥
कर्पूर-कृष्णागुरु-चन्दनादयः, सौगन्धिकादीन्यपि पूतिगन्धताम् ।
तस्योग्रपापैः परुषैर्गिरां भरै–रसज्जनत्वं स्वजना इवाययुः ॥ १९४ ॥
उद्वेजकत्वं दधति स्म नेत्रयोः, प्राणप्रियाः पुत्र-सुमित्र-मन्त्रिणः ।
पापोत्करात् तस्य कटुत्वमुत्कटं, पित्तप्रकोपादिव शर्करादयः ॥ १९५ ॥
सद्वेणु-वीणा-मुरजस्वनानुगं, गीतं खर-क्रोष्टु-घरट्टघोषताम् ।
अमुष्य पापैः परमैः समभ्यगा–दभोज्यभावं परमान्नवद्द्विषैः ॥ १९६ ॥
पञ्चापि पूर्णोपचयेन पाप्मना, तस्येन्द्रियार्था विपरीततां ययुः ।
गव्यानि [6]मैरेयरसेन सङ्गिना, क्षणात् पवित्राण्यपवित्रतां यथा ॥१९७॥
देवेषु धर्मेष्वपि तस्य यादृशी, जज्ञे पुरा नास्तिकता नरेशितुः ।
सुखेषु सर्वेष्वपि तादृगेव सा, प्रान्ते प्रकामं परिणाममागमत् ॥ १९८ ॥

---

१ अग्रयान० । २ कमलनयना कामिनी । ३ योगिनः । ४ क–'मरुज०' । ५ गर्दभ-शृगाल-पेषणयन्त्र० । ६ मदिरा० । ७ क–'ययुः' ।

चिकित्स्यमानो [1]विचिकित्स्यवस्तुभि-[2]श्छन्नं स पापः क्षणमाप निर्वृतिम् ।
न [3]सारमेयो [4]घनसारतस्तथा, यथा प्रयाति प्रमदं [5]पुरीषतः ॥ १९९ ॥
समुत्कया नारकपीडया तदा-ह्वाने स्वदूत्यः प्रहिता हिता ध्रुवम् ।
दाहोर्मयस्तं परिताप्य निन्यिरे, [6]स्वस्वामिनीप्रीतिकृते नु पञ्चताम् ॥२००॥
विधाय दुःखी पितुरौर्ध्वदैहिकं, तदङ्गजन्मा हरिचन्द्रभूपतिः ।
शशास राज्यं [7]जनकावमानितं, सम्मानयन् धर्ममधर्ममर्मभित् ॥ २०१ ॥
इहापि सोऽत्युत्कटपाप्मनः फलं, दृष्ट्वा पितुस्तन्मरणं विषण्णधीः ।
सदा सदाचारपथाध्वनीनतां, व्यधादधर्मस्य कथास्वपि श्लथः ॥ २०२ ॥
सुबुद्धिनामानर्ममानवासनः, [9]स श्रावकं [10]शैशवमित्रमादिशत् ।
धर्मं भवान् धर्मविदो दिवानिशं, निशम्य सम्यग् दिशतान्मदग्रतः॥२०३॥
धर्मं सुबुद्धिः प्रतिबुध्य सद्गुरो-र्दिदेश स क्लेशहरं धरेशितुः ।
यथाऽम्बुधेरम्बुधरोऽम्बु निर्मलं, सङ्गृह्य विश्वस्य सुखोपकारकम् ॥२०४॥
सुबुद्धिना दिष्टमनिष्टसूदनं, स श्रद्दधे धर्ममधर्मभीरुकः ।
भीतो भवाद् योगमिवान्धकारतो, दीपं यथा वैरिगणात् कृपाणवत् ॥२०५॥
शीलन्धराह्वस्य बभूव [11]केवल-ज्ञानं पुरस्योपवनेऽन्यदा मुनेः ।
तमर्चितुं तत्र समाययुः सुरा, बुद्ध्वा सुबुद्धेः क्षितिपोऽप्युपागमत् ॥२०६॥
नत्वा निषण्णेषु पुरः सुरा-ऽसुर-क्षितीशमुख्येषु ऋषीन्दुरिन्दुवत् ।
विस्तारयामास स धर्मदेशनां, ज्योत्स्नामिव स्मेरितभव्यकैरवः ॥ २०७ ॥
स देशनाऽन्ते नृपतिर्यतिप्रभुं, पप्रच्छ तातो मम कां गतिं गतः ।
मुनीन्दुरूचे नरकं स सप्तमं, प्रापन्नृपान्यत्र गतिः क्व तादृशाम्? ॥२०८॥
श्रुत्वेति भूपो भवभङ्गिभङ्गुरो, गुरुं प्रणम्यैत्य [12]निकेतमात्मजम् ।
राज्ये नियोज्येति सुबुद्धिमब्रवीद्, धर्मं मयीवा[13]त्रे दिशेर्दिवानिशम् ॥२०९॥
दीक्षां ग्रहीष्याम्यहमाह सोऽपि तं, त्वां प्रव्रजिष्याम्यहमप्यनु प्रभो! ।
त्वन्नन्दनेऽस्मिन् मम नन्दनोऽन्वहं, व्याख्यातु धर्मं शिवशर्मकार्मणम् २१०

---

१ चिकित्सायोग्य० । २ क–बन्धुभिः । ३ श्वा । ४ चन्दनेन । ५ विष्ठया । ६ नारकपीडा । ७ क–'कनका' । ८ निरभिमानाशयः । ९ हरिचन्द्रः । १० क–'शैशवधर्म०' । ११ ख–'केवलं ज्ञानं' । १२ गृहं स्वकीयम् । १३ मम पुत्रे ।

इदं विनिश्चित्य नरेन्द्र-मन्त्रिणौ, तावाददाते भवदुःखभिद् व्रतम् ।
तीव्रासिधारापरिहासि तच्चिरं, संसाध्य साधू परमीयतुः पदम् ॥ २११ ॥
उद्दण्डदोर्म[१]ण्डनकुण्डलीभवत्–[२]कोदण्डदण्डोद्गत[३]काण्डमण्डलैः ।
विखण्डितद्विड्नृपतुण्डताण्डव–स्तवान्ववायेऽजनि दण्डको नृपः ॥२१२॥
जज्ञे नयज्ञो मणिमालिसञ्ज्ञया, तन्नन्दनः सज्जनचित्तनन्दनः ।
अतुच्छमूर्च्छो धन-रत्न-काञ्चन–प्रिया-सुता-ऽश्वादिषु दण्डकस्त्वभूत् २१३
आर्त्तं धरन् ध्यानमवाप पञ्चतां, प्राणप्रियस्वर्णमणिः स दण्डकः ।
अजायतायं निधनान्निजे धना–गारे करालोऽजगरो गरोत्कटः ॥२१४॥
तस्मिन्नगारे द्रविणग्रहाशया, यो योऽविशत् तं तमनन्तकोपवान् ।
स जग्रसेऽत्युग्रगरोर्मिसागरः, सर्पच्छलेनेव [४]लुलायलाञ्छनः ॥ २१५ ॥
विशन्तमन्तःसदनं ददर्श तं, स [५]कुण्डलीशो मणिमालिनं सुतम् ।
सञ्जातजातिस्मरणेन नन्दनो, ममैष तेनेत्युपलक्षितश्च सः ॥ २१६ ॥
प्रशान्तमूर्तिः स सुधोर्मिसान्द्रया, पश्यन् दृशा स्नेहरसप्रसन्नया ।
प्राग्जन्मबन्धुर्मम कश्चिदित्यसा–वज्ञायि राज्ञा मणिमालिना पुनः २१७
विज्ञाय तं ज्ञानविराजिना गिरा, धराधिनाथः पितरं [६]सरीसृपम् ।
तस्योपविश्य प्रतिबोधबन्धुरं, धर्मं शशंस स्वयमार्हतं [७]पुरः ॥ २१८ ॥
प्रागजन्मचित्तश्रितवित्तमोहजं, निनिन्द तिर्यग्भवमात्मनो हृदा ।
जग्राह संन्यासमसौ शमाश्रयो, विपद्य वृन्दारकमन्दिरं ययौ ॥ २१९ ॥
[८]तत्तद्भवस्नेहवशंवदो दिवः, समेत्य देवो मणिमालिने मुदा ।
स दिव्यमुक्तामयहारमार्पयत्, सोऽद्यापि ते दीव्यति देव! हृद्यसौ २२०
त्वमन्वयेऽभूर्हरिचन्द्रभूपतेः, सुबुद्धिवंशप्रभवस्त्वहं प्रभो! ।
मम क्रमप्राप्तमिदं पदं हि य–न्निजप्रभुर्धर्मपथे प्रवर्त्त्यते ॥ २२१ ॥
यद् देव! विज्ञप्तमकाण्ड एव त–न्निवेद्यते कारणमद्य वन्दितौ ।
[९]वृन्दारकोर्वीभृति नन्दने वने, वियच्चरोर्वीधरसञ्ज्ञिनौ मुनी ॥२२२॥
धर्मप्रभोर्दुर्गतिकूपनिःपतत्–प्राणिव्रजत्राणकरौ करौ ध्रुवम् ।
ध्यानस्फुरज्ज्ञाननिधानमानसौ, तौ चारणर्षी कुरुतः स देशनाम् ॥२२३॥

---

१ 'उद्दण्डदोर्दण्डलमण्डलीभवत्' इति ख–पाठश्चिन्त्यः । २ धनुष्य० । ३ बाण० । ४ यमराट् । ५ सर्पराजः । ६ सर्पम् । ७ क–'पुनः' । ८ ख–'तनूद्भव०' । ९ मेरौ ।

[1]विभो! भवज्जीवितमानमानम–न्नप्राक्षमेतौ समयेऽहमादृतः ।
आचक्षतुर्दक्षमदक्षयक्षमौ, तौ माससमात्रं तव जीवितं यती ॥ २२४ ॥
तस्मादकस्मादपि धर्मकर्मणे, त्वं त्वर्यसे वर्य! विवेकिनां मया ।
ये स्वामिनः स्युः शुभकामिनः प्रभो–र्भजन्त्युपेक्षां सचिवाः क्वचिन्न ते २२५
ऊचे महामात्यमदो महाबलः, साधु स्वयम्बुद्ध! विशुद्धधीनिधे! ।
त्वमेक एवासि सुहृत्तमोऽन्वहं, येन प्रकामं यतसे हिताय मे ॥ २२६ ॥
व्यामोहमैरेयनिरस्तचेतनं, व्या(नि?)कृष्यमाणं विषयद्विषच्चयैः ।
उच्चैर्गिराऽजागरयस्ततो गुरु–स्त्वं साधु मां [2]शाधि हि साधयामि किम्?२२७
आयुः समग्रं मम मोहनिद्रया, सुप्तस्य कालेन विलुप्तमेव हा ।
किं माससमात्रे सति धर्मसूत्रणं, दग्धे पटे क्वावरणं [3]दशाङ्कुरैः? ॥ २२८ ॥
उत्पातवातत्वरभङ्गभङ्गिनां, वातोच्चलद्वीचिचलं च जीवितम् ।
वीचीचलद्बुद्बुदवच्च यौवनं, देही हहा चेतति नो तथाप्यहो ॥ २२९ ॥
कुर्वन् दुरन्तं दुरितं शरीरवा–नवैति नो मृत्युमुपान्तवर्तिनम् ।
कृतान्तपाशे पतितेऽनुतापवान्, सतां गिरः पथ्यतराः सरत्यहो॥२३०॥
मन्त्रीन्द्र! मन्त्रेण तवैव वैरिषु, क्षीणेषु सौख्यानि मया सिषेविरे ।
यथेह [5]तत्प्राप्तिरमुत्र सम्भवेत्, तथा महामात्य! मतिः प्रतन्यताम् ॥२३१॥
जगौ स मन्त्रीति विभो! विषीद मा, धृतिं भज त्वं यतिधर्मधारणात् ।
एकं दिनं प्रव्रजितोऽपि यत् पुमा–नाप्नोति मुक्तिं त्रिदिवस्य का कथा? २३२
ओमित्युदित्वा नृपतिर्निजे पदे, नियोजयामास निजं तनूद्भवम् ।
कृतोद्यमः प्रव्रजितुं प्रजामुदे, रविर्द्वितीयेन्दुमिव प्रकाशकम् ॥ २३३ ॥
दानं व्रतादाननिदानमद्भुतं, दीनादिकेभ्यः स दयामयो ददौ ।
[6]यथा यथा याचनदैन्यमाचरत्, [7]तदन्ववायेऽपि न कोऽपि कुत्रचित् २३४
फुल्लैः प्रफुल्लैर्विमलैर्दुकूलकै–र्वर्ण्यैः सुवर्णैर्मणिभिर्मनोहरैः ।
तीर्थङ्कराणां प्रतिमाः प्रपूजय–न्नष्टाहिकां [8]स प्रतिचैत्यमातनोत् ॥ २३५ ॥

---

१ ख–'प्रभो!' ।　२ शिक्षां देहि ।　३ अञ्चलान्तिमतन्तुभिः ।　४ ख–'चर०' ।
५ सौख्यप्राप्तिः ।　६ ख–'तथा यथा' ।　७ दीनजनवंशे ।　८ क–'सम्प्रति' ।

महाबलस्य दीक्षाङ्गीकरणम्

सौजन्यधन्यः स्वजनान् महीजनान्, निजानुगानक्षमयत् क्षमी ततः ।
निःश्रेयसश्रीवशकृद् विशांपति–र्यतित्वमादत्त यतिक्रमान्तिके ॥ २३६ ॥
कृती विरत्या सह सत्त्ववारिधि–श्चतुर्विधाहारविराममग्रहीत् ।
असौ शुभध्यानसुधाहृदाश्रयो, नापत्तपस्तापमपापवान् मनाक् ॥ २३७ ॥[1]
स्वर्णस्वर्णस्य विवृद्धयेऽनलः, शूरस्य शूरत्वसमृद्धये रणः ।[2]
असेः शितत्वाय च शाणघर्षणं, यथा तथा तस्य तपोऽजनि श्रिये ॥२३८॥
सद्वासनावासमनाः स वासरान्, द्वाविंशतिं सानशनत्वमानशे ।[3]
पश्चाथ चित्ते परमेष्ठिनः स्मरन्, पञ्चत्वमापचितपुण्यसञ्चयः ॥ २३९ ॥

ऐशाने उपपातः

तीव्रेण तेन तपसा परिताप्य पापा–न्यैशानकल्पमगमत् सुकृतैर्वृतोऽसौ ।[4]
कौक्षेयकेण विजिगीषुरिवाभिजातीन्, भित्त्वा जयं प्रवरवीरपरीतपार्श्वः ॥[5][6][7][8]

॥ इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते पद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते चतुर्थ-महाबलभववर्णनस्तृतीयः सर्गः ॥ ३ ॥

श्रीनाभेयो भवतु भवतां सिद्धये सिद्धिसौध–
द्वारे यस्मिन् भुजयुगमभूत् तोरणस्तम्भयुग्मम् ।
उच्चैरंसद्वयशुभमयस्वर्णकुम्भाग्रदेश–
प्रेङ्खत्केशप्रकरपटलोन्मीलिनीलाभ्रपत्रम् ॥ १ ॥[9]

मह्यं द्रुह्यति योऽन्वहं स लभते नास्मिन् प्रवेशं कलि–
र्मद्वृद्धिं जनयन्ति ये नयमुखाः खेलन्ति तेऽस्मिन् गुणाः ।
स्वामी मेऽत्र जिनेश्वरस्तदिह मे वासः सुखोऽस्त्वित्यसौ
धर्मः सम्प्रति पद्ममन्त्रिहृदये रात्रिंदिवं दीव्यति ॥ २ ॥[10]

ग्रन्थाग्रं । [11]३७१ अक्षर ॥ १६ ॥



१ क–'नापन्नृप०' । २ क–'विवृद्धये' । ३ व्याप्नोति स्म । ४ खड्गेन । ५ शत्रून् । ६ क–'यातीन्' । ७ वसन्त० । ८ क–'कपटो' । ९ मन्दाक्रान्ता । १० शार्दूल० । ११ ख–'श्लोक ३०१' ।

## चतुर्थः सर्गः ४

श्रीवृषभो वः सोऽव्याद्, दशदिग्जनचिन्तितानि पूरयितुम् ।
दश चिन्तामणय इव, क्रमयो रेजुर्नखा यस्य ॥ १ ॥[1]
स महाबलजीवोऽभू–दुपपादे शयनसम्पुटे त्रिदशः ।
'ऐशान'कल्पभूमी[2]–विभूषणे 'श्रीप्रभ'विमाने ॥ २ ॥
मौक्तिकमिव शुक्तिपुटे, विद्युद्विद्योतवद् घनघटान्तः ।
उदपद्यतोपपादे, सुरः स्वयं शयनसम्पुटके ॥ ३ ॥
दिव्याकारस्फार–स्फुरितोरुमरीचिनिचितदिक्चक्रः ।
निःशेषदोषरहितः, [3]शिरीषसुकुमारसंस्पर्शः ॥ ४ ॥
वज्रमयवर्यसंस्थां[4]–नशुभलक्षणसप्तधातुमुक्ततनुः ।
प्रगुणाणिमादिगुणवा–नवधिज्ञानी महोत्साहः ॥ ५ ॥
श्रीधाम कामरूपः, समग्रविज्ञानविज्ञमूर्द्धन्यः ।
स सकलकलाकलापैः, कलितो ललिताङ्ग इति जज्ञे ॥ ६ ॥[5]*–विशेषकम्

ललिताङ्गदेवस्य देहे विभूषणानि

मणिमयकटके क्रमयोः, कटिसूत्रं कटितटे विकटशोभम् ।
करयोः कङ्कणयुगलं, भुजयोरङ्गदयुगं चङ्गम् ॥ ७ ॥
हृदयभुवि हारलतिका, कण्ठतटे कण्ठिकाऽप्यकुण्ठश्रीः ।
श्रुत्योः कुण्डलयुगलं, मौलौ माल्यं तथा मुकुटः ॥ ८ ॥
इति नित्यालङ्करणं, मनोऽनुकूलानि सद्दुकूलानि ।
सर्वाङ्गचङ्गिमगुणं, जज्ञे सममेव यौवनं चास्य ॥ ९ ॥–विशेषकम्
भूरिप्रतिरवपूरित–दिग्गर्भो दुन्दुभिर्ननाद तथा[6] ।
उच्चैर्जगुर्जय जग–न्नन्देत्यादीनि बन्दिवराः ॥ १० ॥
वादित्रचित्रनाद–प्रतिनादैस्तद्विमानमतिमानम् ।
गर्जितमूर्जितमतनो–दभिनवविभुलाभसम्भृतानन्दम् ॥ ११ ॥*

---

१ * + एतच्चिह्नद्वयलक्षितानि पद्यानि विहाय प्रायः अन्येषां छन्द आर्येति ज्ञेयम् ।
२ ख–'भूमि॰' । ३ पुष्पविशेषस्येव अतिमृदुः स्पर्शो यस्य सः । ४ ख–'स्थानः सुलक्षण॰' ।
५ * गीतिच्छन्दःसूचकमिदं चिह्नम् । ६ ख–'तदा' ।

सुप्तोत्थित इव पश्य-न्निति चित्ते सोऽथ चिन्तयामास ।
किं स्वप्नः ? किं माया ?, किमिन्द्रजालं ? किमीदृगिदम् ? ॥ १२ ॥
मामुद्दिश्य किमेतत्, प्रवर्त्तते प्रीतिकारि सङ्गीतम् ? ।
परिवारोऽयं विनयी, स्वामीयति मां समग्रः किम् ? ॥ १३ ॥
रम्यमिदं सेव्यमिदं, श्रीमदिदं प्रियमिदं सुखैक्यमिदम् ।
परमानन्दनिदानं, समासदं किमिदमास्थानम् ? ॥ १४ ॥
एवं विकल्पकल्पन-परायणं तं व्यजिज्ञपद् वेत्री ।
सम्प्रत्यमी सनाथा-स्त्वया सुनाथेन नाथ ! वयम् ॥ १५ ॥
त्वत्कारणरणरणक-प्रकरर्णरीणानुपासकानेतान् ।
निभृतममृतोर्मिसदृशा-दृशाऽभिषिञ्च प्रसीद विभो ! ॥ १६ ॥

ऐशानकल्पस्य वर्णनम्

द्वैतीयीकः स्फीत-श्रीकः सङ्कल्पकल्पकः कल्पः ।
निस्तुषसुखसन्तानः, स्वामि'न्नैशान'नामाऽसौ ॥ १७ ॥
[2]आकल्पकल्पमेतत्-कल्पस्यानल्पपुण्य[3]परिकल्प्यम् ।
स्वामिन्निदं विमानं, 'श्रीप्रभ'सञ्ज्ञं विभूषयसे ॥ १८ ॥
द्युसदोऽमी त्वदुपासन-कामाः सामानिका निकामं यैः[4] ।
सुरहर्म्यशर्म भोक्तुं, कृतभूरितनुर्विभाति भवान् ॥ १९ ॥
त्रायस्त्रिंशास्त्रिदशाः, पुरोहिता-ऽमात्यताहितारम्भाः ।
स्वामिन्नमी समीहां, वहन्ति भवदीहितं हितं कर्तुम् ॥ २० ॥*
[5]नर्मसचिवत्वहृद्याः, परिषद्या दिविषदः सदस्येते ।
परिहासावसरे तव, मनो ननु विनोदयिष्यन्ति ॥ २१ ॥
[6]षट्त्रिंशदायुधधरा, रक्षादक्षाः सदात्मरक्षास्ते ।

---

१ तत्परान् । २ भूषणसदृशम् । ३ प्राप्यम् । ४ सामानिकैः । ५ परिहासप्रधाना इव मनोहराः । ६ 'अढी द्वीपना नकशानी हकीगत'नामके गूर्जरभाषानिबद्धे पुस्तके ( पृ. २०४ ) षट्त्रिंशदायुधानां नामानि, यथा—१ चक्र, २ धनु, ३ धनुष्य, ४ वज्र, ५ अंकुश, ६ छुरिका, तोमर, ८ कुंत, ९ शूल, १० त्रिशूल, ११ शक्ति, १२ पाश, १३ मुद्गर, १४ गुलिका, १५ मुसटी, १६ लुंढी, १७ गदा, १८ शंकु, १९ पर्नु, २० पट्टिश, २१ रिष्ट, २२ करण, २३ यकपन, २४ हल, २५ मुशल, २६ मुहलिका, २७ कर्त्तरी, २८ करपत्र, २९ तरवार, ३० कोदाली, ३१ दुफोट, ३२ गोफण, ३३ डाई, ३४ डब्रस, ३५ हडश्च, ३६ शस्त्र."

कङ्कटसङ्कटकाया,[1] विकटोच्छ्राया इमे सुरनिकायाः ॥ २२ ॥
एते च लोकपाला–स्त्वत्पुरवरलोकपालने कुशलाः ।
एते त्वनीकपतय–स्त्वदनीकविवेककृतनतयः ॥ २३ ॥
जानपदपौररूपाः, प्रकीर्णका नाकिनो नेतः ! ।
शेषामिव शीर्षेऽमी, भवदादेशं निवेशयिष्यन्ति ॥ २४ ॥+[2]
एते विभो ! भजन्ते, तवाभियोग्या भुजिष्यतायोग्याः ।
किल्बिषिकाश्च त्वा–ममी तव म्लेच्छकर्मकृतः ॥ २५ ॥
एते तेऽन्तः प्रसृमर–रमणीरमणीयनूपुरनिनादाः ।
समुदितमनःप्रसादाः, प्रासादा मणिमयाः स्वामिन् ! ॥ २६ ॥
एतानि मानिनीनां, मानवितानस्य तानवकराणि ।
शाश्वतकुसुमफलानि, क्रीडोद्यानानि ते नाथ ! ॥ २७ ॥
एते विलासशैलाः, 'कैलाश'स्योपहासलासिकलाः ।
सुमुखीसुखप्रचाराः, काञ्चन-मणिसानवस्तव स्वामिन् ! ॥ २८ ॥*
विमलमणिमया विलसन–वाप्यः प्राप्य प्रभुं भवन्तमिमाः ।
दधति विकस्वरकान्त–स्वरसरसिरुहाननैर्महानन्दम् ॥ २९ ॥*
एतत् चेतःप्रियकृत्, काञ्चनमणिकिरणपूर्णदिक्चक्रम् ।
अद्भुततरभूति विभो !, विभाति भवतः सभाभवनम् ॥ ३० ॥
चामर-मुकुर-व्यजना–कुलकरकमला विलासभुवः ।
एता वाररमण्य–स्तव सेवारसवशा देव ! ॥ ३१ ॥
एते तव गन्धर्वा–श्चतुर्विधातोद्य[3]चतुरताप्रचुराः ।
सङ्गीतमनवगीतं, कर्तुं पुरतः स्फुरन्ति विभो ! ॥ ३२ ॥
इति वेत्रिवाक्प्रयोगा–दुपयोगं कलयति स ललिताङ्गः ।
ह्यस्तनदिनमिव पूर्वं, जनुरिति सर्वं स सस्मार ॥ ३३ ॥
विद्याधरधरणीन्दुं, प्रमादिनं जिनपतिप्रणीतं माम् ।
धर्मं स धर्मबन्धु–र्बोधयति स्म स्वयम्बुद्धः ॥ ३४ ॥

---

१ कवचयुक्तशरीराः ।　२ +उद्गीतिच्छन्दःप्रदर्शकमिदं चिह्नम् ।　३ आतोद्यस्य–वादित्रस्य चतुर्विधता यथा–वीणाप्रभृतिकं ततं, तालप्रभृतिकं घनं, वंशादिकं शुषिरं, मुरजादिकं आनद्धं च ।

प्रतिपद्य प्रव्रज्यां, तदैव विदधे मयाऽनशनम् ।
तस्य फलमेतदतुलं, किमपि हि धर्मस्य वैभवमचिन्त्यम् ॥ ३५ ॥+
इति संस्मृत्योत्तस्थौ, सहसा प्रतिहारदत्तबाहुरसौ ।
सिंह इव सानु[1] सिंहा-सनं जयजयारवैर्भेजे ॥ ३६ ॥
तममृतभुजोऽभिषिषिचु-श्चामरचलनैरवीजयन् जयिनम् ।
स च सर्वैर्गन्धर्वैः, कलमङ्गलगीतिभिर्गीतः ॥ ३७ ॥
अथ स समुच्छ्रायगत-श्चैत्ये शाश्वतजिनेश्वरप्रतिमाः ।
पूजयति स्म सविस्मय-विपुलास्यः प्रमदलास्यपरचित्तः ॥ ३८ ॥*
पर्वसगर्वैः[2] सर्वै-र्गन्धर्वैर्गीतमङ्गले मधुरे ।
क्रियमाणे तुष्टाव, स्तवनैः स नवैर्जिनाधीशम् ॥ ३९ ॥
ज्ञाननिधानानि ततः, स पुस्तकानि[3] वाचयामास ।
जैनास्थीन्यानर्च, वसुमाणवस्तम्भगर्भगूढानि ॥ ४० ॥+
अथ स पथा प्रतिहार-प्रथितेन जगाम वासधाम सुधीः ।
छत्रेणान्तरऽमाता-सुकृतेनेवोपरि स्फुरता ॥ ४१ ॥

स्वयम्प्रभादेव्या वर्णनम्

अचिरप्रभाऽभिभावि[4]-प्रभाप्रभावां स्वयम्प्रभासञ्ज्ञाम् ।
स ददर्श दर्शनीयां, दृष्टिसुधावृष्टिमिह देवीम् ॥ ४२ ॥
पञ्चाङ्गुलिललिताग्रौ, पार्ष्णेः पृथुलावनुक्रमं चरणौ ।
यस्या न्यासकृताविव, तूणीरौ[5] पञ्चबाणवीरेण ॥ ४३ ॥*
सरसिजजयिनोर्यस्याः, क्रमयोर्नूपुरमिषान्मुकुटरोपः ।
अथ तौ तु मिथः स्पर्द्धा-क्रोधेनेवारुणीभूतौ ॥ ४४ ॥
अनघे यस्या जङ्घे, कीर्त्तिस्तम्भौ नु मदन-यौवनयोः ।
नूपुररत्नप्रतिकृति-दम्भेन यशःप्रशस्तियुतौ ॥ ४५ ॥
जाने यदूरुविजिताः, करिहस्ता दुर्यशोमदालिमिषात् ।
रम्भास्तम्भालोलद्-विनीलदलदम्भतो रेजुः[6] ॥ ४६ ॥
विषमेषुवीरखुरली-धरा रराज जघनस्थली यस्याः ।

---

१ शिखरम् । २ उत्सवैरभिमानिभिः । ३ ख-'पुस्तकान्' । ४ विद्युत्तिरस्कारिणीप्रभाऽन्विताम् । ५ शराश्रयौ । ६ ख-'भेजुः' ।

धृ[1]तिरिह परितो र[2]सना, स्तम्भनिभा रोमराजिरभूत् ॥ ४७ ॥
इ[3]दमवलग्नेन कु[4]लिश-गर्भसगर्भेण केशरी भग्नः ।
कवलयति कुरङ्गकुलं, कुपितस्त[5]न्नेत्रमित्रमतः ॥ ४८ ॥
स्तनकनककुम्भयुग्मं, चूचुकमरकतपिधानयुग् यस्याः ।
शृङ्गाररसभृतमतो, रोमततिः स्य[6]न्दपद्वीव ॥ ४९ ॥
ग्रा[7]मत्रयाभिराम-स्त्रिजगत्यामयमिति त्रिरेखोऽभूत् ।
यत्कण्ठस्त्रिजगज्जय-शंसी शङ्खः स्मरभटस्य ॥ ५० ॥
अङ्गुलिपल्लवकलिते, कङ्कणमुक्ताऽंशुकुसुमसङ्कीर्णे ।
कुसुमास्त्रशस्त्रजनने, यद्भुजलतिके विलसतः स्म ॥ ५१ ॥
अमृतनिभृतेन कद्रुनो-ऽप्यधरत्वं यदधरेण बिम्बस्य ।
दत्तं ततोऽतिमाद्यतु, तद्वर्णेनैव वर्ण्यमिदम् ॥ ५२ ॥
अन्योन्यश्रीप्रेक्षा-दत्तेर्ष्यातः क्षयोऽनयोर्माऽस्तु ।
इति नाशाभित्तिं यत्-कपोलयोर्विधिरधादन्तः ॥ ५३ ॥
यस्या मुखेन्दुरिन्दोः, किमु [8]माऽभ्यधिकोऽस्त्वधारि येनाऽङ्के ।
नयनमृगयुगं तद्भू-न्न कलङ्कः किन्त्वलङ्कारः ॥ ५४ ॥
यस्या द्वा[9]भ्यां विजितो, मुक्तामयकुण्डलद्वयमिषेण ।
सेवां द्वयोर्द्विरूपः, कपोलयोः कुमुदबान्धवो विदधे ॥ ५५ ॥*
यस्याचिरमनुचरत्वं, धम्मिल्लवपुर्वि[10]धुन्तुदो विदधे ।
यद्वदनेन्दोः समतां, समेतु किमु तस्य [11]शीतांशुः ? ॥ ५६ ॥
नाभ्यावर्त्तगभीरा, घनमिलितस्तनरथाङ्गमिथुनवरा ।
मितहसितफेनकलिता, वरेण्यवेणीविलासश्रीः ॥ ५७ ॥
लावण्यामृतलहरी, क्रमकरनयनाननारविन्दततिः ।
या विपुलजघनपुलिना, [12]विलसनकल्लोलिनी रतीशस्य ॥५८॥*-युग्मम्
सरसीमिव सरसीरुहि-णीभिः सरसीरुहाऽऽस्यसरसाभिः ।
पीयूषद्युतिलेखा-मिव ताराभिः स्फुरद्भाभिः ॥ ५९ ॥

---

१ ख-'धृत्ति०' । २ कटिमेखला । ३ अस्याः मध्यभागेन । ४ वज्रमध्यसदृशेन । ५ स्वयम्प्रभानयनमित्रं कुरङ्गकुलम् । ६ निर्झरणपङ्क्तिः । ७ षड्ज-मध्यम-गन्धारेति त्रयो ग्रामाः । ८ क-'नाभ्यधि०' । ९ कपोलाभ्याम् । १० राहुः । ११ चन्द्रः । १२ ख-'विलसत्०' ।

नन्दनवनावनीमिव, कल्पलताभिः सभूषणगणाभिः ।
[1]निर्जरतरङ्गिणीमिव, हंसीभिः सुभगगमनाभिः ॥ ६० ॥
[2]मधुसमयवसुमतीमिव, वनीभिरभिशोभिसुरभिकुसुमाभिः ।
[3]शारददिवमिव सारस–वधूभिरतिमधुरशब्दाभिः ॥ ६१ ॥
शतशोऽप्सरोभिरभितः, सुन्दरितर[4]संदेशविनिवेशान्ताम् ।
तां ललनां ललिताङ्गो, निध्यायैवं [5]हृदा दध्यौ ॥ ६२ ॥–चतुर्भिः कलापकम्

उच्चकुचकेलिशैला, श्रुतिदोलालोललोचनचकोरा ।
गम्भीरनाभिवापी, काऽपीयं कामकेलिवनी ॥ ६३ ॥
कमलमुखी कुमुदाक्षी, [6]कुन्दरदा [7]बन्धुजीवमधुरोष्ठी ।
तिलकुसुमतुल्य[8]नासा, बाला कुसुमास्त्रशस्त्रशालाऽसौ ॥ ६४ ॥*
सौभाग्यामृतनिभृता, मुग्धस्मितदुग्धवारिधितरङ्गा ।
पीयूषमयूषमुखी, रहस्यमेषा त्रिभुवनस्य ॥ ६५ ॥
प्राग्जन्मप्रतिपालित–जिनविभुधर्मस्य वैभवाल्लब्धा ।
सेयमथवा कियदिदं, तस्मान्मुक्तिरपि सुप्रापा ॥ ६६ ॥
इति विमृशंस्त्रिदशवरो, विहिताभ्युत्थानयाऽनया त्वरया ।
स परप्रेमविवशयो–पविवेश सहैकपर्यङ्के ॥ ६७ ॥
एकस्मिंस्तौ तल्पे, ललिताङ्गसुर-स्वयम्प्रभादेव्यौ ।
शुशुभाते शुभशोभं, यथाऽऽश्विने शशधरा-ऽश्विन्यौ ॥ ६८ ॥
तन्मनसोरन्योन्यं, परमप्रेमरससान्द्रयोरधिकम् ।
मृत्पिण्डयोरिव रया–देकत्वं मिलितयोर्जज्ञे ॥ ६९ ॥
[9]निबिडानुरागनिर्गडा–ऽवलीढयोर्मिलितयोस्तयोः सततम् ।
एको [10]लव इव बहुलः, केलिकल(न?)योर्ययौ कालः ॥ ७० ॥

---

१ गङ्गाम् । २ वसन्त० । ३ ख–'सारद०' । ४ आसनभूमि० । ५ क–'हृदि' । ६ 'मोगरा' इति भाषायाम् । ७ 'बपोरियुं' इति भाषायाम् । ८ ख–'नाशा' । ९ क–'निबिडा०' । १० कालविशेषः, तत्स्वरूपं यथा–असङ्ख्येयाः समयाः=१ आवलिका; ४४४६ $\frac{२४५८}{३७७३}$ आवलिकाः=१ उच्छ्वासो निःश्वासो वा; उच्छ्वासनिःश्वासौ=१ प्राणः; ७ प्राणाः=१ स्तोकः; ७ स्तोकाः=१ लवः; ३८$\frac{१}{२}$ लवाः=१ नालिका; २ नालिके=१ मुहूर्तम्; ३० मुहूर्तानि=१ अहोरात्रम्; अतः $\frac{४८}{७७}$ 'मिनिट (minute)प्रमाणो लवः ।

आयुःक्षणेन साऽथ, स्वयम्प्रभा नयनगोचरममुञ्चत् ।
प्रोल्बणपवमानेन, स्तनयित्नुपरम्परा यद्वत् ॥ ७१ ॥
ललिताङ्गः प्रेमललित–मयप्रियाच्यवनदुःखनिचयेन ।
तरुरिव करिणाऽऽक्रान्तः, प्रोच्छ्रितमूर्च्छः क्षितौ न्यपतत् ॥ ७२ ॥
मूर्च्छाऽऽलिलिङ्ग सुभगं, तं प्रियया विरहितं रयात् प्रथमम् ।
तस्यामेवैकरसं, मत्वेव ततोऽचिरादमुञ्चत् ॥ ७३ ॥
मूर्च्छाश्लेषिणि तस्मिन्, या तस्थौ किल निलीय कुत्रापि ।
सा गतमूर्च्छे प्राप्ता, दक्षसखीवाशु सञ्ज्ञा तम् ॥ ७४ ॥

स्वयम्प्रभाच्यवने ललिताङ्गविलापः

स कलितसञ्ज्ञो दयिता–वियोगतापक्रमेण विललाप ।
किल करुणरसरसायन–वरैः प्रियोल्लापनैरतुलैः ॥ ७५ ॥
हा दयिते ! हा दयिते !, कासि क्वास्येहि दर्शनं देहि ।
यत् त्वां विना त्रिदिवमपि, दुःखकरं नरकवज्जज्ञे ॥ ७६ ॥
सततं त्वयि चाटुरसे, मम वचसि प्राप नापराऽवसरम् ।
त्वद्वदनेन्दुज्योत्स्ना–पानरते दृक्चकोरे च ॥ ७७ ॥
अस्वप्नस्य ममास्तु, स्वप्नेऽप्यन्याश्रयः प्रिये ! कस्मात् ।
लवमात्रं त्वद्विरहा–सहेऽत्र मयि तत् कथं कोपः ? ॥ ७८ ॥–युग्मम्
न कदापि त्वं कुपिता, मयाऽनुनीताऽपि नैव तेन त्वम् ।
अनुनयसुखाय कृतकं, कृत्वा कोपं स्थिता क्वापि ॥ ७९ ॥
ज्ञातमिदं तेन त्वां, नन्दनवनकल्पवल्लिकुञ्जान्तः ।
निजवल्लभां निभाल्य, क्रमपतितोऽनुनयमेवं कर्ताऽहम् ॥ ८० ॥*
इति बुद्ध्यैव स नन्दन–वने भ्रमन् प्रतिनिकुञ्जमित्यूचे ।
हा सुमुखि ! हा घनस्तनि !, हा सुश्रोणि ! किमिहापि न त्वमसि ? ८१*
इति दयितादर्शनमति–रयमुपवनमुपवनाद् ययौ वापीम् ।
वाप्याः क्रीडाशैलं, क्रीडाशैलाद् विमानमनुवेलम् ॥ ८२ ॥*
इत्यनिरीक्ष्य मृगाक्षीं, कुत्राप्येकत्र तन्मयस्वान्तः ।
सर्वत्रापि हि सर्वं, स्वयम्प्रभामयमपश्यदहो ॥ ८३ ॥

---

१ मेघमाला। २ स्वयम्प्रभायाम्। ३ अन्या योषित्। ४ कोपापनयसुखाय। ५ क–'मेवाहम्'।

तेन मनोऽतिमनोज्ञां, रमणीमभियोजितं ततो मनसा ।
साधु कृतज्ञेन कृतं, तस्य पुरस्तन्मयं भुवनम् ॥ ८४ ॥
एह्येहि वल्लभे ! लघु, विनय कपोलाद् घनाञ्जनं बाष्पम् ।
इति स जगौ मृगलाञ्छन-मागच्छद्वल्लभामुखभ्रान्त्या ॥ ८५ ॥*
अपतदुदपच्च मुहुः, क्षणमूर्च्छनचेतनाश्रयेणैषः ।
कुसुमतलिनेऽपि तूली[1]-शयनेऽपि महीतलेऽपि न निवृत्तः ॥ ८६ ॥*
शिशिरैः पदार्थविसरै-रुरो न तस्याससार शिशिरत्वम् ।
तस्योरसो रयात् पुन-रासनशिशिराण्यशिशिराणि ॥ ८७ ॥
शिशिरोपचारतरलं, परिवारजनं जगाद स तदानीम् ।
मृदुमन्थरशिथिलोदित-वर्णपदं समदमदनार्त्तः ॥ ८८ ॥
अन्तः परितापभिदे, तथ्यं पथ्यं हि न बहिरुपचारः ।
अमृतमधुमधुरतदधर-सरसमुखरसनौषधं कुरुत ॥ ८९ ॥
कदलीदलपटलमद-श्चालयथ कथं यदस्य पवनेन ।
वर्धेत दावपावक, इव हृदि न तु दीपवद् विरहः ॥ ९० ॥
हृदि धृततत्कुचकलशे, स्मरशररन्ध्रेषु चञ्चलैः प्राणैः ।
ज्वलितवियोगानलजुषि, मलयजपङ्कोऽतितापाय ॥ ९१ ॥
इति दीनतदीयवचः-प्रचयविलीनावलेपदृढलेपाः ।
जलतरलकातरदृशो-ऽभूवन्न वरोधसुदृशोऽपि ॥ ९२ ॥

स्वयम्बुद्धस्य दीक्षा, ऐशाने च दृढधर्मो देवः

मत्वेतश्च विरक्तो, महाबलमुनीन्द्रनिधनमनशनतः ।
श्रीसिद्धसूरिपार्श्वे, व्रतं प्रपेदे स्वयम्बुद्धः ॥ ९३ ॥
स सचिवयतिर्व्रतं शुचि, निरतीचारं चिरं समाचर्य ।
'ऐशाने' दृढधर्मा-ख्यश्चेन्द्रसामानिक[ः] सुरः समभूत् ॥ ९४ ॥*
सोऽवधिना बुद्ध्वा तं, प्राग्जन्मस्वामिनं तथा विधुरम् ।
ललिताङ्गं बोधयितुं, दृढधर्मो मधुरमित्यूचे ॥ ९५ ॥
ललिताङ्ग ! धैर्यललितां, कलय धियं विधुरतां मुधा धरसि ।
पुरुषेभ्यो विलपन्ति हि, महिलाः पुरुषा न महिलाभ्यः ॥ ९६ ॥

१ ख-'तूलि' ।

स्वामी प्राग्जन्मनि मम, महाबलस्त्वं तव त्वहं सचिवः ।
न स्मरसि मोहकूपे, निपतन् विधृतोऽसि तत्रापि ॥ ९७ ॥
प्राग्भवसम्बन्धधिया, प्रबोध्यसे त्वमधुना महासत्त्व ! ।
[1]त्रिदिवापीड ! व्रीडा, पीडा स्त्रीमात्रहेतवे भवतः ॥ ९८ ॥*
शोके विलपति हर्षे, नृत्यति नारी पुनर्नरो नैव ।
पौरुषपरिहारेण, श्रयसि कथं स्त्रीस्वभावमहो ? ॥ ९९ ॥
सुपुरुषरेखा नैषा, यद्विधुरे नैव धीरता ध्रियते ।
वात्यावर्त्ते तृणमिव, कम्पं कलयन्ति किं शैलाः ? ॥ १०० ॥
संसारे संसरता, स्पृश्यन्ते न कति कामिनीप्रमुखाः ।
तत् तेषां कः शोकः, पथिकस्येवाध्वभूतृणतरूणाम् ? ॥ १०१ ॥*
विपदि विषादं सम्पदि, मदं च भजते न गम्भीरः ।
ग्रीष्मे गर्जति जलधि–र्घनकालनदीजलैर्न[2] सङ्कुचति ॥ १०२ ॥*
महिलाविरहे ग्रहिला, इव विच्छाया भवन्ति ये मनुजाः ।
रजनिवियोगे रजनी–पतिरिव ते किं न सकलङ्काः ? ॥ १०३ ॥
सैका जगाम गच्छतु, सहस्रशो रम्यरम्यतररूपाः ।
देव्यो दीव्यन्त्यपरा–स्तव रतिकरणाय चतुरतराः ॥ १०४ ॥
एकस्यां शुष्काया–मितरां भजते लतां न किं भ्रमरः ? ।
हंसोऽपरां न सरसीं, वनीं च पञ्चाननो[3] नान्याम् ? ॥ १०५ ॥
अथ ललिताङ्गोऽजल्पद् , बन्धो ! प्राग्भवनिबन्धबन्धुतया ।
प्रतिबोधवचनमूचे, भवान् पुनरिदं विभावयतु ॥ १०६ ॥
त्रिजगति सारं स्वर्गः, स्वर्गे सारं सदैव विषयसुखम् ।
विषयसुखे सारं स्त्री, स्त्रियां हि सारं परं प्रेम ॥ १०७ ॥
निरुपमरूपाऽद्भुततम–सौभाग्या विमलशीलभाग् ललना ।
प्रेम विना प्रासादः, प्रतिमाहीन इव न सुखाय ॥ १०८ ॥
सुस्निग्धया मृगाक्ष्या, स्नेहविहीनोऽनुकूल्यमानोऽपि ।
तुष्यति न नरः शुष्यति, कादम्बिन्या जवासकः[4] सिक्तः ॥ १०९ ॥*

---

१ स्वर्गमुकुट ! । २ ख–'न च सङ्कुचति' । ३ सिंहः । ४ 'जवासो' इति भाषायाम् ।

प्रेमैकपाक्षिकं तद्–दुःखानुभवाय जायते नियतम् ।
द्रव्याय व्यवसायः, पुंसः पुण्योज्झितस्येव ॥ ११० ॥
कामपि न कामयेऽहं, न मयि प्रेमरससङ्कुला काऽपि ।
बहुलास्वपि महिलासु, प्रीतिकृदेका न मे काऽपि ॥ १११ ॥
प्राग्भवलक्षप्रभवं, पुण्यमगण्यं विपाकमेति यदा ।
दम्पत्योरन्योन्यं, तदा भवेत् प्रेम कोटिगतम् ॥ ११२ ॥
स्वहृदयदयिता कान्ता, प्रेमरसविसंस्थुलानि ललितानि ।
वहति विरहासहा यदि, तत् किं मुक्तेः सुखं किमपि ? ॥ ११३ ॥
अवधारय तद् बन्धो !, सा मे प्राणप्रियाऽहमप्यस्याः ।
जीवितजीवितरूप–स्तत् तद्विरहे क्व मेऽस्तु रतिः ? ॥ ११४ ॥
अथ दृढधर्मः सुदृढं, ध्यात्वा तद्दुःखमुन्मिषितदुःखः ।
दत्त्वोपयोगमवधि–ज्ञानाज्ज्ञात्वाऽभ्यधादिति तम् ॥ ११५ ॥
दुःखं दूरे विक्षिप, निक्षिप हृदयेऽधुना धृतिं धीमन् ! ।
ज्ञाता मया प्रियतमा, तव हृदयारामहरिणी सा ॥ ११६ ॥

स्वयम्प्रभाया उत्तरभवः

पृथ्व्यां पूर्वेषु 'विदे–हे'षु द्वीपेऽस्ति 'धातकी'[1]खण्डे ।
'नन्दि'ग्रामो नागिल–नामाऽस्मिन् गृहपतिर्निः[2]स्वः ॥ ११७ ॥
स्वोदरमपि पूरयितुं, श्रमतोऽस्य दरिद्रता न तत्पृष्ठम् ।
[3]क्वापि कदाचन मुञ्चति, पतिव्रता पत्युरिव पत्नी ॥ ११८ ॥
व्याधेराधिरिवाथ–स्वेवार्त्तिर्नास्तिकस्य कुमतिरिव ।
आस्ते नागश्रीरिति, नाम्ना सहचारिणी तस्य ॥ ११९ ॥
प्रत्यक्षेव बुभुक्षा, दरिद्रतेव समुपाश्रिता मूर्त्तिम् ।
कलितवपुरलक्ष्मीरिव, नागश्रीर्नागिलस्या[4]स्ते ॥ १२० ॥
जातौ दिवसे कुत्रा–प्यभोजनावर्द्धभोजनौ क्वापि ।
[5]प्रेतपिशाचाविव तौ, न कदाचन पूर्णभोजनौ सुखौ ॥ १२१ ॥*

१ ख–'धातुकी०' । २ निर्धनः । ३ क–'काऽपि कदापि न' । ४ समस्ति । ५ क–'प्रौढिं क्षाम्याविव तौ' ।

परगृहकर्मकृतोरपि, प्राग्जन्माजातपुण्ययोरनयोः ।
तावन्न कोऽपि दत्ते, भोजनमपि यावता भवति ॥ १२२ ॥
दीनादीनवलोक्य, स्तोकात् स्तोकं विवेकिना देयम् ।
येनोपायशतैरपि, नादत्तं प्राप्यते क्वापि ॥ १२३ ॥
यद् व्यवसायो न फलति, न फलति कुत्रापि सेवितः स्वामी ।
नाराद्धः फलति सुरः, फलति कृतं प्राक्तनं सुकृतम् ॥ १२४ ॥
केऽपि सहस्रम्भरयः, कुक्षिम्भरयश्च केऽपि केऽपि नराः ।
नात्मम्भरयस्तदिदं, फलमखिलं सुकृत-दुष्कृतयोः ॥ १२५ ॥
ईश्वरता धर्मस्या[1]-धर्मस्य दरिद्रता सदा दास्यौ ।
यौ[2] यत्र यत्र जयत-स्ते भवतस्तत्र तत्रैव ॥ १२६ ॥
नागश्री-नागिलयोः, प्राग्जन्माराधनादधर्मेण ।
निलयीकृतयोः खेलति, दरिद्रता स्वामिनिरता तत् ॥ १२७ ॥-युग्मम्
कालादकाङ्क्षिताः षट्, पुत्र्योऽभूवन्नुपर्युपरि पुत्रीम्[3] ।
अङ्कूरव्यक्तय इव, दरिद्रताकन्दयोरनयोः ॥ १२८ ॥
बीभत्सरूपभर्त्स्याः, स्वभावतो भूरिभक्षकाः कुत्स्याः ।
विश्वेषां विचिकित्स्याः, पुत्र्यस्ता विड्वराह्य इव ॥ १२९ ॥
नागिलगृहिणी गर्भं, बभार पुनरेव दुरितभारमिव ।
दारिद्र्यद्रुः प्रसरति, प्रायेणापत्यदलपटलैः ॥ १३० ॥
अथ नागिलो व्यथितहृद्, व्यचिन्तयदिदं ममोरुदुरितमहो ।
यदिहापि मनुजलोके, स्वयंवरा नरकवेदना प्राप्ता ॥ १३१ ॥*
सहजातेन हँहा[4]ऽहं, दारिद्र्येणामुना विनिद्रेण ।
अन्तःशून्यो विदधे, दारु यथा दारुकीटेन ॥ १३२ ॥
तत्राप्यलक्षणाभि-र्विलक्षभूतो विपक्षरूपाभिः ।
कन्याभिरभिद्रुतोऽहं, बत तरुरुपदेहिकाभिरिव[5] ॥ १३३ ॥
सम्प्रत्यपि यदि पत्नी, पुत्री प्रसविष्यते पुनः पापा ।
त्यक्त्वा ततः कुटुम्बं, परदेशे क्वापि यास्यामि ॥ १३४ ॥

---

१ धर्मा-ऽधर्मयोः । २ ख-'तौ' । ३ क-'पत्नीम्' । ४ ख-'हहहा' । ५ पिपीलिकाविशेषैः ।

इति तस्योपचितार्त्तेः, पत्नी सा सप्तमीं सुतां सुषुवे ।
सा सप्तमी नरकभू-रिव जातात्यरतिदा जाता ॥ १३५ ॥
पत्न्याः पुत्रीभ्योऽप्यथ, भीतोऽष्टाभ्यः स राक्षसीभ्य इव ।
अकथितवार्त्तोऽत्यार्त्तः, क्वापि ययौ नागिलो नंष्ट्वा ॥ १३६ ॥
नागश्रियः प्रसवभव-दुःखाग्नेर्दौस्थ्यवायुतो ज्वलतः ।
भर्तृप्रवासघास-ग्रासन्यासोऽतितापाय ॥ १३७ ॥

स्वयम्प्रभाजीवनिर्नामिकास्वरूपम्

नागश्रीः पतिदुःखा-च्चकार नामापि नो कनीयस्याः ।
निर्नामिकेति नाम्ना, ततः क्षितौ सा गता ख्यातिम् ॥ १३८ ॥
नागश्रीरपि सम्यग्, बालामेनामपालयन्नैव ।
प्रापत् तथापि कानन-वल्लीवारक्षिता वृद्धिम् ॥ १३९ ॥
तत् किञ्चिद् दौर्भाग्यं, येनास्यास्तावदासतां स्वजनाः ।
माताऽप्याक्रोशैस्तां, प्रतिपदमाक्रोशयामास ॥ १४० ॥
सा मोदकान् विलोक्य, क्वापि महे सकलबालककरेषु ।
जननीं निजां ययाचे-ऽबालदशासुलभया स्पृहया ॥ १४१ ॥
रोषारुणेक्षणाऽम्बा-ऽब्रवीदिदं मोदकास्तव कुले न ।
केनापि स्वप्नेऽपि, प्राप्ताः पापे ! स्पृहा किं ते ? ॥ १४२ ॥
किं मोदकैस्तव हले !, भोजनमपि लप्स्यसे ततः सततम् ।
'अम्बरतिलका'दद्रे-रिन्धनमानेष्यसि त्वं चेत् ॥ १४३ ॥
सा न्यक्कृतेति मात्रा, वज्राङ्कुरसोदरैर्गिरां प्रकरैः ।
तं गिरिमियाय रुदती, निन्दन्ती दैवमेधकृते ॥ १४४ ॥
शैलस्य तस्य शीर्षे, तदाश्रितस्यैकरात्रिकीं प्रतिमाम् ।
समजनि युगन्धराभिध-संयमिनः केवलज्ञानम् ॥ १४५ ॥
तस्याथ मुनेः केवल-महिमां सन्निहितदेवतास्तेनुः ।
आसन्नग्रामनगर-जना नमस्कर्तुमिममीयुः ॥ १४६ ॥
निर्नामिकाऽपि तत्र, प्रेक्ष्यापततः सुरासुरमनुष्यान् ।

---

१ जन्मनोऽत्यन्तदुःखदायिनी । २ क-'ग्राम०' । ३ क-'पापाय' । ४ इन्धनार्थम् ।

विस्मितहृदया तैः सह, तं नन्तुमगाद[1]गाग्रं सा ॥ १४७ ॥
तं नत्वा केवलिनं, शमिनं निर्नामिका निकामं सा ।
मुदिता रोमाञ्चमिषाद्, विकीर्णकल्मषभरेवाभूत् ॥ १४८ ॥

निर्नामिकायाः केवलिधर्मदेशनाश्रवणम्

[2]भवदवभवदवथुपृथु–व्यथामथनतथ्यपथ्यपीयूषम् ।
सद्धर्मशर्मसौधं, साधुवरो देशनां विदधे ॥ १४९ ॥
आपातमात्ररतिदं, निषेवितं रोगिणामपथ्यमिव ।
जायेत देहिनामिह, विषयसुखं दुःखपरिणामम् ॥ १५० ॥
यावन्न मुक्तिराप्ता, भवेऽत्र भविनां कुतः सुखं तावत् ? ।
कर्मक्षयेण [3]सा स्यात्, [4]स पुनः साम्येन सम्भवति ॥ १५१ ॥
संसारेऽस्मिन् संसा–रिणां [5]चतुरशीतियोनिलक्षेषु ।
जन्म-जरा-मरणमुखं, स्याद् दुःखमपारमनिवारम् ॥ १५२ ॥
निर्नामिका ततस्तं, केवलिनं कल्पिताञ्जलिरजल्पत् ।
भगवन् ! यूयं भुवने, राज्ञि च रङ्के च समचित्ताः ॥ १५३ ॥
रविरविरलकरनिकरैः, प्रकाशयन् विश्वमप्यदो विश्व[6]म् ।
किमु निःस्वमूर्खकातर–विरूपमलिनालयान् विवर्जयति ? ॥ १५४ ॥
अमृतरुचिरमृत[7]निचयै, रुचिनिचयैरुपचितैर्जनं सिञ्चन् ।
[8]पर्वणि किमु पर्वततरु–तिर्यग[9]व्रत[10]तीर्विदूरयति ? ॥ १५५ ॥

---

१ पर्वतशिखरम् । २ संसारवने जन्मदाह० । ३ मुक्तिः । ४ कर्मक्षयः । ५ पृथ्वीकायानां जलकायानां तेजस्कायानां वायुकायानां च सप्त सप्त लक्षाणि योनीनाम्, साधारणवनस्पतिकायानां मनुजानां च चतुर्दश चतुर्दश, प्रत्येकवनस्पतिकायानां दश, द्वीन्द्रिय–त्रीन्द्रिय–चतुरिन्द्रियाणां द्वे द्वे द्वे, नारकाणां देवानां तियक्पञ्चेन्द्रियाणां च चत्वारि चत्वारि चत्वारि । एवं चतुरशीतिर्लक्षाणि योनीनां सङ्ख्या । उक्तं च **विचारसारे** ( पृ. १४८ )—

"पुढवि–दग–अगणि–मारुय इक्किक्के सत्त जोणिलक्खा उ ।
वण पत्तेय–अणंते दस चउदस जोणिलक्खाओ ॥ ८०० ॥
विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु ।
तिरिएसु हुंति चउरो चउद्सलक्खा य मणुएसु ॥ ८०१ ॥"

६ समग्रम् । ७ क—'निचितै' । ८ पूर्णिमायाम् । ९ क–'तिर्यक्षु तती' । १० लताः ।

स्तनयित्नुरुन्नतः किं, तपात्यये तपनतीव्रतापहरैः ।
न जलभरैः पल्लवयति, कान्तारलतावितानानि ?॥ १५६ ॥
ऋतुवासवो वसन्तः, पल्लवयन् सकलवल्लिविटपिकुलम् ।
कटुकण्टकिकुब्जतरू-नपि कुरुते कुसुमफलकलितान् ? ॥ १५७ ॥
तद्वत् तत्र[1]भवानपि, भविनां सन्देहहरणकरणपरः ।
साधारणस्ततस्त्वं, मयाऽपि विज्ञप्यसे ज्ञानिन् ! ॥ १५८ ॥
येन भवो भगवद्भिः, प्ररूपितो दुःखरूप एवायम् ।
तत् क्वापि कोऽपि दुःखी, मत्तोऽप्यतिमात्रमत्रास्ते ॥ १५९ ॥
मुनिविभुरभाषतैनां, दुःखितमानिनि ! तवास्ति किं दुःखम् ? ।
नरकावनीषु नारक-दुःखानि ख्यातुमप्यलक्ष्याणि ॥ १६० ॥*

नरकवेदना

नरके त्रिविधं दुःखं, क्षेत्रप्रभवं परस्परेण कृतम् ।
परमाधार्मिकविहितं, भविनोऽनुभवन्ति कर्मवशाः ॥ १६१ ॥
प्रथमेषु त्रिषु नरके-ष्वूष्णं तुर्ये तु शीतमुष्णं च ।
शीतं परेषु तदिदं, दुःखं क्षेत्रोद्भवं भवति ॥ १६२ ॥
यदि नरकेषु कथञ्चन, निपतति लोहाद्रिरुष्णशीतेषु ।
स तदा विलीयते श्रा(स्रा)ग्, विशीर्यते श्रुवमनाप्तोऽपि ॥ १६३ ॥
स्मृत्वा प्राग्भववैरं, कृतवैक्रियहस्तिसिंहरूपधराः ।
अन्योन्यं प्रहरन्तो-ऽनुभवन्ति विखण्डिता दुःखम् ॥ १६४ ॥
वज्रघटीयन्त्रेषू-त्पन्नाः पापासुरैर्लघुद्वारात् ।
[2]आकृष्यन्ते बलतः, सीसशलाका इव रटन्तः ॥ १६५ ॥
करचरणादौ धृत्वा, शिलासु पटुवज्रकण्टकघटासु ।
असुरैरास्फाल्यन्ते, रजकैरिव मलिनवसनानि ॥ १६६ ॥
क्रकचैश्च दारुदारं, दार्यन्ते दारुणैः केचित् ।
पिष्यन्ते तिलपेषं, चित्रैर्यन्त्रैश्च कुत्रापि ॥ १६७ ॥
लोहघनैः केऽपि घनैः, कुट्यन्ते लोहपात्रवद[3]मत्रम् ।
दम्भोलिशूलतूलिक-शय्यासु च केऽपि शाय्यन्ते ॥ १६८ ॥

१ पूज्यः । २ ख—'आकर्ष्यन्ते' । ३ पात्रम् ।

वज्रलकुटैश्च केचित्, ताड्यन्ते नीलिकादलवत्[1] ।
शाकपणिका इवैके, खण्ड्यन्ते खण्डशो बहुशः ॥ १६९ ॥[2]
भूयोऽपि मिलितकाया, भूयो भूयस्तथैव तद् दुःखम् ।
असुरैरनुभाव्यन्ते, क्रन्दन्तः करुणरावेण ॥ १७० ॥
वैतरणीं नाम नदीं, तप्तत्रपुसीसकौघघोरतराम् ।
आर्त्ताः पिपासया पुन-रवतार्यन्ते वराकास्ते ॥ १७१ ॥
छायेच्छया रयात् पुन-रसिपत्रांह्रिपवनान्तरे प्राप्ताः ।
निपतद्भिर्निशिताग्रैः, पत्रैस्तिलशो विकृत्यन्ते ॥ १७२ ॥
परदाररतं सततं, संस्मार्य च लोहपुत्रिकास्तप्ताः ।
संश्लेष्यन्तेऽतिकुलिश-कण्टककलिताश्च शाल्मल्यः ॥ १७३ ॥
स्मारितमांसास्वादं, स्वशरीरस्यैव मांसमाश्यन्ते ।
प्रख्याप्य मद्यपानं, त्रपुप्रतप्तं च पाय्यन्ते ॥ १७४ ॥
कुम्भीपाकभ्राष्ट्र-स्वेदनिकाशूलमुख्यदुःखानि ।
अनुभाव्यन्ते लवमपि, न लभन्तेऽर्त्तिं विना स्थातुम् ॥ १७५ ॥
इति नरके पूर्वकृतं, दुष्कर्म स्मार्यमाणास्ते ।
दुःखमनुभवन्ति तदिह, भविनां श्रुतमपि हि दुःखाय ॥ १७६ ॥
प्रत्यक्षमपीक्ष्यन्ते, जल-स्थल-खगामिनोऽङ्गिनोऽत्रापि ।

तिर्यग्गत्यादिषु विडम्बनाः

बहुदुःखमनुभवन्तः, स्वकर्मपरिपाकतः सततम् ॥ १७७ ॥
जलचरजीवा धीवर-बकादिपतगैस्तथा[3] मिथोऽर्द्यन्ते[4] ।
स्थलचारिणो मृगाद्याः, सिंहाद्यैर्मृगयुभिश्च[5] मार्यन्ते ॥ १७८ ॥*
शीतोष्णतृड्बुभुक्षा-भूरितरकशाऽङ्कुशप्रतोदैश्च[6] ।
कां वेदनां सहन्ते, नैते प्राग्जन्मकर्महताः ? ॥ १७९ ॥
खचरास्तित्तिर-लावक[7]-कपोत-कीरादयो निगृह्यन्ते ।
पललुब्धैः शाकुनिकैः, सिञ्चान-श्येन-गृध्रमुख्यैश्च ॥ १८० ॥*
मानुष्यकेऽपि केऽपि, प्राणभृतो जन्मपङ्गु-बधिरा-ऽन्धाः ।

१ मेलापत्रवत् । २ उपगीतिः । ३ पक्षिभिः । ४ हिंसन्ते । ५ व्याधैः । ६ क-'भर०' । ७ खरकोणः; पक्षिविशेषः ।

कुष्ठादिव्याधिभृतो, दारिद्र्यप्रभृतिपरिभूताः ॥ १८१ ॥
देवत्वेऽपि परस्पर–पराभवाधिकविभूतिदूनानाम् ।
च्यवनेऽप्यतिदीनानां, देवानां दुःखमप्यास्ते ॥ १८२ ॥[1]
अस्मिंश्चतुर्गतिजुषा–मपि संसारे निसर्गभोगवताम् ।[2]
जलधिजलानामिव नो, दुःखानामवधिरुन्मिषति ॥ १८३ ॥
एषां भवदुःखानां, प्रशमोपायस्तु जयति निरपायः ।
श्रीमज्जिनेन्द्रसेवा, सुधेव लघुकालकूटानाम् ॥ १८४ ॥
मोक्षं विना न सौख्यं, रागद्वेषक्षयं विना नायम् ।
अयमपि न वीतराग–प्रभुं विना प्रभवति क्वापि ॥ १८५ ॥[3]
अङ्कलगिता मृगाक्षी, न लक्ष्यते रागलक्षणं यस्य ।
रागपर एव नारी–परिरम्भारम्भसंरम्भः ॥ १८६ ॥
न द्वेषलक्षणान्यपि, वीक्ष्यन्ते चक्र-चापमुख्यानि ।
यस्य करे येन विभो–स्तस्य न वध्योऽस्ति शमवार्द्धेः ॥ १८७ ॥
रागद्वेषविशेषित–मोहादिविकारवारपरिमुक्तम् ।
सकलातिशयैः कलितं, मुक्त्वाऽर्हन्तं कुतो मुक्तिः ? ॥ १८८ ॥

–विशेषकम्

धर्मः स एव सेव्यः, प्ररूपितो वीतरागविभुना यः ।
हिंसादिदोषरहितः, सर्पोज्झितममृतकुण्डमिव ॥ १८९ ॥

उक्तं च—

"रागाद् वा द्वेषाद् वा, मोहाद् वा वाक्यमुच्यते ह्यनृतम् ।
यस्य तु नैते दोषा–स्तस्यानृतकारणं किं स्यात् ? ॥ १९० ॥"

रागेण द्वेषेण च, मोहेन च वर्जितो जिनाधिपतिः ।
स्यात् तत् तेनैवोक्तो, धर्मो दुष्कर्ममर्मभिदे ॥ १९१ ॥
निरवद्यो जिनधर्मः, सम्यग् येनादृतः सुकृतभाजा ।
तिर्यङ्-नरकगतियुगं, विरक्तमेवास्य नो मिलति ॥ १९२ ॥[4]
न विधेयो जीववधो, जीवा यत् तेन तस्करेणेव ।[5]

---

१ ख–'दुःखमेवास्ते' । २ ख–'तोऽङ्गवताम्' । ३ ख–'अयं च' । ४ क–'तिर्यग्' ।
५ जीववधेन ।

हृत्वा सुकृतरहस्यं, [1]न्यस्यन्ते नरककुहरान्तः ॥ १९३ ॥
नित्यमसत्यं त्याज्यं, यतोऽमुतो लाघवं जनो लभते ।
तेन भ्राम्यति दुष्कृत-पवनाद् भवकाननेऽर्कतूलमिव ॥ १९४ ॥*
नादत्तमाददीता-न्यार्थं व्यर्था[2]मुना पराक्रियते ।
सुकृततति: पश्चात् कृत-शून्येनैवाङ्कसङ्कलना ॥ १९५ ॥
अब्रह्म हेयमन्वह-ममुना विलयं प्रयाति सकलोऽपि ।
ध्रुवमुपचितोऽपि धर्मः, [3]सोम इव श्यामपक्षेण ॥ १९६ ॥
सुमहान् परिग्रहो नहि, धार्यो यत्नेन मानवो नैव ।
लङ्घयति भवं वृष इव, बहुतरभारार्दितो गहनम् ॥ १९७ ॥
एतानि पञ्च हिंसा-प्रभृतीनि त्यजति देशतोऽपि हि यः ।
पञ्चत्वं तस्य कुतो, गतिमचिरात् पञ्च[4]मीमुपेतस्य ? ॥ १९८ ॥*
मुनिगीःश्रितसंवेगौ-षधियोगान्नागिलस्य नन्दिन्या ।
उपलग्रन्थिरिव रयात्, कर्मग्रन्थिस्तदाऽभेदि ॥ १९९ ॥
रत्नाधिकस्य सुमुने-रन्ते सम्यक्त्वरत्नम[5]स्या[6]सौ ।
तत् प्राप यत्प्रभावा-न्मोक्षपुरे प्राप्स्यति प्रसरम् ॥ २०० ॥
पञ्चाप्यणुव्रतानि, प्रतिपेदे पञ्चविषयविरताऽसौ ।
पञ्चपरमेष्ठिमन्त्र-ध्यानाधीनाऽन्तिके साधोः ॥ २०१ ॥
अपवर्तितसंसारं, सारं सुरधेनु-रत्न-शाखिभ्यः ।
लब्ध्वा युगन्धरमुने-र्गृहिधर्मं सा दधार धृतिम् ॥ २०२ ॥
कृतकृत्यंमन्याऽसौ, धन्या साधुं प्रणम्य सप्रमदा ।
अथ दारुभारकमुपा-दाय स्वालयमियाय रयात् ॥ २०३ ॥
धृतबोधाऽस्तक्रोधा, तनुते स्म तपस्तदादि तीव्रं सा ।
श्रीमज्जिनेन्द्रसेवा-सुधामुधाभूतसर्वाधिः ॥ २०४ ॥
तां तारुण्यगतामपि, दौर्भाग्यमयीं न कोऽप्युपायंस्त ।
को [7]निर्मलजलामपि, क्षारत्वयुतां श्रयेद् वापीम् ? ॥ २०५ ॥

---

१ क-'नश्यन्ते' । २ अदत्तादानेन । ३ कृष्णपक्षेण चन्द्रमा इव । ४ मुक्तिम । ५ युगन्धराह्वस । ६ निर्नामिका । ७ क-'नैर्मल्यकला०' ।

निर्नामिकाया ललिताङ्गदर्शने पुनः स्वयम्प्रभात्वम्

निजदौर्भाग्यतरङ्गित-वैराग्याऽद्रिं पुनस्तमाप्तस्य ।
पुरतो युगन्धरमुने-रात्तानशनाऽधुना साऽऽस्ते ॥ २०६ ॥
तत्र त्वं गत्वा स्वं, दर्शय तस्यास्ततोऽनुरक्तेयम् ।
भवति[1] मृता भवति तव, प्रिया गतिः स्याद् यदन्तमतिरूपा ॥२०७॥*
अथ ललिताङ्गेन तथा, रचिते सा तदनुरागिणी मृत्वा ।
तत्पत्नी पुनरेव, स्वयम्प्रभा पूर्ववज्जज्ञे ॥ २०८ ॥
दृष्टविनष्टार्थ इव, प्राप्तसुतोऽसुत इवार्थिवत् सार्थः ।
लब्धामृतो मृत इव, प्रीतः सोऽभूत् प्रियां प्राप्य ॥ २०९ ॥
अवगततत्त्वप्रेमा-तिशयसमुद्भ्रान्तशतगुणस्नेहा ।
ललिताङ्गस्य बभूव, स्वयम्प्रभा रतिकृते किमपि ॥ २१० ॥
रममाणः स तया सह, सहजस्नेहार्द्रया बहुस्नेहः ।
एकं लवमिव कालं, भूयांसं लङ्घयामास ॥ २११ ॥
अमृतकलितानि कलयन्, प्रेमकलानि ललितानि ललनायाः[2] ।
आलोकत[3] ललिताङ्गः, स्वर्गात् स्वच्यवनचिह्नानि ॥ २१२ ॥
प्रियया कृतविप्रिय इव, ह्रिया विमुक्तस्ततस्तदनुचर्या[4] ।
दूरीकृतः श्रियाऽसौ, व्यसने व्यसनान्तराणि स्युः ॥ २१३ ॥
तस्याभरणानि विभा-विभासुरत्वं विदूरयामासुः ।
किरणान्यपि किं तरणेः, सोष्णत्वं दधति दिवसान्ते ? ॥ २१४ ॥
तस्य कृतमौलिलीला-यितानि माल्यानि लेभिरे म्लानिम् ।
स्वामिव्यसनावसरे, नान्याऽऽस्ते सुमनसां वृत्तिः ॥ २१५ ॥
सहसा सह देहेन, व्यवहन्[5] वसनानि तस्य मलिनत्वम् ।
आजन्मावियुतानां, गुणिनां प्रणयोचितं तद्धि ॥ २१६ ॥
न त्वां विनाऽत्र मम रति-रिति मर्त्यभुवा ध्रुवं तमाह्वातुम् ।
प्रहिता हितात्मदूती, तं निद्रा सेवते स्म भृशम् ॥ २१७ ॥
तस्य स्फुटनजपीडा, सर्वाङ्गोपाङ्गसन्धिषु स्फुरिता ।
एष्यद्गर्भस्थितिसुख[6]-दुःखचमूसङ्गताऽग्रसेनेव ॥ २१८ ॥*

---

१ त्वयि । २ क-'ललितायाः' । ३ अपश्यत् । ४ तृतीयैकवचनम् । ५ क-'व्यवसन्' ।
६ क-'सुख' ।

आलोक्यस्यालोके, स्फुटमपटुस्तस्य दृष्टिरजनिष्ट ।
त्रिदिवप्रेमश्लथता–प्रथनाभ्यासे प्रवृत्तेव ॥ २१९ ॥
आत्मानमतिबलिष्ठे, ऋष्टुं चालयति कीलवत् काले ।
तस्य प्रकम्पतरला, सकलाऽपि तनुर्बभूव भूमिरिव ॥ २२० ॥*
तस्य चकम्पे हृदयं, प्रियाहृदः कल्पपादपाः सुहृदः ।
तद्दुःखादिव विगलित–कुसुमाश्रुकणाश्चकम्पिरे सुतराम् ॥ २२१ ॥*
क्रीडापर्वतवापी–सरिदुपवनदीर्घिकासु न रतिं सः ।
गतसर्वस्व इवापद्, दयितादुश्चरितततप्त इव ॥ २२२ ॥
विषयसुखे[1] व्यासक्तिं, व्यधादसौ धर्मबाधयाऽभ्यधिकम् ।
सममायात मयैवं, किल तेषामनुनयाकाङ्क्षी ॥ २२३ ॥
तस्याखिलः परिजनो, वचनेषु बभार शोकवैरस्यम्[2] ।
स्वस्वामिनस्तद[3]धिकं, ध्रुवं गृहीतुं विभज्येव ॥ २२४ ॥
वचने दृशोश्च दैन्यं, प्रतिपेदे प्रतिपदं पदं तस्य ।
हृदयप्रवेशहेतो–रिव विहितारम्भसंरम्भम् ॥ २२५ ॥
सभया स्वयम्प्रभाऽथ, प्रियमूचे प्राणनाथ! किमिदं त्वम् ।
मद्विरहाभावेऽपि हि, विमनस्कत्वं समुद्वहसि? ॥ २२६ ॥
मनसि विमृशामि बहुश–स्तावन्न मयाऽपराद्धमिह किमपि ।
विधुराऽहं हृदयाधिप!, कथय कुतो वैमनस्यमिदम् ॥ २२७ ॥
ललिताङ्गोऽजल्पदिदं, त्वया प्रिये! नापराद्धमणुमात्रम् ।
अपराद्धं तु मया प्राग्, येन कृतं न सुकृतं विततम् ॥ २२८ ॥
पूर्वभवेऽभूवमहं, विषयैकरसेन धर्मविमुखात्मा ।
विद्याधरधरणीन्दु–र्महाबलो नाम कामरसः ॥ २२९ ॥
जिनधर्मं[4] मन्त्री मां, बोधयति स्म स्वयं स्वयम्बुद्धः ।
आयुःशेषे तमहं, प्रतिपन्नः पालयामास ॥ २३० ॥
तद्धर्मवैभवेन, 'श्रीप्रभ'विभुता बभूव सुभ्रु! मम ।
अधुना च्यवनावसरः, समजनि विमनस्कता तेन ॥ २३१ ॥

---

१ विषयाणाम् । २ शोकविरसताम् । ३ स्थानम् । ४ जिनधर्मम् ।

एवं निवेदयति सति, तस्मिन्नेत्याभ्यधत्त दृढधर्मः ।
ऐशानकल्पपतिरिति, दिशति त्वां 'श्रीप्रभा'धिपते! ॥ २३२ ॥
'नन्दीश्वरा'दिषु मेहा–तीर्थेषु जिनेन्द्रशाश्वतप्रतिमाः ।
नन्तुं वयं प्रचलिता–स्त्वमपि त्वरया स्वयमुपैहि ॥ २३३ ॥
सुकृतपरिणामतो मे, समयोचितमेवं शासनं नेतुः ।
इति मुदितो ललिताङ्ग–श्चलति स स वल्लभासहितः ॥ २३४ ॥
'नन्दीश्वरे' स गत्वा, सेन्द्रः शाश्वतजिनेश्वरप्रतिमाः ।
आनर्च मुदा विस्मृत–ससीमभीमच्यवनदुःखः ॥ २३५ ॥
'नन्दीश्वर'तोऽन्येषु, व्रजन् स तीर्थेषु विशदवासनया ।
आयुःक्षयादभावं, दीप इव प्राप पवमानात् ॥ २३६ ॥
'जम्बूद्वीपे' पूर्ववि–देहे'ष्वपार्णवं महासरितः ।
'सीता'या उत्तरतो, जयतितरां 'पुष्कलावती'विजयः ॥ २३७ ॥*
इह 'लोहार्गल'नाम्ना, पुरमस्ति निरस्तनाकसाकल्यम् ।
यस्मिन् सुकृतसमुद्रे, चैत्यपताकास्तता वीच्यः ॥ २३८ ॥
तस्मिन् सुवर्णजङ्घ–स्त्रिभुवनजङ्घालसुकृतजालयशाः ।
समजनि जेगतीजानिः, प्रजा निजापत्यवत् पुष्यन् ॥ २३९ ॥
लक्ष्मीरमुष्य पत्नी, समजनि यन्नेत्रपद्मयुग्ममहो ।
सूर्यालोके विमुखं, प्रियाऽऽस्यविधुवीक्षणे स्मेरम् ॥ २४० ॥

ललिताङ्गजीवो विदेहे सुवर्णजङ्घपुत्रो वज्रजङ्घः

अनयोस्तनयो जज्ञे, ललिताङ्गः सुराग्रणीश्च्युतः स्वर्गात् ।
एतस्य नाम पितरौ, वितेनतुर्वज्रजङ्घ इति ॥ २४१ ॥
धात्रीपङ्क्त्या व्यक्तं, पयोविलासेन लाल्यमानोऽसौ ।
सोऽरण्येवाराम–द्रुम इव परमां दधौ वृद्धिम् ॥ २४२ ॥
सकलाभिरपि कलाभि–स्तल्लाभोत्कलिकोर्मिबहुलाभिः ।
अहमहमिकया रयतः, किल कलितोऽयं कुमारवरः ॥ २४३ ॥

---

१ क–'महत्तीर्थेषु' । २ ख–'मद्य' । ३ पृथ्वीपतिः । ४ असूर्यंपश्या राजदारा इति । ५ प्रणाल्या । ६ क–'तल्लाभायल्लकोर्मि' ।

यत् प्रान्तलीनमधुकर-केतकदलमञ्जुलानि नयनानि ।
युवतिजनानां जनयति, तद् यौवनमाप नृपतनुजः ॥ २४४ ॥

शश्वद्भुजिष्ययति विश्वततिप्रवीरान्
यस्तेन सोऽपि मदनस्तनु-विक्रमाभ्याम् ।
जित्वाऽऽत्मयौवनपरिष्करणे नियुक्तः
स[1] व्यक्तमस्तु जगति प्रतिवीरवीरः ॥ २४५ ॥[2]

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते पञ्चमललिताङ्ग-देवभवषष्ठभवश्रीवज्रजङ्घोत्पत्तिकीर्त्तनश्चतुर्थः सर्गः ॥ ४ ॥

यस्य स्वर्गिमृगीदृशां मधुकरस्निग्धा कटाक्षच्छटा
वक्त्रोद्भ्रान्तमरीचिवीचिभिरभिक्षिप्तेव पक्षद्वये ।
कर्णाभ्यर्णनिवेशिकेशकलिकाव्याजेन विभ्राजते
स श्रीमान् शिवतातिरस्तु भवतां श्रीनाभिभूपालभूः ॥ १ ॥

श्रीपद्म! प्रतिसद्म पद्मनिलया देवी न किं दीव्यति?
त्वां मुक्त्वा तु न कोऽपि रोपितपदो दातुं सुपात्राय ताम्[3] ।
केऽपि क्षोणितले क्षिपन्ति कतिचित् कुर्वन्ति पण्याङ्गना-
गेहे कर्मकरीं सृजन्ति कुनृपस्तेनाग्निभोग्यां[4] परे ॥ २ ॥[5]

ग्रन्थाऽग्रं श्लोक ॥ ३०० ॥[6]



१ वज्रजङ्घः । २ वसन्ततिलका । ३ लक्ष्मीम् । ४ कुनृपचोरवह्निभोग्यां कुर्वन्ति । ५ शार्दूलविक्रीडितम् । ६ 'आदितोऽग्रं० १२६७' इत्यधिकः क-पाठः ।

# पञ्चमः सर्गः ५

यस्यांह्रिवारिरुहसेवया रया–लक्ष्मीरुपैति विरहासहा स्वयम् ।
स-र्भू-र्भुवस्त्रयनिषेवितक्रमः, स श्रीयुगादिमजिनो [1]धिनोतु वः ॥१॥[2]

[3]श्रीपुष्कलत्वपुषि 'पुष्कलावती'–त्याख्याजुषीह विजये द्युजित्वरे ।
पूः पौरगौरमतिपुण्डरीकिणी–पूँषद्युतिर्[4]जयति 'पुण्डरीकिणी' ॥ २ ॥

चैत्येषु यत्र वृषखेलनाद्रिषु, स्फूर्जद्ध्वजावलिबलाकिकाः सदा ।
नानामणिद्युतिकृतेन्द्रकार्मुकाः, स्युर्धूपधूमचयधूँम[5]योनयः ॥ ३ ॥

यन्मन्दिरेषु वलभीपरम्परा–विन्यस्तरत्नततिभिः प्रतिक्षँपम्[6] ।
दीपोत्सवो भवति भूषणाञ्चिते, लोकेऽखिलेऽपि न पुनर्दुरोदँरम्[7] ॥ ४ ॥

श्रीवज्रसेन इति तत्र वँज्रभृद्[8], भूचक्रवृत्तिरिव चक्रवर्त्यभूत् ।
यस्य प्रतापपरितापितो रिपु–मौलिं यदंह्रिनँलिनालयं[9] व्यधात् ॥ ५ ॥

य[10]त्तेजसाऽम्बुरुहबान्धवो जित–श्चक्रच्छलादनुदिनं पुरः स्फुरन् ।
कीर्णः करैररसहस्रमूर्त्तिभि–र्दुःखात् कृशैरिव निषेवते स यँम्[11] ॥ ६ ॥

तस्य प्रशस्यचरितादृभुताऽभवत्, पूर्णा गुणैर्गुणवतीति वल्लभा ।
दे[12]व्यस्तँदङ्गरुचिरत्ववञ्चिता, देवास्तदाप्तिरहिता न शेरते ॥ ७ ॥

पुण्यैर्जनस्य न रविं नृपाङ्गनाः, पश्यन्ति तँद्वदनदर्शने[13]ऽन्यथा ।
[14]तँत्र स्थिरे [15]तँदुरुतापविह्वलः, [16]क्वँायं श्रयेद् विधुसुधांशुसेचनम् ॥ ८ ॥

कालादितश्च ललिताङ्गवल्लभा, तद्विप्रलम्भविधुरा स्वयम्प्रभा ।
धर्माच्युता दयितवच्युता दिवो–ऽभून्नन्दिनी नयननन्दिनी तयोः ॥ ९ ॥

स्वयम्प्रभायाः पुष्कलावतीविजये जन्म

अस्या भृशं तनुभवा विभासते, श्रीर्विश्वविश्वजनताऽतिशायिनी ।
इत्यभ्यधायि जनकेन साऽर्थया, सा श्रीमतीत्यभिधँया[17] शुभेऽहनि ॥१०॥

---

१ प्रीणयतु । २ ललिताच्छन्दः 'धीरैरभाणि ललिता तभौ जरौ' इति लक्षणात्मकम् ।
३ लक्ष्मीबहुलतापोषके । ४ सूर्यकान्तिः । ५ अग्नयः । ६ क–'क्षिपम्' । ७ द्यूतम् ।
८ इन्द्र इव पृथ्वीचारी । ९ कमल० । १० सूर्यः । ११ वज्रसेनम् । १२ गुणवती० ।
१३ नृपाङ्गनामुखविलोकने । १४ सूर्ये । १५ सूर्यविपुलताप० । १६ जनः । १७ क–'हिता' ।

सद्भावनाभिरिव धर्मवासना, सद्वासनाभिरिव पुण्यसन्ततिः ।
पुण्यावलीभिरिव शर्मपद्धतिः, सा धात्रिकाभिरभिवर्धिता क्रमात् ॥ ११ ॥
विद्यामिव प्रमतिशिष्यपाठनं, लक्ष्मीमिव प्रशमपात्रपूजनम् ।
भूपालतामिव सुनीतिपालनं, तां शोभयाऽद्भुतयति स यौवनम् ॥ १२ ॥
सा जन्मतः स्वजनजीवजीवितं, जज्ञे स्वभावसुभगत्वशोभया ।
तारुण्यतस्तु रतिजीवितप्रभो-र्जीवस्य जीवितमभूत् कुमारिका ॥ १३ ॥
साऽपत्यवत्सलतया वपुःश्रिया, [1]धीमत्तया मधुरवाक्यलीलया ।
कैः कैर्गुणैः पितुरभून्न तुष्टये?, दुःखप्रदाऽपि तु सदृग्वरेशया ॥ १४ ॥
प्रासादमिन्दुकलिकेव 'सर्वतो-भद्रा'भिधं गिरिमिवाऽपरेद्यवि ।
ताराकुलैरिव वृतालिमण्डलैः, क्रीडाविलासरसिकाऽऽरुरोह सा ॥ १५ ॥
सा सुस्थितस्य सुमुनेर्मनोरमो-द्याने स्थितस्य समुपेयुषः सुरान् ।
तत्राभितो दिवि ददर्श केवल-ज्ञानोद्भवस्य महिमां चिकीर्षतः ॥ १६ ॥

श्रीमत्या जातिस्मृतिः

काप्येतदीक्षितमिति प्रतर्कतो, जातिस्मृतिः समजनिष्ट तत्क्षणम् ।
त[2]स्यास्ततः स्मृतवती भृशं निशा-स्वप्नोपमानि जननान्तराणि सा ॥१७॥
प्राग्जन्मलब्धललिताङ्गवल्लभ-प्रेमाध्वनि प्रसृमरा रयाधिकम् ।
तद्विच्युतिस्खलनतोऽतिविह्वला, सा मूर्च्छिता क्षितितलेऽपतत् क्षणात्१८
सा व्याकुलाऽऽलिकुलकल्पितैरलं, द्राक् चन्दनद्रवनिषेचनादिभिः ।
मूर्च्छां मुमोच चिरलब्धवल्लभ-स्मृत्यन्तरायकृतविप्रियामिव ॥ १९ ॥
सञ्ज्ञामवाप्य हृदि सेत्यचिन्तय-न्मत्पूर्वजन्मपतिरस्ति कुत्र सः?।
एतन्न वेद्मि न तु तं विना परः, स्यान्मे वरः श्रयति कः खरं गजात् ? ॥२०॥
प्राणेश्वरः स यदि मे न गोचर-स्त[3]द् व्याहरे सह परेण नेति सा।
निश्चित्य चेतसि समाददे तदा, द्राङ् मौनमेव नरदेवनन्दिनी ॥ २१ ॥
[4]क्षेत्रप्रभुप्रभृतिदोषशङ्कया, या तत्सखीभिरुचिता प्रतिक्रिया ।
चक्रे मुधा खलु बभूव साऽखिला, मैत्री कृतघ्नपुरुषे कृता यथा ॥ २२ ॥

---

१ क-'श्री०' । २ जातिस्मृतेः । ३ अहं ब्रवीमि । ४ क्षेत्रपाल० ।

नैवोपचारशततोऽपि साऽमुच–न्मूकस्थितिं दयितदर्शनावधिम् ।
वैद्यक्रियाभिरनिदानवेदिनां, व्याधिर्दधाति न कदाचन क्षयम् ॥ २३ ॥

भ्रूहस्तमस्तकमुखाग्रसञ्ज्ञया, सा यत्र तत्र लिखितैरथाक्षरैः ।
प्रावर्तयत् परिजनं प्रयोजने, प्राग्भर्तृदत्तनिजजल्पकल्पना ॥ २४ ॥

तत्तादृशप्रियतमस्य तादृश–प्रेमस्मृते रतिमनाश्रिता क्वचित् ।
सा केलिकाननमवापदन्यदा, तद्[1] वन्यदाव इव दाहदाय्यभूत् ॥ २५ ॥

संस्मृत्य नन्दनविलासकौतुकं, प्रेमालसेन सह वल्लभेन तत् ।
औयल्लुकातिशयलोडिताशया, तत्रापि सा[2]पदिव तापमाप सा ॥ २६ ॥

सा क्वापि चित्तरतिरुल्लसेदिति, प्रत्यङ्घ्रिपं प्रति निकुञ्जमव्रजत् ।
वाणिज्यकृद् द्रविणलाभलोभतः, प्रत्याश्रयं प्रतिपुरं यथाऽभितः ॥२७॥

तस्यामशोकतरुपल्लवैर्नवै–रेतत्करक्रमसुहृत्कृतैरपि ।
भेजे विभिन्नजनहृद्व्रजाऽ[4]सृजा, शोणस्मरप्रदरभल्लिभीष्मता ॥ २८ ॥

सा चम्पकद्रुकलिकासमुच्चयान्, सौरभ्यलुभ्यदलिचुम्बिताननान् ।
पुष्पेषुणा विरहिणां वधेऽन्वितान्, कौ[5]लेयलेशकलितान् किलैक्षत ॥२९॥

सा कु[6]ड्मलालिलुलिताऽलिमालिनं, बाला व्यलोकत र[7]सालशाखिनम् ।
शश्वद्वियुक्तजनहिंसनक्रिया–सञ्जातपातकसमाकुलं किल ॥ ३० ॥

यावन्मुधाकृतसुधामदोच्चयं, नो चक्रवर्तितनया श्रयेद् वचः ।
तावद् गिरो मम सगौरवा रवा–नित्याऽऽतनोत् परभृतां त[8]दर्त्तिदान् ३१

एणेक्षणाक्षणकटाक्षधोरणी–व्यालोकनेन तिलकं विकस्वरम् ।
तारुण्यपुण्यतरुणीसनूपुर–क्वाणांह्रिणा हतमशोकमुन्मदम् ॥ ३२ ॥

मत्ताङ्गनावदनचारुवारुणी–विश्राणनेन बकुलं मदाकुलम् ।
पीनोन्नतस्तननितम्बिनीघन–प्रश्लेषणे कुरुबकं प्रहर्षिणम् ॥ ३३ ॥

त[9]त्रापि वीक्ष्य मम जीविताधिपोऽप्येवंविधैर्विलसितैर्मदुद्भवैः ।
ईदृग्विधा बत विधास्यते कदा, चेष्टा हृदैवमुदकण्ठतैव सा ॥ ३४ ॥

विशेषकम्

१ केलिकाननम् । २ उत्कण्ठा । ३ आपत्सहिता इव । ४ रुधिरेण । ५ लोह-फलक(?)युक्तान् । ६ मञ्जरीपङ्क्ति० । ७ आम्रवृक्षम् । ८ गुणवत्याः पीडाकरान् । ९ काननेऽपि ।

वल्लीनिकुञ्जपटलीर्विलोकितुं, बाला स्वचित्तरतये चचार या ।
सा तासु हन्त मरुदाहृतैर्दुता[1], पुष्पोत्करै रतिपतेः शरैरिव ॥ ३५ ॥
तत्केशपाशपटलं कलापिन–स्तद्विभ्रमक्रमगतिं [3]सितच्छदाः ।
सञ्चिन्त्य चेतसि धृतत्रपा द्रुतं, जग्मुर्लतागहनगर्भगह्वरे ॥ ३६ ॥
व्यालोकनात् किल तदंघ्रिपद्मयोः, पद्मानि नूपुर-किरीटकत्रयोः ।
जातानि तद्रणितगर्जितर्जिनोः, श्यामाननान्यलिकुलैः स्वजैत्रयोः ॥ ३७ ॥
तस्याः कराधरमवेक्ष्य कोमले–ष्वात्मोर्ध्वरेखमखिलेषु भूतले ।
तत्केलिकाननलताद्रुपल्लवा, भीत्येव वायुलुलिताश्चकम्पिरे ॥ ३८ ॥
रेजे स्तनस्तबकशस्तवैभवा, हस्ताधरक्रमविलासिपल्लवा ।
रङ्गत्कुरङ्गशिशुलोललोचना, लीलावनेऽत्र वनदेवतेव सा ॥ ३९ ॥
तस्या विलासवनिकाविलासतः, स्वान्तं न निर्वृतिमुपाययौ ततः ।
खेदापनोदमपदिश्य सा सखी–रुपाविशत् स्वयमशोककानने ॥ ४० ॥
सख्योऽवचित्य कुसुमानि मण्डनं, नानाविधं रचयताद्य गच्छत ।
तेन स्वयं कुसुमकार्मुकप्रभुं, भूपाङ्गजा यदियमर्चयिष्यति ॥ ४१ ॥
एका स्थिताऽस्मि निजपुत्रिकाऽन्तिके, त्वेवं विसृज्य चतुरोपचारिकाः ।
विज्ञाय तद्धृदयभावमिङ्गितै–स्तां धात्रिकाऽभ्यधित पण्डिताऽभिधा ४२

—युग्मम्

प्राणा मम त्वमसि येन जन्मतो, मातेव चास्मि तनये ! तवाप्यहम् ।
भेदो मिथोऽस्त्यपि न तावदावयो–र्मुग्धे! न विश्वसिषि किं तु मय्यपि ? ४३
मौनं समाश्रयसि येन हेतुना, तच्छंस[5] मां जनय दुःखभागिनीम् ।
दुःखक्षयं विरचयामि तद्धिया, बुद्ध्याऽधिकेति विदिताऽस्मि पण्डिता ४४
श्रीमत्यथाभ्यधित पण्डितेरिता, प्राग्जन्मजं चरितमात्मनोऽखिलम् ।
शीतांशुकान्तपटलीस्थली कथं, ज्योत्स्नाऽञ्चिता स्रवति नामृतं द्रुतम् ? ४५
स्वं सार्वभौमसुतया निवेदितं, प्राग्जन्मवृत्तमवगत्य पण्डिता ।
तां दुःखिताऽऽह गुरु साहसं कृतं, मुग्धे ! त्वयाऽहमपि मन्त्रिता न किम्[6] ४६

---

१ पटलीषु । २ पीडिता । ३ हंसाः । ४ क–'त्रपाद्भुतं' । ५ कथय ।
६ क–'कथम्' ।

प्राणी स्वकर्मपरिणामतः सुते !, कुत्रापि कामपि समाश्रयेद् गतिम् ।
द्वीपान्तरेऽथ मलिनासु जातिषू-त्पन्नो भवेद् यदि तदाऽस्तु का गतिः? ४७
मूका-ऽन्ध-पङ्गु-बधिरा-ऽज्ञ-रोगिणो, मर्त्त्या भवन्ति यदि तेषु कोऽपि सः ।
रूपात् तृणीकृतसुराङ्गनागणे !, कल्याणि ! का तव ततो विडम्बना ? ४८
मूर्खो बुधो बुधवरश्च मूर्खराड्, दुःस्थो धनी धनपतिस्तु दुःस्थितः ।
दुःखी सुखी सुखयुतोऽपि दुःखितो, नारी नरो बत नरोऽपि नायिका ४९
भूपोऽत्र यः स हि परत्र किङ्करो, यः किङ्करो भवति भूपतिस्तु सः ।
जीवोऽत्र पुत्रि ! भवनाटके नटो, रूपान्तरैः प्रसरति स्वकर्मणा ॥ ५० ॥

—युग्मम्

काम्याऽतिरम्यतनुशर्मसम्भवाद्, देवीभवात् त्वमपि नाभवः कथम् ? ।
बीभत्सदुर्भगकुरूपदुःखिनी, निर्नामिका गुरुदरिद्रदुष्कुले ॥ ५१ ॥
अस्मिन् भवे ध्रुवमनादिकालतो-ऽनन्तान् भवान् प्रभवतः किलात्मनः ।
के के न मातृ-पितृ-भर्तृतां गता, जीवास्ततः क इव तेष्वभिग्रहः ॥ ५२ ॥
ये भर्तृ-मातृ-पितृ-सोदरा-ऽङ्गजाः, स्त्री तत्र जन्मनि चरेत् तदाज्ञया ।
जन्मान्तरे क्वचन ते पृथग् गता, ज्ञाताश्च नो किमु तदर्थमाग्रहः ? ॥५३॥
श्रीवज्रसेन इति पुत्रि ! ते पिता, माता पुनर्गुणवती भवेऽत्र यत् ।
त्वं बाल्यतोऽपि हि मयैव पालिता, तद्दुःखदाऽसि किममीष्वभिग्रहात्? ५४
विद्याधरैरपि धराधरैरपि, त्वं प्रार्थ्यसे प्रतिदिनं कृतादरैः ।
स त्वत्पिता त्वदनुरूपमेव तु, प्राप्तुं वरं वरतनो ! विलम्बते ॥ ५५ ॥
'लोहार्गला'ह्वनगरेशितुः सुतः, श्रीस्वर्णजङ्घनृपतेर्निशम्यते ।
श्रीवज्रजङ्घ इति सर्वभूमिभृत्-पुत्रेषु पौरुषमुखैर्गुणैर्गुरुः ॥ ५६ ॥
तादृग्विधेन धरणीशसूनुना, त्वं चक्रिपुत्रि ! परिणेष्यसे यदा ।
माता पिताऽहमपि ते तदा शुभे, लप्स्यामहे हृदि महेऽत्र निर्वृतिम् ॥५७॥
रूपं तवावयवनिर्जितोपमं, विश्वोत्तरा चतुरता नवं वयः ।
सर्वं कृतार्थयतमां ममार्थनै-र्मुक्त्वा भवान्तरवरस्पृहाग्रहम् ॥ ५८ ॥

---

१ ललिताङ्गः । २ ख-'वरस्तु' । ३ ख-'भ्रातृतां' । ४ क-'वरेत्' । ५ क-'रता' । ६ क-'तत्र' । ७ सुशरीरे ! ।

आकर्ण्य तद्गिरमथोर्वरापतेः, पुत्री विचित्रमिदमाददे वचः ।
मातर्ममेति दिशती ममत्वत–स्त्वं पण्डिता किमु भवस्यपण्डिता ? ।।५९।।
जानासि किं न जिनराजसेविनां, तिर्यग्गतौ च नरके च नो गतिः ।
तेषां दिवश्च्युतवतां भवेद् ध्रुवं, सद्धर्मभोगनृपवंशसम्भवः ।। ६० ।।
धर्मो मया जिनपतेः पुरा न यत्, प्राप्तस्ततोऽहमभवं कुवंशजा ।
निर्नामिका पुनरवाप्य तत्र तं, जाता दिवि क्षितिपतेः सुताऽधुना ।।६१।।
जीवा मिथः प्रथितसौहृदाशयाः, प्रायः श्रयन्ति जनुरेकवर्षजम् ।
जातोऽस्ति सोऽपि 'विजये'ऽत्र तत् क्वचित्, मद्वद् ध्रुवं शुभमये नृपान्वये ६२
स्वर्गादहं च्युतवती ततः क्षणा–न्मद्विप्रयोगविधुरो बभूव सः ।
निर्नामिकां कुतनुदुर्भगात्मिकां, मां वीक्ष्य नाजनि मनाग् विरागवान् ६३
प्राप्तां पुनस्त्रिदशजन्म मां न स, स्निग्धेक्षणः क्षणमसङ्गिनीं व्यधात् ।
तत् तादृशः प्रियतमो ममाशया–न्मातर्न निःसरति सागरैरपि ।। ६४ ।।
'नन्दीश्वर'प्रभृतितीर्थयात्रया, स्वं पावयन् जननि ! स च्युतस्तथा ।
निन्द्यं न जन्म लभते तमप्यहं, प्राप्नोमि तन्मयमतिश्च्युताऽस्मि यत् ।।६५।।
अत्राप्यते स यदि नाप्यतेऽथ मे, तद्ध्यानलीनमनसः कृतार्थता ।
एनं विना तु वितनोमि नात्मनो, मातः ! परेण वचनाद् विडम्बनाम् ६६

ललिताङ्गयुक्तस्वयम्प्रभायाः चित्रपटकरणम्

तन्निश्चयाधिगमतस्तया तत–स्तत्प्राग्भवानुभवभावसम्भृतम् ।
वृत्तं पटे निखिलमप्यलीलिखत्, सा पण्डिता स्वयमुपायपण्डिता ।।६७।।
श्रीचक्रिणः समजनिष्ट वत्सर–ग्रन्थिस्तदा त्विह महे महीभृतः ।
प्रस्तावतः स्वयमुपागताश्चतु–र्दिग्भ्यः शमे गुणगणा इवाङ्गिनः ।। ६८ ।।
तं पण्डिता विमलमत्यखण्डिता, विस्तार्य चित्रपटमुत्कटाकृतिः ।
तत्पुण्यवत् पृथुतरं मनोहरं, तस्थौ नृपाध्वनि नृपाङ्गजाऽर्चितः ।।६९।।
एतं च चित्रपटमीक्षितुं जनाः, कृत्स्नासु दिक्षु परिवव्रुरादृताः ।
राजेनपर्वदिनसङ्गसङ्गता, दानप्रधानमिव मानवं द्विजाः ।। ७० ।।

१ ख–'मथो धरापतेः' । २ फलदभूमिपतेः । ३ एकक्षेत्रजम् । ४ असङ्ख्यातकालविशेषैः । ५ क–'गात्मकां' । ६ ललिताङ्गमयमतिः । ७ ख–'ततः, प्राग्भवा' । ८ श्रीवज्रसेनस्य । ९ सार्वभौमवत्सरग्रन्थिपर्वदिवसे, पक्षे सूर्यचन्द्रग्रहणदिवसे ।

'नन्दीश्वर'द्युसदनादिचित्रगं, केऽप्यागमानुगमवेक्ष्य तुष्टुवुः ।
केऽप्यर्हतां प्रणतकन्धरा नरा, बिम्बानि नेमुरुरुरोमकण्टकाः ॥ ७१ ॥
केचिद् विकूणितनिरीक्षणाः क्षणाद्, रेखाविशुद्धिमसमाममानयन् ।
केचित् प्रकम्प्रशिरसः सितारुण–श्यामादिवर्णकगणानवर्णयन् ॥ ७२ ॥
दुर्दर्शनावनिपतेः सुतस्तदा, दुर्दान्त इत्युपगतः पटं च तम् ।
प्रेक्ष्य क्षणं परिपपात मूर्च्छया, पृथ्वीतटे कपटतो व्यलीकया ॥ ७३ ॥
सद्यः परिच्छदकृतोपचारतः, सञ्ज्ञां किलाप्य सहसा समुत्थितः ।
मूर्च्छानिमित्तमथ तत्र पार्थिवैः, पृष्टः स धृष्टतरमित्यभाषत ॥ ७४ ॥
प्राग्जन्मजं बत चरित्रमत्र मे, कश्चित् पटे निखिलमप्यलीलिखत् ।
तद्दर्शनात् समुदपद्यताशु मे, जातिस्मृतिः कृतभवान्तरस्मृतिः ॥ ७५ ॥
देवोऽहमेष ललिताङ्ग इत्यसौ, देवी मदीयदयिता स्वयम्प्रभा ।
इत्यादि पूर्वभवसम्भवं ममा–शेषं चरित्रमिह संवदत्यदः ॥ ७६ ॥
तं पण्डिता सुमतिमण्डिता जगौ, भद्रेति चेद् वद ततोऽत्र चित्रितः ।
कः सन्निवेश इति सोऽवदद् गिरि–र्मेरुः पुरीयमिति 'पुण्डरीकिणी' ७७
पप्रच्छ तं पुनरपीति पण्डिता, कोऽयं यतिर्जयति का तपस्विनी ? ।
को भूपतिः सचिवपङ्क्तिभिर्वृतः, सोऽप्याह नामनिवहं न वेद्म्यहम् ॥७८॥
तं मायया ऽन्वितमवेत्य पण्डिता, प्राहोपहासपरिचुम्बितं वचः ।
प्राग्जन्म संवदति पुत्र! ते ध्रुवं, ग्रामे प्रियाऽस्ति तव 'नन्दि'नामनि ॥
स्वर्गाच्च्युतात्मकृतकर्मदोषतः, पङ्गुत्वमाप ललिताङ्ग! तेऽङ्गना ।
जातिस्मृतेर्निजमलीलिखत् पटे, प्राग्जन्मवृत्तमिदमर्पितं च मे ॥ ८० ॥
द्वीपं पुरा यदहमाप 'धातकी'–खण्डं ततस्तदनुकम्पया महीम् ।
सङ्गृह्य चित्रपटमेनमभ्रमं, तद्भाग्यतोऽद्य मिलितोऽसि पुत्रक! ॥ ८१ ॥
तत् त्वां नयामि लघु तत्र 'धातकी,'–खण्डे तदन्तिकमुपैहि साऽस्ति यत् ।
त्वद्विप्रयोगविधुरा वराकिका, स्वीकृत्य तामनुगृहाण वल्लभाम् ॥ ८२ ॥
वोढा भवेद् यदि दरिद्रताऽन्वित–स्तत् तां स मूर्द्धनि निधाय चालयेत् ।
तत् ते भयं न हि सुतोऽसि भूपते–स्तत् तां सुखासनगतां प्रचारयेः ८३

१ पतिः ।

एवं निवेद्य विरराम पण्डिता, खैः सोपहासमथ मित्रमण्डलैः ।
सोऽजल्प्यतेति सुकलत्रलाभतो, भाग्योदयस्तव वयस्य! कोऽप्यसौ ॥८४॥
पङ्गुमिमां परिणय द्रुतं व्रज, प्राग्जन्मवल्लभतमा क्व लभ्यते? ।
त्वं मङ्गलानि परिवर्त्तयेरिमां, स्कन्धेऽधिरोप्य करपीडनोत्सवे ॥ ८५ ॥
तस्यावलोकमिलितप्रजाकृते, सांराविणे लसति तत्र सत्रपः ।
वैलक्ष्यलक्ष्यवदनः स दीनदृग्, दुर्दर्शनक्षितिपनन्दनोऽत्रसत् ॥ ८६ ॥

चित्रपटदर्शनाद् वज्रजङ्घस्य जातिस्मृतिज्ञानम्

'लोहार्गला'ह्वयपुरादिह क्षणे, श्रीस्वर्णजङ्घजगतीपतेः सुतः ।
श्रीवज्रजङ्घ इति तत्र वज्रभृद्-वर्यक्रमः समयति स्म कौतुकात् ॥८७॥
तस्मिन् पटे स लिखितं गवेषयन्, प्राग्जन्मनश्चरितमात्मनः क्षणात् ।
मूर्च्छामवाप शिशिरोपचारतः, सञ्ज्ञां पुनः प्रकृतिवज्जनः श्रितः ॥८८॥
जातिस्मृतिं समधिगम्य सोऽस्मरत्, प्राग्जन्म सद्य इव निर्गतो दिवः ।
सा पण्डिता च तमुवाच मूर्च्छित-स्त्वं किं कुमार! चरितावधारणात्? ८९
पृष्टस्तयेति स जगाद सादरं, श्रीस्वर्णजङ्घजगतीशनन्दनः ।
भद्रे पटेऽत्र दयिताऽन्वितस्य मे, प्राग्जन्मवृत्तमिति मूर्च्छितोऽस्म्यहम् ९०
'ऐशान'कल्पमुकुटोपमामिदं, श्री'श्रीप्रभं' ननु विमानमाश्रितम् ।
देवोऽहमेष ललिताङ्गसञ्ज्ञया, सेयं मम प्रियतमा स्वयम्प्रभा ॥९१॥
ग्रामोऽत्र 'नन्दि'रयमस्ति 'धातकी'-खण्डस्य मण्डनमिहैव देव्यसौ ।
च्युत्वा प्रिया मम दरिद्रनन्दिनी, निर्नामिका समजनिष्ट कष्टिनी ९२
शैलोऽयमम्बरविशेषको यतिः, सोऽयं युगन्धर इतीह केवली ।
निर्नामिकाऽस्य पुरतोऽस्त्यसौ पुन-र्वैराग्यतोऽनशनकर्मकर्मठा ॥ ९३ ॥
अस्याः स्वदर्शनकृतेऽहमागतो-ऽत्रासि स्वयं मयि ततोऽनुरागिणी ।
एषा मृता समजनि स्वयम्प्रभा, देवी पुनर्मम मनःसुधाधुनी ॥ ९४ ॥
'नन्दीश्वरे'ऽत्र जिनबिम्बपूजन-व्यग्रोऽस्म्यतोऽप्यपरतीर्थपङ्क्तिषु ।
गच्छन् पथि च्यवनमाप्तवानिह, न्यस्तोऽहमेष पटचित्रकर्मणि ॥ ९५ ॥

---

१ सप्तम्यन्तं पदमिदम् । २ कोलाहले । ३ आयाति स्म । ४ क-'समयते' । ५ अजहल्लिङ्गम् । ६ नन्दिग्रामे । ७ अम्बरतिलकः ।

एकाकिनी पुनरियं स्वयम्प्रभा, दीनानना मम वियोगजन्मना ।
दुःखेन दावदहनेन विच्युता, प्राणेश्वरी मदन[1]पुत्रिकेव सा ॥ ९६ ॥
जाताऽस्ति सेह मम जीवितेश्वरी, जातिस्मृतेश्चरितमाद्यजन्मनः ।
जाने पटेऽत्र लिलिखे तयाऽखिलं, नान्यानुभूतमपरस्य गोचरे ॥ ९७ ॥
सत्यं कुमारवर! सर्वमप्यदः, स्था[2]ने चिनोति वचनं न चक्रिजा ।
तं पण्डितेति मुदिताऽऽह सोऽभवद्, रोमाञ्चितो निचितपुष्पनी[3]पवत् ॥९८

वज्रजङ्घस्य श्रीमत्या संयोगः

सम्प्राप्तपूर्वपतिवार्त्तया तया-ऽ[4]यस्कान्तरत्नकलिकासमानया ।
तां श्रीमतीं द्रुतमुपेत्य पण्डिता, तच्छोकशल्यमपकर्षति स्म सा ॥९९॥
प्राग्जन्मवल्लभतमाप्तिवार्त्तया, सा श्रीमती पुलकिताऽभवत् क्षणात् ।
ग्रीष्मान्तसम्भृतनवाऽभ्रमालया, विश्वम्भरेव कुशसूचिसञ्चिता ॥ १०० ॥
वृत्तान्तमेतमवग[5]म्य चक्र्यपि, प्रीताशयः सुकृतिनीं स्वनन्दिनीम् ।
श्रीस्वर्णजङ्घनरनाथसूनुना, त[6]त्प्राग्भवप्रियतमां व्यवाहयत् ॥ १०१ ॥
विद्या यथा विनयसम्प्रयोगिणी, लक्ष्मीर्यथा वितरणप्रचारिणी ।
नीतिर्यथा परमविक्रमाश्रिता, सा श्रीमती विरुरुचे तदाश्रिता ॥१०२॥
तौ सर्वदाऽप्यवियुतौ विकासवत्-पद्मौ दिनेश्वर-दिनश्रियाविव ।
श्रीवज्रसेननृपतेरनुज्ञया, 'लोहार्गला'य नगराय जग्मतुः ॥ १०३ ॥
श्रीस्वर्णजङ्घजगतीश्वरः पुरं, तौ दम्पती सितदुकूलवाससौ ।
प्रावेशयत् कृतजनोत्सवं वियत्, प[7]र्वप्रदोष इव कौ[8]मुदी-विधू ॥ १०४ ॥
श्रीस्वर्णजङ्घनृपतिर्निजे पदे, श्रीवज्रजङ्घनृपतिं न्यवीविशत् ।
संसारसागरविकारपारदां, दीक्षां पुनः स्वयमुपाददे कृती ॥ १०५ ॥
श्रीवज्रसेननरपोऽपि पुं[9]ष्कलात्, पालाङ्गजस्य निजराज्यमार्पयत् ।
जज्ञे स्वयं यतिवरः क्रमादसौ, तीर्थङ्करोऽजनि जगत्रयार्चितः ॥ १०६ ॥
श्रीवज्रजङ्घनरनायकोऽपि सः, श्रीश्रीमतीविलसिताऽमृतोक्षणैः ।
विश्वम्भरावलयभारधारणाद्, भूरिक्लमोत्थदवथुं न लब्धवान् ॥ १०७ ॥

---

१ 'मीण' इति भाषायाम् । २ योग्यम् । ३ कदम्बवृक्षवत् । ४ चमकपाषाणखण्ड-समानया । ५ क-'गत्य' । ६ वज्रजङ्घ० । ७ पूर्णिमासन्ध्याकाले । ८ क-'कौतु-कीविधू' । ९ पुष्कलपाल इत्यर्थः ।

शश्वद्वियोगमनवाप्तयोस्तयोः, श्रेयःश्रियोरिव चिदात्मनोरिव ।
विश्वोत्तरां विषयसौख्यसम्पदं, भुञ्जानयोः समभवत् तनूद्भवः ॥ १०८ ॥
तत्रोन्नते चिरगतेऽथ चक्रिणि, श्रीपुष्कलस्य विपुला विलासिनः ।
तल्लस्य[1] तीरमृदिवाब्दमण्डले(लैः?), सीमालभूपपटली(लैः?) व्यभिद्यत[2] १०९
श्रीवज्रजङ्घनृपतिस्ततोऽचलत्, श्रीमत्यपि प्रचलिता तदन्विता ।
शक्तिः पृथग् भवति नो परात्मन-श्छाया न कायमपि दूरतस्त्यजेत् ११०
तेषामथ क्षितिभृतां मिथः सप-क्षाणां क्षणात् क्षयकृते स पुष्कलः ।
आकारयत् परबलप्रहारिणं, श्रीवज्रजङ्घनरवज्रधारिणम् ॥ १११ ॥
मार्गे स्फुरद्गुरुमहामहत्तरं, प्रापत् पुरः 'शरवणं' नराग्रणीः ।
उत्फुल्लफुल्लततिसञ्चितं शरज्-ज्योत्स्नावितानमिव काननश्रिया ॥११२॥
अत्रास्ति[3] दृग्विषफणीति सोऽध्वगै-र्विज्ञप्त इत्यपरमार्गमाश्रितः ।
तत्याज काननमिदं विदूरतो, दक्षो मुमुक्षुरिव नास्तिकं जनम् ॥ ११३ ॥
तं पुण्डरीकमिव 'पुण्डरीकिणीं', सम्प्राप्तमात्रमवगत्य तेऽत्यजन् ।
सर्वेऽपि पुष्कलकपुष्करद्विषः[4], क्षोणीभृतो मदमनेकपक्रमाः[5] ॥ ११४ ॥
श्रीवज्रजङ्घजगतीपुरन्दरः, श्री'पुष्कल'क्षितिपतेर्वशेऽकरोत् ।
सामन्तमण्डलमखण्डचण्डिमा, बोधो यथेन्द्रियकदम्बमात्मनः ॥ ११५ ॥
श्रीवज्रजङ्घमनघार्घ्यविक्रमं, श्रीश्रीमतीमपि निजां सहोदरीम् ।
श्री'पुष्कल'क्षितिधवोऽतिपुष्कलैः, पूजापदैः[6] ससदमानयन्मुदा ॥ ११६ ॥
आपृच्छ्य 'पुष्कल'नृपं तदाश्रयात्, श्रीवज्रजङ्घनृपतिः प्रियाऽन्वितः ।
'लोहार्गलं' प्रति चचाल वारिधे-र्विद्युद्वृतः प्रतिवियद् यथाऽम्बुदः ॥
क्षोणीश्वरः 'शरवणा'न्तिकागत-स्तद्वेदिभिः स जगदेऽध्वगैरिदम् ।
याताऽधुनाऽस्य विपिनस्य मध्यतो, यद्दृग्विषः समजनिष्ट निर्विषः ११८
राज्ञाऽभवत् कथमितीरिते जगु-स्तेऽन्तःस्थसेनमुनिसागरौ[7] मुनी ।
ज्ञानं ह्यवापतुरिहैव केवलं, जज्ञे ततः सुरसमागमोत्सवः ॥ ११९ ॥

---

१ तटाकस्य (?) । २ स्वयमेव व्यभिद्यत इति कर्मकर्तरिप्रयोगः । ३ ख-'तत्रा०' । ४ व्याघ्रम् । ५ हस्तिपङ्क्तयः । ६ क-'फलैः संसद'० । ७ मुनिसेन-सागरसेनौ ।

क्षीणं क्षणेन नरदेवदेवतो-द्द्योतेन तस्य भुजगस्य दृग्विषम् ।
बोधेन मोहपरिरोहणं[1] यथा, स्वात्माश्रयेण भववासदुःखवत् ॥ १२० ॥

अत्रैव दैवतनिषेवितक्रमौ, राजेन्द्र! तौ रचयतो यतीश्वरौ ।
धर्मोपदेशविनिवेशतो भृशं, क्लेशप्रवेशरहितान् शरीरिणः ॥ १२१ ॥

एवं निशम्य मुदितो महीपति-र्यत् तस्य[2] तौ यतिवरौ सहोदरौ ।
सैन्यं निवेश्य निजमुत्कमानसो, बन्धू स वन्दितुमगात् प्रियाऽन्वितः १२२

कल्याणपङ्कजनिवेशिनौ मुनी, तौ राजहंससुरसेवितक्रमौ ।
ज्ञानोद्भवेन परमेष्ठितां श्रिता-वेतावन्दत स मेदिनीपतिः ॥ १२३ ॥

अथ मुनिद्वयपार्श्वे प्रियायुक्तवज्रजङ्घस्य देशनाश्रवणम्

तद्वन्दनाद् दयितयाऽन्वितो नृपः, प्रीताशयो निविशते स्म तत्पुरः ।
राजाग्रतो रचयतः स्म देशनां, साधू प्रबोधकमलार्कदीधितिम् ॥ १२४ ॥

सान्द्रेन्द्रियार्थगहनोरुगह्वरे, सुप्ता भृशं निबिडमोहनिद्रया ।
संसारदावदहनेन देहिनो, दह्यन्त एव चैरणाश्वनोज्झिताः ॥ १२५ ॥

शीर्षाश्रयं श्रवणचालनैर्गजाः, पुच्छाञ्चलैश्च तुरगाः स्वपृष्ठगम् ।
स्वास्थैर्यमेव निगदन्ति नित्यशो, नित्यानिवाऽल्पमतयो विदन्ति तान् ॥

देहार्थमेव धनमर्ज्यतेऽन्वहं, देहं धनं च तदतीव नश्वरम् ।
तत्[5] तेन[6] तेन च सचेतना जनाः, स्वीकुर्वते सुकृतमेव शाश्वतम् ॥ १२७ ॥

तां देशनामिति निशम्य भक्तितो, भक्तोदकोपकरणांशुकादिभिः ।
तौ प्रत्यलाभयदिलाविभुः स्वयं, चेतस्यचिन्तयदिदं चिरं च सः ॥१२८॥

धन्याविमौ सुकृतिनौ महाशयौ, तातस्य यावनुपदं धृतव्रतौ ।
सोदर्यता हि सदृशी विजृम्भते, नेदृग्विधः पुनरहं प्रमादवान् ॥ १२९ ॥

अद्यापि किञ्चिदपि नैव मे गतं, दीक्षां श्रयामि विरतोऽधुनाऽपि चेत् ।
दत्ते यदेकदिनमप्यसौ श्रिता, मुक्तिं न चेत् तदपि कल्पयेद् दिवम् ॥१३०॥

गत्वा पुरं तदधुना स्वसूनवे, राज्यं प्रदाय पितृवत् पितुर्गतिम् ।
यास्यामि मङ्क्षु[7] पवनस्य वह्निवद्, यूथप्रभोरिभवरस्य यूथवत् ॥ १३१ ॥

---

१ क-'रम्भणं' । २ महीपतेः । ३ सुवर्णकमल० । ४ चरणौ-पादौ चारित्रं च । ५ तस्मात् देहेन । ६ धनेन च । ७ शीघ्रम् ।

मन्त्रेऽत्र तेन कथिते प्रिय ! त्वया, दीक्षां सहाहमपि संश्रये पुरा ।
सा श्रीमतीति विहिताग्रहाऽभव–न्नात्मानमुज्झति हि चेतना क्वचित् १३२
एवं विमुक्तविषयार्थनारसौ, दीक्षाग्रहाग्रहसहायमानसौ ।
तौ दम्पती स्वपुरमीयतुर्द्रुतं, तत्स्वान्तवत् प्रशमसंयमस्पृहे ॥ १३३ ॥
साम्राज्यलुब्धहृदयस्तयोः सुत–स्तत्रान्तरे प्रकृतिमण्डलं[1] पितुः ।
क्रूरो वधाय विभवैरभेदयत्, कामो वृषस्य[2] विषयैः स्ववृन्दवत् ॥ १३४ ॥
राज्यं नियोज्य तनुजे[3] स्वयं ग्रही–ष्यावः प्रगे व्रतमिति प्रचिन्त्य तौ ।
रात्रौ सुखं सुषुपतुः क्षमापतिः, सा श्रीमती सपरमेष्ठिसंस्मृती ॥१३५॥
पुत्रस्तयोर्निशि सुखं प्रसुप्तयो–र्धूपं व्यधाद् विषमयं विपक्षवत् ।
यैः क्षिप्यते हि विषयैर्भवाम्बुधौ, बन्धुः परो[4] भवति हन्त तद्वशः ॥१३६॥
तद्धूपधूमपटलैर्विषोत्कटैः, कौटिल्यशालिगतिलालितक्रमैः ।
सर्पैरिव प्रसृमरैः समन्ततः, प्राणस्वरूपपवनस्तयोः पपे ॥ १३७ ॥

सप्तमभवे युगलिकौ

तावुत्तरेषु 'कुरु'षु क्षतायुषौ, जातौ मिथो [5]मिथुनरूपिणावुभौ ।
प्राणावसानसममानसस्पृशां, जायेत यत् तनुमतां गतिः समा ॥ १३८ ॥

तौ तत्र कल्पतरुभिर्दशभेदभिन्नै–
　रापूरितत्वरितचित्तकृतार्थसार्थौ ।
प्रेमप्रकर्षपरहर्षमयौ मिथोऽपि
　क्षेत्रानुपूर्रमनुपूरयतां[6] तदायुः ॥ १३९ ॥[7]

अष्टमे भवे सौधर्मे सुरौ

युक्तावेव विपद्य सद्य उदपद्येतां स्वभावार्जवा–
　दौज्ज्वल्यप्रथमानमानसरसौ 'सौधर्म'कल्पे सुरौ ।
तावन्योन्यमनोज्ञपूर्वजननस्नेहौ वने 'नन्दने'
　कन्दर्पप्रतिवीरविग्रहधरौ स्वःस्त्रीचरौ चेरतुः ॥ १४० ॥[8]

---

१ सचिवसमूहम् ।　२ पुण्यस्य ।　३ ख–'तनये' ।　४ शत्रुः ।　५ युग्म० ।
६ ख–'रूपि यदपूरयतां' ।　७ वसन्त० ।　८ शार्दूल० ।

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्र[1]महाकविविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते षष्ठश्रीवज्रजङ्घश्रीमतीभवसप्तमयुग्मिभवाष्टमसौधर्मभवप्रकाशनः पञ्चमः सर्गः समाप्तः ॥ ५ ॥

स भवतु [2]वृषलक्ष्मा भूरिलक्ष्मीकरो वः
किल विषयविपक्षान् पञ्च जेतुं समं यः ।
नमिविनमिकृपाणद्वन्द्वधाराचतुष्क-
[3]प्रतिमिततनुरासीत् पञ्चमूर्त्तिप्रपञ्चः ॥ १ ॥[4]

शीतांशुः सकलोऽपि सोऽङ्ककलुषः क्षारः स वारांनिधिः
गम्भीरोऽपि समुन्नतोऽपि विनयानम्रोऽमराद्रिर्न सः ।
दातारोऽपि सुरद्रुधेनुमणयो नामी गुणग्राहिणः
श्रीपद्मस्तदपास्तदूषणगणः पुष्णातु केनोपमाम् ? ॥२॥[5]

ग्रन्थाग्रं २१८ अक्षर १६ ॥



---

१ क-प्रतौ 'महाकवि' इति पाठो नास्ति । २ वृषभलाञ्छन आदिनाथः । ३ प्रतिबिम्बितदेहः । ४ मालिनी । ५ शार्दूल० ।

## षष्ठः सर्गः ६

आद्यो जिनः सोऽस्तु मुदेंऽशदेश–केशापदेशेन यदाननेन्दुः ।
द्विधा विभिन्नाङ्क इव त्रिलोक–दृक्सङ्गसङ्घट्टवशाद् बभासे ॥ १ ॥[२]

अस्ति श्रियोमन्दिरमत्र 'जम्बू'–द्वीपे 'विदेहे'षु पुरं परार्ध्यम्[३] ।
'क्षितिप्रतिष्ठा'भिधया प्रतिष्ठा–मुपागतं स्वर्गपुरीजयेन ॥ २ ॥

यस्मिन् विसर्पन्मणिवेश्मरश्मि–विसारिताशेषतमःसमूहे ।
अष्टप्रकारां जिनराजपूजां, कर्तुं सृजन्ति स्म जनाः प्रदीपान् ॥ ३ ॥*[४]

तस्मिन् विजिग्ये स्वगुणैर्दिगीशा–[६]नीशानचन्द्रो नृपतिः प्रतीतः ।
तद्गौरवान्नूनमवारितं तै–र्व्यापद् यशो यस्य दिशो दशापि ॥ ४ ॥*

यस्य प्रयाणेऽश्वखुरोत्थरेणु–पूरेण दूरेण रथेण सूरः ।
सोऽपि व्यलोपि क्षितिपो न कोऽपि, शूरत्वमूरीकुरुते स तस्मात् ॥५॥*

बभूव भूवर्द्धियशाः पुरेऽस्मिन्, वैद्योऽभिधानात् सुविधिर्विधिज्ञः ।
सम्भाव्य यं रोगहरं यमोऽपि, रुग्भ्योऽङ्गिनोऽहन्नपरैः प्रकारैः ॥ ६ ॥

नवमे भवे वज्रजङ्घजीवो वैद्यपुत्रजीवानन्दः

'सौधर्म'कल्पाच्च स वज्रजङ्घ–जीवश्च्युतस्तस्य सुतश्च जज्ञे ।
श्रुतः स नाम्ना क्रियया च जीवा–नन्दः समानन्दितजीवलोकः ॥ ७॥

तदैव तत्रैव पुरेऽपरेऽपि, चतुर्मिताः पुत्रवरा बभूवुः ।
ते रेजिरे धर्मसुरद्विपस्य, दन्ता इवाद्य प्रतिपक्षघाते ॥ ८ ॥

तत्रैक आसीत् [७]कनकादिवत्या–मीशानचन्द्रस्य नृपस्य पत्न्याम् ।
शरीरजन्मा स महोन्नतत्वा–न्नाम्ना स्थिरत्वाच्च महीधरोऽभूत् ॥ ९ ॥

अन्यः सुनासीर इति श्रुतस्य, मन्त्रीश्वरस्यात्मभवो बभूव ।
लक्ष्म्यां प्रियायां गुणलक्षलक्ष्यः, सुबुद्धिनामा शुभबुद्धिधाम ॥ १० ॥

आसीत् परः सागरदत्तसार्थ–वाहस्य पत्न्या[८]मभयादिमत्याम् ।
स पूर्णभद्रस्तनुभूः प्रपूर्ण–कलाकलापः किल पूर्णिमेन्दुः ॥ ११ ॥

---

१ क–प्रतौ शस्थाने सकारः । २ *+चिह्नयुगलवर्जितानि २५८तमप्रान्तानि पद्यानि विद्यन्ते उपजातिच्छन्दसि । ३ अतिश्रेष्ठम् । ४ प्रेक्ष्यतां १०७तमं पृष्ठम् । ५ *इन्द्रवज्राच्छन्दःसूचकं चिह्नमिदम् । ६ सोम-यम-वरुण-कुबेरान् । ७ कनकवत्याम् । ८ अभयमत्याम् ।

तुर्योऽङ्गजः श्रेष्ठिवरस्य पत्न्यां, धनाभिधस्याजनि शीलमत्याम् ।
गुणाकराख्यः प्रगुणान्तरात्मा, श्रेयोगुणालीगुणनक्रियासु ॥ १२ ॥
ते बालधात्रैः परिपाल्यमाना, विलोलपाणिक्रमपल्लवाग्राः ।
आरामिकैर्यत्नशतेन नित्य-मारामवृक्षा इव वृद्धिमापुः ॥ १३ ॥
सर्वेऽपि बाल्यात् सह पांशुकेलि-कथामिथःसौहृदबद्धचित्ताः ।
ते तुल्यकालं तरुवद् वसन्ते, कलां कुलीनाः कलयाम्बभूवुः ॥ १४ ॥

श्रीमतीजीवः केशवनामा

स श्रीमतीजीव इहैव जज्ञे, पुरेऽङ्गजः केशवनामधेयः ।
श्रेष्ठिप्रभोरीश्वरदत्तनाम्न-स्ते [1]तेन युक्ताः सुहृदः षडासन् ॥ १५ ॥
तत्रावियोगेन विहारिणोऽमी, निन्युः सखित्वं षडपि प्रकर्षम् ।
राज्यं यथा सज्जनमानसानां, सुखाय [2]सन्धिप्रमुखा गुणाः षट् ॥ १६ ॥
सो[3]ऽष्टप्रकाराङ्गनिबद्धमायु-र्वेदं कुलायातमतन्द्रवृत्तिः ।
विश्वौषधीनां च विवेद जीवा-नन्दो निकामं रसवीर्यपाकान् ॥१७॥*
वैद्यादमुष्मादभिशङ्कमानो, नैवापमृत्युर्निजघान जन्तून् ।
आयुःसमाप्तावपि भीतभीतः, प्राणापहारं कुरुते स [4]कालः ॥ १८ ॥*
कारुण्यपुण्यं भिषजां वरेण्यं, निभाल्य तं स्वाघृणकर्महीणाः ।
न व्याधयो विश्वजनस्य बाधां, संलब्धबोधा इव कुर्वते स्म ॥ १९ ॥
वैद्याधिपेऽस्मिन्ननवद्यविद्ये, विद्योतमाने खलु मानवेषु ।
रोगाः सरोगा इव न प्रचारं, विस्फूर्त्तिहीना दधति स्म दीनाः ॥२०॥*

---

१ केशवेन युक्तास्ते पञ्च । २ सन्धि-विग्रह-याना-ऽऽसन-द्वैध-आश्रयेति षड् गुणाः । ३ आयुर्वेदस्य अष्टाङ्गानां नामानि तत्स्वरूपं च यथा-(अ) शल्यतन्त्रम्-विविधतृणकाष्ठपाषाण-पांशुलोहलोष्ठास्थिवालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशास्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च, (आ) शालाक्यम्-ऊर्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपश-मनार्थम्, (इ) कायचिकित्सा-सर्वाङ्गसंश्रितानां व्याधीनां ज्वरातिसाररक्तपित्तशोफोन्मादापस्मारकुष्ठ-मेहादीनामुपशमनार्थम्, (ई) भूतविद्या-देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणदिग्ग्रहोपशमनार्थम्, (उ) कौमारभृत्यम्-कुमारभरणधात्रीक्षीरसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम्, (ऊ) अगदतन्त्रम्-सर्पकीटलूतावृश्चिकमूषका-दिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थं च, (ऋ) रसायनतन्त्रम्-पयःस्थापना-युर्मेधाबलकररोगापहरणसमर्थं च, (ॠ) वाजीकरणतन्त्रम्-अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्र-सादोपचयजनननिमित्तं प्रहर्षजननार्थं च । सन्तुल्यतां **स्थानाङ्गवृत्तेः** ४२८ तमं पत्रम् । ४ यमः ।

ते पञ्च तस्याप्यपरे वयस्याः, कुलक्रमायातकलां कुलीनाः ।
सम्यग् विदन्ति स्म विदां वरेण्याः, कला हि मूलं खलु जीविकायाः ॥२१॥
यथा यथा संङ्कलनं[1] कलानां, क्रियेत लोकोत्तरतामवाप्तुम् ।
श्रियः प्रकाशो हि तथा तथा स्या-न्निदर्शनं शीतमरीचिरत्र[2] ॥२२॥+[3]
पदे पदे स्वस्वकलाविशेषै-र्विस्मेरयन्तः सुमनःसमूहम् ।
विश्वोपकारैककृते षडेते, कृतप्रचारा ऋतुवद् बभूवुः ॥ २३ ॥
सम्भूय ते सोदरवत् सदैव, स्वेच्छाविहारप्रसरं श्रयन्तः ।
कदापि कस्यापि हि सौधदेशे, परस्परं तस्थुरनन्यचित्ताः ॥ २४ ॥

पञ्चमित्रयुक्ते जीवानन्दगृहे श्रीगुणाकरमुनेरागमनम्

कदापि तेषु स्थितवत्सु जीवा-नन्दस्य वैद्यप्रवरस्य हर्म्ये ।
स्वैरं सुखालापपरायणेषु, भिक्षार्थमेको मुनिराजगाम ॥ २५ ॥
पुत्रः स पृथ्वीदयितस्य पृथ्वी-पालाभिधानस्य गुणाकराह्वः ।
लक्ष्मीस्वरूपं क्षणदाविरामे[4], विचारयामास कदापि दान्तः ॥ २६ ॥
लक्ष्मीरियं पण्यमृगेक्षणेव, सत्पुण्यपण्यप्रवणं प्रवीणा ।
प्राणानिव प्रीणयते पुमांसं, प्रक्षीणपुण्यं तृणवत् त्यजेत् तु ॥ २७ ॥*
कुलेन नायात्यनुकूलकेलिं, रूपेण नाङ्गीकुरुते प्रसङ्गम् ।
बुद्ध्या न बध्नात्यनुबन्धभावं, विद्वत्तया श्रीर्न ममत्वमेति ॥ २८ ॥
आक्रम्यते नैव पराक्रमेण, विश्रम्यते[5] नैव गुणश्रमेण ।
संयम्यते नैव च संयमेन, श्रीः स्वैरिणीवाश्रितवैरिणीयम् ॥ २९ ॥
मत्वाऽऽत्मनो बन्धनिबन्धनानि, पुण्यानि पुंसां कमला किलासौ ।
तद्ध्वंसनायेव[6] धनेश्वराणां[7], दत्ते मतिं दुर्बलपीडनाय ॥ ३० ॥*
दुर्वात्ययेव क्षितिपः श्रियाऽऽशु, विवेकदीपे प्रशमं प्रयाते ।
विष्वक् परीतस्तमसाऽऽतपत्र-च्छायात्मना सत्पथमीक्षतां क्व? ॥ ३१ ॥
श्रीचुम्बिनश्चामरचालिनीनां, करक्वणत्कङ्कणझङ्कृतौघैः ।
कर्णान्तरे पूर्णतरे क्व मान्तु, सूक्तानि सद्बोधसुधोच्छ्रितानि? ॥ ३२ ॥

---

१ ग्रहणम् ।  २ चन्द्रः ।  ३ +उपेन्द्रवज्रासूचकमिदं चिह्नम् ।  ४ निशाऽवसाने ।
५ क-'विश्रसते' ।  ६ पुण्यविनाशाय ।  ७ 'नरेश्वराणां' इति ख-टि-पाठः ।

स्त्रीणां चलच्चामर[1]वीजनेन, तच्चाटुवाक्यामृतसेचनेन ।
लक्ष्मीमदोष्माधिक एव चित्रं, क्व नोपतापाय कुनायकानाम् ? ॥ ३३ ॥
श्रियोऽर्जनार्थं जनदण्डनाद्यै-र्ध्यानैर्विरोधि[2]ध्वजिनीवधार्थम् ।
सर्वप्रकारैर्नरकाय राज्यं, त्याज्यं मया मुक्तिमभीप्सुना तत् ॥ ३४ ॥
चिरं विचार्येति विविक्तचेताः, सप्ताङ्गमुत्सृज्य निजं स राज्यम् ।
अङ्गैर्युतं द्वादशभिर्महात्मा, समाददे संयमराज्यमुच्चैः ॥ ३५ ॥
सिद्धिं यतिः सोऽभिलषन्नयोग-वियोगतापेन किलोद्गतेन ।
तप्तेन कामं तपसा कृशाङ्गो, नाहारकर्मण्यपि साग्रहोऽभूत् ॥ ३६ ॥
चारित्रपावित्र्यकृते ह्यकाले, कुपथ्यभोज्यात् कृमिकुष्ठरोगी ।
सोऽभूत् तथाऽप्यौषधमग्रहीन्न, देहानपेक्षा हि मुमुक्षवः स्युः ॥ ३७ ॥
भ्रमन् स गोमूत्रिकया यतात्मा, गृहाद् गृहं पारणकारणाय ।
षष्ठस्य[3] षड्भिः सहसा सुहृद्भि-स्तैः स्वालयाग्रं श्रितवानदर्शि ॥ ३८ ॥
तमामयक्षीणमवेक्ष्य [4]रीण-मूचे धुरीणः करुणाकराणाम् ।
सूनुर्महीशस्य महीधरस्तं, वैद्यावतंसं परिहासहृद्यम् ॥ ३९ ॥
कुसङ्गिनं सद्गतिरस्तपुण्यं, पद्मा दरिद्रं [5]पैणपद्मनेत्रा ।
क्षुद्रं क्षमेर्ष्याविषमं मृगाक्षी, वैद्यं कृपा नाश्रयते कदापि ॥ ४० ॥
यो व्या[6]धिभिर्ध्यायति बाध्यमानं, जनौघमादातुमना धनानि ।
व्याधीन् विरुद्धौषधतोऽस्य वृद्धिं, नयेत् कृपा तत्र कुतोऽस्तु वैद्ये ? ॥ ४१ ॥
रसायनैः सार्द्धमि[7]हौषधानि, [8]तदत्र वासान्मम मन्दता न ।
इतीव वैद्यस्य हृदन्तरालं, लोभः पटुत्वं कलयन् न मुञ्चेत् ॥ ४२ ॥
[9]प्रत्यूषसं वीक्ष्य पुरीषमूत्र-दुर्गन्धसम्बन्धवशेन मन्ये ।
सद्धर्मगन्धः सुरभिस्वभावो, विजृम्भते नो भिषजां गणेषु ॥ ४३ ॥
प्राप्नोति धर्मा-ऽर्थ-यशांसि धर्मा-चिकित्सकः संरचयंश्चिकित्साम् ।
[10]अर्थार्थकः केवलमर्थमेव, निषेवते धर्मयशोनि[11]शुम्भी ॥ ४४ ॥
तद्धर्ममेवाश्रय धर्मपात्रं, समेतमेतं सरुजं चिकित्स ।

---

१ क-'व्यञ्जनेन' । २ सेनासंहाराय । ३ तपोविशेषस्य । ४ पूतिस्रावयुतम् । ५ वेश्या । ६ ख-'वाऽऽधि०' । ७ वैद्यहृदन्तराले । ८ वैद्यस्य हृदि । ९ प्रतिप्रातःकालम् । १० धनाभिलाषी । ११ विघाती ।

उपेक्षसे यद्यमुमद्य हृद्या, न वैद्यविद्या तदियं त्वदीया ॥ ४५ ॥
ऋषेरमुष्याद्य चिकित्सया ते, स कोऽपि भावी विभवप्रकाशः ।
वशीकृता[1] येन पुरः पुरा[2] त्वां, स्वयंवरा सिद्धिवधूर्धिनोति ॥ ४६ ॥
वैद्याधिराजो निजगाद राज–तनूजमूर्जस्वितमप्रमोदः ।
धराधिनाथात्मज! साधु साधु, साधुप्रबोधात् तव विस्मितोऽहम् ॥४७॥
राजाङ्गजो यौवनमाप्य चित्ते, प्रायस्तृणायापि न मन्यतेऽन्यम् ।
सुचेष्टिते द्विष्यति प्रकामं, कुचेष्टिते चेष्टयति क्षणेन ॥ ४८ ॥
विजृम्भते राजतनूद्भवानां, यूनां तथोच्छृङ्खलवृत्तिधैर्यम् ।
न केवलं बिभ्यति येन तेन, रिपूत्करान्नो नरकादपीमे[3] ॥ ४९ ॥
रूपं विभो! निष्प्रतिरूपमेत–ल्लावण्यपुण्यं नयनामृतोर्मि ।
गर्भेश्वरत्वं[4] नवयौवनत्वं, कलासु सर्वासु च कौशलं ते ॥ ५० ॥
तातस्य पादेषु जयोज्ज्वलेषु, न क्लेशलेशः क्षितिपालनस्य ।
सर्वैः प्रकारैः समयस्तवायं, स्वच्छन्दसञ्चारविकारकन्दः ॥ ५१ ॥*
यदीदृशस्यापि मतिस्तवेदृक्, परोपकारप्रसरे कुमार! ।
धृतोदयं त्वामिनमाप्य मन्ये, भाग्यैस्ततो जागरितं प्रजानाम् ॥ ५२ ॥

पञ्चभिर्मित्रैः सह जीवानन्दस्य मुनेश्चिकित्साकरणविचारः

चिकित्सनीयो मुनिरेष नूनं, किं त्वौषधानां न समग्रताऽऽस्ते ।
गृहेऽस्ति तैलं मम लक्षपाकं, वस्तुद्वयस्यानयने यतन्ताम्[5] ॥ ५३ ॥
गोशीर्षकं चन्दनमानयध्वं, मित्राणि! यूयं मणिकम्बलं च ।
वस्तुत्रयेणास्य गदोऽभिगन्ता, रत्नत्रयेणेव[6] भवो विनाशम् ॥ ५४ ॥*
वस्तुद्वयं तद् वयमानयामः, प्रोच्येति पञ्चाप्यगुरुट्टपङ्क्तिम्[7] ।
भेजे स भिक्षामधिगम्य शुद्धां, स्वं स्थानकं स्वच्छमना मुनीन्दुः ॥५५॥*
प्रयच्छ मूल्यान्मणिकम्बलं च, गोशीर्षकं चेत्यभिजल्पितस्तैः ।
वृद्धो वणिग् वस्तुयुगस्य मूल्य–मेकैकदीनारकलक्षमूचे ॥ ५६ ॥
अनेन वस्तुद्वितयेन कीदृक्, प्रयोजनं वो वणिजेति पृष्टैः ।

---

१ क–'वशं कृता' । २ 'न्यायवत् पुरा योगभविष्यन्ती स्थानवर्तमाना विभक्तिर्भवति' इति क–प्रतौ पार्श्वस्थं टिप्पणकम् । ३ राजपुत्राः । ४ गर्भत ऐश्वर्यम् । ५ 'भवन्तः' इत्यध्याहार्यम् । ६ सम्यग्ज्ञानदर्शनचारित्ररूपेण । ७ पणिश्रेणिम् ।

कार्या चिकित्सा यतिनोऽमुनेति, प्रोक्तेऽथ तैः सोऽपि हृदीति दध्यौ ५७

एषां क्व तारुण्यमिदं[1] प्रमाद-मनोभवोन्मादमदप्रमोदम् ।
क्व चेयमसद्विधवृद्धबोध्या, बुद्धिर्भवाबन्धभिदा निदानम् ॥ ५८ ॥

नैवा भवारण्यविलङ्घनेऽलं, केचिद् विवेकार्ककृतप्रकाशाः ।
वृद्धा महामोहतमोहताशा, न सत्पथे दत्तपदास्तु केऽपि ॥ ५९ ॥

ध्यात्वेति वृद्धो वणिगभ्यधत्त, धन्या भवन्तो भुवनेषु येषाम् ।
तारुण्यचारुण्यपि पुण्यकर्म-प्रवीणताऽस्मिन् वयसि प्रवृत्ता ॥ ६० ॥

वृत्तं[2] श्रिता ये लघवो गुरूणां, तस्यानुगं[3] श्लिष्यति गौरवं तान्[4] ।
धरन्ति वृद्धा अपि ये लघूनां, लीलायितं लाघवमाश्रयेत् तान्[5] ॥ ६१ ॥

ये यौवने सच्चरिता नितान्तं, तेषामहो सत्पुरुषेषु रेखा ।
ते तारकाः स्युः प्रसरन्ति पूरे, तरङ्गिणीनां तरणक्षमा ये ॥ ६२ ॥

स्वयं विकारेषु गतेष्वभावं, को वार्द्धके धर्मरतिं न कुर्यात् ? ।
ग्रीष्मे विशुष्यत्सलिलां स्रवन्तीं, बालोऽपि नो लङ्घयितुं क्षमः किम् ? ६३

चेद् वृद्धभावेऽपि [6]विशुद्धसत्त्वो, धर्मं सुबुद्धिः सगुणं विधत्ते ।
ततः क्षपित्वा दुरितारिवृन्दं, गृह्णाति वेगात् परलोकलक्ष्मीम् ॥ ६४ ॥

कल्याणवन्तो ! मणिकम्बलं मे, गोशीर्षकं चन्दनमाददध्वम् ।
विनाशि गृह्णामि धनं न मूल्ये, काङ्क्षामि किन्त्वक्षयमेव धर्मम् ॥ ६५ ॥

धर्मेण जातो विभवस्तदेन-[7]मेनोऽपहे रोपयते पदे यः ।
तत्तत्[8]पिताऽस्येह परत्र चोच्चैः-पदं प्रदत्तेऽतिमुदा कृतज्ञः ॥ ६६ ॥

मह्यं ततो यच्छत धर्मभागं, [9]क्रियै भवद्भिर्भुवि धर्मबन्धुः ।
उक्त्वेति वस्तुद्वितयं स वृद्धः, समर्पयामास मुधैव तेषाम् ॥ ६७ ॥

वृद्धः स धर्मेण ददौ धनं स्वं, व्रतं समादत्त ततोऽप्रमत्तः ।
तेपे तपो दुष्कृतपङ्कशोष-ग्रीष्मातपं प्राप परं पदं च ॥ ६८ ॥

वटमूले स्थितस्य मुनेरनुज्ञया षड्भिर्मित्रैश्चिकित्सनम्

तद्वृद्धधर्मेण चमत्कृतास्ते, ततो यतिं वैद्यवरेण युक्ताः ।
न्यग्रोधमूले प्रतिमास्थितं तं, गत्वाऽथ नत्वाऽऽशु बभाषिरेऽमी ॥ ६९ ॥

---

१ तरुणाः । २ आचरणम् । ३ वृत्तस्य । ४ लघून् । ५ वृद्धान् । ६ 'धृतोरुसत्वः' इति ख-टि-पाठः । ७ पापनाशे । ८ विभवपिताधर्मः । ९ भवन्तो मां धर्मबन्धुं कुर्वन्तु ।

करिष्यते सम्प्रति ते प्रतीक्ष्य! चिकित्सयाऽल्पः सुकृतान्तरायः ।
अनुज्ञयाऽस्मासु ततः प्रसीद, सीदन्तु सद्यो दुरितप्रकाराः ॥ ७० ॥
तमित्यनुज्ञाप्य मुनिं कुतोऽपि, तत्रानयन् गोमृतकं नवं ते ।
आकर्षणीयर्षिशरीरदुर्ग–संसर्गवल्गत्कृमिजीवनाय ॥ ७१ ॥
जीवेन पुण्यं किमु पालितेन, तत्पालने चेदपरे निघात्याः ।
एतत् परं जैनमतस्य तत्त्वं, यज्जीवजीवातुभिरेव भाव्यम् ॥ ७२ ॥*
विवेकचक्षुर्यदि जायतेऽर्हत्–सिद्धान्तसिद्धाञ्जनसङ्गचङ्गम् ।
सन्मार्गसञ्चारपरायणस्य, न सद्गतेस्तत्स्खलनं कुतोऽपि ॥ ७३ ॥
कृतादरा धर्मपरायणास्ते, मुनिं परीणामशुभेन तेन ।
स्नेहेन सर्वाङ्गमथाभ्यषिञ्चन् , जगन्मनः सज्जनवन्नितान्तम् ॥ ७४ ॥
प्रत्यङ्गमभ्यङ्गनिषङ्गिरोग–घाताय तैलं व्यलसत् तदन्तः ।
मुनिर्यथाऽस्यैव मनोऽघभित्त्यै, सिद्धान्ततत्त्वं सुगुरुप्रणीतम् ॥ ७५ ॥
अत्युष्णवीर्येण वपुर्गतेन, तैलेन जज्ञे स मुनिर्विसञ्ज्ञः ।
रोगानुदग्राँनहितांश्च को वा–नारुह्य सन्देहतुलां निहन्ति? ॥ ७६ ॥*
तैलेन तेनाकुलिता यतीन्दो–र्बहिः शरीरात् कृमयो निरीयुः ।
यथाऽन्धकारेण विसृत्वरेण, गेहस्य मध्याल्लघुमक्षिकौघाः ॥ ७७ ॥
तापापहाराय समन्ततोऽपि, ततो यतीन्दुं मणिकम्बलेन ।
आच्छादयामास चिकित्सकेशः, प्रावृड्घनो भूतलमम्भसेव ॥ ७८ ॥
तैलोष्मदीनाः कृमयो निलीना, मुनीन्द्रकायान्मणिकम्बलेऽथ ।
प्रजा इवान्यायहृताः स्वदेशा–दतापलेशे द्रुतमन्यदेशे ॥ ७९ ॥
स मन्दम(मा)न्दोलयति स्म वैद्य–स्तत्कम्बलं गोमृतकोपरिष्टात् ।
कृती कृमीणां कृपया कृपालोः, कृपालुताऽनल्पतमाल्पकेषु ॥ ८० ॥
कृशर्षिकायात् कृमयोऽकृशीयः, स्वाद्याश्रयं गोशवमाप्य वैद्यात् ।
पुष्टाः प्रभोरल्पपदादनल्पं, पदं मुदा सेवकवद् बभूवुः ॥ ८१ ॥
पीयूषपीयूषमयूखसारै–र्जहार गोशीर्षकचन्दनैः सः ।
तापं यतेर्वैद्यपतिर्जनस्य, सूरीन्दुरज्ञानमिवोपदेशैः ॥ ८२ ॥

---

१ जीवनौषधम् । २ मुनिशरीरान्तः । ३ शत्रून् । ४ वर्षर्तुमेघः । ५ ‘ ४ क ४ प-विसर्गानुस्वरव्यञ्जनाह्वादिसंयोगे’ इति छन्दोऽनुशासनवचनात् न छन्दोभङ्गः ।

अद्यापि तैलेन विनिर्गतास्त्वग्-गता यदेते कृमयः पुनस्तत् ।
भिषग्वरोऽभ्यङ्गमृषेश्चकार, नारब्धमर्धे(र्धं) कृतिनस्त्यजन्ति ॥ ८३ ॥
बहिर्बभूवुः कृमयोऽथ तस्मा-दभ्यङ्गतो मांसगता अपि द्राक् ।
ग्रीष्मार्कभीष्मातपतो गभीर-ह्रदान्तरस्था इव मीनसङ्घाः ॥ ८४ ॥
पुनर्मुनीन्दुं मणिकम्बलेन, वैद्यावतंसः परितः प्यधात् तम् ।
यथाऽन्तरीक्षं तपतापतप्तं, तपात् पयस्तोयदमण्डलेन ॥ ८५ ॥
सुशीतले ते मणिकम्बलेऽथ, पिण्डेन भूत्वा कृमयोऽभितस्थुः ।
मध्याह्नकाले पशवो यथा द्रु-च्छायाप्रदेशे रवितापरुग्णाः ॥ ८६ ॥
भिषग्वरेण्यो मणिकम्बलान्ता-देतान् कृमीन् गोमृतकेऽतिमन्दम् ।
नियोजयामास यथा सुकर्म, तद्योगभोग्ये भविकान् प्रदेशे ॥ ८७ ॥
तं जीवजीवातुभिरेव जीवा-नन्दोऽथ जैवातृकवज्जगद्वत् ।
ऋषिं स गोशीर्षरसैर्मयूखै-रिवौषधं ग्रीष्मद्रुतं सिषेच ॥ ८८ ॥
भूयो निरीयुः कृमयस्तृतीया-भ्यङ्गान्मुनेरस्थिगता अपि द्राक् ।
उग्रादयस्कान्तमणेरिवान्तः, सङ्क्रान्तशल्यप्रकराः शरीरात् ॥ ८९ ॥*
निःसृत्य कायान्मणिकम्बले ते, निरस्तसङ्ख्याः कृमयः प्रसस्रुः ।
तारापथे विस्तृतिभाजि यद्वद्, भूरन्ध्रभागाच्छलभाः समन्तात् ॥ ९० ॥
वैद्यो विधुन्वन् मणिकम्बलं त-मपातयद् गोमृतके कृमींस्तान् ।
परोपकारी हि परोपकारं, कुर्वन् न निर्वेदपरः कदापि ॥ ९१ ॥
पुण्यैरिवात्मानमर्थात्मनीनो, विश्वत्रयं कीर्त्तिभरैरिव स्वैः ।
मुनिं पुनर्वैद्यमतल्लिका तं, लिलेप गोशीर्षरसैः समन्तात् ॥ ९२ ॥
तेनैष गोशीर्षविलेपनेन, लोपं प्रयाते सकलेऽपि तापे ।
मुनिः परां निर्वृतिमाजगाम, स नाम गन्ता प्रशमेन यद्वत् ॥ ९३ ॥
प्राप्यैः सुपुण्येन मुनिः स तैला-भ्यङ्गैस्त्रिभिर्निष्क्रमितां प्रपद्य ।
कल्याणलक्ष्मीमभजच्छमीव, निष्कर्मभावं त्रिभिरेव रत्नैः ॥ ९४ ॥*
उल्लाघितां निर्दलिताघसङ्घै-र्विधाय वैद्यादिभिरिद्धभावैः ।
दक्षैर्ऋषीन्दुः क्षमितोऽन्यतोऽगात्, प्रदाय तेभ्योऽथ स धर्मलाभम् ॥९५॥

---

१ मेघसमूहेन । २ क–'ऽथ तस्थुः' । ३ पीडिताः । ४ क–'तज्जीव०' । ५ चन्द्रवत् । ६ 'तीड' इति भाषायाम् । ७ ख–'कदाचित्' । ८ आत्महितकारकः ।

षण्मित्रैः प्रासादकरणम्

विक्रीय गोशीर्षमथावशिष्टं, वैद्यादयस्ते मणिकम्बलं च ।
मूल्येन लब्धैः कनकैर्निजैश्च, चैत्यं व्यधुर्मेरुशिरःसपत्नम् ॥ ९६ ॥*
जिनालयः स्वर्णमयः स रेजे, पीतत्विषा पोषितपूषकान्तिः ।
धर्मस्य नेतुः किल तद्विधातृ-पापद्विषत्तापकरः प्रतापः ॥ ९७ ॥
दिवं पताकाप्रसरेण गर्त्ता-पूरेण पृथ्वीतलमात्मनोर्वीम् ।
व्याप्य स्थितस्तीर्थकरालयोऽयं, [2]त्रैलोक्यपावित्र्यकरो विरेजे ॥ ९८ ॥
नानामणिश्रेणिनिवेशसज्जा, [3]सञ्जातरूपावलिजातरूपा ।
न्ययोजि जैनप्रतिमाऽतिमात्र-रम्याऽत्र तैर्निष्प्रतिमा त्रिलोक्याम् ॥९९॥

अष्टविधा जिनपूजा

मित्राणि ते षड्मिलिता विचित्रा-मष्टप्रकारां जिनराजपूजाम् ।
दिने दिने भक्तिभृतो वितेनु-रष्टापि कर्माणि निपेष्टुकामाः ॥ १०० ॥
प्रातर्जिनेन्द्रस्नपनाय वक्षो-द्वारस्थितस्फारसुवर्णकुम्भाः ।
अमी बभूवुर्भववारिराशिं, तरीतुकामा इव मुक्तिकामाः ॥ १०१ ॥
श्राद्धा जिनेन्द्र[4]स्नपनोदकेन, ते स्वं सिसिञ्चुः किल येन [5]तेन ।
मोक्षाभिधानाय फलाय तेषु, श्रेयोलताः पल्लविता नितान्तम् ॥१०२॥*
कर्पूरपूरश्रितचन्दनौघै-र्विलेपनं ते विदधुर्जिनेन्दोः ।
अपारसंसारदवोद्भवस्तु, तेषां तु तापः समवाप शान्तिम् ॥ १०३ ॥
[6]शुभ्रैरदभ्रैः सुरभिस्वभावै-र्विकाससारैः कुसुमप्रकारैः ।
ते शोभयन्ति स्म जिनाधिनाथं, भृशं यशोभिर्भुवनत्रयं तु ॥ १०४ ॥
ते श्रीजिनेशस्य वपुःप्रदेशे, गन्धान् सुगन्धानभिचिक्षिपुर्यान् ।
यावद्भवस्तावदधारि तेषां, श्रेयःश्रियः कार्मणचूर्णता तैः ॥ १०५ ॥*
यैरक्षतैः स्वस्तिकपङ्क्तिरेतै-र्विनिर्मिता तीर्थपतेः पुरस्तात् ।
[7]तैरात्मसञ्ज्ञाप्रतिमाः प्रक्लृप्ताः, स्वस्तिस्थितिस्तेषु सनातनैव ॥ १०६ ॥
नैवेद्यमुद्यत्प्रमदं यदग्रे, नियोजितं तैर्जिनपुङ्गवस्य ।
तेनार्जितं तैः शुभभोगकर्म, मर्त्येष्वमर्त्येषु विशेषतोऽपि ॥ १०७ ॥

---

१ जिनालयविधायक० । २ क-'विलोक्य' । ३ श्रेष्ठसुवर्णावलीतः निष्पन्नरूपा । ४ ख-'स्नपनाम्भसा ते स्वमभ्यसिञ्चन्' । ५ तेन कारणेन । ६ क-'अभ्रै०' । ७ तन्दुलैः ।

माधुर्यधुर्याणि जिनेश्वराग्रे, ते ढोकयन्ति स्म फलानि यानि ।
तान्येव तेभ्यस्त्रिदिवादिभिस्तैः, फलैः फलिष्यन्ति विपाककम्रैः ॥ १०८ ॥
पुरो जिनेन्द्रस्य जलं जडत्व–मुक्तैर्विमुक्तं यदमीभिरेतत् ।
अदायि संसारदवप्रचार–निवारकं दुःखपरम्परायै ॥ १०९ ॥
प्रदीपितस्तैर्जिनपुङ्गवस्य, यो विश्वदीपस्य पुरः प्रदीपः ।
बभूव तेषां भुवनप्रकाशे, ज्ञानप्रदीपस्य स दीपनाय ॥ ११० ॥
उत्क्षिप्तकृष्णागुरुधूपधूम–स्तोमस्य दिक्षु प्रसृतस्य दम्भात् ।
जिनेन्द्रभक्तेर्भयकम्पवन्ति, यान्ति स्म तेषां भवपातकानि ॥ १११ ॥
न्यवेश्यताखण्डितसद्दशाढ्या, समुज्ज्वलश्रीः परिधा पवित्रा ।
तैर्या जिनस्वामिनि तादृगेषां, मर्त्येष्वमर्त्येषु गतिर्भवित्री ॥ ११२ ॥
आरात्रिकोत्तारणकर्मकाले, तैः प्रेरिताऽद्योतत पुष्पपङ्क्तिः ।
सत्कर्म तादृक् समवेक्ष्य तेषां, धर्मस्य हर्षाश्रुपरम्परेव ॥ ११३ ॥*
विचित्रवादित्ररवौघविद्ध–घण्टानिनादध्वनितान्तरिक्षम् ।
जिनाग्रतो मङ्गलदानदक्षं, दक्षा व्यधुर्मङ्गलदीपमेते ॥ ११४ ॥

षण्मित्रैर्भावपूजाकरणम्

ते द्रव्यपूजां विधिवद् विधाय, व्यधुर्जिनेन्दोरथ भावपूजाम् ।
शक्रस्तवाद्यैः स्तवनैस्तथाऽऽत्म–प्रणीतसङ्गीतमहोत्सवेन ॥ ११५ ॥
ते प्रत्यहं प्रीतिपरा गुरूणा–मुपासनां चक्रुरवक्रचित्ताः ।
जिनोक्ततत्त्वान्यवगम्य सम्यक्, सम्यक्त्वसङ्गे स्थिरतामवापुः ॥ ११६ ॥
व्रतानि ते द्वादश सद्गुरुभ्यः, सम्पालयामासुरवाप्य सम्यक् ।
तथा यथा द्वादशदेवलोके–भ्योऽपि प्रयास्यन्ति परं पदं ते ॥ ११७ ॥
चतुर्विधध्यानविधानधीरा–श्चतुर्विधं धर्ममभिस्पृशन्तः ।
चतुर्गतिक्लेशनिवारणाय, चतुर्विधं सङ्घमपूजयंस्ते ॥ ११८ ॥+

---

१ प्रदीपः । २ ख–'खलु पातकानि' । ३ वस्त्रपूजा । ४ 'नमोत्थुणं' इत्यपरं नाम । ५ ख–'न्यधिगम्य' । ६ प्रेक्ष्यतां ३३तमं पृष्ठम् । ७ (अ) सौधर्मः, (आ) ऐशानः, (इ) सनत्कुमारः, (ई) माहेन्द्रः, (उ) ब्रह्मलोकः, (ऊ) लान्तकः, (ऋ) महाशुक्रः, (ॠ) सहस्रारः, (ऌ) आनतः (ॡ) प्राणतः (ए) आरणः, (ऐ) अच्युत इति द्वादश देवलोकाः कल्पोपपन्नवैमानिकानाम् । ८ आर्त–रौद्र–धर्म–शुक्लेति ध्यानस्य चातुर्विध्यम् । ९ साधु–साध्वी–श्रावक–श्राविकेति सङ्घस्य चतुर्विधता ।

शस्तैर्धनैः पुस्तकलेखनेन, सिद्धान्तमुद्धृत्य विशुद्धबोधाः ।
आत्मानमुद्दध्रुरमी समीप-मुक्तिप्रवेशा भववारिराशेः ॥ ११९ ॥*
एवं सदैव स्वधनानि सप्त[1]-क्षेत्र्यां वपन्तः षडमी वयस्याः ।
स्वकीयदुष्कर्मपरम्परावत्, कालं कियन्तं क्षपयाम्बभूवुः ॥ १२० ॥

वैराग्यात् सर्वेषां मित्राणां सहैव दीक्षा

अथैकदाऽनेकविधैर्विकारैः, संसारवैरस्यममी विमृश्य ।
व्रतं युता एव षडप्यखण्ड-बोधाः सुसाधोः सविधेऽधिजग्मुः ॥ १२१ ॥
गुरोः परिज्ञानविधेयतत्त्वाः, सत्त्वानुकम्पाऽऽश्रयिणः सुसत्त्वाः ।
समन्विता एव महीतलेऽमी, नभोऽङ्गणे भग्रहवद्[2] विजह्रुः ॥ १२२ ॥
चित्तोदयाद्रावुदितस्य शङ्के, प्रबोधपङ्केरुहबान्धवस्य[3] ।
तप्तैस्तपोभिः[4] प्रसृतैर्महोभिः, क्षतानि तेषां नितमां तमांसि ॥ १२३ ॥
एकोत्तराः पञ्च मदोन्मदेभ-पञ्चाननाः पञ्चसमित्युपेताः[5] ।
ते क्षिप्तपञ्चेन्द्रियजप्रपञ्चाः, प्रापञ्चयन् पञ्च महाव्रतानि ॥ १२४ ॥*
चतुर्गतिक्लेशलताऽऽद्यकन्दान्, चतुःशुभध्यान[6]विरोधिरूपान् ।
क्षमामुखैरस्त्रवरैश्चतुर्भि[7]-र्विजिग्यिरेऽमी चतुरः कषायान् ॥ १२५ ॥+
द्रव्याच्च भावाच्च विधाय पूर्वं, संलेखनां ते षडपि व्रतीन्द्राः ।
पञ्च स्मरन्तः परमेष्ठिनस्ते, प्रान्ते प्रपन्नानशना विपन्नाः ॥ १२६ ॥*

षण्णामनशनम्, अच्युते उत्पत्तिश्च

सर्वेऽपि कल्पे'ऽच्युत'नाम्नि शक्र-सामानिका नाकिवरा बभूवुः ।
तपः सुतप्तं हि तपोधनानां, श्रेयोऽस्ति तन्नो वितनोति यन्न ॥ १२७ ॥
द्वीपेऽत्र जम्बूपपदे[8] 'विदेह'-क्षेत्रस्य पूर्वत्र महाब्धिपार्श्वे ।
स्वर्लोकजैत्रो विजयोऽस्ति 'पुष्क-लावत्य'भिख्यः श्रितपुष्कलश्रीः १२८*
पूः 'पुण्डरीकिण्य'भिधाऽस्ति तत्र, श्रियोनिधौ वप्रनिभेव[9] यत्र ।
अस्थादहीन्द्रः कपिशीर्षवेश-फणासहस्रः परिखाऽध्वनांऽऽप्तः[10] ॥ १२९ ॥

---

१ साधु-साध्वी-श्रावक-श्राविका-ज्ञान-प्रतिमा-चैत्येति सप्तक्षेत्री । २ नक्षत्रग्रहवत् । ३ सूर्यस्य । ४ क-'तप्तैर्महोभिः प्रसृतैस्तपोभिः' । ५ प्रेक्ष्यतां ३१तमं पृष्ठम् । ६ पृथक्त्ववितर्कम्, एकत्ववितर्कम्, सूक्ष्मक्रियाऽप्रतिपाति, व्युपरतक्रियाऽनिवृत्तीति चतुर्विधं शुक्लध्यानम् । ७ क्षमा-मृदुतासरलता-निर्लोभता इति कषायसंहारकचतुष्कम् । ८ जम्बूद्वीपे । ९ क-'निभेन' । १० क-'नाऽथं' ।

तस्यामभूद् दोर्जितवज्रदण्डः, श्रीवज्रसेनः स्खलितारिसेनः ।
राजा नभो यस्य यशोभिराभात्, कर्पूरसम्पूर्णसमुद्रकामम् ॥ १३० ॥*
यस्य प्रतापस्तपनो नवीनः, सर्वत्र लब्धाभ्युदयो[1]ऽस्तहीनः ।
यो यः क्षितीशोऽत्यजदातपत्रं, तापं तनोति स न तस्य तस्य ॥१३१॥*
भार्याऽस्य वर्याऽजनि धारणीति, सन्धारिणी सद्गुणधोरणीनाम् ।
रूपं निरूप्यानुपमं यदीयं, सरोऽपि रत्यां विरतादरोऽभूत् ॥ १३२ ॥
द्वाविंशतिं [2]तोयपतीनितस्ते-ऽप्यपूरयन् पुण्यमयाः स्वमायुः ।
ततोऽच्यवन्ता'ऽच्युत'तश्च तेषु, जातास्तयोः पञ्च सुताः क्रमेण ॥१३३॥

वैद्यादिदेवजीवानां विदेहे वज्रसेननृपस्य वज्रनाभादिकपञ्चपुत्ररूपेण जन्मानि

वैद्यस्य जीवोऽजनि वज्रनाभा-भिधाऽङ्गभूर्भूरिगुणद्रुभूमिः ।
च[3]तुर्दशस्वप्नविनिश्चितोरु-चक्रित्वसम्पत् प्रथमः पृथुश्रीः ॥ १३४ ॥
सूनुर्द्वितीयो भवति स बाहु-नामाऽतिधामा नृपपुत्रजीवः ।
आजानुबाहुः स सुबाहुसञ्ज्ञो, जज्ञे पुनर्मन्त्रितनूजजीवः ॥ १३५ ॥*
पीठो महापीठ इति प्रतीतौ, तौ श्रेष्ठि-सार्थेशतनूजजीवौ ।
स राजपुत्रोऽजनि केशवस्य, जीवस्तु नाम्ना सुयशा यथार्थः ॥१३६॥
शिश्राय बाल्यादपि वज्रनाभं, स राजपुत्रः सुयशा विनीतः ।
स्नेहो बहुः प्राग्भवसन्निबद्धः, स्पष्टीकरोत्येव हि बन्धुभावम् ॥ १३७ ॥
राज्ञस्तनूजाः सुयशाः स चैते, षडप्यवर्धन्त समं सं[4]मेताः ।
षट्खण्डभागं विजयं विजेतुं, मन्ये नयस्याङ्गजुषो गुणाः [5]षद् ॥ १३८ ॥
तेषामुपाध्यायपुरःस्थितानां, चित्ते कलास्तत्क्षणमेव सर्वाः ।
सङ्क्रान्तिमीयुर्मणिदर्पणे किं, विलम्बतोऽर्थाः प्रतिबिम्बिताः स्युः?॥१३९॥
लोकान्तिकैर्व्यज्ञपि नाथ ! तीर्थं, प्रवर्त्तयेति त्रिदशै[6]र्नरेशः ।
श्रीवज्रसेनोऽथ स वज्रनाभं, न्यवीविशद् [7]वज्रिसमं स्वराज्ये ॥१४०॥
ईशेऽथ सांवत्सरिकं ददाने, दानं यथाकामितमीहकानाम् ।
ह्रीणाः शशंसुः सुररत्न-धेनु-द्रुमा निजं मेरुनिकुञ्जवासम् ॥ १४१ ॥
चक्रे प्रभोर्निष्क्रमणोत्सवोऽथ, नाथैर्द्युसद्-दानव-मानवानाम् ।

---

१ ख-'नहीनः' । २ सागरोपमान् । ३ प्रेक्ष्यतां सप्तमः सर्गः ( श्लो० २५४-२६९ ) ।
४ संयुक्ताः । ५ प्रेक्ष्यतां चतुर्दशं पृष्ठम् । ६ ख-'नरेन्द्रः' । ७ इन्द्रसमम् ।

पुराद् वनं प्राप विरक्तचेताः, स वज्रसेनो नरकादिव द्याम् ॥ १४२ ॥
स तत्र निःश्रेयसदानदक्षां, दीक्षां स्वयम्बुद्धविभुः प्रपेदे ।
ज्ञानं मनःपर्ययमुत्कमग्र्यं, ज्ञानत्रयस्येव विभुं सिषेवे ॥ १४३ ॥
पादप्रचारैः परितः प्रपुष्यन्, पवित्रतां साम्यपरप्रवृत्तिः ।
ततो विभुः क्षुण्णतमस्ततिः क्ष्मां, प्रावर्त्तत द्यां रविवद् विहर्त्तुम् ॥१४४॥
श्रीवज्रनाभोऽपि विभज्य देशान्, ददौ चतुर्भ्योऽपि सहोदरेभ्यः ।
यथोचितं राज्यचयप्रदेभ्यः, सुधीरुपायेभ्य इव प्रयोगान् ॥ १४५ ॥
श्रीवज्रनाभक्षितिभर्तुरासीद्, दासीकृतारेः सुयशाः स सूतः ।
बिडौजसो मातलिवन्मरुद्वद्, वह्नेरिनस्यारुणवन्महौजाः ॥ १४६ ॥
वपुर्वदक्षैः सकलार्थदक्षैः, संसारवज्जिष्णुभिरिन्द्रियार्थैः ।
महाव्रतैः साधुरिवातिशुद्धै-स्तैः पञ्चभिर्भूपवरो विरेजे ॥ १४७ ॥
कदापि कुत्रापि कृतप्रवृत्तेः, श्रीवज्रनाभस्य नरेश्वरस्य ।
पञ्चाप्यमी तेऽनुचरा बभूवुः, सदैव चित्तस्य यथेन्द्रियाणि ॥ १४८ ॥
ज्ञानं परध्याननिघातिघाति-कर्मस्थितेः केवलमाविरासीत् ।
श्रीवज्रसेनस्य नरेश्वरस्य, द्योतो यथा वातहताब्दपङ्क्तेः ॥ १४९ ॥*

चक्ररत्नस्य प्रादुर्भवः

श्रीवज्रनाभस्य तदैव शस्त्र-शालाऽन्तराऽऽविर्भवति स्म चक्रम् ।
ग्रीष्मर्त्तुमध्यन्दिनतीक्ष्णभानु-भीष्मप्रभाभासितदिग्विभागम् ॥१५०॥*
त्रयोदशासन्नपराणि तस्य, रत्नानि यत्नेन विना नृपस्य ।
पुण्यानुमानेन विवृद्धिमेति, स्थानाम्बुमानेन लतेव लक्ष्मीः ॥ १५१ ॥
तस्यावनीन्दोः कृतसन्निधानाः, 'सर्वार्थसिद्धि'स्थितिसंविधानाः ।

---

१ उत्कण्ठितम् । २ विध्वस्त० । ३ क-'व्यावर्तत' । ४ साम-दान-दण्ड-भेदलक्षणेभ्यः । ५ सारथिः । ६ इन्द्रस्य । ७ ज्ञानावरण-दर्शनावरण-मोहनीया-ऽन्तरायेति घातिकर्मचतुष्कम् । ८ ख-'तीक्ष्ण०' । ९ बृहत्सङ्ग्रहिण्यां ३०३तमगाथायां एतन्नामान्येवम्—

"सेणावइ गाहावइ पुरोहि गय तुरय वड्ढई इत्थी ।
चक्कं छत्तं चम्मं मणि कागिणी खग्ग दंडो य ॥"
[ सेनापतिर्गृहपतिः पुरोहितो गजस्तुरगो वर्धकिः स्त्री ।
चक्रं छत्रं चर्म मणिः काकिनी खड्गो दण्डश्च ॥ ]

सदा बभूवुर्निधयो नवापि, जिनोक्ततत्त्वानि यथा यतीन्दोः ॥ १५२ ॥
जैत्रेण जिग्ये विजयोऽमुनोर्वी-शक्रेण चक्रेण समन्ततोऽपि ।
यथाऽतितीव्रेण यतीश्वरेण, भवक्रमः संयमशीलनेन ॥ १५३ ॥
नृपेषु तस्मिन् विजयेऽखिलेषु, स सार्वभौमः शुशुभेऽभिषिक्तः ।
गुणेषु सर्वेषु धुरीणवृत्तिः, शमो यथा सिद्धिसुखोपलम्भे ॥ १५४ ॥+
षट्खण्डभाजो विजयस्य तस्य, लब्धाधिपत्यं विविधान् स भोगान् ।
सदैव सूतेन सहोदरैश्च, सहात्मषष्ठः खलु सेवते स्म ॥ १५५ ॥
मग्नोऽपि भोगेषु महोल्बणेषु, तेषां न मोहेन विमोहितोऽयम् ।
विचक्षणो मूर्खगणेषु खेलन् , मौर्ख्येण तेषामुपलक्ष्यते किम् ? ॥ १५६ ॥
निन्येऽस्य वृद्धिं सुकृतेन लक्ष्मी-स्तेनापि लक्ष्म्या सुकृतं तथैव ।
मिथस्तयोरित्युपकारकेलि-र्न क्वापि विश्राममहो जगाम ॥ १५७ ॥
खण्डेषु नेता विजयस्य षट्सु, षड्भिर्गुणैः किङ्करितारिलोकः ।
स सोदरैः सारथिनाऽऽत्मषष्ठो, जिनांह्रिपङ्केरुहि षट्पदोऽभूत् ॥ १५८ ॥
वृद्धिं यतस्तद्व्यसोऽनुघस्त्रं, श्रीः स्पर्द्धयेवास्य विवर्द्धते स्म ।
संहर्षतोऽस्याः खलु साऽपि धर्म-धीरस्य धीरस्य दधौ प्रकर्षम् ॥१५९॥*
धृतावधानैर्नवभिर्निधानैः, समर्थिताः केऽस्य न काङ्क्षितार्थाः ? ।
तैरप्यशेषैः सुकृतक्रिया न, निःशेषतां नेतुमलं बभूवे ॥ १६० ॥
गीतानि चिन्तामणि-कामधेनु-कल्पद्रुमाणामधिदेवताभिः ।
शृण्वन्ति सिद्धाचलसन्धिरन्ध्रे-र्बलिस्त्रियो दानयशांसि यस्य ॥ १६१ ॥
उपास्यमानस्य सदाप्तयोगै-र्भोगैरनेकैः सविवेकवृत्तेः ।
नास्य प्रवासं मनसश्चकार, संसारवैरस्यभवो विरागः ॥ १६२ ॥

---

१ जम्बूद्वीपप्रज्ञप्तौ ६६तमे सूत्रे एतन्नामनिर्देशो यथा—

"नेसप्पे १ पण्डुअए २ पिंगलए ३ सव्वरयण ४ महपउमे ॥
काले ६ अ महाकाले ७ माणवगे ८ महानिही संखे ९ ॥"

[ नैसर्पः पाण्डुककः पिङ्गलकः सर्वरत्नो महापद्मः ।
कालश्च महाकालो माणवको महानिधिः शङ्खः ॥ ]

२ क-'जिनेन्दोः' । ३ तेन कारणेन । ४ सुकृत-लक्ष्म्योः । ५ गच्छतः । ६ क-'सहर्षतो' । ७ लक्ष्म्याः । ८ काङ्क्षितार्थैः ।

पुण्डरीकिण्यां समवसरणम्

अथैकदा तत्र जिनाधिनाथः, श्रीवज्रसेनप्रभुराजगाम ।
प्रमादनिद्रां जगतो विनिद्रां, विद्राव्य कुर्वन् रविवत् प्रबोधम् ॥ १६३ ॥
देवैः कृतायां मणि-हेम-रूप्य-वप्रत्रयान्तर्मणिवेदिकायाम् ।
चक्रे स्थितश्चैत्यतरोरधस्ताद्-धर्मोपदेशं स सुधोर्मिदेश्यम्[1] ॥ १६४ ॥ *
श्रीवज्रनाभोऽपि सबन्धुस्ततः, श्रीवज्रसेनस्य जिनेश्वरस्य ।
आस्याम्बुजाद् वाङ्मधुपानलीला-रङ्गन्मना भृङ्ग इवाजगाम ॥ १६५ ॥*
स सार्वभौमस्त्रिजगत्प्रभुं त्रिः-प्रदक्षिणीकृत्य तथा प्रणम्य ।
नुत्वा नरेन्द्रोऽनुसुरेन्द्रपृष्ठं, स्रष्टोपदेशः[2][3] समुपाविवेश ॥ १६६ ॥
शक्रानुगे चक्रिणि धर्मचक्री, प्रचक्रमे चेति वचः प्रवक्तुम् ।
अन्तःस्फुरज्ज्ञानसुधापयोधि-रङ्गत्तरङ्गप्रसरप्रशस्यम् ॥ १६७ ॥

जिनदेशना

प्राग्जन्मपुण्यैर्जनितप्रपञ्चाः, शक्रत्व-चक्रित्वसमृद्धयोऽमूः ।
स्फुरन्ति तावद् बत यावदायुः, क्षणे क्षणे स्यात् परिहीणमेतत् ॥१६८॥
समृद्धिमोहेन यदि प्रमादा-दायुर्विलीनं सुकृतं कृतं न ।
तदा परित्राणमहो विधाता, कः प्राणभाजां नरकप्रपाते? १६९-युग्मम्
कर्माणि बाल्यैकध(प?)राणि मुक्त-श्रमं रमन्ते बत विश्वजीवैः ।
मृदार्द्रपिण्डैरिव कामक्लृप्त-क्षणक्षणान्यान्यशरीररूपैः ॥ १७० ॥
वातप्रपाताहतवारिवाह-सब्रह्मतां चुम्बति जीवितव्यम् ।
तत्रेश्वरत्वं[4] तु शरीरभाजां, विद्युत्प्रकाशस्य विलासमेति ॥ १७१ ॥*
जानाति यज्जीवति नैव देही, सम्बन्धिनो वेत्ति च मृत्युमाप्तान् ।
स्वं ग्रस्यमानं जरसाऽवगच्छे-न्न दुर्मतिर्धर्ममतिस्तथापि ॥ १७२ ॥
स एव विश्वत्रितये विवेकी, स एव सद्बुद्धिवतां वतंसः ।
स एव सत्त्वेषु विरक्तसत्त्वो, गृह्णाति धर्मं फलमायुषो यः ॥ १७३ ॥
आकर्णयन् कर्णसुधां सकर्ण-स्तां देशनां क्लेशविनाशिनीं सः ।
अमानसन्मानसवासनाभृद्, विचिन्तयामास नृवासवोऽथ ॥ १७४ ॥
मोहान्धकारैर्द्रुतदर्शनानां, भवान्धकूपान्तरपातुकानाम् ।

---

१ अमृतकल्लोलकल्पम् । २ क-'सृष्टापदेशः' । ३ त्यक्तमायः । ४ जीवितव्ये ।

उद्धारकारी गुरुगीर्गुणौघैः, कृपालुचूडामणिरेष तातः ॥ १७५ ॥
सन्मार्गतो भ्रष्टतरानपार-संसारकान्तारजुषो मनुष्यान् ।
दुष्कर्मदुष्टारिविदंश्यमानान्, रक्षन् प्रभुर्मुख्यपथे करोति ॥ १७६ ॥*
अपीदृशे स्वामिनि मोहनिद्रा-निद्रालवो विघ्न वयं हहा न ।
रत्नत्रयं संह्रियमाणमन्तः-क्रूरैः कषायैर्विषयैर्द्विषद्भिः ॥ १७७ ॥
चित्ते विचिन्त्येति स चक्रवर्त्ती, तं धर्मचक्रिप्रभुमानताङ्गः ।
व्यज्ञिज्ञपद् विज्ञजनावतंसो, भक्त्या भृशं गद्गदया गिराऽथ ॥ १७८ ॥
प्रकाशिताशेषयथास्थितार्थे, त्रैलोक्यभानौ त्वयि भासमाने ।
एकत्र सम्भूय भृशं तमोभिः, स्वामिन्! गिरेर्गह्वरवद् भृतोऽस्मि ॥१७९॥
समग्रवल्लिद्रुमकाननोद्यत्-प्रसूनपत्रप्रकरप्रकीर्णे ।
यथा वसन्ते प्रसृतेऽपि विष्वक्, जातौ न पुष्पं न दलं करीरे ॥ १८० ॥
उल्लासिताशेषजगत्प्रकाशे, विनिर्मितालोकनलोकनेत्रे ।
दिनाधिनाथेऽप्युदिते विकाशो, न कैरवे पश्यति नाप्युलूकः ॥ १८१ ॥
तथा जगन्नाथ! भवार्णवान्त-र्जगत्त्रयं तारयति त्वयीदम् ।
अहं तथैवास्मि निमग्न एव, कृपां कृपालो! कुरु तारयाशु ॥ १८२ ॥+
तातेन दत्तं भुवनाधिपत्यं, नीत्याऽन्वितः पालितवान् यथाऽहम् ।
व्रताधिपत्यं परिपालयिष्ये, क्षमान्वितो नाथ! तथैव देहि ॥ १८३ ॥

वज्रनाभस्य सहोदरादिना सार्धं पितुरन्तिके दीक्षा

एवं स विज्ञप्य विभुं सुताय, प्रदाय राज्यं भववासभीरुः ।
सहोदरैः सारथिना च सार्द्धं, व्रती पितुस्तीर्थकृतोऽन्तिकेऽभूत् ॥ १८४ ॥
श्रीवज्रनाभः समभूत् क्रमेण, सिद्धान्तपाथोदधिपारदृश्वा ।
एकत्र संवाससुखेच्छयेव, द्राग् द्वादशाङ्गानि विलेसुरस्मिन् ॥ १८५ ॥*
एकादशाङ्गानि विदाम्बभूवु-र्बाह्वादयस्ते यतयस्तु पञ्च ।
प्रज्ञाऽभियोगक्रमचित्रताया-विचित्ररूपाः श्रुतसम्पदः स्युः ॥ १८६ ॥
श्रीवज्रसेनप्रभुवाक्सुधोर्मि-संसिच्यमाना मुनयोऽनुवेलम् ।

---

१ विहन्यमानान् । २ क-'पालयाशु' । ३ ख-'नाऽथ' । ४ ख-'स वज्र०' ।
५ आचार-सूत्रकृत-स्थान-समवाय-भगवती-ज्ञाताधर्मकथो-पासका-ऽन्तकृद्-ऽनुत्तरोपपातिक-प्रश्न-व्याकरण-विपाक-दृष्टिवादेति द्वादशाङ्गानि ।

मासोपवासादितपोभिरुग्रै–र्व्यग्रीबभूवुर्न मनागपीमे ॥ १८७ ॥*

मलप्रलिप्ता जलयोगतो या, या कुण्ठरूपा कठिनप्रहारात् ।
या कोशसङ्गा परहिंसनीया, सा किं समा तत्तपसोऽसिधारा ? ॥ १८८ ॥

श्रीवज्रसेनो भगवान् जिनेन्दु–र्ध्यानं श्रितः शुक्लमथान्तिमं सः ।
पदं प्रपेदे परमं सुरेन्द्र–परम्पराक्लृप्तमहप्रपञ्चः[1][2] ॥ १८९ ॥

भव्याम्बुजन्मप्रतिबोधकारी, तमोऽपहारी रविवद् विहारम् ।
श्रीवज्रनाभो जनयाम्बभूव, करैरिवर्षिप्रवरैः परीतः ॥ १९० ॥

खेलादिलब्धिवर्णनम्

योगाभियोगप्रभवप्रभावात्, खेलादिलब्धीः खलु लेभिरे ते ।
वर्षाब्दवर्षाद् व्रततीविशेषान्, क्षितिप्रदेशा इव संयतेशाः ॥ १९१ ॥

क्षमावतां श्लेष्मलवेन[3] तेषां, श्लिष्टानि कुष्ठामयवद् वपूंषि ।
सद्यः सुवर्णानि भवन्ति सिद्ध–चूर्णेन ताम्राणि यथा क्षणेन ॥ १९२ ॥

कर्णा-ऽक्षि-कायप्रभवो मलस्तु, कस्तूरिकामोदसहोदरत्वम् ।
तेषामृषीणामकरोत् सरोग–रोगापहारित्वमधारयच्च ॥ १९३ ॥*

तेषां वपुःस्पर्शनमात्रतोऽपि, रुजः प्रणेशुः सरुजां जनानाम् ।
सज्जाङ्गुलीमन्त्रविवर्त्तमात्राद्, यथाऽभितः कुण्डलिमण्डलानि ॥ १९४ ॥

जीमूतमुक्तं सरिदादिगं[4] वा, तदङ्गसङ्ग[5]प्रगुणं पयोऽपि ।
वियोजयामास रुजोऽङ्गभाजां, पीयूषपूरो गरलावलीवत् ॥ १९५ ॥

तेषां वपुःस्पर्शपरैर्मरुद्भि–र्विषादिदोषा विलयं समीयुः ।
प्रावृट्प्रमत्तोदितवारिवाह–वारिप्रवाहैरिव दावदाहाः ॥ १९६ ॥

तस्यर्षिवृन्दस्य विषेण मिश्र–मन्नादि पात्रे वदने प्रविष्टम् ।
किलामृताक्ते स विषत्वमौज्झद्, बोधक्रमे मानसवत् कुबोधम् ॥ १९७ ॥

दूरेण तेषां श्रमणेश्वराणां, स्वाध्यायवाणी श्रवणाञ्जनस्य ।
बाधा विषव्याधिमवाप नाशं, सिंहस्य नादात् करिणां घटेव ॥ १९८ ॥*

दन्ताश्च केशाश्च नखाश्च तेषां, समग्रमप्यङ्गभवं तथाऽन्यत् ।
भैषज्यभावं भजति स यद्व–न्मणित्वमब्दाम्बु तदाकरेषु[6] ॥ १९९ ॥

---

१ उत्सवप्रसारः । २ क–'प्रपञ्चम्' । ३ क–'भवेन' । ४ नद्यादिजलम् । ५ मुनिदेह-सङ्ग० । ६ रत्नाकरेषु ।

कर्त्तुं तथा मूर्त्तिमणीयसीं स्वां, क्षमा भवन्ति स्म महर्षयस्ते ।
अलं यथा सञ्चरणाय हार-मुक्ताऽन्तराले गुणवद् बभूवुः ॥ २०० ॥
महत्तमीकर्त्तुममी समर्थ-तमास्तथा सन्मुनयः स्वमङ्गम् ।
यथाऽरुचन् खे सुरमुक्तपुष्पो-त्करैरिवोडुप्रकरैर्वृतास्ते ॥ २०१ ॥
वपुर्लघीयस्त्वमथोज्झितानां, तत्कर्त्तुमेषामजनिष्ट निष्ठा ।
यदुल्ललङ्के तृणतूलवायु-र्वनीपकानामपि लाघवानि ॥ २०२ ॥
चक्राणि वज्राणि च पाणिभिर्ये, धुन्वन्त्यहो तैरपि चक्रिशक्रैः ।
सह्यानया साऽऽविरभूद्मीषां, वपुर्गरिम्णः करणाय शक्तिः ॥ २०३ ॥
सा प्राप्तिशक्तिः प्रससर्प तेषां, पृथ्वीस्थिता एव यथाऽङ्गुलीभिः ।
भृशं स्पृशन्ति स्म सुखं सुखेन, ते मेरुशृङ्गग्रहतारकादीन् ॥ २०४ ॥
प्राकाम्यशक्तिः प्रससार सारं, तेषां भुवीवाप्सु गतिर्यथाऽऽसीत् ।
तथा पृथिव्यामपि पाथसीव, बभूवुरुन्मज्जनमज्जनानि ॥ २०५ ॥
तपःप्रभावेण यतीश्वराणां, तदीश्वरत्वं विललास तेषाम् ।
ते येन चक्रित्रिदशेनसेना-समृद्धतां स्वस्य विधातुमीशाः ॥ २०६ ॥
तस्किञ्चिदेषामृषिपुङ्गवानां, वशित्वसामर्थ्यमुपाजगाम ।
क्रूरस्वभावान्यपि येन जन्तु-जातानि जातानि भृशं वशानि ॥ २०७ ॥
तपोभृतामप्रतिघातिनी सा, शक्तिस्तथा व्यक्तिमियाय तेषाम् ।
धरस्य मध्येऽपि यथैव रन्ध्रे, यथा न यातं प्रतिघातमापत् ॥ २०८ ॥
अनाहता काऽपि तपोधनानां, समृद्धिरन्तर्द्धिविधे बभूव ।
अदृश्यरूपप्रसरो यथाऽऽसीत्, सदागतीनामिव सर्वतोऽपि ॥ २०९ ॥
तेषां तथा कामकथा रिपूणां, सा कामरूपित्वकलोल्ललास ।
यथा जगत् पूजयितुं समर्थाः, स्वरूपवर्यैर्विविधप्रकारैः ॥ २१० ॥

बीजबुद्धित्वादीनां स्वरूपम्

सुज्ञानजीवातुजितेन्द्रियाणां, तद्बीजबुद्धित्वमभूद् यतीनाम् ।
एकार्थबीजादजनिष्ट येना-ऽनेकार्थबीजप्रकरप्ररोहः ॥ २११ ॥
तत्कोष्ठबुद्धित्वमदीपि तेषां, येऽर्थाः श्रुताः प्राक् स्मरणं विना ते ।
यतः स्फुरन्ति स्म तथा स्वरूपा-धान्यानि कोष्ठप्रहितानि यद्वत् ॥ २१२ ॥

१ याचकानाम् । २ इनः-स्वामी । ३ पर्वतस्य । ४ गमनम् । ५ अन्तर्द्धानविधे । ६ वायूनाम् । ७ समूहैः ।

आद्यस्थितान्मध्यगतादथान्त्य-श्रिताच्छ्रुतादेकपदादपि स्यात् ।
ग्रन्थार्थबोधः सकलोऽपि यस्मात्, पदानुसारित्वमभूत् तदेषाम् ॥२१३॥
उद्धृत्य वस्तु स्फुटमेकमन्त-र्मुहूर्त्तमात्रेण समर्थतायाः ।
श्रुताम्बुराशेरवगाहनाय, मनोबलाढ्या मुनयोऽभवंस्ते ॥ २१४ ॥
तद्वाग्बलित्वं विललास तेषा-मन्तर्मुहूर्त्तेन यतो यतीन्द्राः ।
ते मातृकामात्रपरिक्रमेण, श्रुतं समग्रं गुणयाम्बभूवुः ॥ २१५ ॥
तेषां तथा कायबलित्वमासीत्, स्थिरां चिराय प्रतिमां यथाऽमी ।
प्रपद्यमाना न कदापि पीडां, श्रम-क्लमाभ्यामभिभेजुरेव ॥ २१६ ॥
सर्वेऽप्यजायन्त सुधाऽऽज्यदुग्ध-मध्वाश्रवात्युज्ज्वललब्धिमन्तः ।
पात्रे कदन्नस्य समागतस्य, सुधादिजस्वादसमाश्रयास्ते ॥ २१७ ॥
ते जज्ञिरे साधु तथैव दुग्ध-सुधाऽऽज्यमध्वाश्रविणो यतीन्द्राः[1] ।
सत्त्वेषु दुःखैर्विधुतेषु दुग्धा-दीनां परीणामकिरा गिरा च ॥ २१८ ॥
बभूवुरक्षीणमहानसर्द्धि-प्रवृद्धशोभा भृशमक्षयेण ।
अन्नस्य पात्राश्रयिणोऽल्पकस्या-प्यनल्पसाधुष्वपि कल्पनेन ॥ २१९ ॥
जिनेश्वराणामिव देशनोर्व्यां, स्वल्पप्रदेशेऽपि शरीरभाजाम् ।
सङ्ख्यातिगानां सुखसंश्रयेण, विरेजुरक्षीणमहालयास्ते ॥ २२० ॥
एकेन ते केनचिदिन्द्रियेण, परेन्द्रियार्थप्रतिलम्भनेन ।
विरेजुरुच्चैः प्रतिलब्धभिन्न-श्रोतःसुलब्धिप्रबलप्रभावाः ॥ २२१ ॥
जङ्घाप्रमोल्लङ्घ्यभवार्णवानां[2], जङ्घापुरश्चारणलब्धिरेषाम् ।
साऽऽसीद् ययैकोत्पतनेन यातुं, द्वीपं समर्था 'रुचका'ऽभिधानम् ॥२२२॥*
ततो वलन्तो 'रुचकात्' तु 'नन्दी-श्वरे'ऽलमेकोत्पतनादुपैतुम् ।
पुनर्द्वितीयोत्पतनेन तस्माद्, यतो गतास्तत्र समाययुस्ते ॥ २२३ ॥+
ऊर्ध्वं तु गत्यां सुरशैलमौलि-धृतालयं पाण्डुकनामधेयम् ।
उद्यानमेकोत्पतनेन गन्तुं, तेषां क्षमत्वं समभून्मुनीनाम् ॥ २२४ ॥
ततः समेतुं वलितास्तदेको-त्पातात् क्षमा 'नन्दन'काननं ते ।
भूयो द्वितीयोत्पतनेन पूर्वो-त्पातक्षितिं प्राप्नुमलं बभूवुः ॥ २२५ ॥
विद्यापुरश्चारणलब्धितस्ते, त्वेकेन पूर्वोत्पतनेन गन्तुम् ।

---

१ ख-'यतीशाः' ।　　२ जङ्घाप्रमाणोल्लङ्घ्यसंसारसमुद्राणाम् ।

क्ष्मा 'मनुष्योत्तर'पर्वताग्रं, परेण 'नन्दीश्वर'माप्तुमासन् ॥ २२६ ॥
सम्प्राप्तुमेकोत्पतनेन तस्मात्, क्ष्मास्तु पूर्वोत्पतनावनीं ते ।
तथा तिरश्चीनगतिक्रमेण, गतागतेषूर्द्ध्वमपि क्ष्मास्ते ॥ २२७ ॥
आशीविषर्द्धिश्च बभूव तेषां, स्राङ्[1] निग्रहा-ऽनुग्रहयोः समर्थाः ।
तेषां प्रभूता अपि लब्धयोऽन्याः, प्रादुर्बभूवुर्भुवनोत्तमानाम् ॥ २२८ ॥*
न लब्धिसिद्धिप्रभवं फलं ते, स्पृहाविमुक्ता जगृहुः कदापि ।
स्वैरं सरस्यामपि किं लसन्त-स्तृष्णाविहीनाः सलिलं पिबन्ति ? ॥ २२९ ॥

वज्रनाभमुनेर्विंशतिस्थानकानामाराधनम्

इतश्च तीर्थङ्करनामगोत्र-कर्मार्जयामास विनिर्जितात्मा ।
श्रीवज्रनाभो भगवानपीति, स विंशतिस्थानविधानधन्यः ॥ २३० ॥
तत्रार्हतां तत्प्रतिमाततीनां, यत् पूजनं यत् स्तवनं वरार्थैः ।
अवर्णवादप्रतिषेधनं यत्, स्थानं तदार्हन्त्यनिमित्तमेकम् ॥ २३१ ॥
प्रभावना सिद्धगणस्य सिद्धि-स्थानेषु 'सम्मेत'नगादिकेषु ।
तथा यथावस्थितसिद्धभाव-सङ्कीर्त्तनं तद् गदितं द्वितीयम् ॥ २३२ ॥
बाल्यस्थरोगाकुलशैक्षमुख्य-तपोभृतां नित्यमनुग्रहो यत् ।
सिद्धान्तवात्सल्यमनारतं तत्, स्थानं तृतीयं गदितं गरिष्ठैः ॥ २३३ ॥
शुद्धान्नपानौषधवस्त्रमुख्य-विश्राणनादञ्जलियोजनाच्च ।
अतुच्छवात्सल्यकृते गुरूणां, स्थानं चतुर्थं कथितं मुनीन्द्रैः ॥ २३४ ॥
भवन्ति ये विंशतिसङ्ख्यवर्ष-पर्यायिणः षष्टिसमायुषोऽथ ।
तुर्याङ्गधुर्याः[2] स्थविरास्त्रिधैषु, भक्तिस्तु तत् पञ्चममामनन्ति ॥ २३५ ॥
बहुश्रुता ये स्फुटमात्मनोऽर्थ-व्यपेक्षया स्युर्व्रतिनां वतंसाः ।
तेष्वन्नवस्त्रप्रभृतिप्रदानं[3], वात्सल्यमेतत् प्रवदन्ति षष्ठम् ॥ २३६ ॥
अत्यन्तमुत्कृष्टतपःपराणां, व्रतीश्वराणां परिकल्पते यत् ।
विश्रामणादानपरेण भक्ति-र्वात्सल्यमेतत् किल सप्तमं स्यात् ॥ २३७ ॥
यद् द्वादशाङ्गे सततं श्रुतेऽपि, प्रतन्यते प्रश्नसुवाचनाद्यैः ।
सूत्रात् तथाऽर्थाद् द्वितयाच्च सम्यग्, ज्ञानोपयोगो हि तदष्टमं स्यात् २३८

---

१ सत्वरम् । २ समवायाङ्गधारिणः । ३ क-'दानप्रभृतिप्रशस्तं' ।

शंँकादिपञ्चाद्भुतदोषमुक्तं, स्थैँर्यादिपञ्चोरुगुणप्रपञ्चम् ।
शँमादिपञ्चस्फुटलक्षणाङ्कं, सम्यक्त्वमुक्तं नवमं मुनीन्द्रैः ॥ २३९ ॥
सज्ज्ञान-सद्दर्शन-सच्चरित्र–भावोपचारैश्च चतुष्प्रकारैः ।
स्वसेवकानां विनयः कुकर्म–ततेर्विनेता दशमं मतं तत् ॥ २४० ॥
आवश्यकेषु प्रतिघस्रमिच्छा–मिथ्याक्रियाद्येषु गुरुप्रयत्नः ।
योगेष्वतीचारविवर्जनं यत्, स्थानं तदेकादशमामनन्ति ॥ २४१ ॥*
गुणेष्वहिंसादिषु यत् समित्या–दिकेषु मूलेषु तथोत्तरेषु ।
यत्नादतीचारनिवारकत्वं, तद् द्वादशं स्थानमुदाहरन्ति ॥ २४२ ॥
प्रमादमुच्चैः परिहृत्य दूरे, क्षणे क्षणे यत् तु लवे लवेऽपि ।
सद्ध्यानसन्धानविधानमेव, त्रयोदशं स्थानमिदं वदन्ति ॥ २४३ ॥
नित्यं तपःकर्म कुकर्ममर्म–व्यथाकरं यत् क्रियतेऽतितीव्रम् ।
अँबाधया स्वान्तशरीरयोस्त–च्चतुर्दशं स्थानमुशँन्ति दक्षाः ॥ २४४ ॥
तपःप्रपन्नेषु परं क्रियेत, मुदा यदन्नादिकसंविभागः ।
मनोवचःकायविशुद्धधन्यै–स्तत् स्थानकं पञ्चदशं दिशन्ति ॥ २४५ ॥
आचार्यमुख्येषु दशस्वतीव–भक्त्या-ऽन्न-ऽपानाऽशनदानमुख्यैः ।
निर्वेदहीनं करणेन वैय्या–वृत्तस्य तत् षोडशमामनन्ति ॥ २४६ ॥*
तत् स्थानकं सप्तदशं स्मृतं यत्, क्रियेत सङ्घस्य चतुर्विधस्य ।
अपायसम्भारनिवारणेन, मनःसमाधिश्च समुन्नतिश्च ॥ २४७ ॥

---

१ शङ्का-काङ्क्षा-विचिकित्सा-मिथ्यादृष्टिप्रशंसा-तत्संस्तवेति सम्यक्त्वस्य पञ्च दूषणानि ।
२ स्थैर्य-प्रभावना-भक्ति-जिनशासनकौशल-तीर्थसेवेति सम्यक्त्वस्य पञ्च भूषणानि ।
३ शम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्येति सम्यक्त्वस्य पञ्च लिङ्गानि । एतत्सूचनमकारि कविवरैः ३९तमे पृष्ठे । ४ उक्तं च अनुयोगद्वारे ११८तमे सूत्रे—

"इच्छा १ मिच्छा २ तहक्कारो ३ आवस्सिया ४ य निसीहिया ५ ।
आपुच्छणा ६ य पडिपुच्छा ७ छंदना ८ य निमंतणा ९
उवसंपया १० य काले सामायारी भवे दसविहा उ ।"
[ इच्छाकारो मिथ्याकारस्तथाकारः आवश्यकी च नैषेधिकी ।
आपृच्छना च प्रतिपृच्छना छन्दना च निमन्त्रणा ।
उपसम्पदा च काले सामाचारी भवेद् दशविधा तु ]

एतत् विद्यते विचारसारे २४९–२५०तमगाथासार्धरूपेण
५ क–'आबाधया' । ६ ख–'कथयन्ति' ।

सूत्रा-ऽर्थयोस्तद् द्वितयस्य वाऽथ, यत्नादपूर्वस्य दिने दिनेऽपि ।
विरच्यते यद् ग्रहणं गुरुभ्यः, स्थानं तदष्टादशमाहुरार्याः ॥ २४८ ॥
सदा समुद्भासन-वासनाभ्या-मवर्णवादप्रतिषेधनेन ।
श्रुतस्य भक्तिर्यदहर्निशं त-देकोनविंशं समुदाहरन्ति ॥ २४९ ॥
क्रियेत विद्या-कविता-विवाद-निमित्तसद्धर्मकथादिभिर्यत् ।
[2]प्रभावना श्रीजिनशासनस्य, तत् स्थानकं विंशमुशन्ति विज्ञाः ॥ २५० ॥
एतेषु तीर्थङ्करनामकर्म-कृते भवत्येकमपि प्रकृष्टम् ।
श्रीवज्रनाभो भगवानमीभिः, स्पष्टैः समग्रैरपि तद् बबन्ध ॥ २५१ ॥

बाहु-सुबाहु-पीठ-महापीठादीनां वैयावृत्त्यादिवर्णनम्

व्रतीश्वराणां विततान वैया-वृत्त्यं तथा बाहुयतिर्यतात्मा ।
उपार्जयामास स चक्रवर्त्ति-भोगप्रदं कर्म यथा प्रथीयः ॥ २५२ ॥
सुबाहुना साधुवरेण साधु-विश्रामणां संसृजता यतीनाम् ।
उपार्जितं बाहुबलं तदग्रे, यश्चाबलः सोऽपि महाबलोऽभूत् ॥ २५३ ॥
श्रीवज्रनाभो भगवान् सभायां, धन्याविमौ साधुवराविती मौ ।
बाहुं सुबाहुं प्रशशंस वैया-वृत्त्येन विश्रामणया मुनीनाम् ॥ २५४ ॥*
पीठो महापीठमुनिश्च तौ तु, मिथः सदाऽऽलोचयतामथेति ।
सदैव यः स्यादुपकारकारी, स एव विश्वे स्पृशति प्रशंसाम् ॥ २५५ ॥
सिद्धान्तशुद्धाध्ययनावधानौ, सद्ध्यानसन्धानधृतानुबन्धौ ।
वृथा स्तुतां को ऽनुपकारिणौ [3]नौ, स्वार्थं विना न क्वचिदादरः स्यात् २५६
ईर्ष्याकृतं दुष्कृतमित्युदग्रं, तयोरनालोचयतोश्चिराय ।
कर्माभवत् स्त्रीत्वनिबन्धि माया-मिथ्यात्वजं संयमशालिनो [4]हीं २५७
ते पूर्वलक्षाणि चतुर्दशेति, पञ्चाप्यतीचारविवर्जितानि ।
प्रपालयन्ति स्म षडप्यखण्ड-माखण्डलस्तुत्यपदा व्रतानि ॥ २५८ ॥

---

१ कथयन्ति । २ तत्कर्तृपरत्वे उल्लेखोऽयं सम्यक्त्वसप्ततौ—
पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी ५ य ।
विज्जा ६ सिद्धो य ७ कवी ८ अट्ठेव पभावगा भणिया ॥
[ प्रावचनी धर्मकथा वादी नैमित्तिकः तपस्वी च ।
विद्यासिद्धः च कविः अष्टैव प्रभावका भणिताः ॥ ]
३ नौ-आवयोः । ४ खेदे ।

षण्णामपि सर्वार्थसिद्धौ गमनम्

संलेखनाद्वयमथ प्रथमं प्रपद्य
ते पादपोपगमनानशनाद् विपद्य ।
'सर्वार्थसिद्धि'मधिगम्य च धर्मवीराः
सर्वेऽप्यमी समभवन् द्युसदोऽहमिन्द्राः ॥ २५९ ॥

॥ इति श्रीजिनदत्तसूरिशिष्यमहाकविचक्रवर्त्तिश्वेताम्बरशिरोमणि(सुललितपदन्यास-राजहंस)विद्वज्जनशीर्षावतंससरस्वतीकण्ठाभरणपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथ-चरिते (नवमवैद्यजीवानन्दभव)दशमाच्युतदेवलोकभव-एकादश-चक्रवर्त्तिश्रीवज्रनाभभव-द्वादशसर्वार्थसिद्धिभवप्रकाशनः

षष्ठः सर्गः समाप्तः ॥ ६ ॥

भङ्क्तुं पञ्चाशु[1] पञ्चाशुगसुभटशरान्[2] पञ्चमुख्यव्रतश्री-[3]
क्रीडासौख्यानि चाप्तुं[4] सममिव समितीः पञ्च संसेवितुं वा[5] ।
आसीद् यः पञ्चमूर्त्तिर्नमिविनमिधृतोर्ध्वासिधाराचतुष्क-
क्रोडान्तक्रान्तकायः स हरतु दुरितान्याद्यतीर्थङ्करो वः ॥१॥[6]

ब्रूमः किमु स्फटिकदर्पणदर्पहारि
श्रीपद्ममन्त्रिहृदयस्य सुनिर्मलत्वम् ।
मुक्तिस्थिता अपि यतोऽत्र जगत्त्रयार्च्या-
स्तीर्थङ्कराः प्रतिदिनं प्रतिबिम्बितास्ते ॥ २ ॥

ग्रन्थाग्रं श्लोकसङ्ख्या ॥ ३६५ ॥

अमरत्वं बुधाः प्रापु-र्निपीयाऽमृतमुत्तमम् ।
भवता तत् पुनर्लब्ध-मुद्वस्य वचनामृतम् ॥ १ ॥[10]

---

१-२ धनुश्चिह्नान्तर्गतोऽयं पाठः क-प्रतौ नास्ति ।

३ एतन्नामानि विद्यन्ते निम्नलिखिते पद्ये—
"अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥"

४ कामसुभट० । ५ पञ्चमहाव्रत० । ६ क-'वाऽऽप्तुं' । ७ स्रग्धरा । ८ क-'क्रमः' । ९ अमरचन्द्रसूरिणा । १० ख-प्रतिगतोऽयं श्लोकः प्रक्षिप्त इति प्रतिभाति ।

## सप्तमः सर्गः ७

श्रिये श्रीवृषभः सोऽस्तु, स्थानकं ज्ञानशाखिनाम् ।
यस्योपकण्ठे चिकुर–श्रेणिर्दूर्वावणायते[1] ॥ १ ॥[2]

इतो 'जम्बू'द्वीपे प्रत्यग्–'विदेहे'ष्व'ऽपराजिता' ।
पुर्यस्ति स्वस्तिधुर्यश्रीः, शक्रपुर्यपराजिता ॥ २ ॥

स्तेनस्त्रैणाश्रुसिक्तायाः, स्फीताया नीतिवीरुधः ।
पुष्पगुच्छा इवाट्टेषु, यत्र मुक्तोत्करा बभुः ॥ ३ ॥

यत्र स्वस्तिकपङ्क्तिस्था, मुक्ता भान्ति स्म वेश्मसु ।
अन्तर्द्रव्योष्मणा वेश्म–लक्ष्मीणां स्वेदबिन्दुवत् ॥ ४ ॥

तस्यामीशानचन्द्रोऽभू–चन्द्रोज्ज्वलयशा नृपः ।
प्रतापतपनध्वस्त–समस्तरिपुतामसः ॥ ५ ॥

यद्वामवामनेत्राणां[3], नेत्राणां वीक्षणाद् वने ।
लज्जमाना गलन्मानाः, कुरङ्गत्वं मृगा दधुः ॥ ६ ॥

यद्वैरिपुर[4]वेश्मानि[5], प्रोषितस्वामिदुःखतः ।
शङ्के तपस्वितां भेजु–र्लोलद्वल्लिजटाघटाः ॥ ७ ॥

श्रेष्ठी श्रेष्ठगुणज्येष्ठो, गरिष्ठो धर्मकर्मभिः ।
तत्र चन्दनदासोऽभूद्, वाचा दासितचन्दनः ॥ ८ ॥

तस्य प्रशस्यमहिमा, तनयो विनयोज्ज्वलः ।
जज्ञे सागरचन्द्रः श्री–रागसागरचन्द्रमाः ॥ ९ ॥

मतिलीलावतीकेलि–कानने तत्र[6] तेनिरे ।
कलाभिः कलितोल्लासा, विलासाः प्रगुणैर्गुणैः ॥ १० ॥

स्वच्छाशयस्य तस्यासन्, परोपकृतये गुणाः ।
रत्नाकरस्य[7] रत्नानि, भुवनस्य विभूषणम् ॥ ११ ॥

महाजनार्त्तिं संहर्तुं, नृदेवं सेवते स्म सः ।
विश्वसम्प्रीणनायेव, पयोवाहः पयोनिधिम् ॥ १२ ॥

---

१ दूर्वानामकतृणस्य वनमिवाचरति । २ 'अनुष्टुप्'छन्दसि ६८९तमपर्यन्तानि पद्यानि ।
३ मनोहरमहिलानाम् । ४ ख–'नगरावासाः' । ५ गृहाणि । ६ सागरचन्द्रे । ७ समुद्रस्य ।

असौ पुरस्य सङ्कल्प-कल्पनैः कल्पशाखिवत् ।
नन्दनस्येव सुमनो, नन्दनोऽजनि मण्डनम् ॥ १३ ॥

वसन्तस्यागमनम्

तत्रान्यदा धरित्रीन्दौ, पर्षदं प्रतिपेदुषि ।
नृपद्वारे पपाठेति, प्रोच्चैर्मङ्गलपाठकः ॥ १४ ॥
[1]विकासिपुण्डरीकश्रीः, कामाज्ञावशविष्टपः ।
भास्वन्महोभरो राज-न्नृ[2]तुराजो विजृम्भते ॥ १५ ॥
पल्लवैर्नवरागेव, सकटाक्षेव षट्पदैः ।
हसतीव स्मितैः पुष्पै-र्वसन्तागमनेवनी ॥ १६ ॥
मञ्जरीमिषतो मा[3]र-स्कन्धावारर्महार्थितान्[4] ।
सहकारतरुः सज्जी-चकार स्फारचामरान्[5] ॥ १७ ॥
स्मेरपत्रक्र[6]मकरा, कोकिलाकोमलध्वनिः ।
आरामश्रीस्तव स्वामिन् !, सविभ्रमवयोऽञ्चिता ॥ १८ ॥
विकासिकुसुमा स्नाता, मकरन्दरसैरसौ ।
सम्भाविता त्वया भूप !, सफलीभवति ध्रुवम् ॥ १९ ॥-युग्मम्

वसन्तक्रीडार्थमुद्यानं प्रति गमनम्

श्रुत्वेति नृपतिः प्रीतः, प्र[7]तीहारमिदं जगौ ।
प्रातः पौराः प्रयान्त्वस्म-दुद्यानमिति घोष्यताम् ॥ २० ॥
त्वयाऽप्येतव्यमित्युर्वी-पतिना श्रेष्ठिनन्दनः ।
समादिष्टः स्वयं हृष्टो, निजं धाम जगाम सः ॥ २१ ॥
अशोकदत्तमित्राय, श्रेष्ठिपुत्रो [8]विशांपतेः ।
तमादेशं समादिक्षन्, मित्रे गोप्यं न किञ्चन ॥ २२ ॥
पौरैर्वृतो द्वितीयेऽथ, वासरे नरवासवः ।
अलञ्चक्रे तमारामं, वसन्तः कुसुमैरिव ॥ २३ ॥
अशोकदत्तमित्रेण, संयुतः श्रेष्ठिनः सुतः ।
अह्नेवाहर्पतिर्व्योम, तमारामं समागमत् ॥ २४ ॥

---

१ ख-'विकाशि०' ।　२ वसन्तः ।　३ क-'नारं' ।　४ उत्सवार्थं प्रार्थितान् ।
५ क-'महार्पितान्' ।　६ चरणहस्ता ।　७ क-'प्रतिहारं' ।　८ नृपतेः ।

तत्र पुष्पोच्चयप्रेङ्खा–गीतनृत्यादिखेलनैः ।
खेलन्ति स्म सुखं लोकाः, कुसुमेषुवशंवदाः ॥ २५ ॥
न स वृक्षो न सा प्रेङ्खा, न तत् कुञ्जं न सा लता ।
यत्र क्रीडारसा नासन्, कामिनः कामिनीसखाः ॥ २६ ॥
इति कौतुककेलीभिः, सङ्कुले सकले जने ।
कस्मादकस्मादेकस्मा–दंह्रिपव्यूहगह्वरात् ॥ २७ ॥
त्रायध्वं त्रायध्वमहो, जना ! धावत धावत ।
इत्युत्तस्थौ भयभ्रान्त–तरुणीकरुणारवः ॥ २८ ॥–युग्मम्
प्रत्यासन्नतयाऽऽकर्ण्य, तं कोलाहलमाकुलम् ।
किं किमेतदित्यधावत्, सागरः साहसाकरः ॥ २९ ॥

बन्दिभ्यः प्रियदर्शनामोचनम्

स कन्यां पूर्णभद्रस्य, श्रेष्ठिनः प्रियदर्शनाम् ।
धृतां बन्दिभिरद्राक्षी–दब्दैरिन्दुकलामिव ॥ ३० ॥
स श्रेष्ठिनोऽङ्गभूर्वेगा–दाक्रम्यैकस्य बन्दिनः ।
हस्तमामोट्य हठतो–ऽग्रहीत् तच्छक्तिवत् क्षुरीम् ॥ ३१ ॥
इत्यालोक्य बलं तस्मात्, पलायन्ते स्म बन्दिनः ।
तां मुक्त्वा चन्दनलता–मिव सर्पा गरुत्मतः ॥ ३२ ॥
ररक्ष दक्षो बन्दिभ्यः, सागरः प्रियदर्शनाम् ।
उष्णांशुरन्धकारेभ्यो, दुर्धरेभ्यो धरामिव ॥ ३३ ॥
विश्वम्भराविभुः क्षुद्रो–पद्रवेभ्यः प्रजामिव ।
सदाचारपरो दुष्टा–चारेभ्यः स्वसभामिव ॥ ३४ ॥
सन्देहादिकदोषेभ्यो, विद्यां विद्यागुरुर्यथा ।
विवेकबुद्धिं मिथ्यात्व–कुग्रहेभ्यो गुरुर्यथा ॥ ३५ ॥–विशेषकम्
यः कश्चिदेष तारुण्य–चारुः कारुण्यपुण्यधीः ।
परोपकारी परुष–पौरुषः पुरुषाग्रणीः ॥ ३६ ॥
क्रीता त्राणोपकारेण, साऽहं साहसिनाऽमुना ।

१ दोल० । २ मदनवशवर्तिनः । ३ क–'त्रस्त'– ।

पतित्वेन ततस्त्राता, ममातः परमप्यसौ ॥ ३७ ॥
[1]चित्तेन चिन्तयन्तीति, प्रीतिपल्लवितेन[2] सा ।
[3]अगादगारं सारङ्ग–दर्शना प्रियदर्शना ॥ ३८ ॥–विशेषकम्

सागरान्तरनिर्मग्न–मनःकृष्टिश्रमाऽसहा ।
[5]पौर्णभद्री किलापूर्णा, तूर्णं प्रस्वेदबिन्दुभिः ॥ ३९ ॥
[6]सम्भ्रान्तस्तान्तसङ्क्रान्तं, कान्तं चन्दननन्दनम् ।
बिभ्राणा तद्भरेणेव, सा चचार शनैः शनैः ॥ ४० ॥
जातसागरचन्द्रोरु–स्नेहसागरजागराम् ।
क्षिपन्तीन्दुरुचिस्वच्छां, दृशं पश्चात् पुनः पुनः ॥ ४१ ॥–विशेषकम्

तद् दृगन्तेक्षणैस्तीक्ष्णैः, समुत्कीर्णामिवाशये ।
तां धरन् सागरो धाम, जगाम सुहृदा सह ॥ ४२ ॥
एनं नन्दनवृत्तान्तं, चन्दनः श्रेष्ठिनामिनः ।
ज्ञातवानिति माध्यस्थ्याद्, ध्यातवानिति शुद्धधीः ॥ ४३ ॥
विशुद्धामतिशुद्धस्य, युक्तोऽधिप्रियदर्शनाम् ।
रागः सागरचन्द्रस्य, चन्द्रस्येवाभिचन्द्रिकाम् ॥ ४४ ॥
तन्न युक्तं स यत् तेने, तदा बन्दिषु पौरुषम् ।
यन्नैव वणिजा कार्यो, विक्रमः सुभटक्रमः ॥ ४५ ॥
किन्त्वस्याशोकदत्तेन, निन्द्या रङ्गति सङ्गतिः ।
विधोर्विधुन्तुदेनेव, क्रूरेणाक्रूरताजुषः ॥ ४६ ॥
इति ध्यात्वा धियां धाम, सामवाक्यैः सुधामयैः ।
नृपं मन्त्रीव [9]संरब्धं, नन्दनं चन्दनोऽवदत् ॥ ४७ ॥

सागराय पित्रोरनुशासनम्

वत्स ! स्वच्छमते ! वेत्सि, स्वयं शास्त्रार्थनिश्चयम् ।
व्यवहाररहस्यं च, त्वं तथाऽप्यनुशास्यसे ॥ ४८ ॥

---

१ ख–'चेतसा'। २ क–'पल्लवेन'। ३ गृहमगच्छत्। ४ मृगनयना। ५ पूर्णभद्रस्य तनया। ६ विलोक्यतां बाहुल्यमनुनासिकानाम्। ७ प्रभुः। ८ ख–'वानथ'। ९ प्रकोपितम्।

वृद्धवाक्याङ्कुशै रुद्धः, कुधीः सन्तिष्ठते न यः ।
स मत्त इव [१]मातङ्गः, स्वस्यान्यस्यापि नाशकृत् ॥ ४९ ॥
कलाकौशलमेव स्याद्, वणिजां वत्स ! जीवनम् ।
न तु प्रचण्डदोर्दण्ड–खण्डितद्वेपि पौरुषम् ॥ ५० ॥
सहसा साहसेनाति–क्रम्यते यन्महस्विनः ।
मतं पतङ्गकस्येव, प्रदीपाक्रमणं हि तत् ॥ ५१ ॥
अविमृश्य स्वपरयोः, शक्तिमुत्तिष्ठते तु यः ।
सोऽब्दशब्दे [२]शरभवत्, [३]प्रोल्ललन्नङ्गभङ्गभाक् ॥ ५२ ॥
शास्त्रैकजीविनो विप्राः, क्षत्रियाः शस्त्रजीविनः ।
भवन्ति वैश्याः शूद्राश्च, कलाकौशलजीविनः ॥ ५३ ॥
कलां कुलागतामेव, सेवमानो जनप्रियः ।
मन्दयानो गजः श्रेयां–स्तुरङ्गस्तु त्वरागतिः ॥ ५४ ॥
श्लाघ्यः कुर्वन् न तत् कर्म, यन्नैवात्मकुलोचितम् ।
करोत्यश्वः किमानन्दं, मन्दं गज इव व्रजन् ? ॥ ५५ ॥
विद्वेषो विक्रमो दानं, लक्ष्मीर्विषयखेलनम् ।
[४]छायां छन्नानि वणिजां, प्रयच्छत्यङ्गनाऽङ्गवत् ॥ ५६ ॥
अनुद्धताऽऽचारवेषै–र्लक्ष्मीरर्ज्या वणिग्जनैः ।
रङ्के राजन्यनुत्सेकैः, छेकैः काकाभिशङ्कनैः (?) ॥ ५७ ॥
अपि हीनकुलः श्रीमान्, [५]सत्क्रमैरेव सेव्यते ।
पश्य [६]द्विजकुलोत्तंसा, हंसाः पङ्कजमाश्रिताः ॥ ५८ ॥
नानुकूलो विधिर्यत्र, धीमतां तत्र का स्पृहा ? ।
किं विनाऽर्क-शशाङ्काभ्यां, वर्तते न रसातलम् ? ॥ ५९ ॥
[७]यन्नैव विधिना सृष्टं, प्रयासस्तत्र कः सताम् ? ।
पृथ्वीपाथो विना नैव, किमु चञ्चन्ति चातकाः ? ॥ ६० ॥

---

१ हस्ती । २ अष्टापदवत् । ३ क–'प्रोल्लभग्न०' । ४ लक्ष्मीं कान्तिं वा । ५ ख–'सत्क्रमैरपि' । ६ पक्षिवंशविभूषणाः । ७ सन्तुल्यतां यदुक्तमभिनन्दकाव्ये–
"यन्नैव विधिना सृष्टं, धीमतां तत्र का स्पृहा ? ।
विना पार्थिवतोयेन, चातकः किं न जीवति ? ॥"

दैवमुल्लङ्घ्य यत् कार्यं, क्रियते फलवन्न तत् ।
सरोऽम्भश्चातकेनात्तं, गलरन्ध्रेण गच्छति ॥ ६१ ॥
अन्तर्धृतगुणैरेव, परेषां स्थीयते हृदि ।
अर्थं समर्थयन्त्येनं, समग्रं कुसुमस्रजः ॥ ६२ ॥
कष्टान्यसहमानानां, गुणारोपः कुतो भवेत् ? ।
वेधबन्धं सहित्वैव, पुष्पालिर्गुणमालिनी ॥ ६३ ॥
रक्तायामपि विश्वासः, कार्यो नार्यां न सर्वथा ।
न बध्नाति दिनान्तेऽलिं, नीलीरागं किमब्जिनी ? ॥ ६४ ॥
वसन् दूरेऽपि तेजस्वी, मदयत्युदितो निजान् ।
दवीयानपि पद्मानि, सूरः पूरयति श्रिया ॥ ६५ ॥
स्वस्य स्वीकुरुते मृत्युं, जनो दानवशंवदः ।
कर्णतालाहतेर्नालि-र्बिभेतीभकपोलयोः ॥ ६६ ॥
किल म्लायन्ति सद्वृत्ता, विपदि स्वोपकारिणाम् ।
भंजन्त्यर्कद्युतेर्ध्वान्ते, तारकाः स्फारकालिमाम् ॥ ६७ ॥
दानशौण्डा न तन्वन्ति, पात्रा-ऽपात्रविचारणाम् ।
कमलं कलहंसेऽपि, मधुपेऽप्यागते समम् ॥ ६८ ॥
उच्चैः सुचरितैरेकः, शोषं दोषः सतां व्रजेत् ।
भुजङ्गीगर्भसन्दर्भ-प्रदः किं न मुदेऽम्बुदः ? ॥ ६९ ॥

सत्सङ्गतेः प्रभावः

अस्मिन्नसारे संसारे, सारं सङ्गः सतां मतः ।
इहामुत्र च येनैष, नानाश्रेयःफलोज्ज्वलः ॥ ७० ॥
प्राज्यैः प्राग्जन्मजैः पुण्यैः, सद्भिः सङ्गोऽङ्गिनां भवेत् ।
भाविन्यागामिनि भवे-ऽद्भुतकल्याणमालिनि ॥ ७१ ॥
स्वर्मणि-द्रुम-गव्योऽपि, चिन्ता-सङ्कल्प-कामदाः ।
एभ्योऽप्यधिकदाताऽसौ, पुनः सङ्गः सतां मतः ॥ ७२ ॥

---

१ क-प्रतौ अतः परं 'तेजस्वी मद'पर्यन्तस्य पाठस्य प्रपातः । २ ख-'त्यज०' । ३ ख-'कान्तिताम्' । ४ ख-'ऽङ्गिनो' ।

सुलभा सौख्यदा लक्ष्मीः, सुलभा सार्वभौमता ।
सुलभा स्वःप्रभुत्वश्री–र्दुर्लभा सङ्गतिः सताम् ॥ ७३ ॥
अस्मिन्नपारे संसारे, भूरिभिः सम्भृता भवैः ।
कुतः क्लेशा विशीर्यन्ते, सतां सङ्गाद्दते द्रुतम् ? ॥ ७४ ॥
म्लानिः स्यान्मलिनासङ्गा–द[२]ङ्ग तेजस्विनामपि ।
घनाघनघटाघट्टाद्, घटते रवि[३]रच्छविः ॥ ७५ ॥
अशुद्धहृदयस्तुच्छ–लक्ष्मीः कुटिलतां व्रजेत् ।
हिमांशुराशु मुञ्चेत, हीयमानः सुवृत्तताम् ॥ ७६ ॥
म[४]लिना[५]तरसं शुद्ध–पक्षः प्रियमपि त्यजेत् ।
कियत् खेलति कासारे, घनासारे सितच्छदः ? ॥ ७७ ॥
अपि तेजस्विनां तेजः, क्षी[६]यते जडसङ्गतेः ।
अधृष्योऽप्यूष्मणा बाढं, निदर्शनमिहानलः ॥ ७८ ॥
क्रूरः स्वीकुरुते सूक्ष्मी–भूयाक्रान्तं पराश्रयम् ।
सर्पः प्रसर्पति स्वैरं, बिले परविलेखिते ॥ ७९ ॥
क्रू[७]राः कारणतो दूरा–न्मधुरारावका[८]रिणः ।
[९]निघ्नान् निघ्नन्ति निर्विघ्नं, मुग्धान् व्याधा मृगानिव ॥ ८० ॥
तत् [१०]तांताऽशोकदत्तो यः, प्रमत्तो मित्रमस्ति ते ।
सोऽत्यन्तकुटिलस्वान्त–स्त्वं नितान्तमृजुः पुनः ॥ ८१ ॥
[११]तद् वत्स ! युवयोः सङ्ग–स्तरङ्गयति मे रतिम् ।
यथाऽहर्नाथ–तमसोर्हंस–वायसयोर्यथा ॥ ८२ ॥
क्रूरस्य वक्रचारस्य, परच्छिद्रप्रसारिणः ।
द्विजिह्वस्य च विश्वासं, सर्पस्येवास्य मा कृथाः ॥ ८३ ॥
इत्युक्त्वा चन्दनस्वा[१२]न्द–सुन्दरे च[१३]न्दने स्थिते ।
चिन्तयामासिवानेवं, चित्ते चन्दननन्दनः ॥ ८४ ॥

---

१ क–'सारे' । २ कोमलामन्त्रणे । ३ कान्तिहीनः । ४ क–'मलिनापूर०' । ५ मलिनप्रास-स्वभावम् । ६ अतः परं ७९तमपद्यपर्यन्तकः पाठप्रपातः क–प्रतौ । ७ क–'क्रूरास्तुरागतो' । ८ ख–धारिणः । ९ स्वाधीनान् । १० हे पुत्र ! । ११ इदं पद्यमपि विशीर्णं क–प्रतौ । १२ ख–'स्वान्त–' । १३ क–'सदने' ।

तातेन [1]विदितो बन्दि-वृत्तान्त इति वेद्म्यहम् ।
अन्यथा कथमीदृक्षा, शिक्षा तदनुगामिनी ? ॥ ८५ ॥
स विमृश्य मनस्येतद्, विनयस्यूतया गिरा ।
विज्ञो विज्ञपयामास, सागरः पितरं प्रति ॥ ८६ ॥
पूज्यैर्यत् किञ्चिदादिष्टं, करिष्याम्येव तत् तथा ।
गुर्वाज्ञाकरणं श्रेयः-सरणं शरणं श्रियाम् ॥ ८७ ॥
पूज्यपादैस्तु यदहं, व्याहृतः सुहृदः कृते ।
किञ्चित् तत्र तथारूपं, विरूपं न निरूप्यते ॥ ८८ ॥
विज्ञप्तमथवा तात !, केनचित् पिशुनेन [2]वः ।
परापवादसंवाद-वावदूकाः खलाः खलु ॥ ८९ ॥
तादृशो वाऽस्तु तद्दोषै-र्दोषवान्न भवाम्यहम् ।
[3]काकान्तिकेऽपि नो कार्ष्ण्यं, राजहंसस्य जायते ॥ ९० ॥
श्रुत्वेति तनयं श्रेष्ठी, जगौ विनयरञ्जितः ।
तथापि सावधानेन, भाव्यं वत्स ! सुधीरसि ॥ ९१ ॥

सागरस्य प्रियदर्शनया सह विवाहः

अथ चन्दनदासेन, पुत्राभिप्रायवेदिना ।
तदर्थमर्थिता पूर्ण-भद्रतः प्रियदर्शना ॥ ९२ ॥
तव पुत्रेण पुत्रीयं, क्रीता प्रागुपकारतः ।
भवत्वेवमिति प्रीत्या, पूर्णभद्रोऽप्यभाषत ॥ ९३ ॥
सुचिरं चिन्तितश्चित्ते, ताभ्यां द्वाभ्यां शुभेऽहनि ।
प्रतेने पितृभिः प्रीतैः, पाणिग्रहमहस्तयोः ॥ ९४ ॥
[4]कर्षकाणां यथा [5]हर्षः, काङ्क्षितादब्दवर्षणात् ।
तथा परिणयादेतौ, मुमुदाते वधू-वरौ ॥ ९५ ॥
परस्परं परप्रेम-रससान्द्रतयाऽऽर्द्रयोः ।
क्रमात् तन्मनसोरैक्यं, जज्ञे मृत्-पिण्डयोरिव ॥ ९६ ॥
निरन्तरस्मरस्मेर-शरसूचीप्र[6]चारतः ।

---

१ क-'विहितो' । २ ख-'च' । ३ काकस्य समीपे । ४ कृषीवलानाम् । ५ क-'वर्षः' । ६ क-'प्रसारतः' ।

स्नेहेन स्यूतयोरासी-दैक्यमेव तदात्मनोः ॥ ९७ ॥
साऽप्यसारा सारसयो-र्वराकी चक्रवाकयोः ।
रति-कन्दर्पयोर्मन्दा, प्रीतिः प्रीतेः पुरस्तयोः ॥ ९८ ॥
रथाङ्गयोर्निशीथिन्यां चन्द्र-चन्द्रिकयोर्दिवा ।
विरहार्त्तिर्भवेत् किन्तु, न नक्तं न दिवा तयोः ॥ ९९ ॥
दिवाऽप्युदित्वरद्योत-दयिताऽऽस्येन्दुदर्शनात् ।
शश्वदुज्जागरो रेजे, सागरः प्रेमसागरः ॥ १०० ॥

प्रियदर्शनया सह अशोकदत्तस्य कुटिलता

अगारे सागरस्याथ, बहिर्यातस्य सोऽन्यदा ।
अशोकदत्तः प्रोन्मत्तः, शून्ये श्वान इवाययौ ॥ १०१ ॥
रहोऽवगम्य तां रम्य-दर्शनां प्रियदर्शनाम् ।
अभ्यधत्ताऽशोकदत्तः, पुष्पचापजचापलः ॥ १०२ ॥
धनदत्तस्य गेहिन्या, सह मन्त्रयते रहः ।
सागरः कारणं तत्र, स्वच्छे ! त्वं वेत्सि किञ्चन ? ॥ १०३ ॥
ऋजुस्वभावाऽभाषिष्ट, सा तं वेत्सि त्वमेव चेत् ।
द्वितीयं हृदयं येन, सर्वदा तेन मन्यसे ॥ १०४ ॥
सूत्रयन्ति विचित्राणि, कार्याणि व्यवसायिनः ।
गुप्ता-ऽगुप्तानि किं तानि, ज्ञापयन्त्यङ्गनाऽग्रतः ? ॥ १०५ ॥
जगादाऽशोकदत्तोऽपि, तन्वि ! सत्यमिदं शृणु ।
यन्मे सुभ्रु ! त्वया कार्यं, त्वद्भर्त्तुरपि तत् तया ॥ १०६ ॥
किं ते कार्यं मयेत्युक्तः, सहजार्जववर्यया ।
प्रियदर्शनयाऽशोक-दत्तः पुनरदोऽवदत् ॥ १०७ ॥
सचेतनस्य कस्य स्या-न्नरस्य सरसस्य न ।
तन्वि ! कार्यं त्वया त्वेकं, नीरसं त्वत्पतिं विना ? ॥ १०८ ॥
तच्छ्रोत्रवज्रसूच्याभं, सञ्चिन्त्यानुचितं वचः ।
सा साक्षेपमभाषिष्ट, सरुषा परुषाक्षरम् ॥ १०९ ॥

---

१ चक्रवाक-चक्रवाक्योः । २ क-'तारकयोः' । ३ मदनातुरः ।

प्रियदर्शनयाऽशोकदत्तस्य तर्जनम्

रे निर्मर्याद ! निर्याहि, निर्याहि गृहतो मम ।
रे धिक् ते चिन्तितं धिक् च, जल्पितं धिक् च साहसम् ॥ ११० ॥
आः पाप ! बालसुहृदं, स्वभावसरलाशयम् ।
विश्वस्तं वञ्चयन्नेवं, किं निर्लज्ज ! न लज्जसे ? ॥ १११ ॥
ऋजुं स्वदारसन्तुष्टं, जन्तुजीवातुवैभवम् ।
मन्नाथमन्यथा जल्पन्, शत्रुस्त्वं मित्ररूपतः ॥ ११२ ॥
परदाररतेर्मित्र–द्रुहो विश्वासघातिनः ।
तवालापोऽपि पापोर्मिः, पापात्मन् ! याहि रे द्रुतम् ॥ ११३ ॥
इत्याक्रुष्टो निकृष्टोऽयं, प्रियदर्शनयाऽऽलयात् ।
मन्दो मन्दाक्ष[1]वैलक्ष्य–विह्वलात्मा विनिर्ययौ ॥ ११४ ॥
भ्रान्तस्वान्तसमुद्भ्रान्त[2]–पापध्वान्तभरादिव ।
स विच्छायः समागच्छन्, सागरेण न्यरूप्यत ॥ ११५ ॥
किमुद्विग्नोऽसि मित्रेति, सागरेण स सादरम् ।
पृष्टो दुष्टः समाचष्ट, सकष्ट इव निःश्वसन् ॥ ११६ ॥
भवेऽत्र भविनां भ्रात–रुद्वेगो नैव दुर्लभः ।
ग्रीष्मेऽङ्गारकृतां तापः, सुदुष्प्रापः कथं भवेत् ? ॥ ११७ ॥
तद्गुह्यरोगवद् दैवात्, किञ्चिदेवोपपद्यते ।
प्रकाशमप्रकाशं वा, यत् कर्त्तुं नैव शक्यते ॥ ११८ ॥
इत्थमुक्त्वा स्थिते तूष्णी–मश्रुमिश्रितलोचने ।
तस्मिन् मायामये च्छाया–हीनश्चान्द[3]निरब्रवीत् ॥ ११९ ॥
प्राकाश्यं वैमनस्यस्य, कारणं चेद् वयस्य ! मे ।
तत् कथ्यतां श्लथ्यतां च, दुःखं मद्वागदानतः ॥ १२० ॥
जगादाऽशोकदत्तोऽपि, त्वयि जीवितजीविते ।
मित्रेऽन्यदपि नो गोप्यं, वृत्तमेतद् विशेषतः ॥ १२१ ॥
मित्र ! त्वमपि जानासि, यदियं जन्ममेदिनी ।
योषा[4] निखिलदोषाणां, यथा कृतघ्नतैनसाम्[5] ॥ १२२ ॥

---

१ लज्जा० । २ उच्छलित० । ३ चन्दननन्दनः । ४ स्त्रियः । ५ पापानाम् ।

सागरोऽप्युज्जगारैवं, कस्या अपि वयस्य ! किम् ।
पतितो रङ्कुवद्[1] व्याघ्याः, सङ्कटे कुटिलभ्रुवः ? ॥ १२३ ॥
अशोकदत्तोऽप्यवद–न्नटः कपटनाटके ।
भ्रातृजायाऽन्वहं भ्रात–र्मां ब्रूतेऽनुचितं वचः ॥ १२४ ॥
अनल्पं जल्प्यमानोऽपि, प्रयाम्यन्यत्र सत्रपः ।
अवज्ञाता स्वयमियं, स्थास्यतीति विचिन्तयन् ॥ १२५ ॥
नित्यं नित्यमियं मां तु, वचोभिः कुटिलोचितैः ।
उद्वेगयत्यनुद्योगं, प्रतोदै[2]रिव गां गलिम्[3] ॥ १२६ ॥
अद्य त्वदालोक[4]कृते, त्वदौकसि गतस्तया ।
असद्वासनया धर्म, इव रुद्धो विरुद्धया ॥ १२७ ॥
आनाययो[5]गतो[6] मीन, इव दीनदशां श्रितः ।
कथञ्चिन्मोचयित्वा स्वं, तद्गृहादहमागमम् ॥ १२८ ॥
अचिन्तयं च विरम–त्येषा न मयि जीवति ।
जीवन्नाहं वचस्तस्याः, कुर्वे तन्मरणं वरम् ॥ १२९ ॥
यद्वा मयि परोक्षे सा, प्रख्यास्यत्यन्यथा पुरः ।
मन्मित्रस्य[7] किमप्यस्यां, सोऽपि विश्वासमेष्यति ॥ १३० ॥
विश्वस्तः सरितेवायं, तया घनरसो[8]ग्रया ।
प्रवाह्य व्यसनाम्भोधौ, पापया पातयिष्यते ॥ १३१ ॥
भावयन्नित्यहं भ्रात–र्भाषितो भवताऽधुना ।
उद्वेगकारणं पृष्टः, स्पष्टतामिदमानयम् ॥ १३२ ॥
उज्जगारातिमन्थे हि, गरलं क्षीरसागरः ।
भेजे श्रुतेऽपि नो क्षोभं, [9]प्रियाऽऽगसि स सागरः ॥ १३३ ॥
निर्व्याजहृदयो व्[10]याज–हार सागरचन्द्रमाः ।
विषादं मित्र ! मा कार्षी–र्योषितां स्थितिरीदृशी ॥ १३४ ॥
[11]चपला चपला नीच–गामिनी च तरङ्गिणी ।

---

१ मृगवत् । २ प्राजनैः । ३ बलवन्तमलसं वृषभम् । ४ तव दर्शनार्थम् । ५ मत्स्यजाल-योगात् । ६ क–'योमतो' । ७ क–'तन्मित्र०' । ८ जल०, पक्षे दृढप्रेम० । ९ पत्न्या अपराधे । १० प्रोवाच । ११ विद्युत् ।

लक्ष्मीश्च क्षणिका योषिद्, दुःशीलेति नवं न हि ॥ १३५ ॥
मा विषादविषादन्त–स्तोषं शोषं समानय ।
त्वमतः परमेतस्या, विस्मर स्मरवैकृतम् ॥ १३६ ॥
शुभा वाऽप्यशुभा वाऽस्तु, तरोस्त्वगिव सा मम ।
छायेव केवलं मैत्री, भूयात् प्रीतिकरी त्वयि ॥ १३७ ॥
[1]अनुनीतः स तेनेति, प्राप पापः परां रतिम् ।
[2]स्वागांस्यन्यत्र संरोप्य, माद्यन्ति हृदि मायिनः ॥ १३८ ॥
तदाप्रभृत्यनुद्गीर्ण–विप्रियः प्रियदर्शनाम् ।
प्रत्यभूत् सागरो [3]गर्भ–[4]सगरः सागरो यथा ॥ १३९ ॥
अन्तर्विरक्तमत्यन्तं, स दक्षः स्वमलक्षयन् ।
सदाऽनुवर्तते सैनां, [5]तत्त्वज्ञ इव [6]संसृतिम् ॥ १४० ॥
तच्चरित्रं कुमित्रस्य, प्रियाय प्रियदर्शना ।
मा भून्मया कृतो भेदो–ऽनयोरिति शशंस न ॥ १४१ ॥
संसारस्फारवैराग्य–सागरः सागरः क्रमात् ।
दीनदानादिसन्मानैः, स्वां पद्मां [7]सँदमानयत् ॥ १४२ ॥
कालेन सागरोऽशोक–दत्तोऽपि प्रियंदर्शना ।
साऽपि प्रापुः परं लोकं, त्रयोऽपि त्रुटितायुषः ॥ १४३ ॥

सागरप्रियदर्शनयोर्युग्मिरूपेणोत्पत्तिः

'जम्बू'द्वीपस्य 'भरत'–याम्यार्द्धे 'सिन्धु'-'गङ्गयोः' ।
'मध्यदेशे'ऽवसर्पिण्या, गतवत्यरकद्वये ॥ १४४ ॥
पल्याष्टमांशशेषे च, तृतीयारे प्रसर्पति ।
युग्मिनावुदपद्येतां, सागर-प्रियदर्शने ॥ १४५ ॥–युग्मम्

कालचक्रस्य भेदप्रभेदपूर्वकं स्वरूपम्

'भरते'षु पञ्चस्वपि, पञ्च'स्वैरावते'ष्वपि ।
वर्षेषु द्वादशारं स्यात्, कालचक्रमिति स्थितिः ॥ १४६ ॥

---

१ प्रसन्नतां प्रापितः । २ निजापराधान् । ३ गर्भे विषं यस्य सः । ४ ख–'सङ्गरः' ।
५ क–'तद्विज्ञ' । ६ संसारम् । ७ सफलामकरोत् ।

कालो द्विधाऽवसर्पिण्यु-त्सर्पिणीभेदतोऽत्र षट् ।
एकान्तसुषमाद्यास्त्व-वसर्पिण्यां भवन्त्यराः ॥ १४७ ॥
चतस्रोऽब्धिकोटाकोट्य, एकान्तसुषमेत्यरः ।
तिस्रस्ताः सुषमा तु स्यात्, ते द्वे सुषमदुःषमा ॥ १४८ ॥
[1]सैका दुष्षमसुषमा, द्विचत्वारिंशता पुनः ।
हीना सहस्रैर्वर्षाणां, दुष्षमा त्वेकविंशतिः ॥ १४९ ॥
वर्षाणां सहस्रास्ताव-न्माना दुष्षमदुष्षमा ।
सागराणां दशेति स्युः, कोटाकोट्योऽवसर्पिणी ॥ १५० ॥
विपरीतैररैरेभि-रुत्सर्पिण्यपि तावती ।
स्यात् कालचक्रमित्यब्धि-कोटाकोट्यो हि विंशतिः ॥ १५१ ॥
अरे तत्रादिमे लोकाः, सर्वे [2]पल्यत्रयायुषः ।
चतुर्थवासराहारा, गव्यूतित्रितयोन्नताः ॥ १५२ ॥
ते वज्रर्षभनाराच-घनसंहननश्रिताः ।
चतुरस्रसुसंस्थानाः, समग्रशुभलक्षणाः ॥ १५३ ॥
सर्वकालं क्रोध-मान-माया-लोभविवर्जिताः ।
सदासुखाः स्वभावेना-धर्मकर्मसमुज्झिताः ॥ १५४ ॥
यथोत्तर'कुरुक्षेत्रे,' तथा तत्रापि युग्मिनाम् ।
सङ्कल्पान् कल्पयन्ति स्म, दशधा कल्पशाखिनः ॥ १५५ ॥
सद्यो हृद्यानि मद्यानि, मद्याङ्गा दधुरर्थिताः ।
अत्युदारा हि दातारः, कालक्षेपं न कुर्वते ॥ १५६ ॥
भृङ्गाः भृङ्गारयन्ति स्म, युग्मिनो [3]भाजनादिभिः ।
वात्सल्यादुत्सवोत्साहे, महेभ्या इव सेवकान् ॥ १५७ ॥
तेनुस्तूर्याणि वर्याणि, तूर्याङ्गास्तत्र युग्मिषु ।
गन्धर्वा इव सभ्येषु, तूर्यत्रितयवेदिषु ॥ १५८ ॥
तत्रोद्द्योतं व्यधुर्दीप-शिखा ज्योतिषका अपि ।
निजान्ववाये[4]ऽनवम-व्यापाराः पुरुषा इव ॥ १५९ ॥

---

१ क-'सैषा' । २ क-'पल्लित्रया०' । ३ क-'भोजना०' । ४ शुभाचाराः ।

माल्यानि युग्मिनां तत्र, चित्राङ्गाः समपूत्रयन् ।
यथेप्सितानि देवानां, 'नन्दना'रामिका[1] इव ॥ १६० ॥
भोज्यैश्चित्ररसैश्चित्रा-स्तत्र युग्मान्यतोषयन् ।
देशान्तरसमेतानि, स्वमित्राणीव सज्जनाः ॥ १६१ ॥
नानारूपाणि मण्यङ्गा, युग्मिनां मण्डनान्यदुः ।
यथेप्सितं यथेशानां, कोशागाराधिकारिणः ॥ १६२ ॥
गेहाकारास्तु गेहानि, मिथुनेभ्यो यथेहितम् ।
चित्राणि सूत्रयन्ति स्म, सूत्रधारा[2] इव क्षणात् ॥ १६३ ॥
ऋतूचितान्यभग्नेच्छ-मनग्ना युग्मिनां ददुः ।
दुकूलान्यनुकूलानि, प्रसन्नाः स्वामिनो यथा ॥ १६४ ॥
एतानप्यन्यानप्यर्थ-सार्थान् कल्पद्रुमाः परे ।
सर्वान् सम्पादयन्ति स्म, ते [3]विश्वमणयो यथा ॥ १६५ ॥
तदा तत्राभवन् भूम्यो, मधुराः शर्करा अपि[4] ।
सदा पीयूषपेयानि, पयांसि सरिदादिषु ॥ १६६ ॥
तत्रारे [5]विरमत्यायु-र्देहसंहननादयः ।
प्रभावाः कल्पवृक्षाणां, व्यरमंश्च क्रमात् क्रमात् ॥ १६७ ॥
अरे द्वितीये मर्त्याः स्युः, पल्योपमयुगायुषः[6] ।
तृतीयदिनभोक्तारो, गव्यूतद्वितयोन्नताः ॥ १६८ ॥
तत्र पूर्वारतः स्वल्प-प्रभावाः कल्पभूरुहः ।
किञ्चिन्माधुर्ययुक्तानि, शर्करोर्वीपयांस्यपि ॥ १६९ ॥
पूर्वारवदिहारेऽपि, हीयमानरसं क्रमात् ।
अम्भोभूमिप्रभृत्यासी-दिक्षुदण्ड इवाखिलम् ॥ १७० ॥
तृतीयारे पुनर्मर्त्या, एकगव्यूतकोन्नताः ।
द्वितीयवासराहारा, एकपल्योपमायुषः ॥ १७१ ॥
क्रमहीनान्यरेऽप्यत्रा-भवन् दुर्जनमैत्र्यवत् ।
कल्पद्रुमहिमा-भूमी-माधुर्या-ऽऽयु-र्वपूंष्यपि ॥ १७२ ॥

---

१ वनपालकाः । २ क-'कारा' । ३ चिन्तामणयः । ४ इवार्थे । ५ क-'विरमत्यास्तु देह०' ६ । द्वयायुष्काः ।

चतुर्थारे पुनः प्राच्य-प्रभावरहिते क्रमात् ।
पूर्वकोट्यायुषो मर्त्याः, पञ्च[1]चापशतोन्नताः ॥ १७३ ॥
पञ्चमारे सप्तहस्तो-न्नता वर्षशतायुषः ।
मर्त्या हस्तोन्नताः षष्ठे, षोडशाब्दायुषः पुनः ॥ १७४ ॥
एकान्तदुःखिनस्ते स्यु-रुत्सर्पिण्यामपीदृशी ।
व्यवस्थोत्पद्यते पश्चा-नुपूर्व्यारेषु षट्स्वपि ॥ १७५ ॥
तृतीयारान्तजातत्वा-न्नवचापशतोच्छ्रयौ ।
जातौ पल्यदशमांशा-युष्कौ तौ युग्मिनौ पुनः ॥ १७६ ॥

**अशोकदत्तस्य हस्तिरूपेण जन्म**

मृत्वा सोऽशोकदत्तोऽपि, तया [2]प्राग्भवमायया ।
तत्रैवाभूच्चतुर्दन्तो, दन्ती शुभ्रतनुप्रभः ॥ १७७ ॥
प्रेक्ष्य सागरचन्द्रं प्राग्-जन्ममित्रं स कुञ्जरः ।
जातजातिस्मृतिः स्कन्धे-ऽनिच्छन्तं चाध्यरोपयत् ॥ १७८ ॥
जातिस्मरणवान् सोऽपि, तमारूढः परिभ्रमन् ।
साक्षादिव [3]दिवः स्वामी, युग्मरूपिभिरैक्ष्यत ॥ १७९ ॥
[4]दन्तावलं स बालेन्दु-विमलं वाहनं श्रितः ।
इति युग्मिभि[5]राम्नातो, नाम्ना विमलवाहनः ॥ १८० ॥
पत्नी चन्द्रयशोनाम्नी, साऽस्यासीत् प्रियदर्शना ।
श्यामया धूम्ययेवाग्निः, स्वर्णाभः स बभौ तया ॥ १८१ ॥
शरीरं [6]वज्रऋषभ-नाराचघनसन्धिमत् ।
आसीत् तयोः समचतु-रस्रसंस्थानसुस्थितम् ॥ १८२ ॥

---

१ धनुष्य० । २ ख-'प्राग्जन्ममायया' । ३ इन्द्रः । ४ हस्तिनम् । ५ कथितः ।

६ "संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु, सा विवक्षामपेक्षते ॥"

इत्यनेन सन्धिप्रसङ्गे समुपस्थितेऽपि श्रीसुमतिकल्लोलमुनिरचिते **ऋषभस्तवने** "श्रीआदिनाथं नतनाकिताथं", श्रीदेवानन्दसूरिसन्दृब्धे **गौतमाष्टके** "श्रीइन्द्रभूतिं वसुभूतिपुत्रं", श्रीधर्मघोषसूरिप्रणीतेऽष्टापदकल्पे "वरधर्मकीर्तिऋषभो०", श्रीजिनप्रभसूरिसूत्रिताया **अर्थकल्पलतायाः** प्रशस्तौ "शरदृतूदर्चि०" इत्यादिवत् सन्धेरभावोऽत्रापि ज्ञेयः ।

जातिस्मरणतो नीति-विज्ञो विमलवाहनः ।
जज्ञे प्रकृत्या चिद्रूपो, रूपवांश्च जनोत्तरः ॥ १८३ ॥
प्रमत्तयतिधर्माणा-मिव जज्ञे क्रमात् तदा ।
प्रभावो दशभेदाना-मप्यल्पः कल्पभूरुहाम् ॥ १८४ ॥

कल्पतरूणां प्रभावस्य हानिः

मितं विलम्बितं मद्यं, मद्याङ्गा ददुरर्थिनाम् ।
[1]अर्णोधौ मधुरार्णोवत्, नौस्थानां नाविकाग्रणीः ॥ १८५ ॥
अत्यर्थमर्थिता भोक्तुं, न भृङ्गा [2]भोजनान्यदुः ।
नार्यः सपत्नीजाताना-मपत्यानामिव द्रुतम् ॥ १८६ ॥
आतोद्यानि न हृद्यानि, तूर्याङ्गाः [3]पर्यकल्पयन्[4] ।
गन्धर्वा इव सभ्येषु, मूर्खेषु कृपणेषु च ॥ १८७ ॥
नोद्द्योतं तेनिरे दीप-शिखा ज्योतिषिका अपि ।
घनं [5]घनाघनच्छन्ना, इव [6]घर्मांशुरश्मयः ॥ १८८ ॥
इच्छाऽनुरूपं चित्राङ्गा, अपि माल्यानि नो ददुः ।
धर्माय निधनाभ्यासे, धनादि सुजना इव ॥ १८९ ॥
भोज्यं चित्ररसं चित्र-रसा [7]व्यश्राणयन्न हि ।
[8]पुरावत् परिवाराय, श्रीमन्तः कृपणा इव ॥ १९० ॥
तथारूपाणि मण्यङ्गा, मण्डनान्यपि नार्पयन् ।
शिष्येभ्यो दुर्विनीतेभ्यो, रहस्यानीव सूरयः ॥ १९१ ॥
गेहाकारा न गेहानि, प्राग्वत् [9]अग्राणि तेनिरे ।
नेतुः कृत्यानि तद्वत्त-[10]श्रीमत्ता इव सेवकाः ॥ १९२ ॥
अनग्ना अपि वासांसि, व्यतरन् स्खलितोत्तरम् ।
[11]वदान्या अपि दानानि, कुपात्रेभ्य इवार्थिताः ॥ १९३ ॥
मिथुनानां कालवशा-दनल्पं कल्पशाखिषु ।
ममत्वं समभूद् भक्ते-ष्वपत्येष्विव गेहिनाम् ॥ १९४ ॥

---

१ समुद्रे । २ क-'भाजना०' । ३ ददुः । ४ 'क-पर्यपादयन्' । ५ मेघैराच्छादिताः । ६ सूर्यस्य किरणाः । ७ ददुः । ८ मरणावसरे (?) । ९ प्रधानानि । १० ख-'श्रीमत्ताः सेवका इव' । ११ दानशौण्डाः ।

स्वीकारं कल्पवृक्षेषु, येषु ये युग्मिनो व्यधुः ।
अन्यैस्तेषु गृहीतेषु, भेजिरे ते पराभवम् ॥ १९५ ॥
मिथः पराभवं सोढु-मक्षमैर्मिथुनैस्ततः ।
आत्मस्वात्माधिकश्चक्रे, स्वामी विमलवाहनः ॥ १९६ ॥
जातिस्मरणतो ज्ञात-नीतिः कल्पद्रुमानयम् ।
ददौ विभज्य युग्मिभ्यः, पुत्रेभ्यो द्रव्यवत् पिता ॥ १९७ ॥
अन्यकल्पद्रुमग्राहा-ग्रहाणां निग्रहाय सः ।
हाकारनीतिं प्रकटी-चकार करुणाकरः ॥ १९८ ॥

हाकारनीतिः

हा त्वया रे कृतं दुष्ट-मिति दण्डेन युग्मिनः ।
समुद्रा इव मर्यादां, नैव ते व्यतिचक्रमुः ॥ १९९ ॥
खड्गादिघाततोऽप्युग्रः, समग्रैर्युग्मधर्मिभिः ।
स हाकारतिरस्कार-श्चित्ते चिरमचिन्त्यत ॥ २०० ॥
षण्मासप्रमिते तस्या-युःशेषे श्यामलप्रभम् ।
युगलं चन्द्रयशसि, जायायां समजायत ॥ २०१ ॥
स्त्रीपुंरूपमसङ्ख्येय-पूर्वायुः पूर्वसंस्थितिः ।
पूर्वसंहननं युग्मं, तच्चापाष्टशतोच्छ्रयम् ॥ २०२ ॥
चक्षुष्मान् चन्द्रकान्तेति, सञ्ज्ञाभ्यां सममेव तौ ।
स्त्रीपुंसावीयतुर्वृद्धिं, चन्द्रमश्चन्द्रिके इव ॥ २०३ ॥
युग्मं प्रपोष्य वर्षार्द्धं, जरारुग्भ्यामृते मृतः ।
स 'सुपर्णकुमारे'षु, जज्ञे विमलवाहनः ॥ २०४ ॥
तदैव 'नागकुमारे'-ष्वभूच्चन्द्रयशा मृता ।
जलदे विलयं याते, [1]विद्युद् विद्योतते कियत् ? ॥ २०५ ॥
स कुञ्जरोऽपि कालेन, [2]मृत्वा प्रान्ते निजायुषः ।
जज्ञे 'नागकुमारे'षु, संसारस्थितिरीदृशी ॥ २०६ ॥
पितृरीत्याऽथ हाकार-नीत्या युगलिनोऽखिलान् ।
चक्षुष्मान् पालयामास, वासवस्त्रिदशानिव ॥ २०७ ॥

---

१ ख-'विद्युदुद्योदते' । २ क-'प्रान्ते मृत्वा' ।

कालेन युगलं जज्ञे, चक्षुष्मच्-चन्द्रकान्तयोः ।
तद्यशस्वि[1]सुरूपाख्यं, सप्तधन्वशतोन्नतम् ॥ २०८ ॥
श्यामं [2]प्रथमसंस्थानं, पूर्वसंहननान्वितम् ।
मनागूनायुः पितृतो, द्रुच्छायावद् व्यवर्द्धत ॥ २०९ ॥
समये [3]पञ्चतां प्राप्य, चक्षुष्मान् समजायत ।
सुपर्णेषु पुनश्चन्द्र-कान्ता नागेषु तत्क्षणम् ॥ २१० ॥
यशस्वी जनकस्थित्या, ततो मिथुनमण्डलीः ।
अन्वशिषद् उपाध्याय, इव शिष्यपरम्पराः ॥ २११ ॥
क्रमाल्लङ्घे हाकार-नीतिर्मिथुनपङ्क्तिभिः ।
वर्षोत्कर्षोच्छृङ्खलाभिः, कुल्याभिः कूलभूरिव ॥ २१२ ॥

माकारनीतिः

ततो यशस्वी माकार-दण्डं युगलिषु व्यधात् ।
पूर्वास्त्रे निष्फलेऽस्त्रज्ञो, द्वितीयास्त्रमिवारिषु ॥ २१३ ॥
अल्पेऽपराधे हाकारं, माकारं मध्यमे तु सः ।
महीयसि पुनर्द्वौ तौ, युक्तिज्ञोऽयुङ्क्त युग्मिषु ॥ २१४ ॥
ततः सत्यायुषः शेषे, सुरूपायां यशस्विनः ।
अभिचन्द्र-प्रतिरूपा-ऽऽह्वयं युग्ममजायत ॥ २१५ ॥
शुभ्रप्रभोऽभिचन्द्रोऽभात्, कृष्णया प्रतिरूपया ।
'कैलाश'शैलः स किला-लङ्कृतो मेघमालया ॥ २१६ ॥
सप्तचापशतोच्छ्रायौ, पितृतोऽल्पायुषौ मनाक् ।
तौ युतौ जग्मतुर्वृद्धिं, लोध्रवृक्ष-प्रियङ्गुवत् ॥ २१७ ॥
पूरितायुरभून्मृत्वा, यशस्व्य'ब्धिकुमार'गः ।
सुरूपा तत्क्षणं 'नाग-कुमारे'षूदपद्यत ॥ २१८ ॥
अभिचन्द्रोऽपि नीतिभ्यां, द्वाभ्यां पितृवदन्वशात् ।
तथा युग्मानि तैर्मेने, स एव पितृवद् यथा ॥ २१९ ॥
प्रतिरूपाऽऽयुषः प्रान्ते, स्त्रीपुंसौ प्रसुषाव सा ।
प्रसेनजिच्-चक्षुःकान्ता-ऽभिख्यौ श्यामतमत्विषौ ॥ २२० ॥

---

१ ख-'स्वरूपा' । २ समचतुरस्रनामकम् । ३ मृत्वा ।

न्यूनायुषौ पितृभ्यां तौ, षड्डिष्वासशतोन्नतौ[1] ।
समं समीयतुर्वृद्धिं, धर्म–कीर्ती इव क्रमात् ॥ २२१ ॥
पूर्णायुरभिचन्द्रोऽब्धि–कुमारेषूदपादि सः ।
तदैव प्रतिरूपाऽपि, मध्ये 'नागकुमार'कम् ॥ २२२ ॥
प्रथयामास मिथुने–ष्वेंथ[2] शास्ति प्रसेनजित् ।
एतत्पुत्रस्य पुत्रत्वं, यत्पितुर्वर्तयेत् क्रमम् ॥ २२३ ॥
तदा हाकार-माकारौ, युग्मानि व्यतिचक्रमुः ।
क्रमतो दुरपत्यानि, माता-पित्रोः क्रमाविव ॥ २२४ ॥

धिक्कारनीतिः

तेषामुद्भ्रान्तदुर्न्याय–ध्वान्तप्रद्योतनप्रभाम् ।
आविश्चकार धिक्कार–नीतिमन्यां प्रसेनजित् ॥ २२५ ॥
सोऽहन् हाकार-माकार–धिक्कारैर्युग्मिदुर्नयम्[3] ।
ज्ञान-दर्शन-चारित्रै–र्भवं चारित्रवानिव ॥ २२६ ॥
चक्षुःकान्ताऽऽयुषः प्रान्ते, स्त्री-पुंसौ सुषुवेऽथ सा ।
श्रीकान्ता-मरुदेवाख्यौ, किञ्चिदूनायुषौ स्वतः ॥ २२७ ॥
प्रताप-कीर्ती इव तौ, सममेव समुन्नतिम् ।
प्रपेदाते सपञ्चाश–त्पञ्चचापशतोन्नतौ ॥ २२८ ॥
श्यामाश्यामलया[4] पत्न्या, मरुदेवः सुवर्णरुक् ।
तमस्विन्येव देवाद्रि[5]–रेकपार्श्वस्थयाऽद्युतत् ॥ २२९ ॥
पूर्णायुरजनि 'द्वीप–कुमारेषु' प्रसेनजित् ।
चक्षुःकान्ता क्षणेऽत्रैवा–भवन्'नागकुमार'गा ॥ २३० ॥
तिसृभिर्नीतिभिर्लोकं, मरुदेवोऽप्यपालयत् ।
शक्तिभिर्नृपवद् राज्यं, गुप्तिभिर्यतिवद् व्रतम् ॥ २३१ ॥
स्त्री-पुंसौ प्रान्तकालेऽथ, श्रीकान्ताऽपि सुषाव सा ।
विश्वोद्धारकरौ साधु–सेवा-बोधक्रिये इव ॥ २३२ ॥

---

१ षड्धनुःशतप्रोतुङ्गौ । २ क–'ष्विव शास्तिं' । ३ क–'दुर्णयम्' । ४ रात्रिवत् कृष्णया । ५ मेरुः ।

तौ पितृभ्यां नाभिरिति, मरुदेवेति नामतः ।
कृतौ सपञ्चविंशति–पञ्चचापशतोन्नतौ ॥ २३३ ॥
श्रीनाभिः शातकुम्भाभो, मरुदेवा प्रियङ्गुरुक् ।
तौ मेघमण्डलीश्लिष्ट–'मेरु'तुल्यत्वमीयतुः ॥ २३४ ॥
सङ्ख्यातपूर्वप्रमितं, श्रीनाभि-मरुदेवयोः ।
मरुदेव-श्रीकान्ताभ्यां, न्यूनमायुर्मनागभूत् ॥ २३५ ॥
श्रीनाभिर्मरुदेवा च, ववृधाते सहैव तौ ।
दत्तविश्वजनानन्दौ, द्युद्युरत्नद्युती[1] इव ॥ २३६ ॥
प्राप 'द्वीपकुमार'त्वं, मरुदेवो विपद्य सः ।
साऽगान्'नागकुमार'त्वं, श्रीकान्ता तत्क्षणं पुनः ॥ २३७ ॥
ततः कुलकरो नाभिः, सप्तमः[2] स नयैस्त्रिभिः ।
शशास कालवद् वर्षा–शीतोष्णसमयैर्जनम् ॥ २३८ ॥

सप्तमकुलकरनाभिपत्नीकुक्षौ चक्रिवज्रनाभस्यावतरणम्

तदा च चतुरशीति–पूर्वलक्षैस्तृतीयके ।
अरके सनवाशीति–पक्षैरूने गते सति ॥ २३९ ॥
आषाढे कृष्णचतुर्थ्या–मुत्तराषाढया श्रिते ।
चन्द्रे च्युत्वा स जीवोऽथ, वज्रनाभस्य चक्रिणः ॥ २४० ॥
त्रयस्त्रिंशत्सागरायुः–प्रान्ते 'सर्वार्थसिद्धि'तः ।
श्रीनाभिपत्न्याः श्रीमरु–देव्याः कुक्षाववातरत् २४१–त्रिभिर्विशेषकम्
तमस्तोमहरो द्वीपाद्, द्वीपान्तरमिवार्यमा[3] ।
प्रभावोल्लासकं राशे–रुच्चराशिमिव ग्रहः ॥ २४२ ॥
धर्मध्यानात् परतरं, शुक्लध्यानमिवाशयः ।
संसारागारतः श्रेयः–कृदात्मेवामलं पदम् ॥ २४३ ॥
जलभृत्कालकासारा–न्मराल इव मानसम् ।
प्रातः स्मेरं सरसिजं, [4]द्विरेफः कैरवादिव ॥ २४४ ॥
पारीन्द्र[5] इव कान्ताराद् गिरिगह्वरकन्दरम् ।

१ आकाशे सूर्य-तद्द्युती इव । २ क–'सप्तभिः' । ३ सूर्यः । ४ भ्रमरः । ५ सिंहः ।

विन्ध्यक्षोणिधरारण्या-दिवेभो[1] 'नर्मदा'ह्रदम् ॥ २४५ ॥
वज्रनाभसार्वभौम-जीवः 'सर्वार्थसिद्धि'तः ।
स्वामिन्या मरुदेवायाः, कुक्षिदेशमशिश्रयत् ॥ २४६ ॥-पञ्चभिः कुलकम्
रविमुक्त इव द्वीपो, दीपोज्झित इवालयः ।
लूनाब्ज इव कासारो, हृतरत्न इवाकरः ॥ २४७ ॥
निर्नायकं सैन्यमिव, निःसिंहमिव काननम् ।
विमानं स्वामिना हीनं, विच्छायत्वमियाय तत् ॥ २४८ ॥-युग्मम्
तत्र त्रैलोक्यजीवातौ, सुधाधाराधरे[2] क्षणम् ।
अवतीर्णेऽभवद् विद्यु-दिवोद्द्योतो जगत्त्रये ॥ २४९ ॥
[3]जगत्त्रयजुषां तत्र, जगत्त्रयसुखप्रदे ।
समुत्पन्ने क्षणं दुःखं, क्षयं भेजे भयादिव ॥ २५० ॥
तत्रेशे सर्वसौख्याना-मवतीर्णे मदादिव ।
जज्ञे त्रैलोक्यजन्तूनां, सुखस्याभ्युदयः क्षणम् ॥ २५१ ॥
तस्य रत्नत्रयेशस्य, प्रभावाद् भुवनत्रये ।
दुःखोच्छेद-सुखोद्भेद-प्रद्योता इत्यभूत् त्रयम् ॥ २५२ ॥

चतुर्दशस्वप्नवर्णनम्

निशि तस्यामदृश्यन्त, देव्या गर्भागते विभौ ।
चतुर्दश महास्वप्नाः, सुप्तया वासवेश्मनि ॥ २५३ ॥
शरदभ्रप्रभाशोभी, मणिश्रेणिविभूषणः ।
चङ्गशृङ्गः समुत्तुङ्गः, प्रो[4]ग्रपादाग्रवल्गितः ॥ २५४ ॥
उपागतो जङ्गमतां, किल रा[5]जतपर्वतः ।
स्वप्नेषु 'वृषभः' पूर्वं, मरुदेव्या न्यरूप्यत ॥ २५५ ॥-युग्मम्
[6]गुरुक्रमः सितो 'दन्ती', धर्मो मूर्त्तिमिवाश्रितः ।
चतुर्भिः करगैर्दन्तैः, स्वँ[7]भेदान् दर्शयन्निव ॥ २५६ ॥
[8]'हर्यक्षः' शौर्यवर्येषु, [9]जितकाशी प्रकाशयन् ।
जयस्तम्भमिवोत्क्षिप्त-पुच्छदण्डच्छलादलम् ॥ २५७ ॥

---

१ हस्ती । २ मेघे । ३ त्रैलोक्यवासिनां जीवानाम् । ४ प्रधानखुरधावितः । ५ वैताढ्य-गिरिः । ६ महाचरणः । ७ दानादिप्रकारान् । ८ सिंहः । ९ जयनशीलः ।

कंकुप्कुम्भिकरोज्जृम्भि-कुम्भाम्भोभिषवादिव ।
'देवी' स्मेरास्यहस्तांह्रि-पद्मा पद्माधिवासिनी ॥ २५८ ॥
'दाम' स्वर्धामविविध-प्रसूनपरिगुम्फितम् ।
भ्रमद्भ्रमरझङ्कारैः, किल क्लृप्तार्हतस्तुति ॥ २५९ ॥
श्रितः स्वक्षयशान्त्यर्थ-मिवाराद्धुं जिनाधिपम् ।
किरणापूर्णदिक्श्रेणिः, पार्वणो '[3]रोहिणीवरः' ॥ २६० ॥
प्रकाशः शाश्वतो मेऽस्तु, लोकालोकविलोककृत् ।
देवेशसेवयेतीव, 'तीव्ररश्मि'रुपास्थितः ॥ २६१ ॥
भाव्यसौ विश्वविश्वेशो, विश्वविश्वोपकारकः ।
जिनेन्द्रः किङ्किणीक्वाणै-रिति जल्पन्निव 'ध्वजः' ॥ २६२ ॥
शातकुम्भमयः 'कुम्भो'-ऽम्भःपूर्णः पल्लवैर्नवैः ।
लोकत्रितयकल्याण-कन्दः कन्दलितः किल ॥ २६३ ॥
स्मेरपद्माकरैः शुद्धै-रापत्तापमलापहैः ।
सरस्तरङ्गितं तोयै-स्त्रैलोक्यसुकृतैरिव ॥ २६४ ॥
प्रभुस्नात्रैः पवित्रं मे, वारि वन्द्यं सुरासुरैः ।
भावीति हर्षाल्लहरी-हस्तैर्नृत्यन्निवा'ऽर्णवः' ॥ २६५ ॥
'सर्वार्थसिद्धिं' मां मुक्त्वा, सिद्धिमाप्तुं किमु प्रभो! ।
उत्कोऽसीति विभुं वक्तुं, तद्विमानमिवागतम् ॥ २६६ ॥
दारिद्र्यादीनि कष्टानि, निपेष्टुमिव कष्टिनाम् ।
उन्मुद्रितेन्द्रकोदण्ड-यत्नो 'रत्नोच्चयो' महान् ॥ २६७ ॥
प्रभोरिव तपस्तेजो-राशिः प्राग्जन्मलासितः ।
कृतत्रैलोक्यपावित्र्य-मङ्गलो 'ज्वलनो' ज्वलन् ॥ २६८ ॥[10]
देवी चतुर्दशरज्जु-लोकेशोत्पत्तिसूचकान् ।
वदने विशतोऽपश्य-दिमान् स्वप्नांश्चतुर्दश ॥ २६९ ॥
ततो विरामे यामिन्याः, स्वामिनी पद्मिनीव सा ।

---

१ दिग्गजशुण्डाग्रस्फुरत्कलशजलाभिषेकात् । २ कल्पवृक्ष० । ३ चन्द्रः । ४ सेवया इति इव । ५ सर्वार्थसिद्धिविमानम् । ६ ख-'रिष्टानि' । ७ प्रकाशितेन्द्रधनुष्य० । ८ ख-'प्रभोरितप०' । ९ पूर्वजन्मविहितः । १० 'पञ्चदशभिः कुलकं' इत्यधिकः क-पाठः ।

निद्रां विद्रावयामास, विकास्यास्यकुशेशया[1] ॥ २७० ॥
प्रमोदं दर्शयन्तीव, स्मितदन्तांशुदम्भतः ।
नाभिभूपाय सा स्वप्ना–नाचचक्षे विचक्षणा ॥ २७१ ॥
कुलकृत्कुलकोटीर–स्तव[2] भावी तनूद्भवः ।
इति निर्णीतवान् नाभिः, स्वप्नान् स्वार्जवमानतः ॥ २७२ ॥
प्रभोस्तत्कुलकृन्मात्र–सम्भावननिषेधनम् ।
शिरःकम्पेन शक्राणा–मासनानि वितेनिरे ॥ २७३ ॥
कस्मादकस्मादस्माक–मासनानि चकम्पिरे ।
इति दत्तोपयोगास्तद्, व्यबुध्यन्त बुधाधिपाः[3] ॥ २७४ ॥

इन्द्रस्यागमनं स्वप्नफलकथनं च

अथो यथार्थस्वप्नार्थ–कथनार्थं पुरन्दराः ।
मित्रवन्मिलिताः स्वामि–मातुरन्तिकमाश्रयन् ॥ २७५ ॥
किरीटघटिताऽ[4]जर्य–वर्यपाणिपुटाः स्फुटम् ।
स्वप्नार्थं सार्थं स्वर्नाथा, मरुदेव्याः पुरोऽवदन् ॥ २७६ ॥
भावी स्वामिनि ! सूनुस्ते, स्वप्ने वृषभवीक्षणात् ।
साधून् संसारकान्तार–पारं प्रापयितुं क्षमः ॥ २७७ ॥
भविष्यति भवारण्य–कर्मद्रुमविमूलनात् ।
दानस्थानकरः स्थाम–धाम सामजदर्शनात्[5] ॥ २७८ ॥
विभिद्याशुभकुम्भीन्द्रान्, यशोभिर्मौक्तिकैरिव ।
अलङ्करिष्यते विश्व–संहतिं सिंहदर्शनात् ॥ २७९ ॥
द्रुतं विद्राव्य दारिद्र्यं, क्षितौ लक्ष्मीनिरीक्षणात् ।
पोषयिष्यति सौख्यानि, निःशेषाणि वपुष्मताम् ॥ २८० ॥
मालाविलोकनाल्लोक–हृदावासनिवासकृत् ।
स्वयशःसौरभैर्विश्व–त्रयीं सुरभयिष्यति ॥ २८१ ॥
पूर्णेन्दुदर्शनात् पुण्य–दर्शने ! दर्शनप्रियः ।
सोमः[6] स्फुरत्कलास्तोमः, कुमुदं[7] मदयिष्यति ॥ २८२ ॥

---

१ विकाशिमुखकमला । २ कुलकरवंशचूडामणिः । ३ इन्द्राः । ४ मैत्री- । ५ हस्ति० । ६ चन्द्रः, पक्षे सह उमया–कीर्त्या वर्तते इति सोमः । ७ चन्द्रकमलम्, पक्षे कुः–पृथ्वी तस्या मुदं–हर्षम् ।

जगज्जागरकृद्रोभि-र्गतदोषो महामहाः ।
ततमोहतमोहर्त्ता, भावी भानुनिभालनात् ॥ २८३ ॥
वर्द्धमानासमाखर्व-पर्वसद्वंशसंश्रयः ।
परिष्करिष्यते विश्व-सौधाग्रं ध्वजवीक्षणात् ॥ २८४ ॥
त्रैलोक्यमपि कल्याणै-रनल्पं कल्पयिष्यति ।
सद्वृत्तशोभितः शात-कुम्भकुम्भनिभालनात् ॥ २८५ ॥
भवाटवीभ्रमार्त्तानां, पापतापं हरिष्यति ।
विलासिकमलाश्लिष्टः सरोवरनिरीक्षणात् ॥ २८६ ॥
निर्मलोऽकलितोऽत्यक्त-सीमा सद्गुणरत्नभूः ।
अधर्षणीयो भविता, क्षीरनीरधिवीक्षणात् ॥ २८७ ॥
सेविष्यते सदैवासौ, सर्वत्रास्खलितोदयः ।
विमानदर्शनाद् देवि !, देवैर्वैमानिकादिभिः ॥ २८८ ॥
रत्नाधिकोऽधिकं ज्ञाना-दीनि रत्नानि देहिनाम् ।
कृतदास्यः सुरैर्दास्य-त्ययं रत्नोच्चयेक्षणात् ॥ २८९ ॥
जगज्जननि ! निर्धूम-धूमध्वजनिरूपणात् ।
महामहस्वी दुष्कर्म-गहनं भस्मयिष्यति ॥ २९० ॥
जगन्मातर्जगत्त्राता, जगन्नाथो जिनेश्वरः ।
भाव्यत्र 'भरत'क्षेत्रे, स्वप्नैरेभिस्तवात्मभूः ॥ २९१ ॥
स्वप्नार्थान् मरुदेवायाः, पुरो देवाधिपा इति ।
कथयित्वा यथास्थान-मगमन् मुदिताशयाः ॥ २९२ ॥
स्वप्नार्थानां कथाभिः सा, विलसत्पुलकाङ्कुरा ।
धाराधराऽम्बुधाराभि-र्धरेव मरुदेव्यभूत् ॥ २९३ ॥
निधिं धनिगृहोर्वीव, वज्रं तज्जनिभूरिव ।
सुरत्नं रत्नगर्भेव, सद्ध्येयं योगिधीरिव ॥ २९४ ॥
दीपं स्फाटिकघटिवत्, कौस्तुभं वार्धिवीचिवत् ।
मरुदेवा देवाधीशं, गर्भे सा बिभ्रती बभौ ॥ २९५ ॥–युग्मम्

१ उत्सव० । २ जलेन कलितः–युक्तः, पक्षे अक्लेशात् । ३ ख–'सूः' ।

स गर्भो मरुदेवायाः, कुक्षौ प्रववृधे क्रमात् ।
धर्मप्रवृत्तावन्तस्थो, यथा पुण्यसमुच्चयः ॥ २९६ ॥
गर्भस्थितजगद्धर्तृ-भास्वत्कीर्तिभरैरिव ।
प्रभोरेव मनः शुक्ल-लेश्यांशुपटलैरिव ॥ २९७ ॥
तस्यान्तः सङ्क्रमोद्भूतैः, प्रभूतैः सुकृतैरिव ।
तस्य प्रभावतः [1]स्वान्तो, भ्रान्तशान्तरसैरिव ॥ २९८ ॥
प्रसन्ननाभिभूनेतृ-नेत्ररश्मिचयैरिव ।
आलिङ्ग्यमाना पाण्डुत्वं, मरुदेवा समासदत् ॥ २९९ ॥–त्रिभिर्विशेषकम्
यमुनेव मिलद्गङ्गा-तरङ्गावलिवल्गितात् ।
आरामपङ्क्तिवत् [2]पर्व-शर्वरीश्वररश्मितः ॥ ३०० ॥
कस्तूरी[3]कल्कभङ्गीव, घनसारभवद्रवात् ।
[4]श्रीकण्ठकण्ठपीठीव, [5]शेषकण्ठीत्विषोत्करात् ॥ ३०१ ॥
मरुदेवा स्वभावेन, प्रियङ्गुश्यामलाङ्गभा ।
गर्भानुभावतः पाण्डु-भावमाविश्चकार सा ॥ ३०२ ॥–त्रिभिर्विशेषकम्
तत्स्तनौ प्राग् जिनेशो नौ, पोष्यः प्रीत्येति पीवरौ ।
ततोऽसत्स्तन्यपो नायं, मत्वेतीवासिताननौ ॥ ३०३ ॥
[6]विकाशयिष्यति स्वामी, यत्त्रैलोक्यस्य दर्शनम् ।
किं चित्रं [7]दर्शनं देव्या-स्तत्रान्तस्थे विकाश्यभूत् ॥ ३०४ ॥
शिश्राय स्वामिनीश्रोणि-र्विशालाऽपि विशालताम् ।
गर्भतो[9]ऽदभ्रधीधीवत्, सम्यक्शास्त्रावबोधतः ॥ ३०५ ॥
त्रैलोक्यार्त्तिहरे तीर्थ-[8]ङ्करे गर्भावतारिणि ।
देवी [10]दिदेव पीडोर्व्या, माऽस्त्वितीव शनैः शनैः ॥ ३०६ ॥
कपोलफलके देव्या, गलल्लक्ष्मेन्दुसुन्दरे ।
दृष्टः शशी न सङ्क्रान्तौ, जज्ञे तल्लक्ष्मलक्ष्म [11]नु ॥ ३०७ ॥

---

१ क–'स्वान्तोद्भ्रान्त०' । २ पर्वणः शशिनः किरणात् । ३ सार० । ४ महादेव० । ५ शेषनागात्मकहार० । ६ क–'विकासयि०' । ७ नेत्रम् । ८ तीर्थकरे । ९ प्रभूतबुद्धिमद्बुद्धिवत् । १० चचाल । ११ ख–'सुः' ।

देव्या गर्भः स मध्यस्थ-स्तन्मध्यस्थमवर्धयत्[1] ।
उदरं वर्द्धमानो हि, स्वजातिं को न वर्द्धयेत् ? ॥ ३०८ ॥
मध्यदेशः सदेशत्वं[2], लब्ध्वाऽतिबलिनः प्रभोः ।
देव्या वृद्धिं परां भेजे, भङ्क्त्वा व्यक्तं वलित्रयम् ॥ ३०९ ॥
तत्रान्तस्थे विभौ विश्व-त्रयदारिद्र्यदारिणि ।
किं चित्रमुदरं देव्या, यदाकिञ्चन्यमत्यजत्[3] ? ॥ ३१० ॥
मध्यस्थस्योदरस्यासी-दुन्नतौ[4] प्रीतितो ध्रुवम् ।
स्वामिन्याः स्तनयोः स्थौल्य-मयं हि महतां क्रमः ॥ ३११ ॥
ज्ञानैस्त्रिभिरशोभिष्ट, गर्भे तिष्ठन्नपि प्रभुः ।
प्रदीपो द्योतते द्योतै-र्मन्दिराभ्यन्तरेऽधिकम् ॥ ३१२ ॥
देव्या गर्भानुभावेन, जज्ञे नेत्रामृताञ्जनम् ।
कार्त्तिकेनेव कौमुद्याः, काऽपि श्रीरतिशायिनी ॥ ३१३ ॥
आससाद न सा सादं[5]-मुदरे बिभ्रती विभुम् ।
स किमर्त्तिकृते मातु-र्यो जगत्खेदभेदकृत् ? ॥ ३१४ ॥
गर्भाश्रयिणि कारुण्य-स्वयम्भूरमणे[6] प्रभौ ।
देवी विशेषादद्वेषा, सदयाऽजनि जन्तुषु ॥ ३१५ ॥
प्रभुप्रभावतो नाभि-र्भुवनाभिमतो भृशम् ।
बभूवाद्भुतसौम्यश्री-र्यथेन्दुः शरदागमात् ॥ ३१६ ॥
स्वामलक्ष्मीकृतां[7] लक्ष्मी-मनल्पां कल्पपादपाः ।
तदा विस्फूर्जयामासु-र्न्याय्ये राज्ये जना इव ॥ ३१७ ॥
विभौ गर्भाश्रिते शान्तिं, वैराणि प्राणिनामगुः ।
उदयाद्रिशिरोगुप्ते-ऽप्युष्णांशौ स्युस्तमांसि न ॥ ३१८ ॥
कोप-मानादिमुक्तानि, मिथुनानि मिथस्तदा ।
पूर्वापरभवानीव, [8]पीवप्रीतीनि जज्ञिरे ॥ ३१९ ॥
अभावं लेभिरे भूमौ, तदा सर्वेऽप्युपद्रवाः[9] ।
सदर्पा अपि किं सर्पाः, सर्पन्ति गरुडागमे ? ॥ ३२० ॥

---

१ देवीमध्यस्थम् । २ सादृश्यम् । ३ तुच्छत्वम् । ४ सप्तम्यन्तं पदम् । ५ खेदम् ।
६ अन्तिमे महासमुद्रे । ७ ख-'स्वामिलक्ष्मीकृतां' । ८ पुष्ट० । ९ ख-'प्लवाः' ।

अस्मिन्ननन्तकल्याणे, प्रभौ गर्भाश्रिते भुवि ।
अकल्याणानि भीत्येव, पलायन्ताखिलान्यपि ॥ ३२१ ॥
तत्प्रभावाद् भुवि स्फूर्त्तिं, परां श्रेयांसि शिश्रियुः ।
सुवातादिव शस्यानि, सुखानि सुकृतादिव ॥ ३२२ ॥
स्वामिनोऽसद्गिरा बोधं, प्रदातेति मदादिव ।
तिर्यञ्चोऽपि प्रसन्नत्व-मञ्चन्ति स्म मिथस्तदा ॥ ३२३ ॥

चैत्रकृष्णाष्टम्यां पुत्रप्रसवः

गतेषु नवमासेषु, सार्द्धाष्टमदिनेष्वथ ।
चैत्रस्य बहुलाष्टम्या-मुत्तराषाढया युते ॥ ३२४ ॥
धनराशिश्रिते चेन्दा-वुच्चस्थेषु ग्रहेष्वपि ।
अर्द्धरात्रे सुवर्णाभं, वृषाङ्कं युग्मधर्मिणम् ॥ ३२५ ॥
इन्दुं शुक्लद्वितीयेव, धर्मं सत्कर्मवृत्तिवत् ।
पयोवाहं प्रावृडिव, भूपत्वं[2] भाग्यभङ्गिवत् ॥ ३२६ ॥
निर्मानतेव विनयं, विक्रमस्फूर्त्तिवन्महः ।
प्रातःसन्ध्येव तीव्रांशुं, कलासंवित्तिवद् यशः ॥ ३२७ ॥
तत्त्वज्ञतेव प्रशमं, सन्तोषप्राप्तिवत् सुखम् ।
शमतेव महानन्दं, देवी सुतमसूत सा ॥ ३२८ ॥—पञ्चभिः कुलकम्
जरायुरुधिरप्रायै-र्मलैरमलिनाकृतिः ।
निर्धूम इव माणिक्य-प्रदीपोऽदीपि स प्रभुः ॥ ३२९ ॥
प्रभुः प्रभाभरैराभाद्, गर्भतो निर्गतो बहिः ।
भासयन् ककुभो भास्वा-निव शारदवारिदात् ॥ ३३० ॥
प्रभौ प्रत्यक्षतां प्राप्ते, भुवनत्रयभास्करे ।
उद्द्योतो द्योतयामास, त्रैलोक्यमपि तत्क्षणम् ॥ ३३१ ॥
तमांसि ध्वंसमेष्यन्ति, यं प्रेक्ष्यान्तर्गतान्यपि ।
किं चित्रं त्रिजगद्[3]ध्वान्त-मुद्द्योतस्तद्भवोऽहरत् ? ॥ ३३२ ॥
स्वामिन्यमोक्षगेऽप्यासीत्, किं तत्रानन्तसौख्यता ? ।
यज्जगत्त्रयजन्तुभ्यः, स जातोऽपि सुखान्यदात् ॥ ३३३ ॥

---

१ ख–'तस्मि' । २ क–'रूपत्वं' । ३ ख–'जगद्ध्वान्त–' ।

नारकाणामिति क्षिप्त्वा, दुःखान्यपि चलान्यपि ।
सुखानि प्रभवन्ति स्म, प्रभावेन प्रभोर्न किम्? ॥ ३३४ ॥
नारकाणां नराणां च, जल-स्थल-खचारिणाम् ।
तिरश्चां च सुखोल्लासैः, स्वर्गिभ्यो न भिदा तदा ॥ ३३५ ॥
दावपावकतः सद्यः, सुधाकुण्डमिवाश्रितः ।
कुहूक्रान्तादिव ध्वान्तात्, प्राप्तः पूर्णेन्दुकौमुदीम् ॥ ३३६ ॥
नरकावासतः स्वर्गा-ऽऽवासवासमिवागतः ।
तदानन्दमयो जज्ञे, विश्वो विश्वत्रयीजनः ॥ ३३७ ॥-युग्मम्
असौ नः स्वाम्यलङ्कर्त्ता, कीर्तिमौक्तिकमण्डनैः ।
इत्युन्मदास्तदा प्रापुः, प्रसादं परमं दिशः ॥ ३३८ ॥
तोयाशयेषु स्नात्वेव, प्रभुपूजाकृते किल ।
धृतद्रुपुष्पसम्भारः, सञ्चचार शनैर्मरुत् ॥ ३३९ ॥
जन्तुजातैकजीवातौ, जाते तत्र जगत्पतौ ।
जीवानुकम्पयेवासी-न्मुनिवन्मन्दगो मरुत् ॥ ३४० ॥
किं जाते रजसः स्फूर्त्ति-मूर्च्छे सत्त्व इव प्रभौ ।
इति गन्धाम्बुवर्षेणो-त्कर्षं तस्याहरन् घनाः ॥ ३४१ ॥
मम स्वामिपदस्पर्शैः, पावित्र्यं सूत्रयिष्यति ।
तदेति मेदिनी मन्ये, समदा समुदश्वसत् ॥ ३४२ ॥
अनाहतो ननादाब्द-गम्भीरो देवदुन्दुभिः ।
जिनजन्मोत्सवं कर्तुं, देवानुत्साहयन् दिवि ॥ ३४३ ॥

आसनकम्पाद् दिक्कुमारीणामागमनं तत्कृतः सविस्तरमहोत्सवश्च

इतः ककुप्कुमारीणा-मकम्पन्तासनान्यपि ।
प्रभोरद्भुतमाहात्म्या-दिव मूर्द्धविधूननैः ॥ ३४४ ॥
जिनजन्मावधिज्ञाना-ज्ज्ञात्वेमा दिक्कुमारिकाः ।
प्रीतिं पल्लवयामासु-राशु लास्यकरैः करैः ॥ ३४५ ॥

---

१ ख-'नारकाणामपि क्षिप्त्वा दुःखान्यतिबलान्यपि' । २ अमावस्या० । ३ ख-'नारका०' । ४ गृह० । ५ अस्मान् । ६ जलाशयेषु । ७ सत्त्वगुणे । ८ क-'हर्षाम्बु' । ९ रजसः, पक्षे रजोगुणस्य । १० नृत्य० ।

अर्हद्गुणगणाधान–स्तुतिगानच्छलेन ताः ।
उद्गिरन्ति स्म [1]चित्तान्त–रमान्तमिव सम्मदम् ॥ ३४६ ॥
अधोलोककृतावासा–स्ततोऽष्टौ दिक्कुमारिकाः ।
समीयुर्मरुदेवायाः, समदाः सूतिमन्दिरम् ॥ ३४७ ॥
भोगङ्करा भोगवती, सुभोगा भोगमालिनी ।
सुवत्सा वत्समित्रा च, पुष्पमा[2]लावनिन्दिता ॥ ३४८ ॥
तत्रार्हतोऽर्हन्मातुश्च, दत्त्वा तिस्रः प्रदक्षिणाः ।
ताः प्रणामं च निर्माय, [3]निर्मायमिदमूचिरे ॥ ३४९ ॥
जय त्रिजगदाकल्प–कल्पद्रुप्रसवावने ! ।
जगन्मातर्जगत्पूज्य–तमे ! स्वामिनि ! ते नमः ॥ ३५० ॥
जातस्त्रैलोक्यदीपो य–स्त्रैलोक्यजननि ! त्वया ।
उदेष्यति प्रकाशोऽस्य, लोकालोकप्रकाशकः ॥ ३५१ ॥
रामासु प्रथमा मात–स्त्वं प्रसूय जिनेश्वरम् ।
सैव पूर्वा श्रुता दिक्षु, या प्रसौति [4]दिनेश्वरम् ॥ ३५२ ॥
न प्रसूते पुरन्ध्री का, परद्रोहपरान् नरान् ? ।
परोपकारसारं तु, काऽप्येका त्वादृशी यदि ॥ ३५३ ॥
अर्हंश्चक्री [5]बलो [6]विष्णु–र्विश्वोपकृतिलालसः ।
दाता दान्तेन्द्रियो विद्वान्, पुण्यस्त्रीकुक्षितो भवेत् ॥ ३५४ ॥
दिक्कुमार्यो वयं मात– रष्टाधोलोकसंश्रयाः ।
जिनजन्मावधेर्बुद्ध्वा, समेतास्त्वामुपासितुम् ॥ ३५५ ॥
तन्मा कार्षीर्भयं मात–रित्युक्त्वेशानदिक्श्रितम् ।
प्राङ्मुखं सूतिवेश्मैता–स्तेनुः स्तम्भसहस्रमत् ॥ ३५६ ॥
परितः सूतिकाहर्म्य–मखिलाशुचिपुद्गलान् ।
आयोजनं समाजह्रु–स्ताश्च संवर्त्तवायुना ॥ ३५७ ॥
ततः संहृत्य संवर्त्त–वातं नत्वा जिनं प्रभुम् ।
निकषा तं निषण्णास्ता, गायन्त्यस्तद्गुणान् स्थिताः ॥ ३५८ ॥

---

१ हृदयमध्ये । २ ख–'मालेत्वनन्दिता' । ३ निष्कपटम् । ४ सूर्यम् । ५ बलरामः । ६ वासुदेवः ।

स्वर्णाद्रौ 'नन्दने' 'रत्न-कूट'स्था ऊर्ध्वलोकगाः ।
अथेयुरष्ट दिक्कन्या, भक्तिधन्याशया रयात् ॥ ३५९ ॥
मेघङ्करा मेघवती, सुमेघा मेघमालिनी ।
तोयधारा विचित्रा च, वारिषेणा बलाकिका ॥ ३६० ॥
तीर्थकृत्-तीर्थकृन्मात्रो-स्तास्तथैव नति-स्तुती ।
कृत्वा विचक्रिरे मेघान्, पुण्यरामदप्रदान् ॥ ३६१ ॥
तासां गन्धाम्बुवृष्ट्योर्व्याः, प्रययौ योजनावधि ।
शान्ति रजश्च तापश्च, जिनेश्वरगिरा यथा ॥ ३६२ ॥
जानुमात्रेमिमा[2] वर्षे-र्यं पुष्पप्रकरं व्यधुः ।
स[3] भ्रमद्भ्रमरारावैः, सांराविणमिवाकरोत् ॥ ३६३ ॥
एताभिरभितः पञ्च-वर्णैर्वृष्टिप्रपञ्चितैः ।
विचित्रैरपि पुष्पौघैः, सचित्रेव धरित्र्यभूत् ॥ ३६४ ॥
ततः संहृत्य जीमूत-जालं जिनपतेर्गुणान् ।
गायन्त्यः स्थानके हृष्टा, निविष्टास्ता यथोचिते ॥ ३६५ ॥
अष्ट दिक्कन्यकाः प्राच्य-'रुचका'द्रिस्थितास्ततः ।
विमानैर्वेगतोऽन्योन्यं, स्पर्द्धमानैरिवागताः ॥ ३६६ ॥
ताश्च नन्दोत्तरानन्दे, आनन्दा-ऽऽनन्दवर्द्धने ।
विजया वैजयन्ती च, जयन्ती चाऽपराजिता ॥ ३६७ ॥
देवे(जिने ?)न्द्रं मरुदेवां च, नत्वा नुत्वा च पूर्ववत् ।
गायन्त्यस्तद्गुणानस्थु-स्ताः प्राक्पाणिस्थदर्पणाः ॥ ३६८ ॥
दिक्कन्योऽष्टावथापेतु-र्पाच्य'रुचका'चलात् ।
आकृष्टा विभुमाहात्म्य-गुणैरिव गुरुत्वराः ॥ ३६९ ॥
समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा ।
लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥ ३७० ॥
प्राग्वज्जिनं जिनाम्बां च, नत्वाऽऽत्मानं निवेद्य च ।
तस्थुर्भृङ्गारशृङ्गार-पाणयो दक्षिणेन ताः ॥ ३७१ ॥

---

१ क-'तथा' ।　२ ऊर्ध्वदिक्कुमारिकाः ।　३ पुष्पप्रकरः ।　४ क-'सम्भ्रम०' ।
५ ख-'स्तुत्वा' ।　६ आजग्मुः ।　७ दक्षिण० ।

आययुर्दिक्कुमार्योऽष्ट, [1]प्रत्यग्'रुचक'पर्वतात् ।
प्रेरिताः प्रियसख्यैव, भक्त्या सेवाकृते प्रभोः ॥ ३७२ ॥
इलादेवी सुरादेवी, पृथिवी पद्मवत्यपि ।
एकनाशा नवमिका, भद्रा शीतेति सञ्ज्ञिता ॥ ३७३ ॥
कृत्वा नतिं स्वमाख्याय, प्राग्वज्जिन-जिनाम्बयोः ।
गायन्त्यः पश्चिमेनैता, हस्तस्थव्यजनाः स्थिताः ॥ ३७४ ॥
अष्ट दिक्कन्यकाश्चैयु-[2]रौदीच्य'रुचकाद्रितः ।
यानैरतिमनोयानै-राभियोगिकयोगतः ॥ ३७५ ॥
अलम्बुसा [3]मिश्रकेशी, पुण्डरीका च वारुणी ।
हासा सर्वप्रभा [4]ह्रीं श्री-रित्याह्वानसमन्विताः ॥ ३७६ ॥
प्राग्वत् प्रभुं प्रभोरम्बां, नत्वाऽऽत्मानं निवेद्य ताः ।
गायन्त्यश्चामरकरा, उत्तरेणावतस्थिरे ॥ ३७७ ॥
दिक्कन्या विदिग्'रुचका'-द्रिभ्योऽभ्येयुश्चतुर्मिताः ।
चित्रा चित्रकनका स-तेजाः सौदामिनी तथा ॥ ३७८ ॥
स्वामिनं स्वामिजननीं, नत्वाऽऽख्याय तथैव ताः ।
ईशानादिविदिक्ष्वस्थु-र्गायन्त्यो दीपपाणयः ॥ ३७९ ॥
दिक्कन्या 'रुचक'द्वीपा-न्तरादीयुश्चतुर्मिताः ।
रूपा [5]रूपांशुका चापि, [6]रूपया रूपकावती ॥ ३८० ॥
नाभिनालं प्रभोश्छित्त्वा, 'ता मुक्त्वा [7]चतुरङ्गुलम् ।
[8]विवरं चख्नुस्तं तत्र, चिक्षिपुर्हृदि भाववत् ॥ ३८१ ॥
एतदत्युज्ज्वलैरेता, [10]वज्र-माणिक्य-मौक्तिकैः ।
पूरितं [11]विवरं चक्रु-रात्मानं सुकृतैरिव ॥ ३८२ ॥
दूर्वाभिः सम्भृतं तस्यो-परि पीठं च ता व्यधुः ।
[12]कल्याः कल्याणमालाभि-रात्मानं परितः पुनः ॥ ३८३ ॥
सूतिकावेश्मतो दिक्षु, पूर्वयाम्योत्तरासु ताः ।

---

१ पश्चिम० । २ उत्तर० । ३ क-'मिश्रकेशा' । ४ क-'श्री ह्री' । ५ ख-'रूपांसिका' । ६ क-'रूपा' । ७ ख-'चतुरङ्गुलीम्' । ८ क-'विदरं' । ९ नाभिनालम् । १० हीरक० । ११ क-'विदरं' । १२ ख-'कन्याः' ।

हारीणि त्रीणि कदली-गृहाण्युच्चैर्विचक्रिरे ॥ ३८४ ॥
तास्तेषाम[1]न्तरेकैकं, स्वविमानापमानकृत् ।
[2]सिंहासनसनाथाङ्कं, चतुःशालमकल्पयन् ॥ ३८५ ॥
ता निन्युर्भक्तिशालिन्य-श्चतुःशाले[3]ऽथ दक्षिणे ।
कराञ्जलौ जिनं न्यस्य, तदम्बां दत्तबाहवः ॥ ३८६ ॥
लक्षपाकेन तैलेन, सिंहासननिवेशितौ ।
अभ्यानञ्जुरुभौ भक्त्या, तत्र तौ[4]श्चेटिका इव ॥ ३८७ ॥
ताः संजह्रुर्द्वयोर्देह-स्नेहमुद्वर्त्तनैस्ततः ।
स तासां हृदि सङ्क्रान्त, इव स्नेहो बहुस्त्वभूत् ॥ ३८८ ॥
नीत्वा प्राच्यचतुःशाले, न्यस्य सिंहासनेऽम्बुभिः ।
तास्तावस्निस्नपन्नासं-स्तदात्मानोऽपि निर्मलाः ॥ ३८९ ॥
तदङ्गान्यमृजन् गन्ध-[5]कषायवसनैश्च ताः ।
याति स्म विलयं तासा-मप्यहो [6]जलभावता ॥ ३९० ॥
गोशीर्षचन्दनैरर्च्यौ, ततस्तास्तावचर्चयन् ।
तासां भवदवोद्भिन्न-[7]स्तापः प्राप शमं पुनः ॥ ३९१ ॥
तौ पर्यधापयन् वर्य-स्वर्धामवसनानि ताः ।
सलास्यानीव तान्यासन्, सुस्थानास्निग्धुदाऽनिलैः ॥ ३९२ ॥
तौवुभौ भूषयन्ति स्म, दिव्यैराभरणैरिमाः ।
नेदं विदुः स तावेव, भुवनत्रयभूषणम् ॥ ३९३ ॥
अथोत्तरचतुःशाले, ता जिनं जिनमातरम् ।
नीत्वा न्यवेशयंस्तत्र, रत्नसिंहासनोपरि ॥ ३९४ ॥
गोशीर्षचन्दनान्येता-स्ततः 'क्षुद्रहिमाऽद्रि'तः ।
स्राक् समानाययन्ति स्म, [8]त्रिदशैराभियोगिकैः ॥ ३९५ ॥
ताः कृतेऽरणिदारुभ्या-मग्नौ गोशीर्षचन्दनम् ।
हुत्वा तद्रक्षया चक्रू, रक्षापोट्टलिकां तयोः ॥ ३९६ ॥
ताः समास्फालयन्त्योऽथ, मिथः पाषाणगोलकौ ।

---

१ क-'मन्तरेणैकं' । २ सिंहासनान्वितमध्यभागम् । ३ क-'प्रदक्षिणे' । ४ दासः । ५ ख-'काषाय०' । ६ डलयोरैक्यात् जाड्यम् । ७ क-'ताविमौ' । ८ सुरैः ।

पर्वतायुर्भवेत्यूचु-रुच्चैः कर्णान्तिके प्रभोः ॥ ३९७ ॥
जगद्रक्षाक्षमस्यास्य, जगत्कल्याणकारिणः ।
यद् रक्षा मङ्गलाशीश्च, तासां भक्तिक्रमो हि सः ॥ ३९८ ॥
परमार्थाज्जगद्रूढे-र्व्यवहारो महत्तरः ।
व्यवहारपरीहारे, परमार्थो न सिद्धिदः ॥ ३९९ ॥
तत्र स्तम्भसहस्राङ्के, सूतिकासदने नवे ।
जिनं तज्जननीं चैता, नीत्वा शय्याश्रितौ व्यधुः ॥ ४०० ॥
ता दिशां विदिशां कन्याः, स्वस्वदिग्विदिगाश्रयाः ।
ऊर्ध्वा-ऽधो-मध्य'रुचका'-द्रीणां शय्यान्तिकस्थिताः ॥ ४०१ ॥
अर्हतोऽर्हज्जनन्याश्च, गुणैर्गौरवितानि ताः ।
गायन्त्यो मङ्गलान्युच्चै-रासीनास्तस्थुरुन्मुदः ॥ ४०२ ॥
पक्षद्वयविशुद्धेन, हंसेनेव सरोजिनी ।
विष्टपस्याप्यधृष्येण, हर्यक्षेणेव कन्दरा ॥ ४०३ ॥
बलाधिक्यधृता गन्ध-सिन्धुरेणेव 'विन्ध्य'भूः ।
विशदश्रीवरेणैरा-वणेनेवेन्द्रवाहिनी ॥ ४०४ ॥
सङ्कल्पदेन कल्पद्रु-णेव 'नन्दन'मेदिनी ।
महोमयेन माणिक्ये-नेव 'रोहण'शैलभूः ॥ ४०५ ॥
अलक्ष्यलक्ष्मणा बाले-न्दुनेवेशालिकस्थली[1] ।
श्रेयःकृता कौस्तुभेने-[2]वेन्दिराविभुहृत्तटी ॥ ४०६ ॥
श्रेयःपदेन[3] सत्पात्र-दानेनेवेन्दिरोन्नतिः ।
सम्यक्त्वत्वप्रसङ्गेन, शमेनेव श्रुतोन्नतिः ॥ ४०७ ॥
महानन्दनिदानेन, ज्ञानेनेव तपःक्रिया ।
पुत्रेण प्रभुणा तेन, मरुदेवाऽद्युतत् तदा ॥ ४०८ ॥—षड्भिः कुलकम्

इन्द्राणामागमनम्

इतः शाश्वतघण्टानां, प्रक्षुब्धाब्धिघटोत्कटः[4] ।
नाकलोकेष्वेककालं, नादः प्रादुरभूत् तदा ॥ ४०९ ॥

---

१ महादेवललाटभूमिः । २ लक्ष्मीपतिहृदयतटी । ३ ख-'प्रदेन' । ४ संक्षुब्ध-समुद्रौघवदुत्कटः ।

युगपद् भगवज्जन्म—मुदेव विदधे तदा ।
नाकेषु नित्यघण्टाभिः, सांराविणमिवारवैः ॥ ४१० ॥
उत्कानीव प्रभुं नन्तुं, चेलुः शक्रासनान्यथ ।
इन्द्रकृत्येषु नौचित्यं, स्यान्नस्तस्थुरिति ध्रुवम् ॥ ४११ ॥
ततः कम्पं तनौ कम्प-मान[1]पञ्चाननासनात् ।
सङ्क्रान्तमिव सङ्क्रुद्धः, 'सौधर्मा'धिपतिर्दधौ ॥ ४१२ ॥
[2]सहस्रनयनस्यासन्, शोणा नयनरश्मयः ।
ज्वाला इवान्तरुद्दीप्त—कोपाग्नेर्निर्गता बहिः ॥ ४१३ ॥
स्वान्ते समन्ततः कोप-ज्वलने ज्वलिते द्रुतम् ।
अभिमानतरो[3]स्तस्य, चकम्पेऽधरपल्लवः ॥ ४१४ ॥
रक्तो ललाटपट्टोऽस्य, स्वेदबिन्दुकुटुम्बितः ।
अभिसृत्य भृकुट्याऽऽशु, श्लिष्टः कलितकम्पया ॥ ४१५ ॥
अये कोऽयमकालेऽपि, कालेनाद्य कटाक्षितः ? ।
यो ममाकम्पयन्मृत्यू—त्कण्ठी [4]कण्ठीरवासनम् ॥ ४१६ ॥
ब्रुवाण इति गीर्वाण—पतिः पाणितले पविम् ।
जिघृक्षति स [5]क्षोणीभृ—ल्लक्षपक्षक्षयप्रदम् ॥ ४१७ ॥
सम्भाव्याद्भुतसंरम्भं, दम्भोलिग्रहणस्पृहम् ।
सेनानीः सञ्जगौ शक्रं, विक्रमो मूर्त्तिमानिव ॥ ४१८ ॥
विश्वेश ! कोऽयमावेशः, स्वयमद्य समादिश ।
प्राणैः कस्यास्तु [6]धूमोर्णा—प्राणाधीशस्य तर्पणम् ? ॥ ४१९ ॥
ततः सुरपतिः [7]स्वान्तं, शान्तं कृत्वा प्रयुज्य च ।
अवधिं बुबुधे जन्म, प्रथमस्य जिनेशितुः ॥ ४२० ॥
ततः प्रमदपीयूष—क्षिप्तरोषविषप्लवः ।
'[8]धिङ्मया ध्यातमत्रास्तु, मिथ्यादुष्कृतमेव मे ॥ ४२१ ॥
इदं मुदा वदन्नेव, सपदि द्युसदां प्रभुः ।
सिंहासनं विहायाग्रे, सप्ताष्टानि पदान्यगात् ॥ ४२२ ॥—युग्मम्

---

१ सिंहासनात् । २ इन्द्रस्य । ३ इन्द्रस्य । ४ सिंहासनम् । ५ पर्वत० । ६ यमस्य ।
७ क—'शान्तं स्वान्तं' । ८ क—'धिग्' ।

[1]कोटीरकोटीकोटीर-प्रतिवीरकराञ्जलिः ।
इलातलमिलन्मौलि-जानुदेशो जिनेश्वरम् ॥ ४२३ ॥
नाकिनां नायको नत्वा, रोमहर्षप्रकर्षवान् ।
शक्रस्तवेन हर्षाश्रु-मिश्राक्षः स्तवनं व्यधात् ॥ ४२४ ॥-युग्मम्
इति त्रिजगतीनाथं, नत्वा नाथो[2]ऽनिमेषिणाम् ।
पत्यनीकाधिपं सम्य-गादिक्षन्नैगमेषिणम् ॥ ४२५ ॥
नैगमेषिन् ! 'भरता'र्द्धे, 'जम्बू'द्वीपस्य दक्षिणे ।
खण्डेऽस्ति मध्यमे नाभिः, सप्तमः कुलकृद्वरः ॥ ४२६ ॥
तत्पत्न्या मरुदेवायाः, पुत्रोऽभूत् प्रथमो जिनः ।
तज्जन्मस्नात्रपर्वार्थं, सर्वानाह्वय नाकिनः ॥ ४२७ ॥
उल्लालयंस्त्रिवेलं स, योजनं परिमण्डलाम् ।
ततो घण्टां 'सुघोषा'ऽऽख्यां, मेघघोषामवादयत् ॥ ४२८ ॥
स्फूर्जता सिंहनादेन, म[3]हीभृत्कन्दरा इव ।
पर्जन्यगर्जितेनेव, कुलानि प्रचलाकिनाम् ॥ ४२९ ॥
एकच्छात्रोच्चैर्ध्वनिना, सर्वे छात्रा इवेतरे ।
एककुर्कुटनादेन, प्र[4]गेऽन्ये कुर्कुटा इव ॥ ४३० ॥
एकयामिकरावेणे-वापरे निशि यामिकाः ।
धुर्यस्त्रीधवलारावे-णेवान्या वनिता महे ॥ ४३१ ॥
द्वात्रिंशति विमानानां, लक्षेषु निखिलेष्वपि ।
नेदुः 'सुघोषा'घोषेण, समं घण्टाः समन्ततः ॥४३२॥-चतुर्भिः कलापकम्
मिलिता एव वर्द्धन्ते, सजातीया इ[5]व ध्रुवम् ।
मिथो युक्ताः परां वृद्धिं, घण्टानां ध्वनयोऽगमन् ॥ ४३३ ॥
दिष्ट्या प्राप्तोऽसि तीर्थेश-जन्मस्नात्रनिमित्तताम् ।
इति तुष्ट्येव पीनत्वं, परं घण्टाध्वनिर्दधौ ॥ ४३४ ॥
सत्प्रसङ्गैरिव श्रेयो, विषयैरिव मन्मथः ।
कलान्तरैरिव द्रव्यं, [6]विटपैरिव पादपः ॥ ४३५ ॥

---

१ मुकुटाग्रे मुकुटसदृशः कराञ्जलिर्यस्य सः । २ देवतानाम् । ३ गिरीणां गुहा । ४ क-'प्रागन्ये' । ५ क-'इति' । ६ शाखासमूहैः ।

अस्त्रान्तरैर्दिव्यास्त्रवद्, वैक्रियाङ्गैः सुपर्ववत् ।
घण्टाध्वनिर्विमानेषु, प्रतिशब्दैरवर्धत ॥ ४३६ ॥–युग्मम्
घण्टानां तेन घोषेणा–खिलदिङ्मुखखेलिना ।
भेजुः सुधाभुजः सर्वे, किमेतदिति सम्भ्रमम् ॥ ४३७ ॥
गुरोः शिष्येष्विवाक्रोशै–र्घण्टारावैर्द्युवासिषु ।
अवधानगतेषूच्चै–र्नैगमेषीत्यभाषत ॥ ४३८ ॥
भो भोः सर्वे ! सुपर्वाणः !, शक्रोऽनाक्रम्यशासनः ।
स देव्यादिपरीवारा–नित्यादिशति वः स्वयम् ॥ ४३९ ॥
'जम्बू'द्वीपस्य 'भरते', दक्षिणार्द्धस्य मध्यमे ।
भागे कुलकृतो नाभे–रजनि प्रथमो जिनः ॥ ४४० ॥
यातारस्तत्र तज्जन्म–कल्याणिकमहोत्सवम् ।
कर्तुं वयं यूयमपि, त्वरध्वं सपरिच्छदाः ॥ ४४१ ॥
अद्याकस्मिकमस्माकं, नाकनायकतास्पृशाम् ।
पुण्यैरगण्यैरुद्भिन्न–मेतदेव महत् फलम् ॥ ४४२ ॥
यद् वृन्दारकवृन्दानां, चतुर्भेदभृतामपि ।
नास्ते परं परं कृत्य–मर्हत्कल्याणपर्वणः ॥ ४४३ ॥
कल्याः कल्याणपर्वाणि, जिनानां जनयन्ति ये ।
पितृबुद्ध्येव सेवन्ते, तानि तानन्नुवासरम् ॥ ४४४ ॥
सुराः श्रुत्वेति तामाज्ञा–माशु मुक्त्वा प्रमत्तताम् ।
गीर्वाणपतिमावव्रुः, सुविनीतं गुणा इव ॥ ४४५ ॥
आदिष्टः पालकाऽभिख्यो, जम्भजेत्राऽऽभियोगिकः ।
'ईहायानं महामानं, विमानं कल्प्यतामिति ॥ ४४६ ॥
पञ्चयोजनशत्युच्चं, लक्षयोजनविस्तृतम् ।
अर्हज्जन्ममहप्रीत्या, ध्वजैर्नृत्यद्भुजैरिव ॥ ४४७ ॥
'पालकं' नाम शक्राज्ञा–पालकः पालकः क्षणात् ।
विमानमविद्यमान–प्रतिमानमयं व्यधात् ॥ ४४८ ॥–युग्मम्

१ देवाः । २ इन्द्राणाम् । ३ सुरसमूहानाम् । ४ भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकेति चतुःप्रकाराणाम् । ५ कल्याणपर्वाणि । ६ कल्यान् । ७ इन्द्रेण । ८ इच्छानुकूलगतिकम् ।

सुखारोहाय तत्रासं-स्तिस्रः सोपानपङ्क्तयः ।
साम्राज्ये शक्तयो[1] यद्वत्, सद्धर्मे गुप्तयो यथा ॥ ४४९ ॥
तासां पुरो दधौ रत्न-मयीं तत्तोरणत्रयीम् ।
विमान-सौध[2]-भवन[3]-धिक्काराय धनुस्त्रयीम् ॥ ४५० ॥
स्फूर्जद्वैज्रकरोन्निद्रं[4], विमानानां तदिन्द्रवत् ।
गवाक्षप्रकरै रेजे, लक्ष्यचक्षुः परं परम् ॥ ४५१ ॥
गवाक्षैस्तद्विभो रूप-निरूपणकृते किल ।
सहस्रनेत्रसंहर्ष-वशान्नेत्रसमूहभृत् ॥ ४५२ ॥
रत्नाधाने[5] विमानेऽत्र, चित्रकुम्भावलिच्छलात् ।
रत्नजानीव तेजांसि, ययुः प्राज्यानि पिण्डताम् ॥ ४५३ ॥
समवृत्तधरा रत्न-शस्या तस्यान्तरा धरा ।
बभौ सौधर्मकल्पश्रीः, मुकुराकारधारिणी ॥ ४५४ ॥
विचित्ररत्नभित्तीनां, रत्नोर्व्याश्च महश्चयः ।
रेजे तत्रेन्द्रकोदण्ड-जननद्रव्यपिण्डवत् ॥ ४५५ ॥
तन्मध्ये[6] विविधै रत्नै-र्निर्मितो निर्ममेतमाम् ।
स्वर्विमानाभिमानानां, क्षयं प्रेक्षणमण्डपः ॥ ४५६ ॥
तत्र पाञ्चालिका रेजुः, स्तम्भेष्वप्सरसोऽभितः ।
रम्यताऽतिशयप्रेक्षा-विस्मयस्तम्भिता इव ॥ ४५७ ॥
तद्गर्भे[7] दर्भमाणिक्य-संश्लिष्टा पीठिकाऽशुभत् ।
धृतरागा स्वर्गाधीश-सेवाहेवाकतः किल ॥ ४५८ ॥
विष्कम्भा-ऽऽयामयोरेषा[8], व्यराजिष्टाष्टयोजना ।
चतुर्योजनपिण्डेन्द्र-लक्ष्मीखेलनशैलवत् ॥ ४५९ ॥
कल्याणकारणैरिन्द्र-सुकृतैरिव निर्मलैः ।
निर्मितं मणिभिर्स्तस्या, मध्ये सिंहासनं महत् ॥ ४६० ॥
ऊर्ध्वं तस्याभूद्[9] विजय-दूष्यं मणिविभूषणम् ।

---

१ प्रभाव उत्साहो मन्त्रः शक्तयः । २ हर्म्यगृह० । ३ क-'भुवन०' । ४ इन्द्रविभूषितम् । ५ रत्नास्पदे । ६ प्रेक्षणमण्डपमध्यभागे । ७ पीठिका । ८ पीठिकायाः । ९ सिंहासनस्य ।

उल्लसद्भिः करैः श्लिष्टा-खिलकाष्ठाऽङ्गनागणम्[1] ॥ ४६१ ॥
सुमनोहद्युमनोऽश्वेभ-स्थिरीकरणकारणम् ।
कुम्भिकं मौक्तिकं दाम, तत्र वज्राङ्कुशोऽप्यभात् ॥ ४६२ ॥
तदर्द्धायामवद्भिस्तद्-दाम[2] मौक्तिकदामभिः ।
रेजेऽर्द्धकुम्भिकैः पार्श्व-भृतैस्तस्यार्भकैरिव ॥ ४६३ ॥
तद्रामणीयताऽऽलोक[3]-कौतुकादिव मन्दताम् ।
संश्रित्यान्दोलयन्ति स्म, तानि[4] पूर्वादिवायवः ॥ ४६४ ॥
तदन्तः प्रस्फुरन्नादं, मरुत् कर्णसुधां व्यधात् ।
क्वापि नातः परं रम्य-मस्तीति प्रस्तुवन्निव ॥ ४६५ ॥
सिंहासनमिदं श्रित्वा, वायुश्रीदेशदिक्ष्विह[5] ।
भद्रासनान्यशोभन्त, 'सामानिक'दिवौकसाम् ॥ ४६६ ॥
तावन्ति चतुरशीति-सहस्रप्रमितिस्पृशाम्[6] ।
अष्ट मुख्याष्टदेवीनां, पूर्वस्यामासनानि तु ॥ ४६७ ॥—युग्मम्
भद्रासनान्यभ्यन्तर-सभ्यानां त्रिदिवौकसाम्[7] ।
द्वादशासन् सहस्राणि, श्रितान्यग्निदिशं पुनः ॥ ४६८ ॥
दक्षिणस्यां दिशि स्वर्ग-सदां मध्यसदःसदाम्[8] ।
आसनानि शुशुभिरे, सहस्राणि चतुर्दश ॥ ४६९ ॥
आसनानि तु दक्षिण-पश्चिमायां[9] दिशि क्रमात् ।
षोडशासन् सहस्राणि, बाह्यपर्षद्दिवौकसाम् ॥ ४७० ॥
आसनान्यद्युतन् सप्ता-नीकनायकनाकिनाम् ।
स्वर्लक्ष्मीतिलकानीव, पश्चिमाशाश्रितानि तु ॥ ४७१ ॥
प्रत्याशं चतुरशीति-सहस्राण्यात्मरक्षिणाम् ।
परितोऽप्यासनानीन्दु-धिष्ण्यानीव ध्रुवं बभुः ॥ ४७२ ॥
विमानेन्द्रस्य तस्यान्यै-र्विमानैरर्पितं जितैः ।
सम्पीड्य स्वमहो दण्डे, रत्नासनततिच्छलात् ॥ ४७३ ॥

---

१ ककुप्कामिनीकुलम् ।  २ क-'दामभिर्मौक्तिकादिभिः' ।  ३ ख-'यकालोक-' ।
४ मौक्तिकदामानि ।  ५ वायुकोणोत्तरेशानदिक्षु ।  ६ सामानिकदेवानाम् ।  ७ देवानाम् ।
८ मध्यसभास्थायिनाम् ।  ९ नैरृत्यकोणे ।

पूर्णतां तूर्णमेवैत-दाभियोगिकनाकिनः ।
निन्युर्विमानमिन्द्रस्य, मनोरथमिवोन्नतम् ॥ ४७४ ॥
उत्तरं विकरोति स्म, तदा रूपं पुरन्दरः ।
जिनजन्मोत्सवाय प्राक्-छन्नीकृतमिवाद्भुतम् ॥ ४७५ ॥
महिषीभिस्ततोऽष्टाभि-र्जम्भारिः शोभितोऽभितः ।
सद्दृष्टिभिः [1]प्रवचन-मातृभिः श्रुतबोधवत् ॥ ४७६ ॥
गन्धर्वाऽनीकनाट्याऽनी-कानेककृतकौतुकः ।
हर्षात् प्रदक्षिणीकुर्वन्, पूर्वसोपानपङ्क्तितः ॥ ४७७ ॥
चञ्चद्विचित्रवादित्र-स्वनमित्रप्रतिस्वनैः ।
तन्वद् विमानमाह्वान-मिवारोहन् महामहात् ॥४७८॥-त्रिभिर्विशेषकम्
तत्रेन्द्रः पूर्वाभिमुखो, भानुः पूर्वाद्रिसानुवत् ।
भेजेऽचलाग्रवत् पञ्चा-ननः पञ्चाननासनम् ॥ ४७९ ॥
[3]तत्रत्योदीच्यसोपानैः शक्रसामानिकाः क्रमात् ।
उपाविशन् विशिष्टानां, न क्रमस्य व्यतिक्रमः ॥ ४८० ॥
समेत्या[4]ऽपाच्यसोपानैः, शिश्रियुस्त्रिदशाः परे ।
स्वस्वासनानि महतां, न स्पृहा परवस्तुषु ॥ ४८१ ॥
पुरतो मरुतां पत्यु-र्मुकुरादीनि रेजिरे ।
मङ्गलान्यष्ट निष्पिष्ट-दुष्टारिष्टानि देहिनाम् ॥ ४८२ ॥
अर्हद्ध्यानोद्भवं पुण्यं, स्वर्पतेर्वपुरन्तरा ।
अमादमात्रमुद्वान्तं, श्वेतच्छत्रच्छलादलम् ॥ ४८३ ॥
चामरैश्चामरेशस्य, चञ्चलै रुरुचेतराम् ।
कटाक्षैः पुण्यलक्ष्म्येव, निक्षिप्तैस्तत्क्षणोत्कया ॥ ४८४ ॥
सहस्रयोजनोत्सेधो, विरेजे जम्भजिद्ध्वजः ।
विमानाग्रे पताकाभिः, सत्क्रियाभिरिवोत्तमः ॥ ४८५ ॥
प्रतिमानैर्विमानान्त-[5]र्वृत्रभिन्मणिभित्तिषु ।
देवाधिदेवसेवायै, बहुमूर्त्तिरिवाभवत् ॥ ४८६ ॥

१ समितिपञ्चकगुप्तित्रितयरूपाष्टप्रवचनमातृभिः । २ क-'पङ्क्तयः' । ३ क-'तत्रत्यो०' ।
४ दक्षिणनिःश्रेणिभिः । ५ इन्द्रः ।

सङ्क्रान्ता रत्नपाञ्चाली–मालासु त्रिदिवौकसः ।
शुभसौभाग्यशोभाङ्ग–सङ्गमोत्कण्ठिता इव ॥ ४८७ ॥
शतकोटिकरः[1] कोटि–मितैः परिवृतः सुरैः ।
विमाने नभसीवाभात्, तारकैस्तारकेश्वरः[2] ॥ ४८८ ॥
वृतं विष्वग् [3]विमानान्त–र्विमानौघैर्विमानिनाम् ।
रेजे रत्नाद्रिवद् रत्ना–वृतैः प्रत्यन्तपर्वतैः ॥ ४८९ ॥
विमानानि विमानानां, प्रतिबिम्बैर्मिथोऽन्तरा ।
वयमेतानि वा रम्या–णीति ज्ञातुमिवागमन् ॥ ४९० ॥
ततो जय जयेत्युच्चै–र्बन्दिवृन्दारकारवैः ।
गम्भीराम्भोधरध्वान–सगर्भैर्दुन्दुभिध्वनैः ॥ ४९१ ॥
नटद्गन्धर्वनाट्याऽनी–कोद्यद्वादित्रनिःस्वनैः ।
[4]विमानादभ्रगर्भेषु, सम्मूर्च्छद्भिः प्रतिस्वनैः ॥ ४९२ ॥
सकलैरप्येककालं, सम्मील्योल्लासितं किल ।
चचाल 'पालकं' नाम, विमानं वासवेच्छया ॥ ४९३ ॥–त्रिभिर्विशेषकम्
द्वात्रिंशल्लक्षसङ्ख्यानै[5]–र्विमानैः परिवेष्टितम् ।
तिर्यङ्मार्गेण 'सौधर्मा'–त्तरतोऽप्युत्ततार तत् ॥ ४९४ ॥
तव प्राणेश ! तीर्थेश–सेवाहेवाकिताफलम् ।
देवत्वमभवत् तत् किं, तदुपास्त्यै[6] प्रमाद्यसि ? ॥ ४९५ ॥
[7]संहिते सुकृतैरद्य, जिनजन्मोत्सवे रयात् ।
शक्राः सर्वे समेष्यन्ति, समदाः सपरिच्छदाः ॥ ४९६ ॥
प्रिय ! यद्युत्सवेऽप्यद्य, नैव देवाधिपाज्ञया ।
उत्तिष्ठसे विनिष्टं तद्, ध्रुवं तव भवद्वयम् ॥ ४९७ ॥
तत् किमप्येवमेव त्वं, मन्मुखालोकमोहितः ? ।
अहं तावत् सहैष्यामि, स्वामिन्नसिन् महामहे ॥ ४९८ ॥
उत्तिष्ठोत्तिष्ठ तीर्थेश–पर्युपासनवासनः ।
आसादय महापुण्यं, प्रसादय दिवस्पतिम् ॥ ४९९ ॥

---

१ इन्द्रः । २ चन्द्रः । ३ क–'विमानं तद् विमानौ०' । ४ क–'विमानादद्रि०' । ५ क–'स-ङ्ख्यातै–' । ६ तीर्थेशस्य पूजायै । ७ क–'सहिते' । ८ पुण्यैर्मिलिते । ९ क–'प्येष' ।

इति वल्लभया कश्चि–च्चतुरैर्वचनक्रमैः ।
उत्साहितस्तुरासाहं, सुरः सत्वरमन्वगात् ॥ ५०० ॥–पञ्चभिः कुलकम्

मित्रचित्रसुखास्वाद–मदमेदुरसम्मदाः ।
मुग्धा निर्गमयन्त्यायु–र्मदिरामूर्च्छिता इव ॥ ५०१ ॥

लभन्ते दुर्लभान् भावान्, देहिनो यदुपासनात् ।
कृतघ्ना इव तं धर्मं, न स्मरन्त्युपकारिणम् ॥ ५०२ ॥

अप्रदातुमना धर्मः, शर्म सारं शरीरिणः ।
विषयैर्विप्लावयते, बालान् खेलनकैरिव ॥ ५०३ ॥

धर्म्यो देशः कुलं रम्यं, रूपं चिद्रूपताऽश्रितम् ।
आयुरुल्लाघतादीर्घं, श्रुतं सद्गुरुसंश्रितम् ॥ ५०४ ॥

आर्याचारपरा नार्य–स्तनया विनयान्विताः ।
लक्ष्मीर्लक्ष्मोज्झितेत्यादि, शुभं यदिह लभ्यते ॥ ५०५ ॥

अमुत्र यदमर्त्यत्व–मिन्द्रत्वमपि सेव्यते ।
तद् ध्रुवं विद्धि धर्मस्या–राधितस्याखिलं फलम् ॥ ५०६ ॥

धर्मो वृद्धिं परां धत्ते, न जिनाराधनं विना ।
ऋतेऽपि विधुकान्तिं किं, विधुकान्तः सुधां श्रयेत् ( स्रवेत् ? ) ॥५०७॥

कालादलक्षिते तस्मिन्, धर्मे बोधप्रदानतः ।
जनानां जागरूकत्वं, जनयन्त्यर्कवज्जिनाः ॥ ५०८ ॥

जन्मस्नात्रादिकल्याण–पर्वस्वेव सुपर्वणाम् ।
प्रायस्तीर्थङ्करोपास्ति–प्रस्तावस्तावदुत्तरः ॥ ५०९ ॥

अर्हत्कल्याणपर्वाण्य–प्यकुर्वद्भिः सुपर्वभिः ।
सुपर्वत्वं कृतं व्यर्थं, यैस्तानेति न तंत् पुनः ॥ ५१० ॥

तदेहि ते हितं ह्येतद्, दूरं प्राप्तः पुरन्दरः ।
एवमुद्दीपितो मित्रैः, कोऽपि स्वर्पतिमापतत् ॥५११॥–एकादशभिः कुलकम्

केऽप्यूर्ध्वंध्रुवधूरूप–निरूपणपरायणाः ।
केऽपीशानेन्द्रमुख्येन्द्र–सान्द्रश्रीदर्शनोद्यताः ॥ ५१२ ॥

---

१ इन्द्रम् । २ मोक्षसुखम् । ३ ख–'धर्मो' । ४ नीरोगता० । ५ कलङ्करहिता । ६ चन्द्रकान्तमणिः । ७ प्रधानः । ८ क–'अपर्वत्वं' । ९ देवान् । १० देवत्वम् ।

केऽपि स्वर्गाङ्गनागीत-श्रवणप्रवणाशयाः ।
केऽप्याज्ञालोपतः कोप-भयदम्भोलिभृद्भियः ॥ ५१३ ॥
केऽपि विस्फूर्जदूर्जस्वि-तूर्यनादोद्यदुद्यमाः ।
केऽपि केवलतीर्थेश-ध्यानसन्धानमानसाः ॥ ५१४ ॥
देवा देवेन्द्रमन्वीयु-स्त्वरितत्वरितेरितैः ।
विमानैर्वेगवद्यानै-र्नानायानैः परैरपि ॥ ५१५ ॥-चतुर्भिः कलापकम्
तद्विमानैरनुगतै-र्विमानप्रकरोऽग्रगः ।
परितः पूरितो रेजे, सरित्पूरैरिवार्णवः ॥ ५१६ ॥
विमानं व्योम्नि [1]विस्मेर-जालकं 'पालकं' चलत् ।
पार्श्वस्फुरद्विमानेक्षा-स्फारिताक्षमिवाबभौ ॥ ५१७ ॥
[2]हरेर्दर्शयितुं देवा, जिनसेवार्थमागतम् ।
स्वं स्वं विमानमानिन्युः, 'पालका'ग्रे कृतत्वराः ॥ ५१८ ॥
[3]तदा विमानसङ्घट्टाद्, ये दिवि स्वेदबिन्दवः ।
[4]ततोऽद्योतन्त तेऽद्यापि, दृश्यन्ते धिष्ण्यदम्भतः ॥ ५१९ ॥
घट्टसे [5]स्वविमानेन, किं विमानमिदं मम ? ।
[6]विपुलो द्युपथोऽस्त्येष, द्वेषमेषितमां मृषा ॥ ५२० ॥
किं मे गतिविलम्बाय, जायसे प्रविशन् पुरः ? ।
यतो लीलावतीयानं, यानहंसाः श्रयन्ति ते ॥ ५२१ ॥
आस्फालयति किं पश्चाद्, यानमग्रे न पश्यसि ? ।
यद्युत्सुकोऽसि तद् याहि, पङ्क्तिबाह्यस्थितो द्रुतम् ॥ ५२२ ॥
सङ्घट्टे हर्षसंहर्ष-[8]सर्पिणां स्वर्गिणां तदा ।
मिथः कलहजो जज्ञे, कोऽपि कोलाहलो महान् ॥५२३॥-कलापकम्
विमानसङ्घसङ्घर्षा-न्माऽमर्षं कुरुतामराः ! ।
महेऽद्य स महः कीदृक्, सम्मर्दो यत्र नार्दति ? ॥ ५२४ ॥
केऽपीत्याघोषणां तेनु-स्तदा मघवतो गिरा ।

---

१ उद्घाटितगवाक्षम् । २ इन्द्रस्य । ३ ख-'विमानसङ्घसङ्घट्टाद्, ये दिवः स्वेद०' । ४ ख-'तदाऽद्योत०' । ५ ख-'किं विमानेन' । ६ ख-'पृथुलो' । ७ गामिनाम् । ८ ख-'सहर्षा०' ।

उच्चकैः सुरचक्राणां, कुले कलकलाकुले ॥ ५२५ ॥–युग्मम्
किं प्रियायाः प्रियालाप–कलापप्रमदादहो ।
विस्मृतिं सम्प्रति प्राप्ता, विमानप्रेरणाऽपि ते ? ॥ ५२६ ॥
घनाघनघटाच्छन्न–विमानो मानिनीजनैः ।
ज्योतिष्किकाणां कलहं, कर्णयन् वर्ण्यसेऽधुना ॥ ५२७ ॥
सर्वतः पर्वतग्रामा–रामाणां रामणीयकम् ।
गुर्व्यां निरूपयन्नुर्व्यां, मन्दमन्दतमोऽसि किम् ? ॥ ५२८ ॥
सखे ! सखेदवन्मन्दं, यानं नानन्दकृत् तव ।
निभालयसि नो बाल !, 'पालकं' दूरगं पुरः ॥ ५२९ ॥
अद्य प्रमादतो दीव्यन्, यदि पश्चादुपैष्यसि ।
तत्पुरः सुरसम्मर्दे, न मुखं द्रक्ष्यसि प्रभोः ॥ ५३० ॥
इत्थं सुहृद्भिराहूताः, पुरुहूताग्रतो गताः ।
केचित् पश्चान्निपतिता, अपि यानैरतित्वरैः ॥ ५३१ ॥–षड्भिः कुलकम्
प्रचेलुः पुष्पपटली–प्रवराः सुरकिङ्कराः ।
अर्हत्पूजाकृते देव–द्रुमा इव सहामरैः ॥ ५३२ ॥
विमानिनां विमानानि, व्यक्तमामुक्तमौक्तिकैः ।
गतिवेगोद्गतैः स्वेद–बिन्दुवृन्दैरिवाद्युतन् ॥ ५३३ ॥
विप्रकीर्णा रयाद् दीर्ण–हारमुक्ता दिवोऽपतन् ।
त्रिदशानां विमानानां, प्रेरितास्तारका इव ॥ ५३४ ॥
मुक्तालङ्करणान्यासन्, धिष्ण्यानां श्रेणयः क्षणम् ।
सम्मर्दात् [4]तेषु शीर्णेषु, प्राक्तनेषु द्युयोषिताम् ॥ ५३५ ॥
इन्दुः स्वं पदमाप्तानां, देवानां श्रान्तिशान्तिदम् ।
मरीचिनिचयैश्चक्रे, चन्दनैरिव चर्चनम् ॥ ५३६ ॥
शुभ्रभानुस्फुरद्भानु–शुभ्रीकृतशिरोरुहाः ।
तदा नभसि भान्ति स्म, [9]निर्जराः सजरा इव ॥ ५३७ ॥

१ क–'गुर्व्यां निरूपयन्नुर्व्यां' । २ इन्द्रस्याग्रे । ३ 'पहेरेलुं' इति भाषायाम् । ४ मुक्तालङ्करणेषु । ५ चन्द्रः । ६ खेदशान्तिदायकम् । ७ क–'शुभ्रसानु०' । ८ ख–'भूत०' । ९ देवाः ।

उपान्तभ्रान्तगीर्वाण-विमानमणिसानुभिः[1] ।
सहस्रभानुः[2] सहसा, कोटिभानुरिवाभवत् ॥ ५३८ ॥
प्रचलन्ति विमानानि, चञ्चलैः केतनाञ्चलैः ।
व्योम्नि स्वं वीजयन्ति स्म, क्लान्तं रविकरैरिव[3] ॥ ५३९ ॥
कराच्चैर्नीरैर्भृन्नीरै[4]-र्नाकिनां यानदन्तिनः ।
सूत्कारस्फारितात् तापं, सीकरासारतो[5]ऽहरन् ॥ ५४० ॥
त्रस्ताः स्वर्वासिनां यान-कासरा वासराधिपात् ।
नीरदानां न्यलीयन्त[6], तापहारिषु वारिषु ॥ ५४१ ॥
नानाविमानरत्नांशु-व्रातैरिन्द्रधनुःशतम् ।
देवैर्ददेऽम्बुदेभ्यस्तै-स्तेभ्य[7]श्छायोपरिस्थितैः ॥ ५४२ ॥
अधोऽम्बुधरधोरण्या[8]-धवलाभिरलभ्यत ।
विमानवैजयन्तीभि-र्बलाकावलिर्वल्गिताः[9] ॥ ५४३ ॥
मन्दमान्दोलयन्नीर-धरनीरपरम्पराम्[10] ।
श्रयन् सुरपुरन्ध्रीणां, पद्मगन्धीन् मुखानिलान् ॥ ५४४ ॥
मरुतो[11] नाम मित्राणि, प्रीणयन् परिरम्भणैः ।
सिषेवे स्वपथप्राप्तं, मरुतामधिपं मरुत् ॥ ५४५ ॥—युग्मम्
असङ्ख्यान् मघवोल्लङ्घ्य, लघु द्वीपनदीपतीन् ।
नाम्ना 'नन्दीश्वरं' द्वीपं, 'पालके'न समापतत् ॥ ५४६ ॥
तत्र दक्षिणपूर्वस्थे, स्थित्वा 'रतिकरे' गिरौ ।
अपावर्तयदङ्कज्ञो[12]-ऽङ्कवत् तत् 'पालकं' हरिः ॥ ५४७ ॥
ततोऽर्वाक् क्रामन् द्वीपा-ऽब्धीन्, विमानं तन्मुहुर्लघु ।
शक्रश्चक्रे गुणस्थाना-नीव चारित्रवान् भवम् ॥ ५४८ ॥
'जम्बू'द्वीपे 'भरता'र्द्धे, दक्षिणे क्षणतोऽगमत् ।
आद्यार्हतो जन्मसद्म, निकषा[13]ऽनिमिषाधिपः[14] ॥ ५४९ ॥
श्रेणीभूतोत्तरद्भूरि-विमानान्तरगं पुरः ।

---

१ ख-'भानुभिः' । २ सहस्रकिरणः सूर्यः । ३ क-'करतलैरिव' । ४ मेघजलैः । ५ क-'सीकरा०' । ६ क-'व्यली०' । ७ देवेभ्यः । ८ मेघपरम्परा० । ९ क-'वल्गुताः' । १० ख-'परम्पराः' । ११ देवान् । १२ गणितज्ञः सङ्ख्याङ्कवत् । १३ समीपे । १४ इन्द्रः ।

तत् 'पालकं' वियल्लक्ष्मी–हारनायकतां ललौ ॥ ५५० ॥
विमानश्रेणयः क्षोण्या–मुत्तरन्त्योऽम्बराद् बभुः ।
प्रावृषेण्यास्तरङ्गिण्यः, सर्वतः पर्वतादिव ॥ ५५१ ॥
तत् 'पालकेन' पौलोमी–पतिः[1] सूतिगृहं प्रभोः ।
प्रदक्षिणीकरोति स्म, ध्रुवं[2] धिष्ण्यगणो यथा ॥ ५५२ ॥
ततस्त्रिविष्टपस्वामी,[3] स्वं विमानमतिष्ठिपत् ।
तत्पूर्वोत्तरदिग्देशे, मनो मुनिरिवात्मनि ॥ ५५३ ॥
ततोऽवरुह्य वेगेन, स्वर्गेनः[4] सन्निधौ विभोः ।
ययौ मदात् तदालोका–यल्लकोत्कलिकाकुलः[5][6] ॥ ५५४ ॥
ननाम स्वर्धामपति–र्दृष्टमात्रमपि प्रभुम् ।
तत्प्रेक्षोत्पद्यमानानि, पुण्यान्यात्तुमिवातुरः ॥ ५५५ ॥
पुनः प्रदक्षिणीकृत्य, प्रभुमिन्द्रः समातरम् ।
नमश्चक्रेऽतितृष्णार्त्तः, पयः पीत्वा पुनः पिबेत् ॥ ५५६ ॥

सौधर्मेन्द्रेण मरुदेव्या नुतिः

जल्पति स्म ततोऽनल्प–सुकृतालिः कृताञ्जलिः ।
मरुदेवामिदं देवा–धिपः सेवाकृतौ कृती ॥ ५५७ ॥
जय त्रिजगतीमात–र्जय त्रिजगतीनते ! ।
नमस्ते त्रिजगत्स्तुत्ये !, नमस्ते त्रिजगत्स्थिरे ! ॥ ५५८ ॥
आसंसारं हृदि सारं, सारं श्रीधाम नाम ते ।
दारिद्र्यदारिणीं देवि !, श्रयिष्यन्ति श्रियं नराः ॥ ५५९ ॥
अमुष्मिन् 'भरत'क्षेत्रे, कालतो लोपमीयुषः ।
धर्मस्योद्धारधौरेय–स्त्वयाऽयं[7] जनितोऽङ्गजः ॥ ५६० ॥
रत्नस्य रोहणक्षोणि–र्नैव देवि ! तवोपमा ।
त्रैलोक्यस्याप्यलङ्कारो, यतो जातोऽङ्गजस्त्वयि ॥ ५६१ ॥
या मातर्जनयत्यर्क–मेकलोकप्रकाशकम् ।
दिशं दिशन्ति तां दिक्षु, पूर्वां सर्वासु कोविदाः ॥ ५६२ ॥

---

१ शचीपतिः–इन्द्रः । २ ध्रुवतारकाम् । ३ स्वर्गनाथः–इन्द्रः । ४ ख–'स्वर्गेशः' । ५ ख–'यल्लोको०' । ६ उत्कण्ठाकल्लोलाकुलः । ७ क–'स्त्वया' ।

जनयित्री जिनेशस्य, विश्वविश्वप्रकाशिनः ।
वर्ण्यसे वर्णिनीषु त्वं, न कथं प्रथमा ततः ? ॥ ५६३ ॥
सूनोर्जन्ममहं कर्तु–महं ते प्रथमार्हतः ।
सौधर्मेन्द्रः समेतोऽस्मि, न भेतव्यं शुभे ! त्वया ॥ ५६४ ॥
इत्युक्त्वा मरुदेवायां, शक्रो[1]ऽवस्वापिनीं ददौ ।
तत्पार्श्वे च प्रभोश्चक्रे, प्रतिच्छन्दममन्दधीः ॥ ५६५ ॥

श्रीऋषभदेवस्य मेरौ आनयनम्

पञ्चेन्द्रियाणि जित्वाऽयं, [2][3]विषयान् पञ्च वञ्चयन् ।
पञ्चबाणं निकुर्वाण–श्चरन् [4]पञ्चमहाव्रतीम् ॥ ५६६ ॥
स्वीकुर्वन् समितीः पञ्च, [5]पञ्चाचारपरायणः ।
पञ्चभूतमये पिण्डे, निर्ममत्वं प्रपञ्चयन् ॥ ५६७ ॥
[6]पञ्चमं ज्ञानमुत्पाद्य, [7]पञ्चमीं गतिमेष्यति ।
तस्मादमुष्य मुख्यस्य, पञ्चानां [8]परमेष्ठिनाम् ॥ ५६८ ॥
रूपैः पञ्चभिराधास्ये, स्वयमाराधनामिति ।
विचिन्त्य पञ्च रूपाणि, [9]पविपाणिर्विनिर्ममे ॥ ५६९ ॥–कलापकम्
अनुजानीहि मां नाथ !, स्नात्रार्थं 'मेरु'मूर्द्धनि ।
[10]पुरुहूतः पुरो भूत्वा, नत्वेत्युक्त्वा जगत्पतिम् ॥ ५७० ॥
पाणिद्वयेन गोशीर्ष–चन्दनाक्तेन भक्तितः ।
रूपेणैकेन जग्राह, किल मङ्गलमङ्गवत् ॥ ५७१ ॥–युग्मम्
श्वेतातपत्रमेकेन, प्रभोरुपरि पृष्ठगः ।
स बभार समुद्भ्रान्तं, श्रेय[11]स्तस्येव [12]यद् बभौ ॥ ५७२ ॥
स द्वाभ्यां बिभराञ्चक्रे, चामरे चाऽमलप्रभे ।
निजनेत्रसहस्राणां, किरणश्रेणिवत् तते ॥ ५७३ ॥

---

१ निद्राकारिणीं विद्याम् । २-३ "स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणि, स्पर्श-रस-गन्ध-वर्ण-शब्दास्तेषामर्थाः" इति तत्त्वार्थे ( अ० २, सू० २०-२१ ) । ४ अहिंसा-सत्या-ऽस्तेय-ब्रह्म-चर्या-ऽकिञ्चनत्वेति । ५ ज्ञान-दर्शन-चारित्र-तपो-वीर्याचारेषु तत्परः । ६ केवलसञ्ज्ञकम् । ७ मुक्तिम् । ८ परमे पदे तिष्ठन्तीति परमेष्ठिनः; ते च पञ्चधा, अर्हत्-सिद्धा-ऽऽचार्यो-पाध्याय-साधुभेदतः । ९ इन्द्रः । १० ख–'पुरुहूतं' । ११ इन्द्रस्य । १२ श्वेतातपत्रम् ।

निर्दम्भभक्तिर्दम्भोलिं, [1]बिभ्राणो [2]वल्गु[3]वल्गुनः ।
सोऽभूदग्रे वलद्ग्रीवं, स्वामिन्येके[4]र्न दत्तदृक् ॥ ५७४ ॥
स्वस्वव्यापारकरणा-दिन्द्राः पञ्चापि तेऽरुचन् ।
इन्द्रियाणीव जीवेन, स्वामिनाऽन्तरवर्तिना ॥ ५७५ ॥
जगद्विभुं जगद्भाग्यं, सङ्गृह्याङ्कमिवाश्रितम् ।
तेऽम्बरे मेदुरानन्दाः, पञ्चाप्युत्पेतुरुच्चराः ॥ ५७६ ॥
स्वामीजयजयाराव-मुखरीकृतदिङ्मुखैः ।
ततः सुरैर्नतस्तुल्य-कालमानतमौलिभिः ॥ ५७७ ॥
देवानां विभुवक्त्रेन्दु-दर्शनान्नेत्रकैरवैः ।
उन्मीलितं करद्वन्द्व-कमलैः कुड्मलायितम् ॥ ५७८ ॥
स ऊर्ध्वगः प्रभौ धत्ते, यः क्रियां भक्तिसूचिकाम् ।
करैः कुड्मलितैस्तेन, नाकिनां मौलिषु स्थितम् ॥ ५७९ ॥
सल्लक्षणानाम[5]ष्टाग्रं, सहस्रं स्वामिनः समम् ।
द्रष्टुमैच्छदक्षीणि, [6]सहस्राक्षोऽधिकान्यपि ॥ ५८० ॥
सहस्रनेत्रोऽनुपमं, स्वामिरूपं निरूपयन् ।
अमोघां श्लाघयामास, नेत्राणामनिमेषताम् ॥ ५८१ ॥
अतृप्तां नेत्रयुग्मेन, पश्यन्तः स्वामिनं सुराः ।
सर्वे सहस्रनेत्राय, स्पृहयन्ति स्म विस्मिताः ॥ ५८२ ॥
अहम्प्रथमिकाप्तानां, प्रभोर्मुखमवेक्षितुम् ।
मरुतां स्फुरतामग्रे, सङ्घट्टः कोऽप्यभूत् तदा ॥ ५८३ ॥
विमानपङ्क्तयः प्रेङ्खत्-पताकापटपल्लवैः ।
प्रभोर्नि[7]रुञ्छनानीव, स्वर्वधूस्पर्धयाऽसृजन् ॥ ५८४ ॥
अभिषेकं प्रभोः कर्तुं, [8]काञ्चनाद्रौ [9]शचीश्वरः ।
ततश्चचाल वाचाल-दिग्जालस्तूर्य[10]गर्जितः ॥ ५८५ ॥

---

१ धारयन् । २ सुन्दरगतिः । ३ ख-'वल्गनः' । ४ रूपेण । ५ अष्टोत्तरसहस्राणां लक्षणानां नामानि कुत्रापि नोपलभ्यन्ते । ६ इन्द्रः । ७ 'ओवारणा' इति भाषायाम् । ८ 'मेरु'गिरौ । ९ दन्त्योऽप्यस्ति । १० क-'गर्जितैः' ।

प्रभौ जग्मुर्वलद्ग्रीव-मग्रेऽग्रे गच्छतामपि ।
वारंवारमवाराणि, नेत्राणि त्रिदिवौकसाम् ॥ ५८६ ॥
अग्रे मार्गेषु रुद्धेषु, प्रभोर्वीक्षणकाङ्क्षिणः ।
अणिमास्मरणात् केऽपि, सूक्ष्मीभूय पुरोऽभवन् ॥ ५८७ ॥
सिंहयानाद् गजयानो-ऽश्वासनः कासरासनात् ।
द्वीपिवाह्यात् पृषद्वाह्यो[1]-ऽहिध्वजो गरुडध्वजात् ॥ ५८८ ॥
दूरेणाध्वनि यानं स्वं, विदधे विबुधो मुधा ।
वैरं शाश्वतवैराणा-मपि यन्न जिनान्तिके ॥ ५८९ ॥-युग्मम्
अहो विश्वत्रये नास्य, रूपस्य प्रतिरूपता ।
अहो लवणिमा को[2]ऽपि, नेत्राणाममृताञ्जनम् ॥ ५९० ॥
अहो लोचनचारुत्वं, वचनानां न गोचरे ।
अहो शरीरसंस्थान-मास्थानं सौम्यसम्पदः ॥ ५९१ ॥
अहो किमपि माहात्म्यं, स्वामिनोऽस्य शिशोरपि ।
यदास्येक्षणसौख्येन, न नः स्वर्गेऽपि च स्पृहा ॥ ५९२ ॥
शक्रेण स्वामिनाऽस्माकं, प्रसादोऽद्याद्भुतः कृतः ।
येनानिन्यिमहे स्नात्र-महमेनं महेशितुः ॥ ५९३ ॥
इति ब्रुवाणा गीर्वाणाः, कम्पयन्ते स्म कन्धराम्[3] ।
शिरःस्थभवसम्भार-परिहारपरा इव ॥ ५९४ ॥-पञ्चभिः कुलकम्
कराभ्यां कलयन् नाथं, प्रथमानपृथूत्सवैः ।
सुरैः समं सहस्राक्षः, स्वर्णशैलं[4] समासदत् ॥ ५९५ ॥
तत्रान्तः'पाण्डुक'वनं, चूलिकां दक्षिणेन च ।
'अतिपाण्डुकम्बला'ख्या, शिलाऽऽस्ते स्फटिकोज्ज्वला ॥ ५९६ ॥
सा योजनपञ्चशती, दीर्घा चन्द्रार्द्धसन्निभा ।
तस्यां सिंहासनं चार्ह-ज्जन्मस्नात्राय शाश्वतम् ॥ ५९७ ॥
तत्र चित्रमणिज्योति-श्चित्रितव्योम्नि वासवः ।
अङ्कस्थापिततीर्थेशः, प्राङ्मुखो न्यषदन्मुदा ॥ ५९८ ॥

---

१ हरिणवाहनः । २ ख-'काऽपि' । ३ ग्रीवाम् । ४ 'मेरु'पर्वतम् ।

पीठस्य कम्पनं कोपो-ऽवधेर्जिनजनिज्ञता ।
घण्टाहतिः पत्त्यनीक-नेत्राऽऽह्वानं विमानिनाम् ॥ ५९९ ॥
विमानकृतिसङ्क्षेपौ, सद्दक्षोऽयं क्रमस्तदा ।
चतुःषष्टेरपीन्द्राणां, प्रत्येकं प्रत्यवर्त्तत ॥ ६०० ॥-युग्मम्

ईशानेन्द्रादीनां मेरौ आगमनम्

इहान्तरे 'महाघोषा'-घण्टाघोषावबोधितैः ।
वृतोऽष्टाविंशतिर्लक्ष-विमानत्रिदशैर्मुदा ॥ ६०१ ॥
विमाने 'पुष्पके' पुष्प-काऽभियोगिककल्पिते ।
'ईशाने'न्द्रः स्थितः शूल-शोभी वृषभवाहनः ॥ ६०२ ॥
दक्षिणेनैशानकल्प-मुत्तीर्णस्तिर्यगध्वना ।
अधि'नन्दीश'मीशान-दिक्स्थे 'रतिकरे' गिरौ ॥ ६०३ ॥
सङ्क्षिप्य 'पुष्पकं' भूयः, सङ्क्षिपंस्तत्पुरो व्रजन् ।
'सौधर्मा'धिपवत् प्राप, 'सुमेरु'शिखरं रयात् ॥ ६०४ ॥-कलापकम्
सनत्कुमारो द्वादश-लक्षसङ्ख्यविमानगैः ।
सुरैः परीतः 'सुमनो'-विमानेन समागमत् ॥ ६०५ ॥
माहेन्द्रोऽपि विमानाष्ट-लक्षजैर्लक्षितः सुरैः ।
मनस्त्वरो विमानेन, 'श्रीवत्से'न समाययौ ॥ ६०६ ॥
ब्रह्माऽपि विमानलक्ष-चतुष्टयसुरैः श्रितः ।
'नन्द्यावर्त्त'विमानस्थ-स्तीर्थनाथमुपागमत् ॥ ६०७ ॥
देवैर्विमानपञ्चाशत्-सहस्रप्रभवैर्वृतः ।
लान्तकोऽपि 'कामगव'-विमानस्थः समागमत् ॥ ६०८ ॥
चत्वारिंशत्सहस्राणां, विमानानां वृतोऽमरैः ।
शुक्रः 'प्रीतिगमा'ह्वेन, विमानेन समापतत् ॥ ६०९ ॥
सुरैः सह सहस्रारः, षट्सहस्रविमानजैः ।

---

१ पत्तिसेनानायकेन आह्वानम् । २ भवनपतीनां विंशतिः, व्यन्तराणां द्वात्रिंशत्, ज्योतिष्काणां द्वौ सूर्य-शशिनामानौ, वैमानिकानां दशेन्द्राः । अत्र असङ्ख्येयानां सूर्याणां शशिनां च समूहरूपेण व्याख्या ज्ञेया, अन्यथा इन्द्राणां सङ्ख्याऽसङ्ख्याता । ३ 'नन्दीश्वरे' द्वीपे । ४ विमानस्य अग्रतः । ५ ब्रह्मलोकस्य स्वामी ।

आगमन्'मेरु'मूर्द्धानं, 'मनोरम'विमानगः ॥ ६१० ॥
'विमले'न विमानेन, चतुःशतविमानजैः ।
सुमनोभिः समं प्राप–'दानतप्राणत'प्रभुः ॥ ६११ ॥
'आरणा-ऽच्युत'योरिन्द्र–स्त्रिविमानशतामरैः ।
स्वर्णाद्रिं 'सर्वतोभद्र'–विमानेन समाद्रवत् ॥ ६१२ ॥
तदा 'रत्नप्रभा'पृथ्व्यां, बाहुल्योत्सङ्गवासिनाम् ।
भवन[1]-व्यन्तरेशाना–मासनानि चकम्पिरे ॥ ६१३ ॥
पुर्यां 'चमरचञ्चा'यां 'सुधर्मा'यां च संसदि ।
चमराऽसुरेन्द्रः सिंहा–सने चमरके[2] स्थितः ॥ ६१४ ॥
विज्ञायावधिना जन्म, जिनभर्त्तुरवादयत् ।
घण्टा'मोघस्वरां' पत्त्य–नीकनेत्रा द्रुमेण सः ॥ ६१५ ॥
चतुःषष्ट्या सहस्रैः स, सामानिक[3]पदस्पृशाम् ।
त्रायस्त्रिंशै[4]स्त्रयस्त्रिंश–ल्लोकपालैश्चतुर्मितैः ॥ ६१६ ॥
पर्षद्भिस्तिसृभिर्मुख्य–महिषीभिश्च पञ्चभिः ।
महानीकैः सप्तमितैः, सप्तभिस्तदधीश्वरैः ॥ ६१७ ॥
असुराणां चतुःषष्ट्या, सहस्रैरात्मरक्षिणाम् ।
वृतो विमानमारुक्ष–दाभियोगिकनिर्मितम् ॥ ६१८ ॥
यत् पञ्चयोजनशत–समुन्नतमहाध्वजम् ।
यत् पञ्चाशत् सहस्राणि, योजनानि तु विस्तृतम् ॥ ६१९ ॥
तद् विमानं सहस्राक्ष, इव वर्त्मनि सङ्क्षिपन् ।
चमरासुरनाथोऽर्हत्–सनाथं 'मेरु'मागमत् ॥ ६२० ॥–अष्टभिः कुलकम्
नगर्यां 'बलिचञ्चा'यां, बलिर्घण्टामवादयत् ।
महाद्रुमेण सेनान्या, स्राग् 'महौघस्वरा'ऽभिधाम् ॥ ६२१ ॥
सामानिकानां सहस्रैः, षष्ट्या तेभ्यश्चतुर्गुणैः ।

---

१ भवनवासिनां व्यन्तराणां च प्रत्येकभेदानां द्वौ द्वौ इन्द्रौ । तत्र भवनवासिनो दशधा, असुर-नाग-विद्युत्-सुपर्ण-वह्नि-वात-स्तनित-जलधि-द्वीप-दिक्कुमारभेदात् । व्यन्तरास्तु अष्टधा, किन्नर-किम्पुरुष-महोरग-गान्धर्व-यक्ष-राक्षस-भूत-पिशाचभेदात् । २ ख–'च चमरे स्थितः' । ३ इन्द्रपदवर्जितानां समानर्धिकानां देवानाम् । ४ मन्त्रिपुरोहितस्थानीयैः ।

आत्मरक्षैस्त्रायस्त्रिंशा–दिभिश्च चमरेन्द्रवत् ॥ ६२२ ॥
असुरैरावृतो विश्व–गसुराणां विभुर्बलिः ।
त्वराकानागमन्'मेरुं', स्वामिसङ्गमसुन्दरम् ॥ ६२३ ॥–युग्मम्
धरणो नागाधिपति–र्घण्टां 'मेघस्वरा'ऽभिधाम् ।
सेनान्या भद्रसेनेन, परिताड्य प्रबोधितैः ॥ ६२४ ॥
सामानिकैः षट्सहस्र्याऽङ्गरक्षैस्तच्चतुर्गुणैः ।
षड्भिर्मुख्यमहिषीभि–र्वृतो नागैः परैरपि ॥ ६२५ ॥
यद् योजनसहस्राणि, पञ्चविंशानि विस्तृतः ।
यस्य चेन्द्रध्वजः सार्द्ध–द्वियोजनशतोन्नतः ॥ ६२६ ॥
तद् विमानं समारुह्य, प्रभुभक्त्या किलेरितः ।
'मेरु'मागाद् भगवता, सुभगंभावुकं रयात् ॥ ६२७ ॥–कलापकम्
भूतानन्दो नागपति–र्घण्टां 'मेघस्वरा'ऽभिधाम् ।
वादयित्वा पत्त्यनीक–नेत्रा दक्षेण बोधितैः ॥ ६२८ ॥
सामानिकादिभिर्नाग–कुमारैरभितो वृतः ।
सद्यो विमानमारुह्य, प्रपेदे 'मन्दरा'चलम् ॥ ६२९ ॥–युग्मम्
उभौ विद्युत्कुमारेन्द्रौ, हरिर्हरिसहोऽपि च ।
वेणुदेवो वेणुदारी, सुपर्णानामधीश्वरौ ॥ ६३० ॥
अग्नीनां नायकावग्नि–शिखानामाऽग्निमाणवः ।
नभस्वदिन्द्रौ वेलम्ब–प्रभञ्जनसमाह्वयौ ॥ ६३१ ॥
स्तनितानां तु सुघोष–महाघोषौ पुरन्दरौ ।
वासवौ जलराशीनां, जलकान्ति–जलप्रभौ ॥ ६३२ ॥
पूर्णसञ्ज्ञोऽवशिष्टाख्यः, शक्रौ द्वीपकुमारपौ ।
दिक्कुमाराणाममिता–ऽमितवाहनवासवौ ॥ ६३३ ॥
व्यन्तरेषु तथा काल–महाकालौ पिशाचपौ ।
सुरूप-प्रतिरूपाह्वौ, भूतानां च पुरन्दरौ ॥ ६३४ ॥
पूर्णभद्र-माणिभद्रा–ऽभिख्यौ यक्षविडौजसौ ।

---

१ क–'स्पर्धि०' । १ ख–'विभु–' । ३ 'मेरु'गिरिम् । ४ वायुकुमाराणामिन्द्रौ । ५ द्वीपकुमाराणां पती । ६ यक्षाणामिन्द्रौ ।

नाम्ना भीम-महाभीमौ, राक्षसाखण्डलौ[1] पुनः ॥ ६३५ ॥
किन्नरेन्द्रौ किन्नरश्च, तथा किम्पुरुषाभिधः ।
सत्पुरुष-महापुरुषौ ख्यातौ[2] किम्पुरुषेश्वरौ ॥ ६३६ ॥
अतिकाय-महाकायौ, महोरगकुलेश्वरौ ।
गन्धर्वाधिपती गीत-रति-गीतयशोऽभिधौ ॥ ६३७ ॥
अप्रज्ञप्ति-पञ्चप्रज्ञ-स्यादीनामष्टभेदिनाम् ।
व्यन्तरान्तर्विशेषाणां, षोडशेयुर्बिडौजसः ॥ ६३८ ॥
तत्र सन्निहित-समा-नावप्रज्ञप्तिनायकौ ।
पञ्चप्रज्ञप्तीनां धाता, विधाताऽधिपती पुनः ॥ ६३९ ॥
ऋष्याह्वऋषिपालाह्व-ऋषिवादितवासवौ ।
ईश्वरो महेश्वरश्च, भूतवादितकप्रभू[3] ॥ ६४० ॥
सुवत्सश्च विशालश्च, क्रन्दितानामधीश्वरौ ।
महाक्रन्दितकाधीशौ, हासो हासरतिस्तथा ॥ ६४१ ॥
श्वेतो महाश्वेत इति, 'कूष्माण्डा'ऽऽखण्डलौ पुनः ।
पवकः पवकपतिः, पवकानां पुरन्दरौ ॥ ६४२ ॥
ज्योतिष्काणामसङ्ख्येयौ, सोमा-ऽऽदित्यावुपेयतुः ।
इति शक्राश्चतुःषष्टि-'मेरु'मौलिमुपागमन् ॥ ६४३ ॥

जिनस्नात्रविधिः

केवलैर्मिश्रितैः कुम्भान्, मणि-मृद्-रूप्य-काञ्चनैः ।
कृतान् प्रत्येकमष्टाग्रं, सहस्रं चाभियोगिकैः ॥ ६४४ ॥
योजनास्यान् घनसारा-ऽगुरुधूम(पः?)धरान्तरान् ।
विचित्रितांश्चन्दनाद्यैश्च वदनास्पद(न्द?)नीरजान् ॥ ६४५ ॥
नदीह्रदनदीनाथ-मुख्यतीर्थोदकैर्भृतान् ।
ततो गृहीत्वा हस्ताभ्यां, पूताभ्यां चन्दनादिभिः ॥ ६४६ ॥
वाद्यानां वाद्यमानानां, चतुर्भेदभृतामपि ।
नादेऽतिमेदुरे 'मेरु'-कन्दराप्रतिनादतः ॥ ६४७ ॥

---

१ राक्षसानामिन्द्रौ । २ ख-'पुनः' । ३ ख-'नक०' ।

जय नन्द युगादीश[1] !, सिद्धिवर्त्मप्रवर्त्तक ! ।
उच्चैरुच्चारयत्स्वेवं, चारणश्रमणर्षिषु ॥ ६४८ ॥
त्रिषष्टिरच्युतादीनां, पर्यायेण[2] पुरन्दराः ।
विधिनाऽस्नपयन् नाथं, पूजयित्वा च तुष्टुवुः ॥ ६४९ ॥–षड्भिः कुलकम्

सौधर्मेण जिनस्नपनादि

ततः स्वक्रोडमीशान–शक्रेणारोपिते प्रभौ ।
'सौधर्मा'धिपतिः स्नात्र–कर्मारेभेऽतिभक्तितः ॥ ६५० ॥
स चतुर्दिक्षु चतुर्वृष्या[3], विषाणाष्टकतो विभुम् ।
स्त्वरीभिः क्षीरधारा–धोरणीभिरसिस्नपत् ॥ ६५१ ॥
सह सर्वैः सुपर्वेशः, स्नात्रपर्व सुपर्वभिः ।
कृत्वा त्रैलोक्यनाथस्य, प्रापदात्मपवित्रताम् ॥ ६५२ ॥
सोल्लासवासनो दिव्य–वाससा वासवः स्वयम् ।
अमार्जयद् विभोरङ्गं, मनोरङ्गं तथाऽऽत्मनः[4] ॥ ६५३ ॥
रागादिन्द्रो[5]ऽङ्गरागेण[6], प्रभोस्तेने विलेपनम् ।
दुष्कर्मवज्रलेपं तु, विलुलोपात्मनोऽखिलम् ॥ ६५४ ॥
अदूष्यैर्देवदूष्यैर्हृ–न्नन्दनैर्मणिमण्डनैः ।
प्रभुं व्यभूषयज्जम्भ–भेत्ता स्वं सुकृतैः पुनः ॥ ६५५ ॥
कृत्तारिः पारिजातादि–पुष्पैः सुरभिभिः प्रभुम् ।
अशोभयद् यशोभिः स्वै–रभितो भुवनत्रयम् ॥ ६५६ ॥
अनन्तमङ्गलासङ्ग–चङ्गस्याप्यष्टमङ्गलीम्[7] ।
लेखाग्रणीर्लिलेखाग्रे, भक्तिव्यक्त्या जगत्प्रभोः[8] ॥ ६५७ ॥
वादितोन्नादिवादित्रं, सुरोत्कीर्णसुमोत्करम् ।
हरिरुत्तारयामास, प्रभोरारात्रिकं पुरः ॥ ६५८ ॥

भावपूजायामिन्द्रकृता प्रभोः स्तुतिः

इलातलमिलन्मौलिः, पौलोमीवल्लभः प्रभुम् ।

---

१ ख–'युगाधीश!' । २ क्रमेण । ३ वलीवर्दचतुष्टयस्य । ४ ख–'तदात्मनः । ५ प्रेम्णः । ६ कुङ्कुमादिना । ७ स्वस्तिक-नन्द्यावर्त-दर्पण-मत्स्ययुगल-श्रीवत्स-भद्रासन-कुम्भ-सम्पुटेत्यष्ट मङ्गलानि । ८ ख–'जगद्विभोः' ।

स्तुत्वा शक्रस्तवेनेति, पुनः स्तोतुं प्रचक्रमे ॥ ६५९ ॥

नमस्ते विश्वदीपाय, नमस्ते विश्वशासिने ।
नमस्ते विश्वनाथाय, नमस्ते प्रथमार्हते ॥ ६६० ॥

यत्र त्वं 'भरत'क्षेत्रे, धर्मकल्पद्रुमोऽभवः ।
कल्पकल्पद्रुमेशानां, प्रभो ! सेव्यं बभूव तत् ॥ ६६१ ॥

यत्र त्वं नाभिभूपाल–कुले भानुरिवोदितः ।
अकालमिदमुत्ताल–मुद्द्योतं नैव मोक्ष्यति ॥ ६६२ ॥

यत्र त्वं सुमुहूर्त्तेऽद्य, जन्माप्तः पुण्यकन्दलः ।
स[1] लोकत्रयकल्याणा–नन्दकन्दत्वमाददे ॥ ६६३ ॥

यत्र त्वं कालचक्रारे, जातः प्रथमतीर्थकृत् ।
एषोऽरेषु तृतीयोऽपि, प्रथमः कथमस्तु मा ? ॥ ६६४ ॥

यत्र त्वं जन्मिनां स्वामिन् !, सुकृतैः समवातरः ।
सोऽद्यप्रभृत्युपास्योऽभूत्, कल्यैः[2] कल्याणवासरः ॥ ६६५ ॥

शर्म नैति 'सुधर्मा'यां, 'नन्दने' न हि नन्दति ।
ऐरावते न रमते, सुरैश्वर्ये न रज्यते ॥ ६६६ ॥

प्रीतिं नाप्नोति सङ्गीते, स्वर्गस्त्रीषु न रज्यति ।
मन्मनस्त्वन्मुखालोक–सुखास्तोकमुदा प्रभो ! ॥ ६६७ ॥–युग्मम्

सदैव दर्शनानि[3] त्वद्–दर्शनानि नृणां नुमः ।
किमस्वदीक्षणैरीश !, क्षणप्राप्तत्वदीक्षणैः ? ॥ ६६८ ॥

एषा त्वद्रूपरेखाऽभू–न्नेत्रयोरमृतप्लवः ।
श्रोत्रयोरप्ययं भावी, कदेश ! तव देशना ? ॥ ६६९ ॥

जानातु त्वद्गुणग्राम–प्रमाणं यदि केवली ।
सोऽपि शक्तो न वक्तुं तु, जिह्वानन्त्यविवर्जितः ॥ ६७० ॥

इति स्तुत्वा प्रमोदाश्रु–स्तोमो रोमोद्गमं दधत् ।
ईशानेशाङ्कतः शक्रो, जग्राह त्रिजगत्पतिम् ॥ ६७१ ॥

---

१ मुहूर्त्तः । २ क–'कल्पैः' । ३ लोचनानि ।

जिनं गृहीत्वा सौधर्मेन्द्रस्य प्रत्यागमनम्

पञ्चरूपकृदेकेन, पविपाणिः स पाणिना ।
भक्त्या दधौ हृदो गर्भे, बहिरन्तरपि प्रभुम् ॥ ६७२ ॥

चतुर्भिरपरै रूपै-श्छत्र-चामर-वज्रभृत् ।
पूर्ववत् पूर्वदिक्पाल-श्चचाल व्योमवर्त्मना ॥ ६७३ ॥

समं सम्मदसङ्गीत-सम्भ्रमोद्भ्रासुरैः[1] सुरैः ।
मन्दिरं मरुदेवाया, देवाधीशः समाश्रयत् ॥ ६७४ ॥

ततस्तद्रूपं सञ्जह्रे, प्रतिरूपं जगत्पतेः ।
मिथ्याज्ञानमिवोत्पन्नं, सद्गुरुर्मरुतां पतिः ॥ ६७५ ॥

हृत्वाऽवस्वापिनीं देव्याः, पार्श्वे प्रभुमतिष्ठिपत् ।
त्रिविष्टपेशः प्रत्यूषो, दोषामिव दिवो रविम् ॥ ६७६ ॥

श्वेतं चेतोऽनुकूलश्रि, दुकूलयुगलं प्रभोः ।
[2]शचीशोऽमुञ्चदुच्छीर्षे, मुखेन्दोः कौमुदीनिभम् ॥ ६७७ ॥

न्यधान्नाथस्य तत्रैव, शक्रो मौक्तिककुण्डले ।
[3]जितौ वक्रेण सेवार्तौ, जम्बूद्वीपविधू इव ॥ ६७८ ॥

जिताभ्यां सूर्य-सोमाभ्यां, महसा यशसा प्रभोः ।
स्वकीयं कान्तिसर्वस्वं, पिण्डीकृत्येव ढौकितम् ॥ ६७९ ॥

[4]श्रीदामगण्डं वृत्रारि-रामुक्तं रत्नमौक्तिकैः ।
वितानेऽस्थापयन्नेत्र-विनोदार्थं विभूपरि ॥ ६८० ॥-युग्मम्

मणि-स्वर्ण-हिरण्यानां, धनदः सदने विभोः ।
शक्रादेशेन प्रत्येकं, कोटीर्द्वात्रिंशतं[5] न्यधात् ॥ ६८१ ॥

द्वात्रिंशतं पृथग् नन्दा-सन-भद्रासनानि च ।
नाना वस्त्राणि माणिक्या-लङ्कारानप्यनेकशः ॥ ६८२ ॥

[6]श्रीदोऽन्यदपि यत् तत्र, संसारसुखकारणम् ।
वस्तु शस्तं समस्तं तत्, न्यस्तवान् जृम्भकोम्भितम्[7] ॥ ६८३ ॥

---

१ क-'समन्द०' । २ ख-'सची०' । ३ क-'यतो' । ४ प्रेङ्खामध्यकन्दुकम् ।
५ क-'शतो' । ६ कुबेरः । ७ उम्भितं-पूरितम् ।

अथाभियोगिकैः स्वर्ग–विभुस्त्रिभुवनान्तरा ।
चतुर्भेदेषु देवानां, निकायेष्वित्यघोषयत् ॥ ६८४ ॥
जिनस्य जिनमातुश्च, योऽप्रियं चिन्तयिष्यति ।
तस्यार्जकमञ्जरीवत्, सप्तधा भेत्स्यते शिरः ॥ ६८५ ॥–युग्मम्
बुधेन्द्रो[1] विविधाहार–रसामृतमतिष्ठिपत् ।
अङ्गुष्ठे स्वामिनो बोध–मिव भव्याशये गुरुः ॥ ६८६ ॥
नार्हन्तः स्तन्यपाः किन्तु, यदा क्षुदुदयो भवेत् ।
रसवर्षिणमङ्गुष्ठं, क्षिपन्त्यास्ये तदाऽऽत्मनः ॥ ६८७ ॥
धात्रीकर्मकृतः पञ्च, धात्रीरप्सरसः प्रभौ ।
न्ययुङ्क्त हरिराचार्यः, [2]संयते समितीरिव ॥ ६८८ ॥
ततो 'नन्दीश्वर'द्वीपं, ययौ सुरयुतो हरिः ।
'मेरो'रेवापरे देवा–धिपास्तमगमन् पुनः ॥ ६८९ ॥
पूर्वाशास्पृशि तत्र 'देवरमणा'ऽऽह्वाने'ऽञ्जना'द्रौ क्षणा–
दुच्चारं बिभराम्बभूव विबुधैः सार्द्धं 'सुधर्मा'ऽधिपः ।
वर्येन्द्रध्वजचैत्यपादपचतुर्द्वारेऽत्र चैत्ये कृती
सोऽकार्षीदृषभादिशाश्वतजिनाष्टाहीमहार्चा[3]महम् ॥ ६९० ॥[4]
'ईशान'प्रभुरुत्तरां तु 'रमणीया'ह्वे दिशं संश्रिते
'नित्योद्द्योत' इति श्रुते तु चमरेन्द्रो दक्षिणाशास्पृशि ।
प्रत्यग्दिग्जुषि तु 'स्वयम्प्रभ' इति ख्याते'ऽञ्जना'द्रौ बलि–
श्चक्रुस्तद्गतचैत्यशाश्वतजिनार्चाऽर्चोत्सवाष्टाहिकाम् ॥ ६९१ ॥[5]
अद्रिष्वेषु चतुर्दिगाश्रयजुषो वाप्यश्चतस्रः पृथक्
तासु स्फाटिकसन्निभो 'दधिमुख'क्षोणीधराः [6]षोडश ।
तच्चैत्येषु च तन्मितेषु पृथगिन्द्राणां चतुर्णां चतु–
र्दिक्पाला विदधुर्जिनार्चनमहाष्टाहीं महाहृष्टितः ॥ ६९२ ॥[7]

---

१ ख–'सुरेन्द्रो' । २ साधौ । ३ ख–'फलम्' इति । ४–५ शार्दूल-विक्रीडितम् । ६ नन्दीश्वरद्वीपे एकैकस्यां दिशि एकैकोऽञ्जनगिरिः । पुनः प्रत्येकाञ्जनगिरेश्चतसृषु दिक्षु एकैकस्यां दिशि एकैका वापी । एवं चत्वारोऽञ्जनगिरयः षोडश वाप्यश्च । एतासां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं 'दधिमुख'नामा पर्वतः । ७ शार्दूल० ।

इत्यष्टौ दिवसान् विधाय विधिवन्नित्यार्हतामर्हणां[1]
स्वं स्वं स्थानममानवाः[2] समगमन् सत्पुण्यपण्यागमाः[3] ।
स्नात्रे तृप्तिमवाप्तवान् जिनपतिं द्रष्टुं किलोत्कण्ठितो
भानुर्भानुभरैर्बिभेद तिमिरं नासीरवीरैरिव[4] ॥ ६९३ ॥[5]

॥ इति श्रीजिनदत्तसूरिशिष्यकविचक्रवर्त्तिपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दाऽपरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते कुलकरोत्पत्तिप्रभुजन्मोत्सववर्णनः सप्तमः सर्गः समाप्तः ॥ ७ ॥

मेरुः स्नात्रभवैः सकुङ्कुमपयःपूरैः परीतोऽभवत्
पीतस्तेन सुवर्णपर्वत इति ख्यातिं जगाम क्षितौ ।
देवीनृत्यविशीर्णहारमणिभिस्तारो मतस्तारका-
धारोऽसाविति यज्जनिव्यतिकरे सोऽव्याद् वृषाङ्कप्रभुः ॥ १ ॥[6]

धर्मोऽर्थं तव पुष्णाति, त्वं पुष्णासि तमर्थतः[7] ।
परस्परोपकारित्व-मिदं पद्माऽस्तु वां[8] सदा ॥ २ ॥[9]

ग्रन्थाग्रं ७११



---

१ पूजाम् । २ देवाः । ३ क–'पुण्यागमे' । ४ सेनाऽग्रवीरैः । ५–६ शार्दूल० ।
७ धर्मम् । ८ धर्म-पद्मयोः । ९ अनुष्टुप् ।

## अष्टमः सर्गः ८

[1]अंशुमालिशशिनोरिव जज्ञे, यस्य नेतुरुदये जगदेतत् ।
सर्वतस्ततमहः परहर्षं, भूतये स भवताद् वृषभाङ्कः ॥ १ ॥[2]
स्मेरपद्मपदषट्पदनादै–र्नाभिनन्दनगुणानिव गायन् ।
विश्वबोधजननैरभिराम–[3]स्तामसं [4]पर्यधित रात्रिविरामः ॥ २ ॥
सान्ध्यदीधिति[5]कुसुम्भदुकूला, स्मेरनीरजमुखी दिनलक्ष्मीः ।
बिभ्रती द्युमणिमक्षतपात्रं, नाभिभूप[6]मपि वर्द्धयति स्म ॥ ३ ॥
भालबालरविकुङ्कुमपिण्डा, तत्प्रभाचयकुसुम्भसुचेला ।
[7]चित्रपत्रिरवमङ्गलगीतिं, जैनजन्मनि ततान दिगैन्द्री[8] ॥ ४ ॥
विश्वविश्वशुभकृत्यनिमित्तं, शातकुम्भमहसं भुवनेशम् ।
बिभ्रती समरुचन्मरुदेवा, द्यौर्नवं रविमिवास्ततमिस्रा ॥ ५ ॥
अप्सरोभिरभितः कृतसेवा, नाभिभूमिपतये मरुदेवा ।
शर्वरीसुरसमागमवृत्तं, स्वान्तसम्मदमिवोद्गिरति स्म ॥ ६ ॥
प्राप नाभिनृपसम्मदवार्द्धि–[9]र्वृद्धिमीशवदनेन्दुमवेक्ष्य ।
प्रोल्ललास सुरचक्रचरित्र–प्रक्रमेण [10]शुचिना त्वतिमात्रम् ॥ ७ ॥

प्रभोः 'ऋषभ' इति नामस्थापनं मातृपित्रोर्लालनं च

स्वामिनोऽस्य जननी यमशेष–स्वप्नमुख्यमृषभं यदपश्यत् ।
ऊरुलक्ष्म यदभूद् वृषभस्त–न्नाभिरेनमकरोद् वृषभाख्यम् ॥ ८ ॥
लक्षणैः खलु सुमङ्गलमालि–न्येतदङ्गलतिकेति पितृभ्याम् ।
कन्यका युगलजाऽपि [11]सुपूर्वा, मङ्गलेत्यभिधयाऽभिदधे सा ॥ ९ ॥
शक्रसङ्क्रमितमक्षयमात्मा–ङ्गुष्ठनिष्ठ[12]ममृतं परमेष्ठी ।
पादलीनमिव पादपसङ्घः, पुष्टिकृत् प्रतिलवं पिबति स्म ॥ १० ॥

---

१ सूर्यचन्द्रयोः । २ १६२तमपर्यन्तानि पद्यानि स्वागताच्छन्दसि । ३ अन्धकारसमूहम् । ४ आच्छादयति स्म । ५ 'कसुंबो' इति भाषायाम् । ६ ख–'मभिवर्धयति' । ७ विचित्रपक्षिकलध्वनि० । ८ पूर्वा दिशा । ९ आषाढमासेन । १० समग्रेषु स्वप्नेष्वाद्यम् । ११ सुमङ्गला । १२ पक्षे जलमिति ।

बालभावसुलभार्जवलीलो–न्मीलितप्रमदकीलितचित्ताः ।
लोचनामृतमरीचिममुश्चन्, पश्च तं च चिरमप्सरसो न ॥ ११ ॥
ताः स्वभावसुभगाद्भुतशोभं, शैशवार्जवतयाऽत्यभिगम्यम् ।
वीक्ष्य वीक्ष्य वृषभप्रभुमापु–र्नैव तृप्तिमनिमेषदृशोऽपि ॥ १२ ॥
दुर्लभानि दिवि देवमहेला, बाललालनसुखानि निषेव्य ।
स्वं शशंसुरमरेशनिदेशं, स्वविहारपरिहारपरेहाः ॥ १३ ॥
उद्वहन् हृदयसीमनि पुत्र–प्रेमतः प्रमुमवाप पिता यत् ।
तत् सुखं किमपि तल्लयलीनो, योगवानपि ययौ न ययौ वा ॥ १४ ॥
बालकेऽपि किल तत्र निलीनं, शर्म सन्ततमभूत् तदनन्तम् ।
अन्यथा किमु पिताऽस्य भुजोरः–पीडनादनुबभूव सदा तत् ? ॥ १५ ॥
स्तन्यमन्यजनवन्न जनन्या, यद्यपि त्रिजगतीपतिरापात् ।
सा तथापि पुरतः स्थितवन्तं, तेन विश्वपतिमस्नपयत् तम् ॥ १६ ॥
जात ! यद्यपि नवामृतमात्मा–ऽङ्गुष्ठसम्भवि पिबन्ननुवेलम् ।
पुष्टिमेषि मम तेन न तुष्टि–र्यत् स्तनन्धयपदं न दधासि ॥ १७ ॥
वत्स ! वत्सलतयाऽद्भुतया त्वं, लाल्यसे सुरवधूभिरमूभिः ।
भाग्यवानसि सुधारसभोजी, मातृताऽस्तु मम केन गुणेन ? ॥ १८ ॥
पुत्ररत्न ! निखिलेन्द्रनताऽहं, त्वत्प्रभावविभवेन बभूव ।
प्राप्तविश्वजनपूजन ! जज्ञे, मद्भवस्तव न कोऽप्युपकारः ॥ १९ ॥
आत्मजानुपकृतिप्रकृतागः–सागरे मम सुत ! प्रपतन्त्याः ।
नौरियं युगलजाऽजनि कन्या, स्तन्यपानपरिपालनयोगैः ॥ २० ॥
एवमङ्कमधिरोप्य कराभ्यां, सन्निरुद्ध्य जननी जिननाथम् ।
अश्रुमिश्रितविलोचनमुक्त्वा, तं पुनः पुनरपि प्रचुचुम्ब ॥ २१ ॥

–पञ्चभिः कुलकम्

मङ्गलैकनिलये तनयेऽसि–न्नप्सरोभिरभिनिर्मितरक्षे ।
रिष्टरक्षणलयात् प्रतिवेलं, मातुरातुरतया तु ययौ दृक् ॥ २२ ॥

---

१ क–'नीलो–' । २ दिव्याङ्गनाः । ३ अनन्तसौख्यम् । ४ इदं पद्यमलं नास्ति क–प्रतौ । ५ स्तन्येन । ६ 'विश्वविश्व०' इति क–प्रतौ पार्श्वस्थः पाठः । ७ इदं क्रिया-विशेषणम् । ८ कष्टनिवारणैकतानत्वात् ।

यन्ममत्वममृतार्णवरूपं, मातृचित्तभुवि तत्र सुतेऽभूत् ।
तेन केवलवता कलिता चेत्, तन्मितिर्निगदितुं ननु शेके ॥ २३ ॥
श्लाघ्यलल्लुरगिरा श्रुतियुग्मे, दन्तशून्यहसनैर्भृशमक्ष्णोः ।
न्यस्तहस्तकिशलाङ्गुलिनाऽऽस्ये, श्वाससौरभभरैर्निशि शश्वत् ॥ २४ ॥
हृत्स्थलीविलुलनेन शरीरे, कल्पयन्नमृतवृष्टिमनल्पाम् ।
विष्टपप्रभुरयं पितृमात्रो-राततान निखिलेन्द्रियसौख्यम् ॥ २५ ॥-युग्मम्
स्वादयन् स्वयमयं प्रभुरात्मा-ङ्गुष्ठलीनममृतं प्रतिवेलम् ।
उच्छ्रयं परमगादमृतांशो-रंशुसंश्रितमिव द्रुमवारः ॥ २६ ॥
चित्रबाललिलतानि किल त्रि-ज्ञानवानभिनिनाय जिनेन्द्रः ।
विश्वविश्वजनरञ्जनतारां-स्तत्त्ववानिव जनव्यवहारान् ॥ २७ ॥

विभुवंशस्थापना

क्रीडतोऽस्य कियताऽपि हि हीने, जन्मतो जगदिनस्य गतेऽब्दे ।
कर्त्तुमापतदुपप्रभु वंश-स्थापनं सुरपतिः कलितेक्षुः ॥ २८ ॥
जम्भजिज्जिनपतेर्जनकस्यो-त्सङ्गसङ्गमधृतेर्दधदिक्षुम् ।
आगतोऽग्रभुवि विग्रहशोभा-निर्जितः स्मर इवोज्झितुमस्त्रम् ॥ २९ ॥
स्वं करीव करमक्षिपदिक्षौ, लक्षयन् द्युपतिकाङ्क्षितमीशः ।
भावयन्मधुरिमैकधुरीणं, तं न्ययोजयदिने सुरनेता ॥ ३० ॥
साध्वहं समभवं विभुवंश-स्थापने स्थिरनिमित्तमितीक्षुः ।
चञ्चलैर्दलभरैः किल भर्त्तु-र्लालनात् करतले प्रननर्त्त ॥ ३१ ॥
आददे यदयमिक्षुममुष्ये-क्ष्वाकुरित्यभिधया भुवि वंशम् ।
तत् प्रघोष्य भुवनत्रयभर्त्तुः, स्वःप्रभुः स्वभवनं भजते स्म ॥ ३२ ॥
भाव्यखर्वतमसर्वसुपर्वा, तापशान्तिदलसद्रसपूर्णः ।
स्वामिनो जनमनोहरलक्ष्मी-र्वंशमेष भृशमिक्षुरिवोर्व्याम् ॥ ३३ ॥

जन्मसिद्धातिशयचतुष्टयम्

श्रीयुगादिमजिनस्य शरीरं, स्वेदरोगमलयोगविमुक्तम् ।
स्फारसौरभभृदद्भुतरूपं, शातकुम्भसरसीरुहशोभम् ॥ ३४ ॥

---

१ क-'न तु'। २ भुवनभर्तुः। ३ ख-'भावविन्मधु०'। ४ इक्षुम्। ५ भविष्यति। ६ बृहत्तमसर्वशुभग्रन्थिः।

धेनुदुग्धधवले प[1]ललास्रे, [2]विस्रगन्धविसरैरविमिश्रे ।
गोचरे जनदृशां न सदैवा-ऽऽहारनीहृतिकृतिर्भवति स्म ॥ ३५ ॥—युग्मम्
स्मेरनीररुहग[3]न्धसमानः, सर्वदाऽऽननभवः प[4]वमानः ।
नित्यमित्यतिशया यु[5]गसङ्ख्या, जन्मना समभवत् सममेव ॥ ३६ ॥[6]
स प्रभुः स्[7]फटिककुट्टिमभूमौ, शुभ्रभानुभिरशोभत [8]रिङ्खन् ।
सर्वतः समुदितान्तरशुक्ल-ध्यानकान्तिभिरिवावृतकायः ॥ ३७ ॥
सन्निरीक्ष्य पुरुषान् स्वयमेवो-त्तिष्ठतः प्रभुरसावुदतिष्ठत् ।
ब[9]द्धमुष्टिकलनादवलम्बं, नाकरोत् क्वचिददाननिदानात् ॥ ३८ ॥
प्राणिनां नरकपातपराणां, यः स्मृतोऽपि वितनोत्यवलम्बम् ।
तीर्थकृत् कथमयं परदत्ता-ल[10]म्बनः श्रयतु वल्गनशक्तिम् ॥ ३९ ॥
ऊर्ध्व एव विनतार्द्धतनुर्यो-ऽसज्जयद् गतिकृतेऽङ्गुलियुग्मम् ।
[11]स्वामिनाऽत्र कुतुकाद् धृतमात्रे, भक्तितः किल लुलोठ स भ[12]ूमौ ॥४०॥
[13]पूर्वसंहननवत्तनुशाली, मन्दमन्दपदचारमचालीत् ।
यद्यपि प्रभुरधात् तु तमुर्वी, त[14]त्पदार्पणमदाद् बलगुर्वी ॥ ४१ ॥
रोचते स्म चतुरस्रसमाना, [15]संस्थितिस्त्रिजगदीशशरीरे ।
[16]निर्मलक्रमकलाकमलानां-[17]मैलमण्डलमिव न्यसनाय ॥ ४२ ॥
शारदेन्दुरिव सौम्यतमश्री-र्ग्रीष्मतीक्ष्णकरवत् परतेजाः ।
नव्यनीरद इवातिगभीर-ध्वानवान् शिशुरपि प्रभुरासीत् ॥ ४३ ॥

देवैः सह प्रभोर्बालक्रीडावर्णनम्

नाकिनः किल कुमारकरूपाः, स्वामिनं रमयितुं स्वयमीयुः ।

---

१ मांसशोणिते । २ आमगन्धिवाससमूहैः । ३ क-'गर्भसमानः' । ४ वायुः, श्वासः । ५ चतुःसङ्ख्या । ६ सन्तुल्यां यदुक्तमभिधानचिन्तामणौ ( का० १ )—

"तेषां च देहोऽद्भुतरूपगन्धो, निरामयः स्वेदमलोज्झितश्च ।
श्वासोऽब्जगन्धो रुधिरामिषं तु, गोक्षीरधाराधवलं ह्यविस्रम् ॥ ५७ ॥
आहारनीहारविधिस्त्वदृश्य-श्चत्वार एतेऽतिशयाः सहोत्थाः ।"

७ स्फटिकरत्नखचितभुवि । ८ स्खलन् । ९ क-'बन्धमुष्टि०' । १० क-'लम्बतः' । ११ क-'स्मामिना(?)' । १२ क-'भौमौ' । १३ वज्रऋषभनाराच० । १४ प्रभोः । १५ आकारः । १६ निर्मलप्रकारचतुःषष्टिकलारूपलक्ष्मीणाम् । १७ पार्थिवमण्डलम् ।

क्रीडति स्म जगतां पतिरेतैः[1], कर्तुमेतदनुवर्त्तनमेतैः[3] ॥ ४४ ॥
स्वामिमानसविनोदरसाय, प्रोन्मदः सुरकुमारनिकायः ।
ज्ञानवान् जगदिनः पुनरेषां, माऽस्तु भक्तिरफलेति ललास ॥ ४५ ॥
स्मेरवारिजमिवालिसमाजः, स्वर्णशैलमिव तारकवारः ।
सोऽन्वहं सुरकुमारसमूहो, नाभिसम्भवमभि भ्रमति स्म ॥ ४६ ॥
अप्रमाणरतये रममाणः, सोऽभवद् दिविषदां समुदाये ।
विस्मृतान्यलयतल्लयभाजां, योगिनामिव मनस्यनुवेलम् ॥ ४७ ॥
सञ्चरच्चरणघर्घररावैः, श्रोणिनद्धगुणकिङ्किणिनादैः ।
द्योतते स्म नटवत् पटुतालै-र्नर्त्तयन् सुमनसां स मनांसि ॥ ४८ ॥
स्वर्गिणः प्रभुकरेण पवित्रैः-स्तै रजोभिरभवन्नरजस्काः ।
तेऽभितोऽपि ककुभामिव भागा, भास्करस्य किरणैरतमस्काः ॥ ४९ ॥
शैशवेन वियुतस्य कुतः स्या-दङ्गसङ्गतिरिनस्य पुनर्मे ।
इत्यमुष्य जगती सकलाङ्गा-लिङ्गनं व्यधित धूलिमिषेण ॥ ५० ॥
धूतधूलिततिभिर्भुवनेशः, सोऽशुभत् सुभगताऽद्भुतशोभः ।
किं न कान्तिरधिकान्धतमोभि-र्धिष्ण्यधिष्ण्यमणिरत्नगणानाम् ॥५१॥
धूलिधूसरममुं मरुदेवा-ऽऽश्लिष्य मीलिनयना क्षणमासीत् ।
अन्तरे वपुरिदं सुखपूरैः, पूरितं कियदितीव दिदृक्षुः ॥ ५२ ॥
मीलिलोचनयुगोऽजनि नाभि-र्धूलिभिर्भृतममुं परिरभ्य ।
जीवितस्य तनुजस्य तथाऽन्त-र्जीवितस्य च विशेषमिवेप्सुः ॥ ५३ ॥
यत् किमप्यधृत वस्तु सहेलं, खेलनाय जिननायक एषः ।
तद् ग्रहीतुमसहा द्युसदस्ते, हस्तिनो हि मशकाः क्व समाः स्युः ? ॥५४॥
यो दधौ जिनविधुं कुतुकेन, प्रांणतो निजभुजद्वितयेन ।
क्वापि तूलवदिनाननजात-श्वासवातविधुतः स पपात ॥ ५५ ॥
यः प्रकोष्ठघटनोद्भटनाभि-र्नाभिभूपतिभुवा रमते स्म ।
चूर्णतामयतु मायममाय-स्तत्र तद्बलमनेनै न तेने ॥ ५६ ॥

---

१ आगतैः । २ एतस्य-प्रभोरनुवर्तनं कर्तुम् । ३ देवैः । ४ देवानाम् । ५ 'घुघरी' इति भाषायाम् । ६ पापरहिताः । ७ नक्षत्रसूर्यरत्नगणानाम् । ८ निमीलितनयना । ९ क-'स्वय-मासीत्' । १० बलेन । ११ देवे । १२ प्रभुणा ।

कन्दुकेन निहतास्त्रिदशा ये, स्वल्पकल्पितबलेन जिनेन ।
तेऽपतन् सपदि कन्दुकपात-स्पर्द्धयेव पुरतो विलुठन्तः ॥ ५७ ॥
चङ्गमङ्गलविहङ्गमकाया-श्चक्रिरेऽसुरकुमारनिकायाः ।
स्वामिनो मुदमुदित्वरभावाः, कर्णपेयकृतकूजितरावाः ॥ ५८ ॥
केऽपि मूर्त्तमनुरागमिवाग्रे, स्वर्गिणो मुखमिषेण दधानाः ।
स्वामिनं जय जयेति वचोभिः, प्रोचिरे रचितकीरशरीराः ॥ ५९ ॥
मञ्जुकूजिषु पतत्रिषु चूला-कैतवेन मुकुटं नटयन्तः ।
केऽपि केकिवपुषः कलषड्जा-राविणः प्रननृतुः प्रभुतुष्ट्यै ॥ ६० ॥
रोमकोमलतरं दधतो गा-न्धारगानमिव यानमनोज्ञाः ।
केऽपि हंसवपुषः प्रभुपाणि-स्पर्शने सुमनसः प्रविलेपुः ॥ ६१ ॥
क्रौञ्चरूपमुपचर्य चुकूजु-र्मध्यमध्वनितबन्धुरमन्ये ।
पारितोषिकमिवादित तेषां, तोषपोषकरमीक्षणमीशः ॥ ६२ ॥
रेजिरे रचितपञ्चमगानाः, क्लृप्तकोकिलवपुःप्रतिमानाः ।
केचन श्रुतिकृतामृतवर्षाः, स्वामिवीक्षणसुधाधृतहर्षाः ॥ ६३ ॥
धैवतध्वनिमनोरममश्वी-भूय भूरिकृतहेषितहर्षाः ।
केऽप्यदुर्जिनपतेः प्रमदं यं, तेषु सम्मदमदत्त स एव ॥ ६४ ॥
को मदोऽस्तु मदखण्डनचण्डे, स्वामिनीत्यभिगताः कलभत्वम् ।
निर्मदोदयमदुर्मुदमन्ये, सम्मदोदितनिषादनिनादाः ॥ ६५ ॥
लक्षणाद् वृषभतो वृषभाख्या, यद्विभोर्वृषभताऽतिशुभा तत् ।
केऽप्यतो वृषभतां व्यधुराप्ताः, प्रीतिभारमृषभारवभाजः ॥ ६६ ॥
अप्सरोभिरपि कौतुककारै-र्नित्यमित्ययममर्त्यकुमारैः ।
कल्पपादप इवाश्रितपादः, प्राप वृद्धिमनुपागतसादः ॥ ६७ ॥

---

१ क-'भाराः' । २ "नासां कण्ठमुरस्तालु, जिह्वं दन्तांश्च संस्पृशन् ।
षड्भ्यः सञ्जायते यस्मात्, तस्मात् 'षड्ज' इति स्मृतः ॥ १ ॥
षड्जं वदति मयूरो, ऋषभं गाव एव च ।
अजा वदति गान्धारं, क्रौञ्चो वदति मध्यमम् ॥ २ ॥
वसन्तकाले सम्प्राप्ते, कोकिला वदति ( पिकः कूजति ? ) पञ्चमम् ।
धैवतं हेषते वाजी, निषादं कुञ्जरः स्वरम् ॥ ३ ॥"
३ ख-'प्रविलेसुः' । ४ प्रमदः ।

तत्र विश्वनयनामृतसत्रे, वृद्धिमाश्रयति तीर्थकरेन्दौ ।
सर्वतस्त्रिजगतीप्रमदाब्धि-र्वर्धते स्म धृततुङ्गतरङ्गः ॥ ६८ ॥
नित्य'मुत्तरकुरु'द्रुफलानि, 'क्षीर'सागरजलानि स देवैः ।
उम्भितानि[1] बुभुजे पिबति स्मा-ङ्गुष्ठपानसमयोर्ध्ववयोभृत् ॥ ६९ ॥
शैशवात्ययवयःसमयं तु, प्राप्य तीर्थपतयोऽन्वहमन्ये ।
यावदावसथवासविलासं[2], सिद्धभोज्यभुज एव बभूवुः ॥ ७० ॥
ज्ञानिनोऽपि मम बालविनोदै-र्यत् प्रमादकरमेतदितीव ।
शैशवं क्रमवशाद् विभुरौज्झत्, तत्त्ववानिव भवस्य विलासम् ॥ ७१ ॥
यौवनं जिनपतिर्निचिताङ्गो-पाङ्गचङ्गिमगुणप्रगुणश्रि ।
प्रत्यपद्यत वनस्पतिकाय-श्चैत्रमासमिव विश्वजनीनम् ॥ ७२ ॥
तोयदात्ययमिवामृतरोचिः, प्रातरत्ययमिवोष्णमरीचिः ।
शैशवात्ययमवाप्य महोभिः, शोभते स्म विशदैर्भृशमीशः ॥ ७३ ॥

प्रभोः शरीरवर्णनम्

मानसाद् विगलितः किल रागः, शोणभावनिभतो[3] जिनभर्तुः ।
पादपद्मतलमाप ततस्तत्[4], केतकीदलसमुज्ज्वलमासीत् ॥ ७४ ॥
यन्न नीरजजयेऽजनि खेदः, स्वेदवेदनमतोऽस्तु कुतोऽस्य ।
स्वामिनः क्रमयुगस्य भियाऽब्जं, खिन्नमेव नु पयःकणदम्भात् ॥ ७५ ॥
वारिजेन विजितेन वितीर्णा, स्वामिनश्चरणयोर्निजलक्ष्मीः[5] ।
तेन तौ व्यलसतां महसोष्णौ, निःप्रतापमिव शीतलमन्यत् ॥ ७६ ॥
पल्लवादपि मृदुत्वमुदारं, स्वामिनः क्रमयुगे मनसीव ।
आश्रितस्य[6] दुरितारिविदारे, वज्रतोऽपि कठिनत्वमपीहं[7] ॥ ७७ ॥
पल्लवेषु कमलेष्वपि चक्रे, चक्रितां जिनपतेः पदयुग्मम् ।
तेन चक्रयुगलेन दिदीपे, तस्य[8] विश्वजनविस्मयदेन ॥ ७८ ॥
सौति सौख्यमसमं समतैव, क्षिप्यतां विषमतेत्युपदेशम् ।
शंसितुं पदतले किल नेतु-र्मांसले कलयतः स समत्वम् ॥ ७९ ॥

---

१ ढौकितानि । २ गृहवासविलासावधि । ३ मिषात् । ४ मानसम् । ५ कमलम् ।
६ भक्तस्य । ७ क्रमयुगे । ८ पदयुग्मस्य ।

यः श्रयिष्यति जिनेशितुरंह्री, स्वस्ति तस्य जननद्वितयेऽपि ।
दातुमन्तिकतमं स दधाते, स्वस्तिकद्वयमदः पदमेतौ ॥ ८० ॥

नम्रनाकिकुलमौलिमणीनां, सम्भ्रमेण सुहृदां परिरम्भम् ।
स्वामिनः क्रमनखाः खलु कर्तुं, सम्मुखं स्वककरान् परितेनुः ॥ ८१ ॥

उन्मिषत्त्विषिसखी नखपङ्क्तिः, पादयोर्जिनवरस्य विरेजे ।
भाविभाविशुभसिद्धिविवाहे, सज्जितेव जववारक(?)राजिः ॥ ८२ ॥

नाकिकोटिमुकुटाङ्कुरकोटि-द्योतिताः पदनखा दश नेतुः ।
लेभिरे दशककुप्कमलानां, रत्नदर्पणततिप्रतिमत्वम् ॥ ८३ ॥

श्रीगृहं प्रभुपदाम्बुजयुग्मं, नूनमेतदपरं न सरोजम् ।
अन्यथा कथमिहैव बभौ श्री-वत्स एष विलसद्ध्वजकुम्भे ॥ ८४ ॥

सत्पुमानिव सुवृत्तविशिष्टो-ऽङ्गुष्ठ उन्नततमो जिनभर्त्तुः ।
सर्वदैव चरणाग्रनिषेवी, वक्रभावमयमावहतु क्व ? ॥ ८५ ॥

पादयोर्हृदि धृताधिकदानै-र्धिक्कृताः कृशतरा दश लग्नाः ।
स्वामिनोऽङ्गुलिमिषाः किल कल्प-क्ष्मारुहो नखमहोमणिवी(वा?)राः ८६

ये नयन्ति यतिनो गहनान्तं, तेषु साधुदशधर्महयेषु ।
पुष्टिदाः किल दशाङ्गुलिमूले, स्वामिनः समभवन् यवमालाः ॥ ८७ ॥

कूर्मवत् क्रमसमुन्नतिरम्ये, रेजतुर्जिनविभोः पदपृष्ठे ।
धर्मयीर्यतिगृहस्थजनानां, रोहणार्थमुदिते इव पद्ये ॥ ८८ ॥

प्रोन्नतौ पृथुलवर्त्तुलदीर्घौ, रेजतुर्जिनपतेः पदपार्ष्णी ।
आश्रितत्रिजगतीजनतानां, भुक्ति-मुक्तिसुखयोरिव कन्दौ ॥ ८९ ॥

वर्तुलाविषमगूढनिवेशै-र्विष्टपत्रयपतेः पदगुल्फैः ।
अध्यचुम्बत चतुर्विधधर्म-श्रीविभूषणसमुद्गकशोभाः ॥ ९० ॥

जङ्घयोर्द्वयमशोभत भर्त्तुः, श्राद्धधर्म-यतिधर्मयुगस्य ।
क्रूरकर्मजयिनो जयकीर्त्ति-स्तम्भयुग्ममिव जङ्गममूर्त्ति ॥ ९१ ॥

---

१ भविष्यद्भावयुक्तशुभ० । २ प्रभुपादपद्मयमले । ३ क्षमा-मृदुता-सरलता-शुचिता-सत्य-संयम-तपश्चर्या-त्यागा-ऽकिञ्चनता-ब्रह्मचर्येति दशविधः साधुधर्मः । ४ दान-शील-तपो-भावेति । ५ क-'शोभा' ।

कोविदा अपि वदन्ति धिगस्य– जङ्घयोरुपमितिं मृगजङ्घाम् ।
यत्पुरो न जयिनी हरिजङ्घे–तीव [1]तत्तनुरुहाणि कृशानि ॥ ९२ ॥
जङ्घयोर्युगलकेन जिनेन्दो–र्मांसलांसयुतजानुमिषेण ।
वोढुमूरुयुगभारमिवोरुं, मौलिबन्धनमबध्यत मौलौ ॥ ९३ ॥
ऊर्ध्वमूरुयुगली क्रमवृद्धा, यत्प्रभोस्तदनया क्रमहीना ।
स्पर्द्धते स कदली यदतोऽस्या, दुर्यशः [2]शितिदलच्छलमासीत् ॥ ९४ ।
[3]यद् विलासिकरुणारसकुल्या–पर्वतः प्रभुरखर्वतरश्रीः ।
[4]तेन किं न कठिनायतपीनौ–न्नत्यविस्तरवरोऽस्य नितम्बः ॥ ९५ ॥
सिंहरूपकलनां कृशमध्या–लम्बनेन स न केवलमीशः ।
भव्यभद्रवनभेदनमाद्यत्–पापदन्तिदलनादपि लेभे ॥ ९६ ॥
यः प्रभोः कुलिशगर्भसगर्भः, शोभते स किल मध्यविभागः ।
तस्य कश्चन मृगारिनिकारे, न श्रमः समजनिष्ट गरिष्ठः ॥ ९७ ॥
[5]भातरङ्गभृतनाभिगभीरा–वर्त्त एष सुकृतामृतसिन्धुः ।
तारका न वयमित्युरुशङ्का–स्तन्न तत्तटमपीयुरवौघाः ॥ ९८ ॥
नाभिभूविपुलहृत्तलगर्भे, खेलति स खलु धर्ममहेभः ।
रोमराजिरिह तत् किल रेजे, तत्कपोलगलिता मदलेखा ॥ ९९ ॥
'काञ्चना'चलशिलाविपुले श्री–वत्समण्डलमभाद् हृदि भर्त्तुः ।
चिन्महो बहिरिह क्रमतो[8]ऽभि–स्यन्द्य पिण्डितमिवान्तरमेतत् ॥१००॥
श्रीविलासनववेश्मनि बाहु–स्तम्भयोरुपरि भर्तृशरीरे ।
शातकुम्भमयकुम्भयुगाभा, [7]प्रांशुरंसयुगली विपुलाऽभात् ॥ १०१ ॥
दोर्युगं विजयते स जिनेन्दो–र्जानुलम्बि पविदण्डविडम्बि ।
[6]बोधिना प्रगुणितं खलु राग–द्वेषपेषि गुरुमुद्गरयुग्मम् ॥ १०२ ॥
जिग्यिरे करयुगेन जिनेन्दोः, पङ्कजानि दशदिक्प्रभवानि ।
तस्य तद्दश नखोल्लसदंशु–श्रेणयो जयतता नु पताकाः ॥ १०३ ॥
स्वामिपाणिकमलं किल कोपात्, ताम्रमुष्णमधिगम्य भियाऽब्जम् ।
शङ्ख-मीन-मकरैः स्वकवर्ग्यैः, सान्त्वनाय समभेत्य सिषेवे ॥ १०४ ॥

---

१ प्रभुजङ्घारोमाणि । २ ख–'सिति०' । ३ यस्मात् कारणात् । ४ कारणेन । ५ कान्तिकल्लोल० । ६ गलित्वा । ७ उन्नता । ८ सम्यक्त्वेन ।

किं धृतैः कुलिशकार्मुकचक्रैः, किङ्करौ [1]किशलयं कमलं ते ।
वक्तुमेवमिव तद्द्वय[2]लक्ष्म्यौ, विष्टपाधिपतिपाणिमुपेते ॥ १०५ ॥
हस्तमूलवलये त्रिजवाल्यो, भ्रेजिरे त्रिभुवनैकविनेतुः ।
ज्ञानदर्शनचरित्रकलानां, पाण्यलङ्करणशृङ्खलिका नु ॥ १०६ ॥
कल्पवल्लिनवपल्लवलक्ष्मीं, स्वामिनो जगृहुरङ्गुलयो यत् ।
तास्ततः श्रितनिरन्तरपर्व–श्रेण्यखर्वविभवाः प्रबभूवुः ॥ १०७ ॥
तत्त्वसंश्रयपद[3]त्रयवक्ता–ऽभूत् त्रिरेख इति यः प्रभुकण्ठः ।
शङ्ख एष रिपुपेषनिदान–ध्मानवानजनि धर्मधरेन्दोः ॥ १०८ ॥
भक्तितः [4]शशभृता सितदम्भात्, कौमुदी सुरभिताऽम्बुरुहेण ।
अर्पिता प्रभुमुखे सुकृतौघै–स्तैः पुनः प्रभवतः स [5]तयोस्ते ॥ १०९ ॥
श्रीर्विधोर्विभुमुखेऽम्बुजलक्ष्मीः, खेलतः स्म मिलिते किमु चित्रम् ।
यत्र तीर्थकरपार्श्वमुपेतान्, कानपि स्पृशति शाश्वतवैरम् ॥ ११० ॥
श्रीयुगादिमजिनाननमुच्चै–र्निश्चिनोम्यमृतकुण्डमिदं हि ।
येन यस्य वचनामृतपानात्, के परामरपदाय न जग्मुः ? ॥ १११ ॥
विश्वनेतुरधरः स्मितसान्द्रो–ऽशोभताम्रनवपल्लवताम्रः ।
क्वापि लीन इव रागलवोऽन्तः, स्वान्तशान्तरसपूरनिरस्तः ॥ ११२ ॥
द्योतते स्म न किमु द्विगुणश्री–रिन्दुतो वृषभलक्ष्ममुखेन्दुः ।
यः कलाः कलयति स्म किल द्वा–त्रिंशतं विशददन्तनिभेन ॥ ११३ ॥
विस्मितस्मितसमर्पितशोभा, दन्तभाततिरभाद् वृषभस्य ।
मानसामृतसमुद्रसमान–ज्ञानसान्द्रविहरल्लहरीवत् ॥ ११४ ॥
जन्तुतोषजननी जिनभर्तु–र्यद् बभूव [7]सुमनःस्थितिरन्तः ।
तद् ध्रुवं तदधिवासविलासैः, श्वासवायुरभितः सुरभिश्रीः ॥ ११५ ॥
विश्वनाथरसना परमात्म–ज्योतिषः समुदिताऽग्रशिखेव ।
द्वादशाङ्गसमयार्थचयानां, सा प्रसृमरितरथा कथमासीत् ? ॥ ११६ ॥
[9]शूलिमौलिमणिरप्यमृतांशु–र्यज्जितः प्रभुकपोलयुगेन ।

---

१ ख–'किसलयं' । २ किसलय-कमलद्वयलक्ष्म्यौ । ३ उत्पत्ति-विगम-ध्रौव्यपदत्रय० । ४ चन्द्रेण । ५ चन्द्र-कमलयोः । ६ कौमुदीसुरभिते । ७ पक्षे पुष्पस्थितिरित्यर्थः । ८ सुमनःसुगन्ध० । ९ शिवमस्तकमणिः ।

नासिकाऽस्य तदशोभत कीर्त्ति-स्तम्भवत् तलपृथुः क्रमसूक्ष्मा[1] ॥११७॥
नासिका जिनपतेः किल वंशो, लोकचित्तकपिसङ्कलनार्थम् ।
[2]तत्र तेन विललास शितिभ्रू-दम्भतो विपुलशृङ्खलमाला ॥ ११८ ॥
वर्त्तुलोन्नतिमती [3]विभुनासा, वंशयष्टिरिह रज्जुरभूद् भ्रूः ।
तल्ललाटफलकेऽकृत लास्यं, श्रीः स्फुटं कटरि वंशनटीव ॥ ११९ ॥
लोललम्बिविपुलश्रुतिदोलं, सूक्ष्मरूढचिकुरावलिदूर्वम् ।
मौक्तिकोज्ज्वलविभाजलभास्वद्-दृष्टिपुष्करिणिकाकृतहृष्टि[4] ॥ १२० ॥
ओष्ठपल्लवफलं सितपुष्पं, भ्रूलताव्यतिकरेण वरेण्यम् ।
स्वामिनोऽभिनवयौवनलक्ष्म्याः, केलिकाननमिवाननमाभात् १२१-युग्मम्
मध्यकृष्णधवलारुणकोणे, राजतः स जगदीश्वरनेत्रे ।
उत्पलात्[5] कुमुदकोकनदाभ्या[6]-मागतैः परिणते इव सारैः ॥ १२२ ॥
किं विशालसरलोज्ज्वललक्ष्मी-पात्रयोर्नयनयोर्जिननेतुः[7] ।
श्यामपक्ष्मिषतो जनचक्षु-र्दोषमोषकृतयेऽञ्जनरेखाः ॥ १२३ ॥
स्निग्धता जिनविलोचनयुग्मे, काऽप्यहो वचनमार्गमतीता ।
यत्र यत्र तनुभाजि ययौ तत्-स्नेहसंश्रयमयः स स जज्ञे ॥ १२४ ॥
[8]निर्मले सरलपक्ष्मलसौम्ये, स्वामिनेत्रयुगले स्खलनं ही ।
स्वान्तिके प्रसरति श्रवणाभ्या-मन्तरा कुटिलयोः क्व विवेकः ? ॥१२५॥
वाल[9]वायजनवाङ्कुरकान्ती, किं भ्रुवौ भुवनभर्त्तुरभाताम् ? ।
दृक्सुधासरसि कान्तिकनासा-वंशशीर्षवितते [10]नवशाखे ॥ १२६ ॥
लोललम्बिपृथुपाशविलासौ, [11]व्यायतावशुभतां [12]विभुकर्णौ ।
वाक्श्रियोः श्रितसखित्वसुखिन्योः, खेलनप्रवणयोरिव दोले ॥ १२७ ॥
नेतुरास्यरुचिसिन्धुतरङ्गैः, शुक्तिसम्पुटमिव प्रविभिन्नम् ।
तीरयोः श्रुतिनिभाद् गतमङ्का-वर्त्तिमुक्तरदमौक्तिकपङ्क्तिः ॥ १२८ ॥
स्वामिभालमशुभत् समरेखं, कान्तकान्ति कठिनं मसृणं च ।
धर्मसाद् 'भरत'वर्षमिहेत्या-ख्यायि सज्जमिव शासनपत्रम्[13] ॥ १२९ ॥

---

१ क-'सूक्ष्मः' । २ वंशे । ३ ख-'प्रभुनासा' । ४ ख-'हृष्टिः' । ५ कृष्णवर्णकमलात् । ६ श्वेतरक्तपङ्कजाभ्याम् । ७ ख-'भर्तुः' । ८ 'निर्ममे सरलनिर्मलसौम्ये' । ९ वैडूर्यमणिः । १० ख-'किल शाखे' । ११ दीर्घौ । १२ ख-'शुभकर्णौ' । १३ क-'पात्रम्' ।

सर्वतः क्रमसमोन्नतपृष्ठः, शोभते स्म भुवनाधिपमूर्द्धा ।
न्यग्मुखस्सितसरोरुहशोभः, केलिपर्वत इवार्हतलक्ष्म्याः ॥ १३० ॥
धर्मभूमिधवजङ्गमसौधं, नाभिभूपतनुभूः शुशुभे सः ।
शीर्षभूषणमिहोन्नतवृत्तो-ष्णीषमण्डलमभूत् कलशश्रि ॥ १३१ ॥
स्वामिमूर्ध्नि मृदुला भ्रमरालि-श्यामला चिकुरराजिरराजत् ।
अन्तरा प्रसृमरेण परात्म-ज्योतिषेव तिमिरोर्मिरुदस्ता ॥ १३२ ॥
स्वामिनो दलितकाञ्चनदर्पा, लोकलोचनकृतामृतवृष्टिः ।
उष्णरोचिरमृतांशुमहोभि-र्मिश्रितैः परिणतेव तनुत्वक् ॥ १३३ ॥
श्यामसूक्ष्ममृदुलानि जिनाङ्गे, रेजिरे तनुरुहाणि सुरीणाम् ।
दृक्प्रवेशमनवाप्य कटाक्षा, रोमकूपपदवीषु किलाप्ताः ॥ १३४ ॥
इत्यलक्ष्यत सुलक्षणसङ्घै-र्लक्षितः क्षितिविभूषणमीशः ।
'रोहणा'द्रिरिव सन्मणिवृन्दैः, खण्डिताखिलजगज्जनताऽऽर्त्तिः ॥१३५॥
किञ्चनाऽभिनवयौवनयोगात्, तद् बभौ जिनविभोः सुभगत्वम् ।
येन मोहितहृदस्त्रिदिवेशा, नान्तिकं सह सुरीभिरमुञ्चन् ॥ १३६ ॥
छत्रधारणचरद्वरुणोऽग्रे, [2]वेत्रभृत्यदभवद् धरणेन्द्रः ।
गुह्यकोन्नमितचामरयुग्मो, बाहुदानविलसत्त्रिदशेन्द्रः ॥ १३७ ॥
जीव जीव करुणाऽर्णव ! नित्या-नन्द ! नन्द जयकन्द ! जयेति ।
वादिभिः परिवृतः सुरवृन्दैः, खेलति स्म स यथासुखमीशः ।१३८।-युग्मम्
पर्युपास्तिरससान्द्रबलीन्द्रो-त्सङ्गरङ्गकृतसङ्गपदाग्रः ।
भक्तिसम्भ्रमनमच्चमरेन्द्र-क्रोडसत्वरततोत्तरकायः ॥ १३९ ॥
अप्सरोभिरभितः श्रितपार्श्वो, हस्तशाटकविहस्तकराभिः ।
स्वर्निवासनिहितासनवर्ती, नृत्यमैक्षत सगीतसवाद्यम् ॥ १४० ॥-युग्मम्

नृमरणात् स्त्रीदशा

तालशालतलसीमनि बाल-क्रीडया कलितकौतुककेलि ।
एकदा मिथुनमेकमगच्छत्, स्वच्छभावगलितस्थिति बाल्यम् ॥ १४१ ॥
कालदण्ड इव तालफलं त-न्मध्यतः पुरुषबालकमौलौ ।
उग्रवातगलितं निपपात, क्वास्ति पूर्वकृतकर्मविघातः ? ॥ १४२ ॥

१ ख-'वृत्तः' । २ 'छडीदार' इति भाषायाम् ।

ताडितः किमपि काककताली-न्यायतः शिरसि तेन फलेन ।
दारको मृतिमगादवसर्पि-ण्यामसावपमृतिः प्रथमाऽऽसीत् ॥ १४३ ॥
प्रत्यपद्यत विपद्य स सद्यो, दारकस्त्रिदशवासविलासम् ।
आर्जवोज्ज्वलहृदां युगलानां, सम्मुखानि सुरलोकसुखानि ॥ १४४ ॥
[1]नीडदारुवदुदस्य पुराब्धौ, चिक्षिपुर्मृतवपूंषि खगेन्द्राः ।
तद् वपुर्न हि तदा त्ववसर्पि-ण्यां क्रमेण न भवत्यनुभावः ॥ १४५ ॥
बालिकाऽस्य युगलस्य तु दीना, [2]स्वेन सा सहचरेण विहीना ।
मौग्ध्यदिग्धहृदया हरिणीवद् दिग्विलोकि चललोचनमस्थात् ॥ १४६ ॥
मङ्क्षु तज्जनकयुग्ममुपेत्या-दाय च स्वयमवर्द्धयदेताम् ।
दुःखितं निजमपत्यमवेक्ष्य, प्रेष्यतां प्रकुरुतः पितरौ हि ॥ १४७ ॥
तां च तन्मिथुनमाह सुनन्दे-त्याख्यया सुतममत्वमपीहे[3] ।
आवहन्मृतिमगान्मिथुनानां, स्यादपत्यजननाद् बहु नायुः ॥ १४८ ॥
यातयोर्जनकयोर्दिवि कन्यै-काकिनी सकलकृत्यविमूढा ।
अभ्रमीत् प्रतिवनं चलनेत्रा, सा मृगीव निजयूथवियुक्ता ॥ १४९ ॥

सुनन्दारूपवर्णनम्

जङ्घयोस्तलचरौ रुरुचाते, तत्क्रमौ[4] [5]दिनकृतः करपद्मे ।
न्यङ्मुखे वृषभवीक्षणलीना-दूर्ध्वनालललिते गलिते किम् ? ॥ १५० ॥
आनुपूर्व्यपृथुवर्त्तुलशस्तौ, हस्तिहस्तजयजानि यशांसि ।
गौरगौरवविभाततिदम्भाद्, बिभ्रतौ प्रभवतः स्म तदूरू ॥ १५१ ॥
मेखलाक्वणितकिङ्किणिमाला-श्लाघि तज्जघनमण्डलमाभात् ।
[6]खेटकं निखिललोकजिगीषो-रुत्कटस्य किल कामभटस्य ॥ १५२ ॥
तन्नितम्बफलकं विपुलाभं, भ्राजते स्म भुवनैकविजेतुः ।
[7]सिंहविष्टरमिवाहितमुच्चै-[8]र्यौवनेन [9]विषमेषुनृपस्य ॥ १५३ ॥
साऽऽज्ञया स्मरनृपस्य कुमारी, यौवनेन रचिता किल [10]वारी ।
चित्तदन्तिपतनाय गभीरा, नाभिरत्र तदतन्यत गर्त्ता ॥ १५४ ॥

---

१ कुलाय(पक्षिस्थान)काष्ठवत् । २ क-'स्तेन' । ३ सुनन्दायाम् । ४ सुनन्दाचरणौ । ५ सूर्यात् । ६ 'ढाल' इति भाषायाम् । ७ सिंहासनम् । ८ स्थापितम् । ९ मदनमहीपतेः । १० हस्तिबन्धनशाला ।

पक्षयोरुभययोः परिभाव्य, प्रौढविग्रहसुरोजनितम्बम् ।
सञ्जरोमततिखङ्गमभूत् त-न्मध्यमुद्धृतलसद्वलिपार्श्वम् ॥ १५५ ॥
नाभिमौलितलसम्भवि तन्व्यौ, रोमराजियुगलं कुचतुम्बे ।
दण्डिके भुजयुगं च चिकीर्षू, तत्र तत्स्मररती किमु वीणे ॥ १५६ ॥
चारुकाञ्चनरुची कुचकुम्भौ, कृष्णचूचुककलौ किल तस्याः ।
रेजतुस्तरुणिमोष्मजतापो-द्भ्रान्तमुख्यरससख्यरतास्यौ ॥ १५७ ॥
प्रोच्छ्रिते स्तनयुगे परितोऽस्याः, प्रौढडम्बरधरे च नितम्बे ।
मध्यवास्यसदिवोदरमासीत्, को ह्यकिञ्चनमवैति महत्सु ? ॥ १५८ ॥
भू-र्भुवः-स्वरवलासु सुरूपा, तिस्र इत्यभूत सा खलु रेखाः ।
यत्र कण्ठमवलोक्य तमासी-दीर्ष्ययेव कुटिलो हृदि कम्बुः ॥ १५९ ॥
आननेन्दुरुदयद्द्युतिरस्याः, पद्मसम्पदमुदस्यतु युक्तम् ।
यन्निरन्तरयुतं कुचचक्र-द्वन्द्वमस्य विदधेऽद्भुतमेतत् ॥ १६० ॥
मुग्धदुग्धमयवार्द्धितरङ्गो-त्सङ्गरङ्गचरविद्रुमचङ्गः ।
चन्द्रभासुभगपल्लवशोभी, दिद्युते तदधरः स्मितहृद्यः ॥ १६१ ॥
रोहिणीरमणमण्डलतुल्यं, तत्कपोलयुगलं किल रेजे ।
निर्मलस्फटिकदर्पणयुग्मं, कामवामनयनाद्वितयस्य ॥ १६२ ॥
तन्नेत्रयोः सन्ततमन्तराले, नासोरुभित्तिर्यदि नाभविष्यत् ।
मन्ये तदन्योन्यनिरीक्षणेन, तदाऽक्षिदोषो विपुलोऽलगिष्यत् ॥१६३॥[९]
स्वेच्छाप्रचारस्खलनाविधायिनोः,सम्प्रेरणार्थं किल कर्णयोर्भ्रुवौ ।
यष्टी रुषाऽस्पष्टयतां तदीक्षणे, एतौ श्रुतज्ञाविति ते[१०] पुनः स्थिते ॥१६४॥[१२]
वचनामृतकुण्डमाननं, सुदृशोऽस्याः खलु पक्षयोस्ततः ।
इह कुण्डलिनौ विलेसतुः, श्रवणौ रक्षणकर्मदक्षिणौ ॥ १६५ ॥[१३]
नासावंशस्योर्ध्वमर्द्धेन्दुशोभं, भालं तस्या मन्मथस्येव हैमम् ।
छत्रं रेजे विश्वजेतुर्भ्रमद्भ्रू-दम्भस्फूर्जद्द्वयवैडूर्यलेखम् ॥ १६६ ॥[१४]

---

१ क-'सरोज०'। २ पक्षे बलिपार्श्वम्। ३ सुनन्दायाम्। ४ शृङ्गाररस०। ५ ख-'धृत'। ६ शङ्खः। ७ स्तनरूपचक्रवाकयुगलम्। ८ क-'सविधे'। ९ उपजातिः। १० क-'जीविते ते'। ११ भ्रुवौ। १२ इन्द्रवंशा। १३ सुन्दरी। १४ शालिनी।

वनक्रोडे वासं यदकृत कृती तेन तपसा
　　ततस्तत्केशानामलभत कलापी किल तुलाम् ।
अतश्चूलामौलिः प्रमदकलितो नृत्यतितमां
　　समेते जीमूते सुहृदि हृदयानन्दजननम् ॥ १६७ ॥[1]

[2]सूरेणाम्बरचुम्बिना प्रतिदिशं जातैश्चतुर्भिर्जल-
　　क्रोडे तत्प्रतिबिम्बितैर्यदचरत् 'पञ्चाग्नि'सञ्ज्ञं तपः ।
तल्लक्ष्मीसदनं बभूव नलिनं लेभे न शोभां पुन-
　　स्तद्वक्त्रस्य ततः क्षपास्वलिमिषं भुक्त्वा विषं मूर्च्छति ॥ १६८ ॥[3]

पुरस्कृत्य स्फीतं कुचकलशरूपं किल फल-
　　द्वयं सेवावृत्त्यै नवपरिचये यौवनमदः ।
तदीये शृङ्गारिण्युरसि सततावासरसिकं
　　त्रिलोकीजेतारं विषमशरनेतारमभजत् ॥ १६९ ॥[4]

तद्वक्त्रेण तिरस्कृतः सितरुचिस्तल्लोचनस्पर्द्धिनं
　　स्वोत्सङ्गेऽकृत यं कुरङ्गममुना जज्ञे कलङ्की ततः ।
सख्यं तत्स्मितसौरभारिभिरसौ कृत्वा समं कैरवै-
　　स्तद्दन्तद्युतिमण्डलापहरणं काङ्क्षन् बभूव क्षयी ॥ १७० ॥[7]

युगलिकैर्नाभेः सुनन्दायाः समर्पणम्

भ्राम्यन्तीं मिथुनानि मुग्धहृदयामेकाकिनीं कानने
　　कन्यां तामुपनिन्यिरे कुलकृतः श्रीनाभिभूमीभृतः ।
अस्त्वेषा वृषभस्य विष्टपपतेः पत्नी द्वितीयेत्यसा-
　　वेतां रङ्गदनङ्गजङ्गमपुरीं प्रत्यग्रहीत् प्रीतितः ॥ १७१ ॥[8]

विश्वेशस्य मति-श्रुता-ऽवधिमयज्ञानत्रयस्याश्रयं
　　प्रद्युम्नो न मनः प्रवेष्टुमशकत् त्रैलोक्यवीरोऽपि सन् ।
किन्त्वस्थान्नवयौवनेन जनितावष्टम्भसंरम्भत-
　　स्तद्रामाद्वयपाणिपीडनमहप्रस्तावभावाशया ॥ १७२ ॥[10]

---

१ शिखरिणी । २ क–'शूरेणा०' । ३ शार्दूलविक्रीडितम् । ४ शिखरिणी । ५ ख–'तपः' । ६ चन्द्रः । ७–८ शार्दूल० । ९ कामः । १० शार्दूल० ।

॥ इति श्रीजिनदत्तसूरिशिष्यसरस्वतीकण्ठाऽऽभरणवेणीकृपाणाऽपरनामपण्डित-
श्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दाऽपरनाम्नि श्रीजिनेन्द्रचरिताऽभिधाने
महाकाव्ये वीराङ्के श्रीआदिनाथचरिते प्रभुबाललीलायितवपुर्वर्णनो
नामाऽष्टमः सर्गः ॥ ८ ॥

यस्योत्तुङ्गतरांसशैलतटयोरभ्युल्लसन्ती पयो-
वाहानां पटलीव कुन्तलततिर्गुञ्जाग्रजाग्रद्द्युतिः ।
भिन्दाना भवदावपावकभयं कल्याणवल्लीचयं
वृद्धिं प्रापयति प्रभुः स जयति श्रीनाभिजन्मा जिनः ॥ १ ॥[3]

यद्भोगीन्द्रफणासहस्रमणिभिर्यत् क्रौञ्चभिद्बर्हिणः
स्फाराक्षिस्फुरितैर्यदौषधिविभुप्रौढप्रभाप्रातिभैः ।
यत् पृथ्वीधरपुत्रिकाऽधरसुधास्वादैर्नहि व्याहतं
पद्म ! त्वद्यशसा तदद्य पिहितं श्रीकण्ठकण्ठे विषम् ॥ २ ॥[6]

ग्रन्थाग्रं ॥ २५२ ॥ आदितो ग्रं० २८१३ ।



१ क–'सूरिशिष्यश्रीमदमर०' । २ क–'वपुर्व्यावर्णनोऽष्टमः' । ३ शार्दूलविक्रीडितम् ।
४ कार्तिकस्वामिनो मयूरस । ५ पार्वती० । ६ शार्दूल० ।

## नवमः सर्गः ९

श्रीनाभिभूर्भवतु नाभिभृतां[1] विभूत्यै, यस्य प्रभावविभवेन तमोऽभिभूतम् ।
अंशाङ्क[2]केशनिभतः शरणेऽभिलीनं, भामण्डलार्कवदनेन्दुकरैर्न भिन्नम् ॥ १ ॥[3]

अत्रान्तरे त्रिभुवनैकविभोर्विभाव्य, भर्त्ता दिवोऽवधिलयेन विवाहकालम् ।
तत्राजगाम चरणौ प्रणनाम पत्युः, स्थित्वा पुरश्च रचिताञ्जलिरित्यवोचत् ॥२॥

यः स्वामिनं सकललोकनयज्ञमज्ञः, स्वोपज्ञमर्थमभिवक्ति समर्थयिष्यन् ।
भानुं विभासि भुवनं निकषा स[4] खेलन्, खद्योतपोत इव खेलनकं न केषाम् ? ३

स्वामिप्रसादमददुर्ललिताः कदाचित्, किञ्चिद् वदन्त्यसदृशं यदि [5]तेन तेभ्यः ।
कुप्यन्ति नैव विभवस्तदहं वदामि, कार्यस्ततो मयि कृपामय ! नाप्रसादः ॥४॥

वेद्मि प्रभोर्भवपराभवनोद्यतस्य, दीक्षापरिग्रहमहाय महाग्रहोऽस्ति ।
वर्षे[6]ऽत्र किन्तु निखिला व्यवहारमार्गा, वर्त्मेव निर्वृतिपुरः प्रभुणा प्रवर्त्याः ॥५॥

उत्सर्पिणीष्वपि तथाऽप्यवसर्पिणीषु, क्षेत्रेषु येन भरतैरवताभिधेषु ।
उच्छिन्नकृत्स्नभुवनाचरणस्य नाथ !, विस्तारणे प्रथमतीर्थकृतोऽधिकारः ॥ ६ ॥

तद् विश्वशासन ! जनव्यवहारहेतो–र्नेतः ! सहोद्वह सुमङ्गलया सुनन्दाम् ।
अङ्गीकृते भगवताऽत्र विवाहकृत्ये, भूयान्महोत्सवमयस्त्रिजगज्जनोऽपि ॥ ७ ॥

श्रुत्वेति भोगफलकर्म ममास्ति पूर्व–लक्षत्र्यशीतिमिह यावदवारणीयम् ।
भोग्यं तदित्यवधिना प्रतिबुद्ध्य नाथो, मूर्द्धावधूननमधोवदनं व्यधत्त ॥ ८ ॥

मौलिप्रकम्पकृतितोऽनुमतिं किलाप्या–ऽभिप्रायविद् भुवनभर्तुरमर्त्यभर्त्ता ।
आनन्दकन्दलपदं त्रिदशानशेषा–नाजूहवद् विभुविवाहमहोत्सवाय ॥ ९ ॥

प्रभोर्विवाहमण्डपवर्णनम्

तत्राभियोगिकसुराः सुरभर्त्तुराज्ञां, विज्ञाय भूरिमणिभूरिभिरभ्यकार्षुः[7] ।
यं मण्डपं सपदि तन्मिषतः '[10]सुधर्मा'–ऽप्येता सुरेन्द्रसुरवत् प्रभुपर्युपास्त्यै ॥१०॥

तत्रोच्चकैर्विरचिता मणि-रूप्य-रुक्मैः, स्तम्भा भृशं शुशुभिरे वृषभस्य भर्तुः ।
स्थैर्योन्नतत्वविजितैरिव [12]रत्न-तार–स्वर्णाद्रिभिः स्वशिखराण्युपदीकृतानि ॥ ११ ॥

---

१ ख–'भवभृतां' । २ ख–'अंसाङ्क०' । ३ १२२तमपर्यन्तानि पद्यानि वसन्ततिलका-च्छन्दसि । ४ क–'गुरो०' । ५ अज्ञः । ६ वाक्येन । ७ 'भरत'क्षेत्रे । ८ इन्द्रः । ९ प्रभू-तरत्नसुवर्णैः । १० क–'रित्यकार्षुः' । ११ देवसभा । १२ रोहणाचल–हिमालय–मेरुभिः ।

स्तम्भेषु तेषु निचिता मणिचक्रवालैः, पाञ्चालिका रुरुचिरेऽत्र विचित्ररूपाः ।
श्रीमद्युगादिमजिनेन्द्रनिभालनेन, संस्तम्भिता इव दिवः शतपत्रनेत्राः[१] ॥ १२ ॥
तत्राबभुः स्फटिककुट्टिमभूमिकासु, प्रोद्भासिकान्तिततिषु प्रतिबिम्बिताङ्ग्यः ।
ज्योत्स्नासमुज्ज्वललसज्जलकेलिवापी–क्रीडाप्रसक्तललना इव शालभञ्ज्यः ॥ १३ ॥
तत्रेन्दुकान्तमयभूमिषु नीलरत्न–स्तम्भावली प्रतिमिता प्रभवत्प्रभासु ।
'क्षीरा'म्बुराशिलहरीपटलान्तराल–सेवालजालतुलनां कलयाम्बभूव ॥ १४ ॥
तत्रेन्दुनीलमयभूमिषु[२] पद्मराग–स्तम्भा विनीलविलसत्किरणैः परीताः ।
मंजुः कलिन्दतनया[३]जलवीचिजाल–प्रोत्तालकोकनदनालकलापलीलाम् ॥ १५ ॥
स्तम्भाः शशाङ्कमणिजाः कुरविन्दरत्न–क्षोणीषु सान्ध्यघन[४]युक्शशभृत्कराभाः ।
शोणाश्मजा मरकतक्षितिसीम्नि तत्र, प्रावृट्पयोदलुलितार्ककरोपमेयाः ॥ १६ ॥
तत्र प्रसृत्वरतरद्युतयो द्विधाऽपि, कल्याणमण्डलमयाः कलशा विरेजुः ।
प्राप्ता जगत्प्रभुविवाहमहे समग्र–द्वीपाऽब्धितो दिनकरा इव कौतुकेन ॥ १७ ॥
तत्र प्रकाशितनभःककुभोऽभितोऽपि, विभ्रेजिरे द्युतिभरेण सुवर्णवेद्यः ।
भक्त्या प्रभोः परिणयावसरे प्रयुक्ताः, सम्पिण्ड्य चण्डकिरणैरिव कान्तयः स्वाः १८
द्वारेषु नीलमणिभि[५]र्निर्भृतेषु नाना–रत्नोल्बणाभिरिह तोरणधोरणीभिः ।
प्रावृड्घनाघनविभूषणवज्र[६]पाणि–बाणासनप्रगुणिता गुणयाम्बभूवे[७] ॥ १९ ॥
सन्तानशाखिभवपल्लवकल्पिताभिः, सर्वासु दिक्षु नववन्दनमालिकाभिः ।
आन्दोलिताभिरनिलेन दिगङ्गनानां, दोलावलीभिरिव तत्र भृशं बभासे ॥२०॥
विष्वग्भवद्धवलदिव्यदुकूलसान्द्र–चन्द्रोदयव्यतिकरस्य किल च्छलेन ।
तत्रोत्सवे जिनवरस्य यशःसुहृत्त्वा–देत्य स्थितं विधुकदम्बककौमुदीभिः ॥२१॥
मुक्तावचूलपटलान्यभितो वितानं, शृङ्गारसागरवरे किल मण्डपेऽत्र ।
रेजुस्ततानि मकरध्वजजालिकस्य, जालानि विश्वजनदृक्शफरी[८]ग्रहाय ॥ २२ ॥
भान्ति स्म तत्र कलशावलयः सुरीभि–रारोपिता रतिपतेः सुकृतोत्कराः किम् ?
ता वेष्टिता हरितवंशपरम्पराभिः, शृङ्गारभङ्गिभिरिवाभ्युदयं गताभिः ॥ २३ ॥
भान्ति स्म धूपघटधूमघटाभिरत्र, प्रोद्भासिता नभसि वातहताः पताकाः ।

१ कमललोचनाः । २ ख–'मणिभूमिषु' । ३ यमुना० । ४ सन्ध्याकालीनमेघ० ।
५ हरिन्मणि० । ६ इन्द्रचाप० । ७ क–'गुणता' । ८ क–'दृच्छफरी०' ।

सूर्यात्मजामिलितजह्नुसुतासहस्र–भ्रान्त्या सहर्षतरसप्तमहर्षिदृष्टाः ॥ २४ ॥
तत्र स्थितेष्वपि विदूरजनीलरत्न–स्तम्भेषु मङ्गलधिया विबुधैः प्रक्लृप्तम् ।
मत्वाऽऽत्मरोपणमुरुप्रमदेन रम्भा–स्तम्भैरनर्त्ति किल लोलदलच्छलेन ॥ २५ ॥

अप्सरोभिः सुनन्दा-सुमङ्गलयोः शृङ्गारणम्

आज्ञा त्रिविष्टपपतेस्त्रिजगत्पतेश्च, यज्ञोत्सवस्तदिह नः सुकृतैः प्रवृत्तिः ।
इत्युन्मदास्त्वरितमप्सरसः प्रसस्रु–र्लग्ने समीपतरवर्त्तिनि कृत्यजाते ॥ २६ ॥
रम्भाः समारभत देवतरुप्रसूनैः, स्रष्टुं स्रजश्चलशिलीमुखचक्रवालाः ।
स्वस्वामिने कुसुमचापभराय चाप–श्रेणीरिव त्रिजगतीविजयोद्यताय ॥ २७ ॥
अर्घं वराय विधिविद् विधिवद् विधातुं, सज्जीकृतं दधिघृतादि दधौ घृताची ।
मङ्गल्यगोच्छगणमृन्मयमण्डलाली–द्वारेष्वकल्प्यत तिलोत्तमया क्रमाय ॥२८॥
मुक्ताभिरक्षतचयैरपि चित्रलेखा, स्राक् स्वस्तिकानदित विस्मितलेखलेखान् ।
मेना मनोभवमनोरथकारि चित्रं, नेत्रोत्सवं व्यधित मातृगृहे विचित्रम् ॥२९॥

---

१ यमुना० । २ गङ्गा० । ३ मरीच्य-ऽत्र्य-ऽङ्गिरः-पुलस्त्य-पुलह-क्रतु-वसिष्ठेति ।
४ वैदूर्य० । ५ 'जन्योत्सवः' इति ख–टि–पाठः । ६ एतासां कतिपयानां नामान्युत्पत्तिश्च वर्णितानि व्याडिकोशे, यथा—

"अथ ब्रह्मणोऽग्निकुण्डात्, समुत्पन्ना प्रभावती ।
वेदितलाद् वेदिवती, यमात् पुनः सुलोचना ॥ १ ॥
उर्वशी तु हरेः सव्य–मूरुं भित्त्वा विनिर्गता ।
रम्भा तु ब्रह्मणो वक्त्रा–च्चित्रलेखा तु तत्करात् ॥ २ ॥
शिरसस्तु महाचित्ता, स्मृता काकिलसा वसा ।
मरीचिसूचिका चैव, विद्युत्पर्णा तिलोत्तमा ॥ ३ ॥
अद्रिका लक्षणा क्षेमा, दिव्या रामा मनोरमा ।
हेमा सुगन्धा सुवपुः, सुबाहुः सुव्रता सिता ॥ ४ ॥
शारद्वती पुण्डरीका, सुरसा सूनृताऽपि च ।
सुवाता कामला हंस–पादी च सुमुखीति च ॥ ५ ॥
मेनका सहजन्या च, पर्णिनी पुञ्जिकास्थला ।
ऋतुस्थला घृताची च, विश्वाचीत्यप्सरःस्त्रियः ॥ ६ ॥"

७ बाणा० । ८ अप्सरोऽभिधानम्, उक्तं च अमरकोशे (का० १, श्लो० ५२)—

"घृताची मेनका रम्भा, उर्वशी च तिलोत्तमा ।
सुकेशी मञ्जुघोषाद्याः, कथ्यन्तेऽप्सरसो बुधैः ॥"

९ क–'श्राक्' । १० विस्मितदेवौघान् ।

अम्लोचिका समुचिते [1]रचयाम्बभूव, स्थाने यथास्थिति [2]वरां वरमञ्चिकां [3]स्त्राक् ।
शारद्वती समुदपादयदादरेण, [4]प्राग्रं यथाविधि वधूवरपादुकौघम् ॥ ३० ॥
सर्वं सुगन्धि विधिवद् विविधं सुगन्धा, [5]स्वर्धामबन्धुरितसन्निधि सव्ययधत्त ।
[6]स्त्राग् [7]यञ्ज्ययात्रिक[8]र्जनैः सह जन्ययाऽपि, सज्जन्यते स्म मृदुलालपना-ऽऽसनादि ३१

अस्युन्मुखी सुमुखि ! किं सुरसेऽलसा किं ?,
किं कामलेऽलससि किं रमसेऽत्र रामे ! ।
क्लेशं सुकेशि ! किमु यासि किमुर्वशि त्वं
गुर्वादराऽपि न सितेऽश्वसि किं वृथैवम् ? ॥ ३२ ॥

तूर्णं न पूरयसि पूर्णिनि ! पूर्णपात्रा-ण्येतानि सम्प्रति किमक्षतमौक्तिकौघैः ? ।
किं नाम घोषयसि मञ्जु न मञ्जुघोषे !, स्वर्योषितो धवलमङ्गलगानमुच्चैः ॥३३॥
लग्नं समीपमुपसर्पति तत् त्वरध्वं, स्वं स्वं करग्रहमहोचितकर्म कर्तुम् ।
इत्थं मिथोऽप्यसमसम्भ्रमजस्तदाभू-दालापकेलिसरसोऽप्सरसां विलासः ॥३४॥

त्रिभिर्विशेषकम्

अभ्यासयन् सह सुमङ्गलया सुनन्दां, स्नानाय काश्चन ततोऽप्सरसः सुपीठे ।
[9]ते रेजतुः किल युते जय[10]राजलक्ष्म्यौ, सज्जीकृते प्रथमतीर्थकृतोऽर्पणाय ॥३५॥
उल्लासिते धवलमङ्गलगानशब्दे, स्नेहेन देहमनयोः सुमनोऽङ्गनाभिः ।
अभ्यज्य ताभिरभितो बहिरन्तराऽपि, स्नेहेन ते सुरभिणा निभृते नितान्तम् ३६
पिष्टातकेन मसृणेन तयोः कुमार्यो-रुद्वर्त्तनं विदधिरे [11]विबुधाम्बुजाक्ष्यः ।
उद्वर्त्तिनीप्रकरसङ्करतो धरिच्यां, पावित्र्यमात्मनि च किश्चन सूत्रयन्त्यः ॥३७॥
तेनुर्नवाऽथ तिलकान् पद-जानु-पाणि-स्कन्धद्वया-ऽलिकतलेषु तयोर्द्युनार्यः ।
ते बिन्दवो नवरसप्रसरेषु दुःखा-ऽप्रामाण्यसाधकतमा इव रेजुरुच्चैः ॥ ३८ ॥
तर्कुप्रतिष्ठितकुसुम्भरसाक्तसूत्रैः, सव्यापसव्यतनुदेशनिवेशितैस्ताः ।
[12]ते पस्पृशुस्त्रिदशपद्मदृशो जिनेशे, दीर्घानुरागकरणं किल दर्शयन्त्यः ॥ ३९ ॥
इत्याहिते दिविषदां [13]हरिणेक्षणाभि-स्ते [14]वर्णके मणिनिकेतनकोटरान्तः ।

---

१ ख-'रचयाञ्चकार' । २ क-'वराम्बर०' । ३ क-'श्राक्' । ४ श्रेष्ठम् । ५ देव० । ६ क-'श्राक्' । ७ ख-'जन्य' । ८ क-'जने' । ९ सुनन्दा-सुमङ्गले । १० क-'राज्य०' । ११ देवाङ्गनाः । १२ सुनन्दा-सुमङ्गले । १३ मृगाक्षीभिः । १४ विलेपने ।

ताभ्यां तु नाभितनुभूः कृतवर्णकाभ्यां, न्यस्तः समस्तसमयं हृदयालयान्तः ॥४०॥
तेने तयोरनिमिषेक्षणवर्णिनीभि-रुद्वर्णकः सकलयाऽप्यनयैव रीत्या ।
वर्णोऽद्भुतः पुनरभूज्जिनधर्मपत्नी-भावप्रभावजनितत्रिजगन्ति यावत् ॥ ४१ ॥
किं स्वप्रसन्ननयनद्युतिसञ्चयेन, स्रोद्यत् तदात्वसुकृतप्रसरेण किं वा ? ।
ते शातकुम्भमयकुम्भपयश्चयेना-न्यत्रासने द्युसुदृशोऽस्नपयन् निवेश्य ॥ ४२ ॥
अङ्गप्रमार्जनविधिं विदधुः कुमार्योः, स्वर्योषितः पट्टदुकूलपटेन येन ।
एते विमुच्य तमनुप्रविवेश तोयं, क्वास्तां वरा-ऽवरविवेककला जलस्य ? ॥४३॥
जाड्यं विडम्बयति नो गुणिनः प्रसङ्गा-दित्याकलय्य किल नाकिविलोलनेत्राः ।
बाढं तयोर्निवसनेन सुकोमलेन, चक्रुर्जलार्द्रकबरीपरिवेष्टनानि ॥ ४४ ॥
अङ्गानुकूलनवदिव्यदुकूलकानि, [३]संव्याय्य ते सुरचकोरदृशोऽपरस्मिन् ।
न्यस्यासने तदुरुकेशकलापतोऽम्बु, न्यश्च्योतयन् प्रमदबाष्पकणानुकारि ॥ ४५ ॥
एतौ मदीयसखिनां शिखिनां कलापै-मैत्रं श्रिताविति धृतप्रमदं पयोदः ।
स्वर्गाङ्गनाजनितधूपनधूमदम्भा-दालिङ्गति स्म किल तत्कबरीकलापौ ॥ ४६ ॥
मद्वर्जिनो जिनपतेर्हृदि मे प्रवेशो, युष्मत्प्रसादवशतोऽस्त्विति याचनाय ।
स्वःस्त्रीकृतस्फुरदलक्तकलेपदम्भाद्, भक्त्या तदंह्रिनलिनेषु ललाग रागः ॥४७॥
भूमी-दिवोरिव निशाविधुभाभिरात्मो-ल्लासेन चन्दनरसप्रसरेण ताभिः ।
तेने तयोः सुरपुरन्ध्रिभिरङ्गरागः, प्रौढस्त्वभूज्जिनपतिं प्रति चित्तरागः ॥ ४८ ॥
[६]क्लृप्तास्तयोः स्तनयुगे वदने च चित्राः, पत्रालयो विबुधलोलविलोचनाभिः ।
विश्वत्रयीविजयजातयशःप्रशस्ति-लीलायितं रतिपतेः परिकल्पयन्त्यः ॥ ४९ ॥
स्वर्धामवामनयनास्तिलकं प्रतेनु-स्तद्भालपट्टमभि यन्मलयोद्भवेन ।
भाति स्म तत्प्रगुणिता [७]रमणाय रत्या, [८]श्वेतोत्तरच्छदपटावरणेव शय्या ॥ ५० ॥
शास्त्रं विदोऽक्षि निगदन्ति यदन्तरङ्गं, प्राप्नोति [९]येन लिखितं तदपि प्रकर्षम् ।
तेनाञ्जनेन निचिते द्युचलेक्षणाभि-स्तल्लोचने व्यरुचतां किमु चित्रमेतत् ॥५१॥
आद्यो रसः श्रयति शश्वद[१०]मुं भ्रवर्ण-मेतद्वचः क्वचन नाश्वति चञ्चलत्वम् ।
येनाञ्जनं विनिहितं द्युनितम्बिनीभिः, शृङ्गारसङ्गतिमियाय तदीक्षणेषु ॥ ५२ ॥

---

१ पटम् । २ डलयोरैक्यात् जडस्येत्यपि ज्ञेयम् । ३ परिधाप्य । ४ ख–'सुहृदां' । ५ सुनन्दा-सुमङ्गलयोः । ६ क–'क्लिप्ता०' । ७ कामदेवाय । ८ ख–'स्वेतो०' । ९ अञ्जनेन । १० कृष्ण० ।

सञ्जायते भृशमसंयमसंयुतानां, सद्वृत्तता सुमनसां श्रयणादितीव ।
तन्मूर्द्धजांस्तदधियोगजुषो[1] नियम्य, धम्मिल्लपुल्लसितवृत्तधरं व्यधुस्ताः ॥ ५३ ॥
न्यस्तौ तयोरधिशिरः सुरसुन्दरीभि-श्चञ्चद्विचित्रमणिचारुतरौ किरीटौ ।
उल्लालिनाशिमहसौ हसतः स 'जम्बू'-द्वीपस्य दीधितिविभू[2] ध्रुवमाभिरेतौ[3] ५४
सेरे तयोः श्रवणयोः सुरवर्णिनीभि-रुत्तंसिते विशदरत्नमयारविन्दे ।
ते वेद्मि रूपजितयेन्दिरया वितीर्णे, तत्र क्षणे स्वकरकेलिसहस्रपत्रे ॥ ५५ ॥
आकल्पयन् कलितमौक्तिकपङ्क्तिकान्ते, ताः कुण्डले श्रवणयोरनयोर्द्युनार्यः ।
सज्जीकृते मदन-यौवनयोः स्फुरेते, भ्रूलासितासिलतयोस्त्रिजगज्जयाय ॥ ५६ ॥
[4]निष्कं न्यधुर्विबुधकेतनकम्बुकण्ठ्यः, कण्ठे तयोर्विविधरत्नरुचिप्रपञ्चम् ।
प्रापत् पयोधरपरिष्करणप्रवीणं, वृन्दारकाधिपतिकार्मुककम्रतां यत् ॥ ५७ ॥
कण्ठेऽध्यरोपि कुचयुग्मलताऽवलम्बी, हारस्तयोस्त्रिदिववारविलासिनीभिः ।
कामप्रियाद्वितयकेलिनगद्वयाव-रोहन्नदीयुगलवेणियुगानुकारः ॥ ५८ ॥
आनाभि कण्ठवलयात् परिलम्बमानौ, हारौ तयोः स्मरविलासनिवासयोस्तौ ।
भातः स्म नायकपदासनमञ्जुमध्यौ, प्रीते रतेश्च किल केलिविलोलदोले ॥ ५९ ॥
सत्पल्लवा मणिगणप्रगुणाऽङ्गदानां, पुष्पाङ्किता विमलमौक्तिककङ्कणानाम् ।
द्योतैस्तयोर्भुजलता द्युवधूततानां, स्रुतप्रभूतमदनास्त्रभरा इवासन् ॥ ६० ॥
यादृग् भृशं गुरुरलाभि मया प्रदेशो, नान्येन तादृगिति सम्मदतः प्रतेने ।
सांराविणं क्वणितकिङ्किणिकानिकायैः, श्रोण्यां सुरीप्रणिहितेन कलापकेन[6] ॥६१॥
अङ्गान्यमूनि निखिलानि यतो मदीया-ऽऽधारे स्फुरन्ति तदकार्युचितो ममैषः
माणिक्यनूपुरमिषान्मुकुटो द्युकान्ताः, साहेति सञ्जितरवेण[7] तदंह्रियुग्मम् ॥६२॥
इन्दोः करा मृदुदशाङ्कुरकैतवेन, या(ये?) निश्रिताः किल सुकोमलताऽर्थनाय ।
तैः पारिणेत्रवसनैर्[8]द्युसदङ्गनाभि-स्ते रेजतुः परिवृते सुकृतैरिवोच्चैः ॥ ६३ ॥
शृङ्गारसारतररूपनिरूपणीये, कृत्वेति मातृगृहमाहितमङ्गलं ताः ।
उत्पाद्य निन्युरमरप्रमदा मुदा ते[9], जीवं क्रियाः सुविमला इव शुक्ति-मुक्ती ॥६४॥
अध्यासयन् कनकरत्नमयासने ता-स्ते कन्यके सुरनिकेतनकैरवाक्ष्यः[10] ।
पुण्योर्मयो गुणविवेकिनि पुंसि गीःश्री-देव्याविवाद्भुततपोविभवेन लभ्ये ॥६५॥

---

१ पुष्पाधियोग० । २ चन्द्रसूर्यौ । ३ किरीटौ । ४ कण्ठाभरणम् । ५ इन्द्रधनुर्मनोहरताम् । ६ कटिमेखलया । ७ क-'सिञ्जित०' । ८ वैवाहिकवस्त्रैः । ९ सुनन्दा-सुमङ्गले । १० दिव्याङ्गनाः ।

विवाहमङ्गलगीताद्याडम्बरेण मण्डपद्वारे प्रभोरागमनम्

निर्बन्धतोऽनुमतिमाप्य सुराधिपेन, नैर्मल्यसौरभशुभः सुभगः स्वभावात् ।
स्वामी स्वयं स्नपित[1]लेपितभूषिताङ्ग-श्चक्रे समग्रजगतः स्थितिदर्शनाय ॥ ६६ ॥
उत्तार्यमाणलवणः सुरवर्णिनीभिः, पार्श्वद्वयेऽप्यनुपदं श्रितदिव्ययानः ।
वेत्रिस्थितिं [2]विदधता विबुधाधिपेन, प्रोत्सारिताग्रविचरन्नरनिर्जरौघः ॥ ६७ ॥
इन्द्राण्युत्[3]लूलुविलसत्प्रतिशब्दपूरै-र्निःशेषदिङ्मुखभवद्धवलानुवादः ।
सामानिकप्रियतमापटलीकराग्र-लीलासमुच्छलदतुच्छनिरुञ्छनालिः ॥ ६८ ॥
गन्धर्वबन्धुरपुरःपरिवाद्यमान-वादित्रवृन्दरवडम्बरितोडु[4]वर्त्मा ।
पृष्ठा-ऽग्र-पार्श्वविलसत्त्रिदशः प्रपेदे, द्वारं जगत्त्रयगुरुर्गुरुमण्डपस्य ॥ ६९ ॥

—त्रिभिर्विशेषकम्

उत्तीर्य यानवरतो वरतोरणाग्रे, तस्थौ विभुर्जगति दर्शयितुं व्यवस्थाम् ।
तस्मै सहस्रनयनोऽर्पयति स्म बाहुं, भाग्यैर्भवत्यवसरो विभुसेवनाय ॥ ७० ॥
माणिक्यमण्डपचरा व्यमुचन् द्युनार्यो, निःशेषमङ्गलमयप्रभुमङ्गलाय ।
द्वारे शरावरसम्पुटमुत्कटाग्नि-क्षिप्तत्रटत्त्रटितिकृल्लवणौघगर्भम् ॥ ७१ ॥
दूर्वादिमाङ्गलिकवस्तुविराजि रूप्य-स्थालं विधृत्य पुरतोऽस्थित काऽपि तत्र ।
कौसुम्भशोभिवसनावरणा द्युसुभ्रूः, सन्ध्येव नव्यविलसच्छशलक्ष्मबिम्बा ॥७२॥
काचित् कुसुम्भवसनाऽञ्चलचुम्बिताग्रं, [5]वैशाखमुद्धृतवती पुरतो वरस्य ।
रेजे द्युदण्डमिव सान्ध्यघनाभिरुद्धं, सम्बिभ्रती द्यु[6]तिपतेर्दिवसाननश्रीः ॥ ७३ ॥
देह्यर्घदेऽर्घमिममर्घ्यतमाय रूप्य-स्थालात् समुत्क्षिप नवं नवनीतमेतत् ।
उद्वेह्यदो दधि समुद्धर चन्दनं च, दूर्वां मृदा सममिमां च समुन्नयाशु ॥ ७४ ॥
यद्द्वारि तिष्ठति जगत्प्रवरो वरोऽग्रे, गौरोत्तरीयपटसंवृतसर्वगात्रः ।
सौवर्णशैल इव पार्वणशर्वरीश-विस्मेरशारदपयोदवृतोऽभितोऽपि ॥ ७५ ॥
म्लानिं स्पृशन्ति कुसुमानि समीरणेन, [7]तेनैव चन्दनरसः परिशोषमेति ।
तद् द्वारतोरणचरं चिरकालमेवं, [8]मैनं धरेति धर मैनमिहैणनेत्रे! ॥ ७६ ॥

---

१ क–'लिप्तविभूषि०'। २ ख–'धृतवता'। ३ मङ्गलध्वनि०। ४ आकाशः। ५ मन्थनदण्डम्। ६ सूर्यस्य। ७ वायुना। ८ ख–'देवाधिपं सुतनु! मा धर मा धरैनम्'।

इत्युच्चकैः सुरपुरन्ध्रिगणेन गीय-माने श्रुतिश्रुतसुधे धवले प्रहृष्टा ।
साऽर्घं ददौ जगदनर्घ्यगुणार्णवाय, नाथाय निश्चलविलोककलोचनाय ॥७७॥

—चतुर्भिः कलापकम्

मन्थेन भालमथ सा स्पृशति स्म हृष्टा, त्रिविष्टपत्रयपतेस्त्रिदिवैणनेत्रा ।
पाणिद्वयक्वणितकङ्कणनिक्वणेन, सङ्गीतमङ्गलनिनादमिवादधाना ॥ ७८ ॥
स्वामी स्ववामचरणेन सपादुकेन, साग्निं सरावयरसम्पुटमुद्बिभेद ।
कौसुम्भचेलवलयेन ततोऽधिकण्ठ-माकृष्य मातृगृहमर्घदया स निन्ये ॥ ७९ ॥
नव्यार्द्धिवृद्धि मदनैकपदं[1] द्विधाऽपि, बद्धं वधूवरकरेष्विह हस्तसूत्रम् ।
सन्ध्याऽम्बुदं विधुरिवादिजिनोऽथ मातृ-देवीपुरः कनकविष्टरमध्यतिष्ठत् ॥८०॥
सम्पिष्य पिप्पलशमीद्रुमजत्वचौ त-च्चेतोवशीकरणचूर्णमिव स्मरस्य ।
सञ्जीकृतः सुरवधूभिरथैष हस्त[2]-लेपोऽध्यरोप्यत कुमारिकयोः करान्तः[3] ॥ ८१ ॥
स्वामी सुलग्नसमये[4]ऽथ तयोः कराब्जे, जग्राह गर्भकरलेपधरे कराभ्याम् ।
गार्हस्थ्यबीजमिव हस्तपुटस्थहस्ता-लेपेऽक्षिपद् दिविषदां पतिरङ्गुलीयम् ॥ ८२ ॥

वधूद्वयेन सह प्रभोस्तारामेलकम्

हस्तद्वयाग्रविधृतेन वधूद्वयेन, तेनादिमो जिनपतिः सुकृतैरवाप्यः ।
उत्साहवद् विरुरुचे प्रभुमन्त्रशक्ति-द्वन्द्वेन सर्वसुभगाङ्गमनोहरेण ॥ ८३ ॥
अभ्यापतन्नथ मिथोऽभिमुखानि तारा-मेला[5]ऽऽख्यपर्वणि वधूवरवीक्षणानि[6] ।
हृत्प्रेमदुग्धमयवार्द्धितरङ्गभङ्गाः, शृङ्गारयोनि[7]पवनोच्छ्वसिता इवोच्चैः ॥ ८४ ॥
स्वेदाद्यनङ्गभवभावजुषाममीषां, सद्यः समुद्यदनुरागसमागमाय ।
अन्योन्यमुज्ज्वलविलासिविभाच्छलेन, नेत्रैः कृता स्फटिकरत्नमयेव[8] पद्या ॥८५॥
भिन्नेन्द्रनीलविमलासु कनीनिकासु, सर्वे परस्परममी प्रतिबिम्बिताङ्गाः ।
श्यामाभिरामरुचिचारुतरास्तदानीं, शृङ्गारसागरतरङ्गवृता इवासन् ॥ ८६ ॥
ते द्वे[9] प्रभोर्नयनमार्गमृगात् प्रवेशं, व्यातेनतुर्द्रुततरं हृदयालयान्तः ।
एकस्तयोर्जिनपतिः स तु दृक्चतुष्का-ऽध्वभ्यो मनःसदनयोः प्रविवेश वेगात् ८७
ताराऽन्तरे प्रतिकृतिद्वितयेन ते द्वे, पत्युस्त्रिवर्गकलनाय किल त्रिमूर्त्ती ।

---

१ क-'मदनेक०' । २ क-'हस्ता-' । ३ ख-'करोऽन्तः' । ४ क-'सलग्न' । ५ अक्षिमेलापरूप० । ६ क-'वीक्षितानि' । ७ मदन० । ८ 'मयीव' इति क-पार्श्वस्थः पाठः । ९ सुनन्दा-सुमङ्गले ।

नाथस्तयोः प्रतिमितः[1] श्रितपञ्चमूर्त्ति–स्ताभ्यां स पञ्च विषयानिव भोक्तुमासीत् ८८
नर्मप्रकारविदुराः प्रमदं ददत्यः, शक्राय कौतुककलान् धवलान् ध्रुवध्वः ।
एवं प्रभोरनुचराननुसृत्य गातु–मारेभिरेऽथ मिलिताः सविधे वधूव्योः ॥ ८९ ॥
निर्द्रव्यबाल इव लड्डुक[2]लोलपाणि–र्दीनः श्ववद् वटक[3]कर्मण्डक[4]लीननेत्रः[5] ।
मार्जारवन्मधुरदुग्धविलुब्धजिह्वः, श्रद्धां दधात्यनुचरो मनसाऽद्य केन ? ॥९०॥[6]
काकोष्ट्रभूतवदरिष्टफलौघपत्र–व्रातावतारणकरम्भ[7]कदम्बकानाम् ।
पूगोरगव्रततिपल्लवचूर्णकानां[8], श्रद्धां दधात्यनुचरो मनसाऽद्य केन ? ॥ ९१ ॥
निर्माल्यकस्य कलितग्रहिलत्वपुंवद्, ग्रामीणकोल[9] इव कर्दममण्डनस्य[10] ।
पुष्पस्रजो मलयजद्रवलेपनस्य, श्रद्धां दधात्यनुचरो मनसाऽद्य केन ? ॥ ९२ ॥
इत्युक्तकौतुकगणश्रवणोत्सवेन, संन्ति[11] स्म विस्मयरसप्रसराः सुरौघाः ।
मार्गोऽखिलोऽपि जगतः खलु दर्शनीय–इत्याततान वृषभप्रभुरप्युपेक्षाम् ॥९३॥
वध्वंशुकाञ्चलयुगं वसनाञ्चलेन, विश्वाधिपस्य विबुधाधिपतिर्बबन्ध ।
तन्मानसद्वयमिव प्रभुमानसेन, संयोज्य चञ्चलतया वियुतं चकार ॥ ९४ ॥
कव्यामथ प्रथमतीर्थकृतं त्रिलोक–सर्वस्ववत् समधिरोप्य बुधाधिनाथः ।
वेदीगृहं प्रति चचाल समं शचीभ्यां, ते चालिते कटितटाधिगते वधूव्यौ ॥९५॥
सार्द्धं वधूद्वयवरेण वरेण पूर्व–द्वारेण वेदिसदनं द्युपतिर्विवेश ।
[12]पौरस्त्यवायुरिव तोयधरेण गर्जि–विद्युद्युतेन गगनं जनजीवितेन ॥ ९६ ॥
कुण्डान्तराऽऽविरकरोदिह कश्चन त्रा–यस्त्रिंशनाकसदनो ज्वलनं ज्वलन्तम् ।
रत्नाधिकप्रभुनिभालनकारि रत्न–गर्भा[13]ङ्कुरत्नरुचिचक्रमिव प्रकाशम् ॥ ९७ ॥
वह्नेः समिद्व्यतिकराद् वियदन्तराले, विस्तारिणी चिरमराजत धूमराजिः ।
अभ्युन्नता घनघटेव वधूवरस्य, कल्याणवल्लिवनपल्लवनाय नव्या ॥ ९८ ॥
[14]तत्रै[15]त्यं [16]कौतुकगृहाद[17]वियुक्तहस्तं, नाथस्तथैव परितः स्फुरितं हुताशम् ।
अष्टातिपुष्टधवलान्यथ मङ्गलानि, पत्नीद्वयेन सममभ्रमदभ्रमश्रीः ॥ ९९ ॥

---

१ प्रतिबिम्बितः । २ मोदकेत्यर्थः, 'लाडु' इति भाषायाम् । ३ 'वडुं' इति भाषायाम् । ४ 'तर' इति भाषायाम् । ५ अवसेकिमसर्वरसाग्रव्यापृतलोचनः । ६ इदं पद्यं तदनन्तरे च समस्याकोटौ अवतरन्ति । ७ क–'करम्भ०' । ८ 'सोपारी नागरवेल पान चूनो' इति भाषायाम् । ९ सूकरः । १० ख–'मण्डलस्य' । ११ 'बभूवुः' । १२ पूर्वदिग्वातः । १३ क–'गर्भान्तरत्न०' । १४ वेदीगृहे । १५ क–'तत्रैककौतुक०' । १६ मातृगृहात् । १७ क्रियाविशेषणमिदम् ।

देवीगणे गुरुमुदा धवलान् ददाने, तेषां समं करसरोरुहमोक्षणेन ।
मोक्षं शचीपतिरचीकरदञ्चलानां, बन्धो बभूव सुमहान् मनसां मिथस्तु ॥१००॥
अर्हत्प्रभोः परिणयोत्सवसम्मदेन, शक्रः स्फुरत्करविवर्त्तमथो ननर्त्त ।
देवाः प्रकाममपरेऽपि तमन्वनृत्यन्, वायुस्तरूनिव न नर्त्तयते मदः कान्? १०१
हल्लीसकप्रसृमरामरसुन्दरीणां, लास्योल्लसल्ललितबाहुलतावितानैः ।
शृङ्गाररसागरवरो गुरुमण्डपोऽगाद्, रङ्गत्तरङ्गनिकरैरिव दुस्तरत्वम् ॥ १०२ ॥

मण्डपात् प्रभोः स्वस्थानं प्रत्यागमनम्

कैश्चित् प्रमोदभरवादितभूरिवाद्य-प्रोद्यत्प्रणादमुखरीकृतदिङ्मुखौघैः ।
कैश्चित् सहैव परिनर्त्तितविश्वनेत्र-चारी विचित्रचरणाञ्चनचारुनृत्यैः ॥ १०३ ॥
कैश्चिज्जगत्पतिगुणप्रगुणार्थसार्थ-स्फीतप्रतीतकलितानवगीतगीतैः ।
कैश्चित् पुरो जय जयेत्युरुनादवृन्दै-र्वृन्दारकैरिति समानमुपास्यमानः ॥१०४॥
पत्नीद्वयेन सुभगोभयपार्श्वभागः, सद्भागधेयभरशोभिनिभालनीयः ।
रूढः प्रभुस्त्रिभुवनस्य स दिव्ययानं, स्थानं ततः स्वमगमद् गुरुमङ्गलश्रीः १०५

—विशेषकम्

कृत्वेति तत्परिणयोत्सवपर्व पूर्णं, नत्वा प्रभुं सुरविभुर्द्युभुवं स भेजे ।
विश्वे ततः प्रभृति सैव विवाहरीतिः, स्फीता परार्थकृतये महतां हि वृत्तिः १०६
श्रीनाभिभूपतनयो दयिताद्वयेन, भोगानसक्तहृदयो बुभुजेऽद्भुतान् सः ।
सद्वेदनीयमपि कर्म विलीयते न, भोगप्रयोगरहितं ध्रुवमङ्गभाजाम् ॥ १०७ ॥

सुमङ्गला-सुनन्दाभ्यां भरतादिपुत्रपुत्रीणां समुत्पत्तिः

ऊने गतेऽथ कियताऽपि हि पूर्वलक्ष-षट्के विवाहसमयादवतेरतुस्तौ ।
'सिद्धार्थ'तो युगलिनौ किल बाहु-पीठ-जीवौ च्युतावुदरधाम्नि सुमङ्गलायाः ॥
'सर्वार्थ'तः किल सुबाहु-महाऽग्रपीठ-जीवावपि च्यवनमाप्य समीयतुस्तौ ।
कालक्रमाद् युगलधर्मितया सुनन्दा-कुक्षौ मरालयुगवत् सरसीसरोजे ॥ १०९ ॥
स्वप्नांश्चतुर्दश विलोक्य सुमङ्गलाऽऽख्यद्, भर्त्रेऽथ गर्भमहिमाऽद्भुततानिदानम् ।
भावी भवत्तनुभवो भुवि चक्रवर्त्ती-त्यस्मै शशंस भुवनत्रितयावतंसः ॥ ११० ॥

---

१ ख-'सची०' । २ हेलया लसते-नृत्यतेऽस्मिन्निति हल्लीसकं-स्त्रीणां मण्डलेन नृत्यम् । ३ क-'तर०' । ४ क-'वर्तिक०' । ५ समग्रनेत्रकटाक्षप्रकारैः । ६ मानसहितम् । ७ ख-'मण्डलश्रीः' । ८ ख-'पूर्वं' । ९-१० 'सर्वार्थसिद्ध'विमानात् । ११ महापीठेत्यर्थः ।

कल्याणभाजि समये भरतं तनूजं, ब्राह्मीं सुतामपि सुषाव सुमङ्गलाऽथ ।
प्राभातिकीव दिवसाधिपतिद्युलक्ष्म्यौ, सन्ध्याविधूततिमिरप्रकरप्रकाशौ ॥१११॥
कालेन बाहुबलिनं तनयं सुनन्दा, तां सुन्दरीमपि सुतां सुषुवे सुखेन ।
अर्च्योऽर्चिषौ [1]विशदपक्षदिनप्रदोष–लक्ष्मीर्मुदे कुमुदिनीपतिकौमुदीवत् ॥११२॥
कालक्रमेण समजीजनदेकहीनं, पञ्चाशतं सुतयुगानि सुमङ्गलाऽथ ।
रत्नानि 'रोहण'महीध्रमहीव शुक्ति–र्मुक्तौघवत् त्रिदिवभूरिव कल्पवृक्षान् ॥११३॥
पुत्रा जगत्त्रयपतेः परितः स्फुरन्तः, प्रापुः परां क्रमवशेन विवृद्धिमेते ।
विश्वप्रकाशनजुषो द्युमुखे[2] मयूखा–स्तीक्ष्णद्युतेरिव नवोदयमाश्रितस्य ॥ ११४ ॥
कालक्रमादजनि कल्पमहीरुहाणां, माहात्म्यहानिरपमानवतामिवोच्चैः ।
सन्तोऽप्यसन्त इव शुव्यभवन्नभोऽन्त–स्ते तारका इव दिवाकरकान्तिचक्रात् ११५
कालस्य दोषवशतः शनकैः कषायाः, कोपादयः प्रकटतामगमन् युगानाम् ।
सङ्क्रान्तपापपरितापविपाकयोगा, रोगा इवान्वहमपथ्यकदर्थितानाम् ॥ ११६ ॥
नो मेनिरेऽथ मिथुनानि मिथोऽपि हा-मा–धिक्कारकारणनयत्रयमत्रपाणि[3] ।
सद्देव-सद्गुरु-सुधर्ममयत्रयीव–न्नास्तिक्यदूषितमतिप्रसराः पुमांसः ॥ ११७ ॥
सञ्जायमानमसमञ्जसमेतदाख्यन्, सम्भूय तानि वृषभप्रभवे[4] युगानि ।
ज्ञानत्रयं स कलयन्निति तानि जात–जातिस्मृतिः कृतदयो निजगाद नेता ॥११८॥
नीतिव्यतिक्रमकृतां कुरुते निकारं, राजा क्षितौ स विनिवेश्य महासने तु ।
पूर्वं पयोभिरभिषिच्यत इत्यथाज्ञा, नोल्लङ्घ्यतेऽस्य चतुरङ्गबलान्वितस्य ॥११९॥
तान्यूचिरे चिरमथो मिथुनानि नाथं, राजा भवान् भवतु नः समुपेक्षते किम् ? ।
रूपा-ऽऽकृति-क्रमपराक्रमवान् परो यत्, कोऽपीदृशो न हि दृशोः पथमेति विश्वे १२०
विश्वत्रयीविभुरभाषत तानि नाभि–मभ्येत्य भो कुलकरोत्तममर्थयध्वम् ।

नाभिकुलकराय मिथुनकृता राजार्थप्रार्थना

विश्राणयिष्यति स वः करुणाप्रधानो, राजानमेभिरथ सोऽर्थित इत्यवोचत १२१
आजन्म सर्वगुणसद्म सुरा-ऽसुरेन्द्र–सेव्यांह्रिरेष भवतां वृषभोऽस्तु राजा[5] ।
श्रुत्वेति तानि विभुमेत्य जगुर्मुदेति, श्रीनाभिना त्वमसि नः प्रथितः प्रशास्ता १२२

---

१ शुक्लपक्ष० । २ प्रातःकाले । ३ निर्लज्जानि । ४ क–' प्रमुखे' । ५ ख–'वृषभो महीशः' ।

भाषित्वेत्यभिषेचनाय भुवनश्रेणीशिरोभूषण-
स्यास्य श्रीवृषभप्रभोर्जलभरं नेतुं ययुर्युग्मिनः ।
'क्षीरा'ब्धिप्रतिवीरविस्तृतयशोभारस्य तस्याद्भुतै-
र्भाग्यैर्नुन्नममर्त्यभर्तुरभितोऽकम्पिष्ट सिंहासनम् ॥ १२३ ॥[1]

॥ इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते श्रीजगन्नाथ-विवाहभरतब्राह्मीबाहुबलिसुन्दरीसम्भवमिथुनराजार्थना-समर्थनो नाम नवमः सर्गः ॥ ९ ॥

पायाद् वो वृषभप्रभुः फलति या काङ्क्षाधिकं किं न सा
सेवा यस्य विशिष्यते सुरगवीरत्नद्रुमाणां शतात् ।
यस्याः काङ्क्षितजीवनौ[2] नमि-विनम्याख्यौ विभोः सेवकौ
'वैताढ्या'धिपती बभूवतुरहो विद्याभृतां चक्रिणौ ॥ १ ॥[3]

पद्मायाः सततनिवाससद्मपद्मः, श्रीपद्मः सचिववरश्चिरायुरस्तु ।
यद्वाणी मधुरमरन्दसुन्दरश्री–रास्वाद्या सहृदयचञ्चरीकवृन्दैः ॥ २ ॥[6]

ग्रन्थाग्रं ॥ २२५ ॥[7]



१ शार्दूलविक्रीडितम् । २ ख–'जीवितौ' । ३ शार्दूल० । ४ मकरन्द० । ५ भ्रमर-समुदायैः । ६ प्रहर्षिणी । ७ 'श्लोकसङ्ख्या' इत्यधिकः ख–पाठः ।

## दशमः सर्गः

भाविपावनविजृम्भि यस्य भा–मण्डलांह्रिनखभामिषान्महत् ।
आन्तरं मह इवोर्ध्वमप्यधो–ऽप्युच्छ्रितं स वृषभः श्रियेऽस्तु वः ॥ १ ॥[1]
सिंहविष्टरविकम्पतोऽवधे–र्बुद्धराज्यसमयो जगत्पतेः ।
तस्य कर्तुमभिषेकमुत्सुक–स्तत्र वृत्ररिपुरापतद् द्रुतम् ॥ २ ॥[2]
प्रभो राज्याभिषेकार्थं समागतेन्द्रकृत्यानि

तत्र जन्मसवनोत्सवः प्रभोः, प्रागभून्मयि ततोऽभिषेचनम् ।[3]
अस्तु राज्यकृतमित्युपाययौ, स्वर्णवेदिरतिपाण्डुकम्बला ॥ ३ ॥[4]
रत्नसञ्चयचितं शचीपति–स्तत्र पञ्चवदनासनं न्यधात् ।[5][6]
यन्महोभिरिनभाग्यसंहतेः, पल्लवैरिव नवैर्विजृम्भितम् ॥ ४ ॥[7]
मेरुशृङ्गमिव केसरी ततः, पूर्वपर्वतमिवामृतद्युतिः ।
सिद्धिसौधमिव लब्धकेवलो–ऽलञ्चकार हरिविष्टरं विभुः ॥ ५ ॥[8]
पूर्वदिक्पतिरथो सुपर्वभिः, सर्वतीर्थसलिलैरुपाहृतैः ।
विश्वभर्तुरभिषेकमङ्गलं, निर्ममे मुदितविश्वमण्डलम् ॥ ६ ॥
श्यामपक्षशशिनः समुद्धृतै–र्धामराशिभिरिवाभिसाधिते ।
वाससी जिनवरेण वासवः, पर्यधापयदधौतनिर्मले ॥ ७ ॥
अङ्गरागममराग्रणीः प्रभो–रात्मनो हृदयरागमातनोत् ।
व्यानशे जिनवरस्य मानसं, नो मनागपि सरागता पुनः ॥ ८ ॥
यत्स्वभावसुभगाङ्गशोभितं, तं प्रभुं त्रिभुवनैकभूषणम् ।
भूषणैर्ऋभुविभुर्व्यभूषयत्, तन्महेष्विवं महो महौचिती ॥ ९ ॥[9][10]
तीर्थपत्यलिकपट्टमस्तके, स्थापितोऽस्म्यखिलभूषणेश्वरः ।[11]
मौलिनेति शिखरत्रयच्छला–दूर्ध्वितास्त्रिषु जगत्सु हस्तकाः ॥ १० ॥
चन्दनद्रवविशेषकोऽभवद्, भालपट्टमभि वर्तुलः प्रभोः ।
गद्दिका समुपवेशनोचिता, वक्त्रपद्मवसतेरिव श्रियः ॥ ११ ॥[12]

---

१ १०७तमपर्यन्तानि पद्यानि गुम्फितानि 'रथोद्धता'वृत्ते । २ शक्रः । ३ जन्माभिषेक० । ४ ख–'रितिपाण्डु०' । ५ ख–'सची०' । ६ ख–'व्यधात्' । ७ सूर्य० । ८ सर्वज्ञः । ९ सुरपतिः । १० क 'यमहो' । ११ मुकुटः । १२ 'गादी' इति भाषायाम् ।

शौक्तिकेयमयकुण्डलद्वय-च्छद्मना वदननिर्जितं विभोः ।
सेवया समभवत् किलादिम-द्वीपगेन्दुयुगमस्तलाञ्छनम् ॥ १२ ॥
त्रास(१)गाररहितः सुवृत्तभूः, सद्म शश्वदवदाततेजसाम् ।
हार इत्यलसदीशहृत्तले, स्यान्न कुत्र गुणवानलङ्कृतिः ? ॥ १३ ॥
कङ्कणद्वयमधाद् विभुर्ध्रुवं, बाहुनिर्जितकरेण निर्मितम् ।
दिव्यशक्तिवशतः स्वकुम्भतो-ऽभ्युद्धृतैर्घुसदिभेन मौक्तिकैः ॥ १४ ॥
कीर्त्तिभिर्मम महोऽयमन्वहं, वर्धयेदिति विधुर्विभोरभूत् ।
छत्रमूर्त्तिरिति पुण्यसंहते-स्तस्य हेमकलशो निधिः किल ॥ १५ ॥
सान्द्रचान्द्ररुचिचारुचामरै-श्चामरद्वयमचाल्यत प्रभोः ।
स्वामिवीक्षणपरायणस्फुरत्-स्त्रैणवीक्षणविभागणप्रभम् ॥ १६ ॥
दुन्दुभिप्रभृतिवाद्यवादन-ध्वानसन्ततिलसत्प्रतिस्वनैः ।
स्वामिनं नवमवाप्य तेनिरे, गर्जितानि नियतं दिशो दश ॥ १७ ॥
युग्मिनोऽपि जलमब्जिनीदलै-र्बिभ्रतोऽत्र समये समाययुः ।
भूषितं विभुमवेक्ष्य विस्मिता-स्तस्थिरे किल धृतार्घपाणयः ॥ १८ ॥
चार्वलङ्करणचेलमौलिनः, स्वामिनः शिरसि नैव युज्यते ।
क्षेप्तुमेतदिति ते तदाऽक्षिपन्, पादयोर्जिनपतेः पयः स्वयम् ॥ १९ ॥

इन्द्राज्ञया धनदेन विनीतापुरीनिर्माणम्

साधु युग्मिषु विनीतता 'विनी-ते'ति पूर्जिनपतेः प्रतन्यताम् ।
श्रीदमित्यदिशदीश्वरो दिवः, स्वं पदं नतजिनो ययौ ततः ॥ २० ॥
दैर्घ्यतस्त्रिगुणवेदयोजनां, विस्तराच्च नवयोजनां पुरीम् ।
तां धनाधिपतिरातनोद् 'विनी-ता'ऽऽह्वयां कनकरत्नकेतनाम् ॥ २१ ॥
योध्यते न भुवि कैश्चिदि'त्ययो-ध्ये'ति नाम परमाप सा पुरी ।
तां विधाय निधिनायको शुकै-र्धान्यमण्डनधनैरपूरयत् ॥ २२ ॥
तत्र शोणशितिरत्नहर्म्ययो-र्वल्गतः स महसी विमिश्रिते ।
सूररश्मितमसी इव प्रभो-र्वैभवाद् गलितवैरविभ्रमे ॥ २३ ॥

---

१ ख-'प्रभाद्' । २ शुण्डादण्डेन । ३ ऐरावणहस्तिना । ४ चन्द्ररूपच्छत्रस्य । ५ क-'स्फुरा'- । ६ धारिणः इत्यर्थः । ७ जलम् । ८ कुबेरम् । ९ द्वादशयोजनाम् । १० कुबेरः ।

पद्मरागमयसद्मरश्मय–स्तत्र कोकनदपत्रसोदराः ।
विश्वशंसितरि पौरमानसो–द्भ्रान्तरागलहरीनिभा बभुः ॥ २४ ॥
तत्र शोणमणिवेश्मतेजसा, मिश्रितं स्फटिकहर्म्यजं महः ।
सप्रतापपरिरम्भसम्भ्रमं, स्वामिनो यश इवालसद् भृशम् ॥ २५ ॥
यत्र मध्यदिनमाप्य बिम्बनैः, द्योर्मणिः प्रतिमणीगृहं गतः ।
धाम भूरि लभते स्म तत् तदा, दुर्निरीक्ष्यतरमूर्त्तिराबभौ ॥ २६ ॥
तत्र रत्नसदनैर्दिनेश्वरः, संश्रितः स्वसविधं ध्वजाञ्चलैः ।
वीजितश्च वसुभिश्च पूरितः, प्रोन्नता ह्यतिथिपूजनोद्यताः ॥ २७ ॥
तत्र सौधततिषु ध्वजाञ्चला–श्चञ्चला विधुमरीचिनिर्मलाः ।
स्वामिनः सुकृतकाननोद्भवाः, पल्लवा इव नवा विरेजिरे ॥ २८ ॥
आत्मनोऽभ्यधिकरूपवैभव–भ्राजमानयुवतीनिभालनात् ।
स्तम्भितेव कमला चलाऽप्यहो, तत्र पौरसदनानि नात्यजत् ॥ २९ ॥
यत्र सञ्जनितविप्रियाः प्रियाः, कामिनीः कलितमानमानसाः ।
दूरतोऽपि मणिभित्तिबिम्बतत्–पादमर्दनकृतोऽनुनिन्यिरे ॥ ३० ॥
स्वं स्त्रियः स्फटिकभित्तिबिम्बितं, वीक्ष्य यत्र निजनन्दिनीभ्रमात् ।
किं हले! लगसि नात्मकर्मणी–त्युक्तयः प्रहसिताः सखीजनैः ॥ ३१ ॥
यत्र रेजुरवचूलमालिकाः, स्वस्तिकावलिषु मौक्तिकालयः ।
आलयेषु कमलाविलासतः, स्वेदबिन्दुनिवहा इवोद्गताः ॥ ३२ ॥
याऽसदप्यधिकरत्नधूत्पुरी, साऽस्ति कीदृगिति रोहणाऽर्णवौ ।
यत्र वप्रपरिखाकृती किल, प्रेक्षणाय परिवृत्य तस्थतुः ॥ ३३ ॥
यत्र वेद्मि खलु कूपवापिका–पल्वलेषु धनदः सुधां न्यधात् ।
तेषु तत्प्रतिमयेन्दुरेत्य तां, प्राप्य नक्तममरेष्वपूरयत् ॥ ३४ ॥
यत्र हट्टततिषु स्थलीकृता, रत्नमौक्तिकसुवर्णपङ्क्तयः ।
न्याय-कीर्त्ति-महसां बभुर्विभोः, खेलनाय किल केलिपर्वताः ॥ ३५ ॥
मस्तकादुपरि पुण्यमस्त्यहो, यस्य सोऽत्र खलु वासमासदत् ।

---

१ क–'पद्म०'। २ सूर्यः। ३ क–'ततः'। ४ भर्त्तारः। ५ ख–'चुम्बितम्'। ६ कामिनी०। ७ हे सखि!। ८ वितानस्य सर्वतः क्रियमाणा मौक्तिकपङ्क्तयः। ९ ख–'विलासिनः'। १० 'हाट' इति भाषायाम्। ११ पण्यशालानां श्रेणिषु।

तत्र शंसितुमितीव मानवा, राजमार्गमगुरूर्ध्वबाहवः ॥ ३६ ॥
जम्भजिद्-भुजग-यक्ष-रक्षसां, पूश्चतुष्टयजयाय सज्जिताम् ।
या दधौ किल चतुःप्रतोलिका-द्वारतोरणशरासनावलीम् ॥ ३७ ॥
स्वामिनो नतिभिरक्षयैर्धनै-र्वल्लभाविलसनैः शरीरिणाम् ।
तत्र सर्वपुरुषार्थभासुरा, वासराः सफलर्जन्मतां ययुः ॥ ३८ ॥
तत्र सर्वगुणधारिणां नृणां, दूषणं सुमहदेकमेव तत् ।
दानधर्मविदुरो न कोऽपि यत्, क्वापि कोऽपि न वनीपकोऽप्यभूत् ॥ ३९ ॥
जन्मतो गलितविंशतिस्फुरत्-पूर्वलक्षसमयो दयामयः ।
तत्र पुर्यधित राजधुर्यतां, पालनाय जगतो जगत्प्रभुः ॥ ४० ॥
आदिमः स सकलावनीभृतां, नाभिभू'र्भरत'वर्षभूषणम् ।
अर्हतां स इव चक्रवर्त्तिनां, तद्भवश्च भरतो यथाऽभवत् ॥ ४१ ॥
साधुपालनमसाधुशासनं, संन्निधातुमतिशुद्धधीनिधीन् ।
आत्मनः प्रतिशरीरसन्निभान्, मन्त्रिणः प्रभुरसृत्रयत् ततः ॥ ४२ ॥
निर्ममे स भुवनैकरक्षिता-ऽऽरक्षकान् विषयचौर्यरक्षकान् ।
नीतिविच्च चतुरङ्गसङ्गतं, सैन्यमस्तमितदैन्यमातनोत् ॥ ४३ ॥
तान् परीक्ष्य समेमीलयच्छ्रियः, खेलनाऽचलनिभानिभान् विभुः ।
एकदिक्करिपरिच्छदा मदं, यैर्न किं मुमुचिरे दिगीश्वराः ? ॥ ४४ ॥
तद्विशेषविदुरस्तुरङ्गमा-नाग्रहेण स बहून् समग्रहीत् ।
यत्प्रचारखुरजो रजोभरः, सप्तसप्तिमलुपत् किमद्भुतम् ? ॥ ४५ ॥
निर्ममे जनमनोऽभिनन्दनान्, स्यन्दनान् स विभुनाभिनन्दनः ।
चक्रयुग्मरुचिरा रवे रथाद्, ये न किं द्विगुणतां जगाहिरे ? ॥ ४६ ॥
जम्भशुम्भिभयकारिशक्तयः, स्वामिना विदधिरेऽतिभक्तयः ।
वायुसत्वरपदाः पदातयः, सम्परायविजिताभिजातयः ॥ ४७ ॥
छादिताम्बरसमीकसायकान्, स्वाम्यकल्पयदनीकनायकान् ।
सर्वयानमतवाहनक्रमान्, शत्रुदुःसहमहापराक्रमान् ॥ ४८ ॥

---

१ क-'जन्मनां'। २ ख-'संविधातु०'। ३ पत्ति-तुरग-गज-रथ०। ४ ख-'भीमिल०'। ५ हस्तिनः। ६ सूर्यम्। ७ क-'रथान्'। ८ इन्द्र०। ९ युद्धविजितरिपवः। १० युद्धबाणान्। ११ समग्रवाहनचालनज्ञानवतः।

उक्षधेनुमहिषोष्ट्रवेसरं, कार्यकारि जगतोऽग्रहीत् प्रभुः ।
कल्पवृक्षविरहे हि कल्पयेत्, कः परः सकललोकजीविकाम् ? ॥ ४९ ॥

निष्प्रभावेषु कल्पपादपेषु प्रभोः पञ्चशिल्पदर्शनम्

विश्वशासितरि विश्वनायके, विश्वलोकमनसः समीहितम् ।
तत्र कल्पयति कल्पपादपाः, सत्रपा इव न दृक्पथे स्थिताः ॥ ५० ॥[1]
युग्मिधर्ममतिलङ्घ्य[2] युग्मिनः, प्राज्यसन्ततिभृतो यतोऽभवन् ।
तावदर्थनसमर्थनेषु किं, न क्षमा इति सुरद्रुमा ययुः ? ॥ ५१ ॥
स्वर्गिशाखिषु[3] गतेषु जज्ञिरे, कन्दमूलफलभोजिनो जनाः ।
दैवलुप्तपितृमातृसम्पदो, डिम्भका इव कदन्नभोजिनः ॥ ५२ ॥
विश्वजीवननिमित्तजन्मनः, सम्भृतेव सुकृतामृतैः प्रभोः ।
शालि-मुद्ग[4]-चणकादि[5]कौषधी-भूः सुषाव तृणवत् तदा स्वयम् ॥ ५३ ॥
ओषधीर्जनचयः स्वपोषधी[6]-राजहार परितोऽप्यपाकिमाः ।
तास्तु तस्य नहि जीर्णतां ययु-र्गुह्यमर्पितमिवाङ्गनाजने ॥ ५४ ॥
मर्दय त्वचय[7] पाणिसम्पुटैः, कोमलास्तदनु भक्षयौषधीः ।
अभ्यधादिति वृषध्वजो[8] विभु-र्बाधितं जनमजीर्णबाधया ॥ ५५ ॥
आहता[9] यदि जनैस्तथा कृता-स्तास्तथापि न सुखाय जज्ञिरे ।
ये स्वभावकठिनत्वभाजिन-स्ते रतिं दधति किं यथा तथा ? ॥ ५६ ॥
पीडितान् जिनपतिर्जगौ जनान्, पूर्वरीतिजननाज्जलार्द्रिताः ।
न्यस्य पत्रपुटिकान्तरे कियत्-कालमत्त[10] सुखमौषधीस्ततः ॥ ५७ ॥
तत् तथाविधिविधाव[11]जीर्णता-दोषमौषधिगणो व्यधाज्जने ।
पूर्वमल्पविधिना हि साधितः, क्रोधवान् विकृतिमेव सेवते ॥ ५८ ॥
स्वाम्युपायमनपायमादिशद्, विष्टपस्य करुणापरः पुनः ।
दुःखितार्त्तिहृतिमेव केवलं, यज्जनुर्जनयितुं जिनेशितुः ॥ ५९ ॥

---

१ सन्तुल्यतां यदुक्तं महाकविधनपालप्रणीतायां श्रीऋषभपञ्चाशिकायां ( पृ० ४० )—
"पइं चिंतादुल्लहसुक्खसुक्खफलए अउव्वकप्पदुमे ।
अवइन्ने कप्पतरू, जयगुरू ! हित्था इव पओत्था ॥ ६ ॥"

२ क–'युग्मधर्म–' । ३ क–'स्वर्गशाखिषु' । ४ 'मग' इति भाषायाम् । ५ 'चणा' इति भाषायाम् । ६ ख–'स्वपौषधी–' । ७ त्वचमपाकुरु । ८ ऋषभदेवः । ९ भक्षिताः । १० खादत । ११ क–'तथाविधविधा०' ।

प्राग्विधौ विरचिते जनाः पुन-र्मुष्टिमध्यमधिरोप्य कक्षयोः ।
ऊष्मणि प्रतिनिधाय मार्दवं, प्रापितास्तदनु खादतौषधीः ॥ ६० ॥
इत्युपायमपि तन्वतो जन-स्याहृतं न हि जरां परामृशत् ।
आकुले जगति पावकोऽज्वलत्, काननेऽथ तरुसङ्घघट्टजः ॥ ६१ ॥
वृद्धिमाप दहनो दहन्नयं, दिक्षु काष्ठ-तृणमुख्यमुच्छिखः ।
धावति स लंघु रत्नलिप्सया, लातुमेनमखिलो जनोऽभितः ॥ ६२ ॥
उच्छिखे शिखिनि रत्नलब्धये, मुग्धधीः स निजपाणिमक्षिपत् ।
स्वं करं कवलनाय बालकः, किं न लालयति कुण्डलिन्यपि ? ॥ ६३ ॥
ज्वालयाऽजनि जनस्य दाहदः, स्वाग्रहाय विहिताग्रहस्य सः ।
पावकः कृपणनायको यथा, याचकस्य विनिषेधवाचया ॥ ६४ ॥
स्वामिनं दहनदाहविह्वलाः, प्राहुरातुरतरा नरा इति ।
नूतनं किमपि भूतमद्भुतं, नाथ ! नो दहति पाहि पाहि तत् ॥ ६५ ॥
स्वाम्यजल्पदयमग्निरुद्गतः, स्निग्धरुक्षसमयानुभावतः ।
स्निग्ध एव न न रूक्ष एव वा, काल एष विलसेत् कदाचन ॥ ६६ ॥
पार्श्ववर्त्तितृणदारु सर्वतो-ऽस्यापसारयत सन्निगृह्य तम् ।
न्यस्य पूर्वरचनादिहौषधीः, पावकेऽथ परिपच्य खादत ॥ ६७ ॥
ते तथा विदधिरे महौषधी-स्ता ददाह दहनोऽप्यशेषतः ।
एत्य मुग्धमतयो दयोदधिं, ते पुनर्जिनपतिं व्यजिज्ञपन् ॥ ६८ ॥
नेतरग्निरयमस्मदर्पिता, एष एव हि गिलत्यनर्गलः ।
लोलहेतिरसनाभिरौषधीः, किञ्चनापि न ददाति नः पुनः ॥ ६९ ॥
तैस्तदा प्रभुरिभाश्रयः समा-नाययत् सलिलसार्द्रमृत्तिकाम् ।
कुम्भिकुम्भवलये वितत्य तां, कुम्भिकुम्भनिभपात्रमातनोत् ॥ ७० ॥
स्वाम्यजल्पदपराणि भाजना-न्येवमातनुत तान्यथाऽनले ।
संविपच्य कठिनेष्वथौषधी-र्न्यस्य तेषु पचताथ खादत ॥ ७१ ॥
स्वामिशासनमिदं तथैव ते, तेनिरे तदनु कुम्भकारकाः ।
तेऽभवन् प्रथमशिल्पकल्पना-गौरवात् प्रथमकारवोऽवनौ ॥ ७२ ॥

---

१ शीघ्रम् । २ अस्मान् । ३ चपलज्वालारूपजिह्वाभिः । ४ गज० । ५ प्रथमशिल्पिकाः ।

तक्ष-चित्रक-कुविन्द-नापिता–नातनोदिति स पञ्च शिल्पिनः ।
स्वाम्यमी तु शतधाऽभवन् यतो, [1]विंशतिप्रकृतिरेक एककः ॥ ७३ ॥
दारुमुख्यहरणं कृषिं वणि–ज्यादिकर्मपटलीमकल्पयत् ।
आत्मकृत्यमखिलं विदन्निदं, स्वाम्यशेषजनजीविकाकृते ॥ ७४ ॥
साम-दानविधि-भेद-दण्डनैः, स्वाम्यधाच्चतुरुपायसूत्रणाम्[2] ।
विष्टपव्यवहतिश्रियश्चतुः–शालकं नयपुरीचतुःपथम् ॥ ७५ ॥

भरतादिपुत्रपुत्रीणां कलालिप्यादीनां निदर्शनम्

आदिमं द्व्यधिकसप्ततिं[3] कलाः, सोऽङ्गजं भरतमध्यजीगपत् ।

---

१ एतन्नामान्यपि नोपलभ्यन्तेऽधुना । २ क–'सूत्रणम्' ।

३ "१ लेहं ( लेखं ), २ गणियं ( गणितं ), ३ रूवं ( रूपं ), ४ नट्टं ( नाट्यं ), ५ गीयं ( गीतं ), ६ वाइयं ( वादितं ), ७ सरगयं ( स्वरगतं ), ८ पुक्खरगयं ( पुष्करगतं ), ९ समतालं ( समतालं ), १० जूयं ( द्यूतं ), ११ जणवायं ( जनवादं ), १२ पोक्खच्चं ( प्रोक्षत्वं ), १३ अट्ठावयं ( अष्टापदं अर्थपदं वा ), १४ दगमट्टियं ( दकमृत्तिकां ), १५ अन्नविहीं ( अन्नविधिं ), १६ पाणविहीं ( पानविधिं ), १७ वत्थविहीं ( वस्त्रविधिं ), १८ सयणविहीं ( शयनविधिं ), १९ अज्जं ( आर्यां ), २० पहेलियं ( प्रहेलिकां ), २१ मागहियं ( मागधिकां ), २२ गाहं ( गाथां ), २३ सिलोगं ( श्लोकं ), २४ गंधजुत्तिं ( गन्धयुक्तिं ), २५ मधुसित्थं ( मधुसिक्थं ), २६ आभरणविहीं ( आभरणविधिं ), २७ तरुणीपडिकम्मं ( तरुणीपरिकर्म ), २८ इत्थीलक्खणं ( स्त्रीलक्षणं ), २९ पुरिसल० ( पुरुष० ), ३० हय० ( हय० ), ३१ गय० ( गज० ), ३२ गोण० ( गोजातीय० ), ३३ कुक्कुड० ( कुर्कुट० ), ३४ मिंढय० ( मेढ़० ), ३५ चक्क० ( चक्र० ), ३६ छत्त० ( छत्र० ), ३७ दंड० ( दण्ड० ), ३८ असि० ( असि० ), ३९ मणि० ( मणि० ), ४० कागणि० ( काकिणी० ), ४१ चम्म० ( चर्म० ), ४२ चंद० ( चन्द्र० ), ४३ सूरचरियं ( सूर्यचरितं ), ४४ राहुचरियं ( राहुचरितं ), ४५ गहचरियं ( ग्रहचरितं ), ४६ सोभागकरं ( सौभाग्यकरं ), ४७ दोभागकरं ( दौर्भाग्यकरं ), ४८ विज्जागयं ( विद्यागतं ), ४९ मंतगयं ( मन्त्रगतं ), ५० रहस्सगयं ( रहस्यगतं ), ५१ सभासं ( सभासं ), ५२ चारं ( चारं ), ५३ पडिचारं ( प्रतिचारं ), ५४ वूहं ( व्यूहं ), ५५ पडिवूहं ( प्रतिव्यूहं ), ५६ खंधावारमाणं ( स्कन्धावारमानं ), ५७ नगरमाणं ( नगरमानं ), ५८ वत्थुमाणं ( वस्तुमानं ), ५९ खंधावारनिवेसं ( स्कन्धावारनिवेशं ), ६० वत्थुनिवेसं ( वस्तुनिवेशं ), ६१ नगरनिवेसं ( नगरनिवेशं ), ६२ ईसत्थं ( इष्वस्त्रं ), ६३ छरुप्पवायं ( त्सरुप्रवादं ), ६४ आससिक्खं ( अश्वशिक्षां ), ६५ हत्थिसिक्खं ( हस्तिशिक्षां ), ६६ धणुव्वेयं ( धनुर्वेदं ), ६७ हिरण्णपागं ( हिरण्यपाकं ) सुवन्नपागं ( सुवर्णपाकं ) मणिपागं ( मणिपाकं ) धातुपागं ( धातुपाकं ), ६८ बाहुजुद्धं ( बाहुयुद्धं ) दंडजुद्धं ( दण्डयुद्धं ) मुट्ठिजुद्धं ( मुष्टियुद्धं ) अट्ठिजुद्धं ( अस्थियुद्धं ) जुद्धं ( युद्धं ) निजुद्धं ( नियुद्धं ) जुद्धाइंजुद्धं ( युद्धातियुद्धं ), ६९ सुत्तखेडं ( सूत्रखेलं ) नालियाखेडं ( नालिकाखेलं ) वट्टखेडं ( वृत्तखेलं ) धम्मखेडं ( धर्मखेलं )

ब्रह्म यत् प्रथमसूनवे पिता, कल्पयेदिति नयं श्रयन्निव ॥ ७६ ॥
ताः कलाः स भरतः सहोदरा–नन्वशादितरनन्दनानपि ।
आदिमो हि तनुजोऽनुजादिकान्, शिक्षयेदिति नयं विशेषयन् ॥ ७७ ॥
लक्षणानि पुरुषस्य योषितो, वारणस्य तुरगादिकस्य सः ।
भेदभाञ्जि बहुधा जगत्प्रभुः, सोऽथ बाहुबलिने न्यवेदयत् ॥ ७८ ॥
ब्राह्मिकां प्रभुर[1]सव्यपाणिना–[2]ऽष्टादशाप्यथ लिपीरपीपठत् ।
सुन्दरीमपि स वामहस्ततो, वामतोऽङ्कपटलीमलीलिखत् ॥ ७९ ॥
[3]मानमेतदुदवप्रतेः परं, वस्तुषु व्यवहृतेर्निबन्धनम् ।
प्रोतरत्नमुखपोतसं[4]त्रणं, [5]विष्टपप्रभुरवर्त्तयत् तदा ॥ ८० ॥
उज्ज्वलो जगति राजकल्पिता–ऽध्यक्षसाक्षिकुल[6]गेहिपूर्वकः ।
आज्ञयैव नयवेदिनः प्रभो–र्वादिनोरजनि वादनिर्णयः ॥ ८१ ॥
अस्त्रवेदरणकर्मवैद्यका–[7]न्यर्थबन्धवधशास्त्रगोष्ठयः ।
[8]नागमुख्यमहनाद्यः प्रभोः, प्राभवन् विनयतो गुणा इव ॥ ८२ ॥
एष मे जनयिता जनन्यसौ, सोदरस्तनुभवस्तनूद्भवाः ।
गेहिनी गृहमिदं धनं तथे–त्यादिविश्व[9]ममतातदादिका ॥ ८३ ॥

---

चम्मखेडं ( चर्मखेलं ), ७० पत्तच्छेज्जं ( पत्रच्छेद्यं ) कडगच्छेज्जं ( कटकच्छेद्यं ), ७१ सजीवं ( सजीवं ) निज्जीवं ( निर्जीवं ), ७२ सउणरुयं ( शकुनरुतं )'' इति **समवायाङ्गे**, श्री-**राजप्रश्नीये** ( सू. ८३ ) तु पाठभेदः । एतद्विशेषार्थिना द्रष्टव्योऽभिधानराजेन्द्रः ( पृ. ३७८ )। ४ ख–'ज्ञपत्' ।

१ दक्षिणेन हस्तेन । २ **समवायाङ्गे**ऽष्टादशे स्थानके एतदभिधानान्येवम्—१ बंभी ( ब्राह्मी ), २ जवणालिया ( यवनालिका ), ३ दोसाऊरिया ( दोषोरिका ), ४ खरोट्ठिया ( खरोष्ट्रिका ), ५ खरसाविआ ( खरशाविका ), ६ पहराइया ( प्रहरातिगा ), ७ उच्चतरिया ( उच्चतरिका ), ८ अक्खरपुट्ठिया ( अक्षरपृष्ठिका ), ९ भोगवयता ( भोगवतिका ), १० वेणतिया ( वेनतिका ), ११ णिण्हइया ( निह्नविका ), १२ अंकलिवी ( अङ्कलिपिः ), १३ गणियलिवी ( गणितलिपिः ), १४ गंधव्वलिवी ( गान्धर्वलिपिः ), १५ आदंसलिवी ( आदर्शलिपिः ) १६ माहेसरीलिवी ( माहेश्वरीलिपिः ), १७ दामिलिवी ( दामिलिपिः ), १८ बोलिंदिलिवी, ( बोलिन्दिलिपिः ) ।'' **आवश्यकनिर्युक्तेरुपोद्घातनिर्युक्तौ** **विशेषावश्यक**( गा. ३६४ )स्य श्रीमलधारीयवृत्तौ च महान् भेदो विद्यते । ३ उन्माना–ऽवमान–प्रतिमानानि । ४ ख–'सूत्रणं' । ५ क–'विष्टपत्रयप्रभु०' । ६ क–'गेहपूर्वकः' । ७ ख–'न्यर्थशास्त्रवधबन्धगोष्ठयः' । ८ हस्तिप्रधानपूजा० । ९ क–'समता०' ।

पाणिपीडनविभूषणादिकं, चूडकोपनयनप्रभृत्यपि ।
विश्वकृत्यमखिलं प्रभोरभूत्, पर्वतादिव नदीप्रवर्त्तनम् ॥ ८४ ॥
आदितीर्थकरकृत्यमेतदि-त्याविमृश्य हृदये पुनः पुनः ।
केवलं करुणया जनस्य स, स्वाम्यवद्यमथमप्यवर्त्तयत्[1] ॥ ८५ ॥
विश्वरक्षणपरायणान् पुरा, रक्षका इति चकार यान् नरान् ।
उग्रदण्डकरणाधिकारिण-स्तान् जगाद विभुरुग्रसञ्ज्ञया ॥ ८६ ॥
नेतुरस्य सचिवादयस्तु ये, ते कृता जगति 'भोग'[2]नामतः ।
ये समानवयसः सदैव रा-जन्यका इति च ते प्रकल्पिताः ॥ ८७ ॥
क्षत्रिया इति [3]च शेषमानवा, मानवाधिपतिना वितेनिरे ।
निर्मिता इति नराश्चतुर्भिदो, यामिका इव विभुत्वसम्पदः ॥ ८८ ॥
इत्यशेषभवभावदर्शकः, सम्प्रधार्य जगतो व्यवस्थितिम् ।
प्राज्यराज्यकमलोत्सवोऽभवद्, भानुमानिव विभुर्महामहाः ॥ ८९ ॥
आज्ञया [4]बलभिदोऽप्यलङ्घ्या[5], स्वामिनः खलु नियन्त्रितो जनः ।
नाल्पमात्रकमलङ्घयन्निज-क्षेत्रहट्टगृहसीमतः क्वचित् ॥ ९० ॥
स्वामिनः पितुरिव त्रपाभरात्, कोऽपि न क्वचिदनीतिकृज्जनः ।
सापराधजनजीवना ततो, दण्डनीतिरफलत्वमाययौ ॥ ९१ ॥
नाभिसूनुविभुनाऽभिनन्दितां, नीतिमेव खलु सेवते स्म यत् ।
तेन तस्य न जनस्य सम्मुखं, रोषणाद् ध्रुवमनीतिरैक्षत ॥ ९२ ॥
येन धूपनजधूमवल्लभा-ऽऽलोकहर्षनयनाश्रुवारिभिः ।
भूषणांशुरतजाऽऽस्यमारुतै-र्वृद्धिमस्य कुरुतः स्म दम्पती ॥ ९३ ॥
तेन वृष्टिमतनोद् घनाघन-स्तत्पुरेऽतिगुरुधाम्नि नीचगः ।
धर्मधूर्धरणधुर्यमूर्जितै-र्गर्जितैर्जिननयं[6] नुवन्निव ॥ ९४ ॥-युग्मम्

सौराज्यवर्णनम्

भूर्नता घनजनातिभारतः, श्वभ्रगाममृतकुण्डमण्डलीम् ।
श्लिष्यति स्म खलु तत्तदौषधी-धोरणिः सुमधुरा सदाफला ॥ ९५ ॥
पीयताममृतमेतं वाञ्छये-तीक्षवो दलरवैः सुरान्[7] जगुः ।

१ क-'वर्धयत्' । २ क-'भोजनामतः' । ३ क-'विशेषमानवा' । ४ इन्द्रस्य ।
५ क-'लङ्घ्यया' । ६ क-'मयं' । ७ यूयमागच्छत ।

दुःस्थिताः स्थ कथमेकपक्षगै-र्कैकघस्रशशभृत्कलालवैः ॥ ९६ ॥

स्वामिनोऽङ्घ्रिषु सुवासनामृतै-रुज्ज्वलाऽमृतरुचः करामृतैः ।
प्राणिनां सुचरितामृतैः क्षितिः, प्रोक्षिताऽजनि [1]सना फलद्वना ॥ ९७ ॥

मौलिभिः पवनलोलिभिर्भृशं,संस्तुवन्त इव वैभवं विभोः ।
पाकमाकलयता न के नतिं, भूरुहः फलभरेण भेजिरे ॥ ९८ ॥

तत्र रत्ननिकरान् नरेश्वरे, भूमिराविरकरोन्निरन्तरम् ।
भूरिभूषणधरा हि भामिनी, रज्यति प्रियतमस्य सङ्गतौ ॥ ९९ ॥

कुल्ययेव सलिलाशयो वनं, स्वच्छवत्सलरसार्द्रया दृशा ।
तं जनं जगदिनोऽसिचत् तथा, शिश्रिये स शतशाखतां यथा ॥ १०० ॥

तत्र रक्षति जगत्प्रभौ प्रजाः, प्राज्यभावमपुषन् यथा तथा ।
[2]भूरिशस्तृणकणाद्यसूत तत्-पीडयेव पृथिवी तथा तथा ॥ १०१ ॥

नैव तानि विपिनानि नाद्रय-स्ते न तानि तटिनीतटान्यपि ।
द्वीपपङ्क्तिरपि सा न सागरे, यत्र नैव जनसङ्कुला स्थितिः ॥ १०२ ॥

पुष्टितुष्टिधरधेनुपीवरो-धःक्षरन्मधुरदुग्धवर्षणैः ।
क्षेत्रपङ्क्तिरिह राज्ञि नाम्बुदा-ऽपेक्षिणी निखिलश[3]स्यसाक्षिणी ॥ १०३ ॥

डिम्भभीरुभयदाद्भुतारवैः, किं भवद्भिरिह पङ्ककारिभिः ।
ग्रामपङ्क्तिरघट्टखाद्कृतै-रित्यहर्निशमनिन्ददम्बुदान् ॥ १०४ ॥

तत्र राज्ञि निजदारतोऽपर-स्त्रीजनेऽजनि जनस्य कुत्र न ।
मातृ-जामि-दुहितृव्यवस्थितिः, [4]स्वस्वतोऽन्यविभवे हि भीष्मता ॥ १०५ ॥

यस्य नाममहिमा हिमागमः, सर्वदुष्कृतलतावनार्दने ।
तत्र रक्षति विभौ वसुन्धरां, व्याधिराधिरपि बाधतां कुतः ? ॥ १०६ ॥

तत्र [5]सप्तभयवर्जिते विभा-[6]वीतिसप्तकमदृष्टमश्रुतम् ।
तज्जने [7]व्यसनसप्तकं तथा, स[8]प्तदुर्गतिगतिः कुतस्ततः ? ॥ १०७ ॥

---

१ सदा । २ ख-'भूरिशः कणतृणाद्यसूत' । ३ ख-'सस्य०' । ४ निजधनतः । ५ इहलोकभयं, परलोकभयं, आदानभयं, अकस्माद्भयं, आजीविकाभयं, मरणभयं, अपकीर्तिभयम् ।
६ "अतिवृष्टिरनावृष्टि-र्मूषकाः शलभाः शुकाः ।
प्रत्यासन्नाश्च राजानः, षडेता ईतयः स्मृताः ॥"
७ द्यूत-मांस-मदिरा-वेश्या-मृगया-स्तेय-परदारागमनानि । ८ घर्मा-वंशा-शैला-ऽञ्जना-रिष्टा-माघव्या-माघवीति सप्तविधा नरकगतिः ।

सर्वेऽपि जीवाः किमु पुण्यपूर्णा ?, न न प्रभोरेव स हि प्रभावः ।
तदा विभौ शासति तत्र यत् ते, सदा सुखैकार्णवमन्वभूवन् ॥ १०८ ॥[1]

निःशेषमानवसुखोपनिषन्निषिक्तं
राज्यं विविक्तमभवद् वृषभप्रभौ यत् ।
पश्चात् पुरो न तदभूदवसर्पिणीत्वात्
पश्चात् क्व तत् क्व विभुरेष पुरा बभूव ? ॥ १०९ ॥[2]

वर्ण्यन्ते कविभिर्विनाऽप्युपकृतिं पीयूषकुण्डान्यहो
तानि श्वभ्रतले वृतान्यहिकुलैर्हालाहलव्याकुलैः ।
पीत्वाऽस्यास्वमृतोत्करं सुरभयः क्षीरामृतैर्जीवय-
न्त्येतद् विश्वमितीव हास्यमसृजन् फेनैः सरस्वत्तदा ॥ ११० ॥[3]

अतो भवादेष विभुः क्व लभ्यः, सदैव दुःसेव्यविडम्बना नः ।
इतीव सर्वैर्विषयैरतीव, देवाधिदेवः स निषेव्यते स्म ॥ १११ ॥[4]

राज्ये श्रीवृषभप्रभोः सुखमये नित्यं निवासाशया
ताम्यन्ति स्म सुराः सुरालयसदावासप्रदैः कर्मभिः ।
बद्धाः किं नु सृजन्तु सिद्धनगरीः सिद्धास्तु ते निश्चितं
ज्ञानेनात्र पुनः पुनः पुनरिति क्रीडा वितेनुस्तदा ॥ ११२ ॥[5]

श्वश्रूर्न वध्वा न पिता तनूजात्, पतिर्न पत्न्या न विभुः पदातेः ।
न स्त्री सपत्न्या न गुरुर्विनेया–ल्लेभे तदा दुर्विनयाभिभूतिम् ॥ ११३ ॥[6]

तारुण्यमुक्तौ पितरौ सहोदरान्, बालान् स्वसारं पतिपुत्रवर्जिताम् ।
स्वीयान्यपत्यान्यतिथीन् समाश्रितान्, नाभोजयित्वा बुभुजे स्वयं जनः ११४[8]

न दुर्जननिकारजं न दयितादुराचारजं
न सूनुनिधनोद्भवं न च विभूतिनाशोद्भवम् ।
जनस्य नयनोदकं ध्रुवमवाप तप्तं मही–
मुदश्रुसलिलैर्मुदं व्यधित शीतलैः केवलम् ॥ ११५ ॥[9]

प्रभुप्रभावात् पुरुषायुषस्य, हवेन हर्तुं लवमप्यशक्तः ।
दूरीकृतान् क्रोधमुखैर्विकारै–र्न प्राणिनः प्राप तदाऽपमृत्युः ॥ ११६ ॥[10]

---

१ उपजातिः । २ वसन्ततिलका । ३ शार्दूलविक्रीडितम् । ४ उपजातिः । ५ शार्दूल० । ६ उपजातिः । ७ ख–'सदा' । ८ इन्द्रवंशा । ९ पृथ्वी । १० उपजातिः ।

राज्ये प्रभोः सच्चरितोदयाना-मविश्रुता-ऽदृष्टरुजां प्रजानाम् ।
अमीलयद् बन्धुसुखोक्तिभाजां, निद्रेव मृत्युर्नयनानि काले ॥ ११७ ॥[1]

क्व मानवानामधुना विरोधः, सोऽगात् तिरश्चामपि तत् स किं नौ ? ।
एवं विमृश्यैनमपास्य[2] वाक्श्री-देव्यौ प्रपन्ने प्रतिसद्म[3] वासम् ॥ ११८ ॥[4]

शक्तिर्ध्रुवं दीव्यति देवताना-मसङ्ख्यरूपीकरणप्रवीणा ।
यदेककालं प्रतिसद्म वाक्श्री-देव्यौ मिलित्वेव विलेसतुस्ते ॥ ११९ ॥[5]

राज्ये प्रभोः श्रीश्च सरस्वती च, क्षणं विभिन्ने भवतः स्म नैव ।
पश्चाद् विरोधस्तु कुतोऽपि हेतो-रभूत् तयोर्नैव विबुध्यते तत् ॥ १२० ॥[6]

सुखेऽभवद् देशजुषां जनानां, विभुस्तवोक्त्या सफलैव वाणी ।
तेषां पुनर्वेश्मनि निष्फलैव, लक्ष्मीरभावेन वनीपकस्य ॥ १२१ ॥[7]

कठोरत्वं क्रूरान्तररिपुनिकारे कृपणतां
स्वमर्यादात्यागे जगदगुणवादे विकलताम् ।
अकृत्ये भीरुत्वं प्रगुणयति यस्मिन् गुणतया
विवृत्तास्ते दोषा गुरुरहह सत्सङ्गमहिमा ॥ १२२ ॥[8]

येनादायि महाबलत्वमनिलाद् व्योम्नो महत्त्वं विधो-
र्माधुर्यं वरवृत्तताऽम्बरमणे[9]र्गम्भीरताऽम्भःपतेः[10] ।
औन्नत्यं कनकाचलात् किल तदेकत्रास्थितिं शून्यतां
हृत्कार्ण्यं परितापमार्त्तनिनदं दूरे पदं ते दधुः ॥ १२३ ॥[11]

क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तीव्ररुग्
जीमूतश्चपलाशयोऽर्थिपटलादृश्यः सुवर्णाचलः ।
शून्यं व्योम सुधा द्विजिह्वविधुरा स्वर्धामधेनुः पशुः
काष्ठं कल्पतरुर्दृषत् सुरमणिस्तत् केन साम्यं प्रभोः ? ॥ १२४ ॥[12]

स्थैर्यं धर्मविनिर्मितौ मधुरतां वाक्ये हृदि स्वच्छतां
प्राकाश्यं सुकृतोपदेशकरणे शैत्यं सुहृत्प्रीणने ।
इत्यारोप्य यथोचितं गुणचयान् शैला-ऽमृत-स्वर्न(र्ण?)दी-
चण्डार्चिः-शशिनः स्वमाश्रितवतश्चक्रे कृतार्थान् प्रभुः ॥ १२५ ॥[13]

---

१ उपजातिः । २ विरोधम् । ३ क-'इति सन्निवासम्' । ४-७ उपजातिः । ८ शिखरिणी । ९ सूर्यस्य । १० सागरस्य । ११-१३ शार्दूलविक्रीडितम् ।

चेतः सार्द्रतरं[1] वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला
शक्तिः क्षान्तिफला श्रुतं गतमदं श्रीर्दीनदैन्यापहा ।
रूपं शीलयुतं मतिः श्रितनया स्वामित्वमुत्सेकता-
निर्मुक्तं प्रकटान्यहो नव सुधाकुण्डान्यमूनि प्रभौ ॥ १२६ ॥[2]

युगादिजिनसेवनैः प्रथितपुण्यपण्योन्मुदा-[3]
स्तदाऽन्तररिपुच्छिदे कलितविक्रमोपक्रमाः ।
मुदाऽप्यतिथिभोग्यया सुभगतापदं सम्पदा
सदा भुवि नरा व्यधुस्त्रिविधवीरकोटीरताम्[4] ॥ १२७ ॥[5]

॥ इति श्रीमद्वायटगच्छीयपूज्यश्रीजिनदत्तसूरिचरणेन्दीवरचञ्चरीकशिष्य-पण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्र-चरिते महाकाव्ये [6]वीराङ्के श्रीआदिनाथचरिते भगवद्राज्याभि-षेक-विनीतास्थापन-जगद्व्यवस्थाप्रकाशन-सौराज्य-वर्णनो दशमः सर्गः ॥ १० ॥

श्रीनाभेयः प्रभुरवतु वो गाढसर्वाङ्गबन्धा
यं राज्यश्रीः सुभगमभजत् किन्तु यस्य प्रभोर्न ।
तद्रागोऽन्तःकरणमविशद् दुष्टचेष्टेव शिष्टं
वार्द्धिस्यन्दस्तटमिव विषं भोगिचूलामणीवत् ॥ १ ॥[7]

श्रीपद्ममन्त्रीश्वरकीर्तिवल्ली, समारुरोहाम्बरमण्डपाग्रम् ।
तदेववेश्मप्रचलत्पताका-ऽञ्चलच्छलात् पल्लविनी बभूव ॥ २ ॥[8]

ग्रन्थाग्रं ॥ १९० ॥



---

१ क-'साम्प्रतरं' । २ शार्दूल० । ३ क-'न्मदा-' । ४ धर्मवीर-शौर्यवीर-दानवीरमु-ख्यताम् । ५ पृथ्वी । ६ क-'श्रीवीराङ्के आदि०' । ७ मन्दाक्रान्ता । ८ उपजातिः ।

# एकादशः सर्गः ११

मदभिधं वृषमेष[1] पुपोष यद्, यमिति लक्ष्ममिषेण वृषो[2]ऽश्रयत् ।
भुवनभारधरत्वमिहाप्यभूत्, किल यतो वृषभोऽस्तु स वः श्रिये ॥१॥[3]

प्रगुणषड्गुणराजनयाश्रयं, दृढषडान्तर[4]वैरिविमर्दनम् ।
त्रिजगतामृतवः षडपि प्रभुं, तमृषभं क्रममाप्य सिषेविरे ॥ २ ॥

वसन्तवर्णनम्

पवननर्त्तितवल्लिवनोऽलिनी–रणितगीतभरः सुरभिः[5] प्रभुम् ।
युवतिदोलनसक्वणकङ्कण–प्रचयवाद्यलयः समसेवत ॥ ३ ॥

कलितकूजितभृङ्गकुलाकुल–प्रचितचम्पक[6]कोरककैतवात् ।
कनककिङ्किणिका इव निर्ममे, वनभुवो रसना[7]विधये मधुः ॥ ४ ॥

रणरणन्मणिनूपुरमंह्रिणा, प्रमदया प्रहतः शठकान्तवत् ।
भृशमशोकतरुर्हसितः सुमैः[8], पुलकितो ललितालिकुलैरपि ॥ ५ ॥

विरहिणीजनजीवितकर्षणा–दरुणतां गमिता रुधिरैरिव ।
रतिपतेः[9] स्मितकिंशुकपङ्क्तयः, प्रकट[10]मङ्कुटिका इव रेजिरे ॥ ६ ॥

मदनमादवशंवदकामिनी–समदकान्तमनोरतये मधुः[11] ।
बहुलपल्लववल्लिवनालयै–र्व्यधित दर्शनिशा[12] दिवसेष्वपि ॥ ७ ॥

कुसुममण्डलघर्मजलप्लवा, विलुलितालिकदम्बककण्टकाः ।
कलितकम्पलया 'मलया'ऽनिलै–र्लघुलता मधुकान्तरुचोऽभवन् ॥ ८ ॥

स्मितदृशा सितकृष्णरुचोऽर्पिताः, किल कटाक्षघटास्तिलकद्रुमः ।
अधिशिरः श्रितवान् सरसो ध्रुवं, कुसुमसङ्गतभृङ्गततिच्छलात् ॥ ९ ॥

किल विलोलदृशो वदनाम्बुज–श्रयणतोऽधिकवाससुराश्रयात् ।
बहुलसौरभपुष्पभरो भृशं, धुर्ताशिरै[13][14]र्मधुपैर्बकुलः पपे ॥ १० ॥

---

१ पुण्यम् । २ बलीवर्दः । ३ ६९तमपर्यन्तानि पद्यानि द्रुतविलम्बितच्छन्दसि वर्तन्ते । ४ काम-क्रोध-लोभ-मोह-मद-मत्सरेति । ५ वसन्त ऋतुः । ६ कलिकामिषात् । ७ कटि-मेखला० । ८ पुष्पैः । ९ क–'पतेर्नवकिंशुक०' । १० 'आंकडा' इति भाषायाम् । ११ वसन्तः । १२ अमावास्याया रात्रिः । १३ ख–'धुतशिरोमधुः' । १४ अकारान्तोऽपि शिरःशब्दो वर्तते, उक्तं च कल्पद्रुकोषे तृतीये काण्डे ( पृ.३४ )—

"उत्तमाङ्गं शिरः शीर्षं, कं शिरं मस्तकोऽस्त्रियाम् ।
मूर्द्धा पुंसि च मुण्डोऽस्त्री, मस्तिकोऽपि क्रमव्ययम् ॥ १३२ ॥"

विकसदाम्रमहीरुहमञ्जरि[1]-प्रकरमञ्जरिताः[2] ककुभो बभुः ।
किल मधुप्रियकेलिमहोत्सवे, कलितकुङ्कुमपङ्कविलेपनाः ॥ ११ ॥

कललसत्कमलक्रमया लसत्-तिलकया कलकण्ठमनोज्ञया ।
सवितृ[3]सद्दिनसारमहःस्पृशा[4], जनमनोऽपहृतं[5] सुरभिश्रिया ॥ १२ ॥

युवतिदोलनघर्मजलं हरन्, श्रितलतास्खलितैः कुसुमैर्वृतः ।
उपवनान्तरचार[6]परायणं, परिचचार विभुं 'मलया'ऽनिलः ॥ १३ ॥

तपनतापभयादुडुमण्डली, शिशिरवल्लिकदम्बकशालिनीम्[7] ।
सितविकस्वरपुष्पभरच्छला-दिव दिवो वनभूमिमवातरत् ॥ १४ ॥

अभिगतस्तनुकान्तिमलिम्लुच-स्तरुशिरस्यपि चम्पकसञ्चयः ।
कलितमत्र इवालिकुलैश्चिरा-दवचितः सुदृशा करकेलिभिः ॥ १५ ॥

ऋतुपतिस्तमवेक्ष्य वृषध्वजं, सह जनैः सुमहोत्सवखेलिनम् ।
किल ननर्त्त तरोः शिखरैश्चलैः, पतितपुष्पमुदश्रुपयःकणः ॥ १६ ॥

अथ तपस्य[8]ऋतोः प्रभुसेवना-ऽवसरमाप्तमवेत्य[9] मधुर्ययौ ।
दधुरमुष्य ततो विरहादिव, व्रततयोऽपि विपाकविपाण्डुताम् ॥ १७ ॥

ग्रीष्मवर्णनम्

पथिकवत् तपनोऽपि शुचौ[10] करै-रधयद[11]न्धुजलं किल शीतलम् ।
भृशम[12]सेचनकं गगनद्रुमे, स्थिरतनुः प्रहरद्वयतापवान् ॥ १८ ॥

जलमहो भुवनेऽपि विशोषितं, मम जलानि विशोषय चेत् क्षमः ।
इति विशेषविकाशिजलोऽम्बुधि-र्व्यवददर्कमिव प्रबलद्युतिम् ॥ १९ ॥

समुदियाय धृतौर्वमहः[13] प्रति-ग्रह इवैष खरद्युतिरुद्धतः ।
इति जगन्ति नितान्तमतापयत्, तदधितोयधितोयमवर्द्धत ॥ २० ॥

द्रुतमुपेत्य रुषा खररोचिषा, स्फुटमपेपि तमी[14] गतशेषका ।
वियति तेन तदीयलवा बभुः, पवनलोलशिरीषरजःकणाः ॥ २१ ॥

---

१ "निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ" इत्यमरकोशे ( श्लो० ३३८) । २ ख-'पिञ्जरिताः' । ३ पिता, पक्षे सूर्यः । ४ क-'महस्पृशा' । ५ क-'हृति' । ६ क-'तार'० । ७ क-'शालिनी' । ८ ग्रीष्मस्य । ९ क-'मवेक्ष्य' । १० ग्रीष्मे । ११ कूपजलमपिबत् । १२ रम्यम् । १३ वडवाग्निमहः । १४ रात्रिः ।

[1]विचकिलप्रसवे मधुभाण्डके, किल समुद्घटिते मधुपोत्कराः ।
म[2]धुसखस्य समेत्य चमूभटाः, कलकलं मधुपानकृते व्यधुः ॥ २२ ॥
अशुभदद्भुतपा[3]टलपाटला-पटलमारवशालिमधुव्रतम् ।
वनमहीषु गृहीतरटत्तमो-भटघटं नु[4] रविच्छविमण्डलम् ॥ २३ ॥
तरणिना किरणैरनलोपमै-रविरलैः करिणः परितापिताः ।
त[5]दनुवृत्तिपराणि सरोरुहा-ण्यदलयन् सरसि प्रसरत्क्रुधः ॥ २४ ॥
'मलय'जन्मविलेपनमल्लिका-कुसुममाल्यसितांशुकसंश्रयम् ।
व्रतमिवात्मयशःप्रसरैर्जगत्-पतिमवेक्ष्य तपर्त्तुर[6]गाद् द्रुतम् ॥ २५ ॥

वर्षावर्णनम्

घनतरं तरलां घनमालिकां, रसभृतां परितः प्रसरान्विताम् ।
अपससार निरीक्ष्य शुचिः स्वयं, मलिनतामभिशङ्क्य किलात्मनः ॥२६॥
स यदवादि ब[7]लाहकवाहनः, प[8]विकरः कविभिर्वितथं न तत् ।
यदिह वारिधरेऽ[9]स्य धनुःपवी, व्य[10]लसतां सततं विततद्युती ॥ २७ ॥
[11]अजनि तुङ्गतरङ्गपरम्परा-वलिनिलुप्तपयोजविलोचनः ।
समुदयः सरसां नववारिद-च्युतपयोभरपीवरवैभवः ॥ २८ ॥
[12]कुटजकोटिभिरुद्गतमुत्कटै-रिति त[13]टाऽ[14]चलकिन्नरभाषितैः ।
बहुरिपूद्यतना[15]मभयाद् ध्रुवं, सपदि सङ्कुचितं जलराशिभिः ॥ २९ ॥
श्वसितधूममलिच्छलतः क्षणात्, कमलिनी परिमुच्य जलेऽब्रुडत् ।
विशदहंसवियोगभरातुरा, समुदितेऽद्भुतनादिनि वारिदे ॥ ३० ॥
घनविघट्टनया घनदन्तिनां, 'निपतिता'ऽतिगुरोर्गगनद्रुमात् ।
विमलतारकपुष्पततिः क्षितौ, सलिलताडनबुद्बुदकैतवात् ॥ ३१ ॥
उपरि वारिभृतां व्यलसद् भृशं, सुरकरी स्फुरदूर्जितगर्जितः ।
इति त[16]दीयचलश्रुतिदर्पण-द्युतिकलां विततान तडिल्लता ॥ ३२ ॥

---

१ मल्लिका ( पुष्पविशेष )० । २ कामस्य । ३ 'गुलाबी वर्ण' इति भाषायाम् । ४ क-'तु' । ५ सूर्यानुवृत्तिपराणि । ६ ख-'गान्मुदम्' । ७ मेघवाहनः । ८ वज्रपाणिः-इन्द्रः । ९ इन्द्रस्य । १० क-'विलसतां' । ११ वैभवाद् विलोचने विलुप्येते इति तात्पर्यम् । १२ वृक्षविशेषः, पक्षे अगस्त्यमुनिः । १३ क-'तदाचल०' । १४ समुद्रतटपर्वतकिन्नर० । १५ क-'नागभयाद्' । १६ ऐरावणहस्तिनः प्रचलितकर्ण० ।

तपतपत्तपनद्युतितापितां, वसुमतीममृतैर्यदतर्पयत् ।
जलधरो[1]ऽस्य ततः सितयूथिका–कुटजजातिसुमैः प्रसृतं यशः ॥ ३३ ॥
शशि-दिवाकरयोः कृतनिह्नवे, जलधराभ्युदयेऽद्भुतदुर्दिने ।
बत [2]व्योमणिभिर्दिवि जृम्भितं, द्युतिभृतो महतां विरहेऽल्पकाः ॥ ३४ ॥
अपुषदसदुपाश्रयपादपान्, रविमदः(ह?)परिशोषकरं व्यधात् ।
सुहृदयं स्तनयित्नुरतो मुदा, ध्रुवमनृत्यत केकिकुटुम्बकैः ॥ ३५ ॥
सुभगसौरभगौरवगौरभं, किमपि केतकमित्यलिरापतत् ।
कुटिलकण्टकसङ्कटमत्यजत्, क इव दीव्यति [3]तीव्रपरिच्छदे ॥ ३६ ॥
जगदशेषमजीवयदम्बुभिः, सहजदानरसप्रसरोऽम्बुदः ।
अकृत दीनरवैर्मुहुरर्थनं, बत वृथोत्सुक एव स चातकः ॥ ३७ ॥
शिशिर[5]शीकरसङ्करशङ्करो, धुतकदम्बकदम्बककेशरः ।
उपचचार [6]तपात्ययमारुतो, जिनवरं गुरुसौधगवाक्षगम् ॥ ३८ ॥

शरदृतुवर्णनम्

त्रिजगतीजनतापहरे प्रभौ, मनुजमात्रकतापहृता मया ।
किमु कृता बत गर्जिरिति त्रपा–पर इवापययौ जलदागमः ॥ ३९ ॥
शरदृतुः [7]शरपूर्णदिगन्तरो, [8]विमलसत्तरवारिविजृम्भितम् ।
किल विजित्य घनागममुद्यतो, विशददुस्सहसूर्यमहस्ततिः ॥ ४० ॥
[10]धनदभीरुभिरद्भुतकौमुदी–महरसाभिरदीव्यत मानसे ।
ललिततद्गतिविभ्रमभर्त्सिता, इव महीमविशन् [11]विशदच्छदाः ॥ ४१ ॥
प्रसृतताम्रमुखांह्रिशुकावलि–च्छलसविद्रुमवीचिसमुच्चयम् ।
विजलवारिदफेनिलमम्बरं, सितितरं श्रियमश्रयदम्बुधेः ॥ ४२ ॥
अलियुवा नवरागरुचिं जपां, परिचुचुम्ब चिरं मधुपानकृत् ।
मदनिरर्गलकण्ठकलध्वनिः, कृत[12]तदीयहृदन्तरमन्दिरः ॥ ४३ ॥
[13]ततरङ्गकरा परिरम्भणं, रचयति स्म रयेण तरङ्गिणी ।

---

१ मेघस्य । २ खद्योतैः । ३ प्रखरपरिवारे । ४ ख–'दानवस०' । ५ क–'सीकर०' । ६ वर्षावायुः । ७ बाणः, पक्षे तृणविशेषः । ८ अतिविमलजलं, पक्षे तरवारिः । ९ क–'जृम्भितः' । १० कुबेरस्त्रीभिः । ११ हंसाः । १२ जपावृक्षमध्ये० । १३ हंस-तरङ्गिण्यौ मिथो मिलतः स्म इति तात्पर्यम् ।

सपदि नीररुहाऽऽननचुम्बिनः, शुचिरुचेर्मिलितस्य पतत्रिणः ॥ ४४ ॥

[1]कलमलुब्धहृदोऽस्थुरधोऽभव–[2]न्नलकगाढनिबद्धपदाः शुकाः ।
[3]निगडबन्धपरा वयमित्यलं–भवदलीकभया भविनो यथा ॥ ४५ ॥

कलमलौल्यमशुश्रुवत गोपिका–मधुरगानविमोहितमानसः ।
मृगगणो मुनिवद् [4]विमलागम–श्रुतिकृतार्थमतिर्विषयार्थिनाम् ॥ ४६ ॥

रुचिरमन्नविपाकमनाविलं, कमलसौरभहारि सुवारि च ।
व्यधित धेनुपयःप्रभृति प्रिया, प्रियतमाय यथा जगते शरत् ॥ ४७ ॥

सुसमये शुभवस्तु सुवासनः, समवपत् कलभूमितलेषु यत् ।
अकलयत् तदनन्तगुणं जनो, विमलपात्रवितीर्णमिवोत्तमः ॥ ४८ ॥

मथितपङ्क[6]पथान् प्रथयन् पथः, परममिक्षुरसामृतमुद्गिरन् ।
सफलिताखिलभूमितलः क्रमं, श[7]रदृतुर्विदधे वृषभप्रभोः ॥ ४९ ॥

पलितपाण्डुरवारिदडम्बरा, विरलनिर्मलका[8]शरदा शर[9]त् ।
विशदसिन्धुजलांशुकधारिणी, शमपरेव परिव्रजति स्म सा ॥ ५० ॥

हेमन्तवर्णनम्

गुरुतराः क्षणदास्तरुणीजन–स्तनयुगं च घनोष्मभरं सृजन् ।
सुकृतपाकवशादिव कामिनां, हिममयोऽथ स[10]हःसमयोऽभवत् ॥ ५१ ॥

वनमहीषु [11]सरो हिमपिण्डितं, हिमलवाङ्कतटाङ्कुरकं बभौ ।
उषसि शीतभयेन सतारकं, किल दिवो विधुमण्डल[12]मागतम् ॥ ५२ ॥

स्तबकितं कपिभिर्नवकृ[13]ष्णला–पटलमेव त[14]दीयहिमव्यथाम् ।
अपजहार महागिरिषु क्षणा–दुषसि [15]भानुमणिद्युतिदीपितम् ॥ ५३ ॥

समय[16]माप्य हिमप्रकरो रवे–रपजहार महांसि महारिपोः ।
तदनु त[17]द्वशवर्त्तिसरोरुह–प्रकरवैभवभङ्गकरोऽप्यभूत् ॥ ५४ ॥

सहजनिर्मलकान्तिनि कुङ्कुमा–ऽरुणिमरम्यतमे रमणीमुखे ।

---

१ शालि० । २ पलालतृणानि० । ३ ख–'निबिडबन्ध०' । ४ ख–'विशदा०' । ५ ख–'ताम्' । ६ ख–'कथान्' । ७ शरत् प्रभुसादृश्यं विदधे इत्यर्थः । ८ तृणदन्ता । ९ शरत् वैराग्यपरा दीक्षिता । १० शिशिरकालः । ११ चन्द्रमण्डलसदृशानि सरोवराणि जातानि इति निष्कर्षः । १२ ख–'मागमत्' । १३ गुञ्जा- । १४ कपिहिमपीडाम् । १५ सूर्यकान्त० । १६ क–'माघहिम०' । १७ सूर्यवशवर्ति० ।

पदमकारितमां हिमनुन्नया, हिमरुचेः कमलस्य च सम्पदा[1] ॥ ५५ ॥

किल सहस्य[2]वयस्यसमागम–श्रितमदेन हिमेन दुता[3] दिवा ।
दिनमणेर्घृणयो[4] घुसृणच्छला–च्चलदृशो निचितोष्मकुचौ श्रिताः ॥ ५६ ॥

विरहिहृद्धृहदीप्तमनोभव–ज्वलनसम्भवधूमसमानताम् ।
दिवि चलाः प्रबलाऽनिललोलनै–रकलयन् फलिनी[5]वनरेणवः ॥ ५७ ॥

हिमभरस्मरणीयदशा विशत्–कमलिनीविरहाकुलितो भवन्[6] ।
मधुकरः किल पाण्डुरतां दधौ, धवलैरोध्र[7]रजोभरधूसरः ॥ ५८ ॥

गलित[8]रागभरोऽपि विभुर्मया, घुसृणकल्कविलिप्ततनुः कृतः ।
कलितराग इवेति मुदा ध्रुवं, भृशमवर्द्धि सहस्यतमिस्रया ॥ ५९ ॥

सुकृतसद्दिवसोऽतिकृशः कृतो, गुरुतरा रजनीति तमोजनिः ।
कथमिति स्थितिरस्तु पुरः प्रभो–रिति धियेव ययौ शरदत्ययः ॥ ६० ॥

शिशिरवर्णनम्

अनिललोललवङ्गरजोभर–च्छलसुकोमलकेशलवाञ्चितः ।
शिथिलपद्मपदः शिशिरः शिशु–र्नवसमुद्गतकुन्द[9]रदोऽभवत् ॥ ६१ ॥

नवयवाङ्कुरकण्टकसम्मिलत्–तुहिनशीकरघर्मपयःकणा ।
शिशिरसङ्गमवाप्य वसुन्धरा, विशदकुन्दसुमैः स्मितमातनोत् ॥ ६२ ॥

निशि खलु द्युमणिः फणिविष्टपे[10], व्रजति तच्चिरसङ्गवशादिव ।
उदकमन्धुषु तापगुणं हिमे–ऽभजत शैत्यमिह[11]ापरथा तपे ॥ ६३ ॥

हिमभयादुषसि स्फुटमात्मना–क्षुदनलो वपुरन्तरदीव्यत ।
अजनि तज्जनिधूमसखी मुखे, तनुमतामिति बाष्पततिस्तता ॥ ६४ ॥

हिमगुणैरजयज्जगदप्यदः, समय एष कुचौ न तु योषिताम् ।
इति तयोस्तनुमानिव कुङ्कुम–स्तबकमूर्तिरदीपि महः[12]शिखी[13] ॥ ६५ ॥

शिखिधिया कपिभिर्नवकृष्णला–समुदयो[14]ऽनुपदं परिपुञ्जितः ।
नव[15]महीभिरपि स्फुटकुङ्कुम–स्तबकवत् कलितस्तुहिनागमे ॥ ६६ ॥

---

१ क–'सम्पदाम्' । २ पौषमाससमित्र० । ३ परितापिताः । ४ किरणाः । ५ प्रियङ्गु-वन० । ६ क–'रुचन्' । ७ वृक्षविशेषः । ८ नीरागोऽपि सरागः कृतो विलेपनच्छलादिति तात्पर्यम् । ९ 'मोगरा' इति भाषायाम् । १० पाताले । ११ संसारे । १२ प्रतापाग्निः । १३ क–'महाशिखी' । १४ क–'समद०' । १५ ख–'वन०' ।

अहह चुल्लिगृहेषु वधूकर–प्रथितभस्समहावसना अपि ।
गुरुतरामपि जाग्रति यामिनीं, हुतभुजोऽपि हिमैः स द्रुता इव ॥ ६७
हिमलयान्मदनोऽपि हसन्तिका–मकृत सद्मनि पद्मदृशो हृदि ।
अपरथा कथमूष्ममनोरमं, प्रियसुखाय तदीयकुचद्वयम् ? ॥ ६८ ॥
निखिलशाखिदलानि निपातयन्, किशलयन्नरघट्टकृताः कृषीः ।
नरवरस्य तपस्यसमीरणः, समतनोदरतिं च रतिं तथा ॥ ६९ ॥
हिमदग्धपुष्पजनिहेतुवनी–तरुवल्लिपद्धतिरृतुः शिशिरः ।
कुसुमाकरस्य ऋतुभर्तुरथा–गमनं विभाव्य चकितश्चलितः ॥ ७० ॥
एवं क्रमेणैव पुनर्भवन्तो–नात्मव्यवस्थामृतवो व्यतीयुः ।
विश्वस्थितिस्थापक एव नाथे, करोति को वा प्रतिकूलकेलिम् ? ॥७१॥[10]
जनस्तनोत्वेवमिति प्रभुः स, सर्वर्त्तुसौख्याभिनयं बभार ।
विश्वप्रकाशाय न किं विवस्वान्, नित्यं नभोऽन्तर्भ्रमणं बिभर्ति ? ॥७२॥
सर्वेऽपि सेवामृतवो विधातुं, दधुः समीहां युगपद्धि नेतुः ।
नेतुर्न पुष्पाणि फलान्यकाले, कल्याणदानीति तथैव तस्थुः ॥ ७३ ॥[13]
क्रूरग्रहास्ते न विभोः प्रभावात्, क्रूरस्वभावं बिभराम्बभूवुः ।
यद्वर्षुकाणां हि बलाहकाना–मवग्रहं नैव कदापि तेनुः ॥ ७४ ॥[16]

स्वामिप्रतापतपनस्तपति त्रिलोक्यां
तापं तनोति न तथेति विभाव्य तस्य ।
भद्रं स्वभावमिव भानुरतीव तीव्रान्
ग्रीष्मेऽपि नाधित करान् रतये प्रजानाम् ॥ ७५ ॥[19]

जज्ञे जिनाधिपतिकीर्तिसुधानिबद्ध–सम्बन्धबन्धुरभरोऽंशुभरः सुधांशोः ।
सिक्ता ततो वसुमती खलु तेन तेन, शश्वद् बभूव तृणपुष्पफलाभिरामा ७६[21]
तदा जिनेन्दोर्ध्रुवमङ्गसङ्गात्, क्रौर्यं ययौ क्रूरसमीरणानाम् ।

---

१ अन्वयः पिहिता जाग्रतीति फलितार्थः । २ ख–'द्रुता' । ३ ख–'भया' । ४ 'सगडी' इति भाषायाम् । ५ फाल्गुनिको वायुः । ६ ख–'तदा' । ७ हिमेन दग्धा तरुवल्लीनां श्रेणिर्येन । ८ वसन्तस्य । ९ प्रमिताक्षरा । १०–११ उपजातिः । १२ क–'पद् विनेतुः' । १३ उपजातिः । १४ ख–'यद्वार्षुकाणां' । १५ प्रतिबन्धम् । १६ उपजातिः । १७ प्रतापसूर्यस्य । १८ क–'रितीव' । १९ वसन्ततिलका । २० क–'तसे' । २१ वसन्त० ।

आवाद्भिरेतैरपि यन्न जज्ञे, धान्येषु मूर्तेष्वपि रोगयोगः ॥ ७७ ॥[2]

उच्चैर्विशालगृहगर्भकृताधिवासैः
शीते यथा स्फुरति शीतलता पदार्थैः ।
ग्रीष्मे यथा तपति भास्वति तत्प्रभावो
मेघे यथा सलिलमुज्झति मेघवातः ॥ ७८ ॥[3]

तद्वत् त्रिलोकशुभपल्लवनस्वभावे
राज्यं प्रपालयति तत्र युगादिनाथे ।
संवत्सरर्तुतिथिभग्रहयोगमुख्यैः
सर्वैः शुभत्वमशुभैरपि शश्वदूहे ॥ ७९ ॥[5]—युग्मम्

अभिन्नभोक्त्रा भृशमोतुना च, शुना च भु(भु ?)क्तेऽतिथिसंविभागे ।
एकत्र काकश्चटकेन साक–माकण्ठमाहारमिहाजहार ॥ ८० ॥[8]

जानाम्यनन्योन्यभुजोऽम्बुजीवा, जलेऽप्यमान्तः पतिताः स्थलेषु ।
तताप तापेन न तापनस्तां–स्तत्कालवृष्ट्या तु युयोज हृष्ट्या ॥ ८१ ॥[11]

अभुज्यमानो जननीभिरुच्चै–रभूत् प्रभूतः खलु भोगिवर्गः ।
मुक्त्वाऽसंमुद्ग्रासरसं प्रसक्त–स्तदैष जाने पवनस्य पाने ॥ ८२ ॥[14]

क्षेत्रेष्वन्नचयास्तथा समभवन्नेषां यथा न क्षय–
श्चेत् खादन्ति शुकादयस्तदिति ते प्रीणन्ति पुण्यानि नः ।
इत्यैहन्त तदागमं कृषिकृतः किन्त्वागता नैव ते
तिर्यञ्चोऽपि न जज्ञिरे खलु तदा ये स्युर्जनद्रोहिणः ॥ ८३ ॥[17]

कारुण्यैकमहार्णवस्य विशदे राज्ये युगादिप्रभो–
र्दुग्धाम्भोधिजलैर्ध्रुवं जलधरा धात्रीं समप्रीणयन् ।
यत्तज्जाततृणादिभिः सुमधुरैरास्वादितैः श्वापदा
जघ्नुस्तृप्तिपरा न ते मृगगणं निर्मुक्तमांसाशनाः ॥ ८४ ॥[18]

किं स्वर्गेण सदाद्रुमाऽश्मपशुतो यत्रार्थलाभस्पृहा
किं वा भोगिपुरेण यत्र सततं वाताशनैः स्थीयते ? ।

---

१ आचलद्भिः पवनैः । २ उपजातिः । ३ वसन्ततिलका । ४ नक्षत्र० । ५ वसन्त० । ६ सहैव भक्षकेण । ७ क–'पुटकेन' । ८ उपजातिः । ९ ख–'तापनस्तान्न काल०' । १० क–'हृष्ट्या' । ११ उपजातिः । १२ क–'शुमद्ग्रामरसं' । १३ भोगिवर्गः । १४ उपजातिः । १५ वाञ्छत । १६ क–'किं वा गता' । १७–१८ शार्दूलविक्रीडितम् ।

किं वा मुक्तिपुरा न यत्र वृषभस्वामी समाराध्यते
मर्त्यत्वं प्रभुर[1]व्ययं भवतु नः सर्वैस्तदेतीहितम् ॥ ८५ ॥[2]

श्रेयःश्रेणीराजिराज्याभिषेकात्, प्राज्यं राज्यं पालयन् नाभिजन्मा।
कष्टाल[3]क्ष्यः पूर्वलक्षत्रिषष्टिं, सोऽतिक्रान्तः शक्रचक्रार्चितांह्रिः ॥ ८६ ॥[5]

कृत्या-ऽकृत्यविवेकवेदनवशाद् विश्वस्य जीवायितं
येनाशेषमनःसमीहितकृते सत्पुण्यराशीयितम्।
चित्तध्येयजगत्त्रयोत्तरगुणग्रामाद् रहस्यायितं
कस्तस्य प्रतिवीरतां कलयतु श्रीमद्युगादिप्रभोः ? ॥ ८७ ॥[6]

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापर-
नाम्नि श्रीजिनेन्द्रचरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते
ऋतुषट्कप्रभुविलासो नाम एकादशः सर्गः समाप्तः ॥ ११ ॥

तन्वानः परमां श्रियं सुमनसां भास्वन्महो भासयन्
स्वर्णश्रेणिभृतां सृजन् वसुमतीं सोमश्रियं स्तोमयन्।
मार्गं तापकथाऽपहं प्रकटयन् पुष्णंस्तपःसम्पदं
पायाद् वो वृषभप्रभुः परिवहन् सर्वर्तुसत्रक्षताम् ॥ १ ॥[7]

एक एव भुवि स[8]द्म स पद्मः, स[9]त्कलाभिरखिलाभिरलाभि।
अ[10]म्बरं त[11]रणितारकराजा-डम्बरं तरति यन्मतिवार्द्धौ ॥ २ ॥[12]

ग्रन्थाग्रं ॥ १४१ ॥



१ ख-'रप्ययं'। २ शार्दूलविक्रीडितम्। ३ ख-'लक्षः'। ४ चतुरशीतेर्लक्षाणां चतुरशीत्या लक्षैर्गुणनाद् या सङ्ख्या जायते सा पूर्वेत्युच्यते। ५ शालिनी। ६ शार्दूल०। ७ शार्दूल०। ८ क-'पद्म'। ९ क-'सोत्कला०'। १० क-'अन्तरं'। ११ सूर्यतारकचन्द्राटोपम्। १२ रथोद्धता।

## द्वादशः सर्गः १२

सदैव सेव्यो भवता विभुर्यतो, गते त्वयि त्यक्ष्यति मामिति श्रियः।
गिरेव गन्तुं समयेऽप्यगाद् यतो, न यौवनं श्रीवृषभः स वोऽवतात्॥१॥[1][2]

वसन्तोत्सवखेलनम्

अथ प्रभौ पालयति प्रजाः क्रमात्, स्वकालब्धप्रसवो मधूत्सवः।
प्रवर्त्तते स्म स्मरसैनिकव्रज-ध्वजप्रभाऽऽम्रद्रुममञ्जरीभरः॥ २॥[3][4][5]
निबद्धवासावधिमेवं दक्षिणां, निषेव्य सर्पन् रविरुत्तरां दिशम्।
कुबेरसक्तां परिभाव्य तां पुरः, क्रुधेव तीव्रं परितापमाप सः॥ ३॥[6]
यदाश्रये शैत्यमिमां जहासि मां, यदन्तिके तापचयः प्रयासि ताम्।
मतिर्न तेऽस्तीति विभाषितुं रविं, न्ययुङ्क्त याम्या मलयानिलं किल॥४॥[7][8][9]
वियोगिनीप्राणविनिर्गमानकः, प्रकोपिनीकोपविलोपलग्नकः।
प्रियान्विताकर्णपथाऽमृतप्लवः, क्व नाम नाकर्ण्यत कोकिलारवः?॥५॥
दिशः समग्राः सहकारमञ्जरी-रजोभिरापिञ्जरिता विरेजिरे।
जगज्जिगीषोर्विषमेषुभूपतेः, प्रतापभानुप्रभयोम्भिता इव॥ ६॥[10][11]
चिराद् वसन्ते समुपेयुषि प्रिये, मनोहरालापकरेऽलिकूजितैः।
निरन्तरोल्लासिपलाशमण्डलं, दधौ कुसुम्भांशुकवद् वनस्थली॥ ७॥[12]
चिरादुपेतो मधुरर्पयत् प्रियः, कृतस्मिताभ्यः स्मितपुष्पपङ्क्तिभिः।
प्रफुल्लकङ्केल्लिकदम्बकच्छलाद्, घनस्थलीभ्यः किल कुङ्कुमावलीम्॥८॥[13]
नवाऽरुचच्चम्पककोरकावलिः, प्रसूनबाणेन जगज्जिगीषुणा।
भटेन दिव्यास्त्रघटेव सज्जिता, वनाधिदेवी द्युतिपुञ्जपिञ्जरा॥ ९॥[14]
[15]द्विरेफनादैर्न न नेति वादिनीं, धृतप्रकम्पां मलयानिलः शनैः।
समालिलिङ्ग श्रितपुष्पसम्पदं, युवेव मुग्धां नवमाधवीलताम्॥ १०॥

---

१ यौवनं प्रति श्रीरिति वदति। २ १६२तमपर्यन्तानि पद्यानि गुम्फितानि 'वंशस्थ'वृत्ते। ३ ख-'सुकाल०'। ४ ख-'जाव्रज'-। ५ क-'प्रभावद्रुम०'। ६ क-'मेतदक्षिणां'। ७ क-'वयः'। ८ क-'नतिर्नते'। ९ दक्षिणाऽऽशाऽनिलमुखेन सूर्यं प्रति भाषयते। १० मदनराजस्य। ११ पूरिताः। १२ क-'भिकूजितैः'। १३ ख-'किङ्केल्लि०'। १४ क-'कोरवावलिः'। १५ श्यामभ्रमर०।

कदम्ब-जम्बू-बकुलेषु पाटला-[1]मधूक-मल्ली-लवलीसुमादिषु ।
स्वबाणसङ्ख्यामिव कर्त्तुमीरितः, [2]प्रसूनबाणेन षडंह्रिरभ्रमत् ॥ ११ ॥
धृतावतारेऽधिवसुन्धरं मधौ, [3]वरा-ऽवराणामपि वृक्षवीरुधाम् ।
समुच्छ्रयं श्रीः श्रयति स्म सर्वथा, यथा प्रजानां वृषभ[4]ध्वजे प्रभौ ॥१२॥
प्रभुर्वसन्तोत्सवखेलनोत्सुकी–भवत्परीवार[5]परोपरोधतः ।
हरिः [6]सुरारामम्इवागमन्मनो–ऽभिराममारामम[7]कामधामहृत् ॥ १३ ॥
विचित्रपुष्पाभरणैर्विभूषितो, निविश्य [8]तत्राऽस्थित पुष्पवेश्मनि ।
मनोज्ञनानाफलमण्डलप्रदः, किल त्रिलोक्याः सुकृतद्रुमो महान् ॥१४॥
प्रियाऽवमाने धृतमानमानसाः, शरैरिमैः पुष्पशरः [9]शृणाति[10] नः ।
किलेति कोपात् कुसुमानि कङ्कण–कणद्[11]गतालीन्यवचिक्युरङ्गनाः ॥१५॥
प्रफुल्लमल्ल्याः कुसुमानि चिन्वती, तदुद्गतेन भ्रमरेण तद्भ्रमात् ।
सितेन सान्द्रेऽधरपल्लवे परा, चिरं चुचुम्बे धृतपाणिपल्लवा ॥ १६ ॥
विचिन्वती काचन चम्पकान् यतः, षडंह्रिभिः प्राहरिकैरिवोद्यतैः ।
श्रितोरुरावैः श्वसितोर्मिसौरभा, प्रकम्प[12]मापद् विधुरीकृता वृ(धू?)ता ॥१७
विलोलनेत्राभिरशोकवल्लयः, समन्ततो लुण्टितपुष्पसम्पदः ।
समुज्झिताः श्यामचलालिभिः पुनः, स्थितं स्वशाखाभवरक्तपल्लवैः ॥१८॥
[13]परेषु पुष्पावचयप्रचारिषु, [14]प्रतानिनीकुञ्जचरौ वधूवरौ ।
चिरेण लब्धावसरौ परौ मिथः, स्थितौ प्रियालापकुतूहलादिभिः ॥१९॥
इमानि पुष्पाणि वराणि कस्यचि–न्न गोचराणीह समेहि तेऽर्पये ।
प्रलोभ्य मुग्धामिति वल्लभोऽनयद्, रहस्तदालिङ्गन[15]मङ्गलोत्सुकः ॥ २० ॥
प्रियेण दातुं कुसुमानि सज्जितः, करो ग्रहीतुं प्रियया ऽत्र रोपितः ।
तथास्थितौ चेतयतः स्म तौ न [16]तौ, मिथो मिलल्लोचनलीनचेतनौ ॥२१॥
युवां नवां [17]कौसुमकन्दुकादिभिः, समर्पितैः खेलनकैः स्वसम्मुखीम् ।
स्वयं प्रसूनाहतिक्लृप्तकौतुकां, दृढं समालिङ्ग्य लतामरोपयत् ॥ २२ ॥

---

१ 'महुडो' इति भाषायाम् । २ कामेन । ३ क–'चराचराणां' । ४ क–'ध्वजप्रभौ' । ५ अत्यन्ताग्रहेण । ६ 'नन्दन'वनम् । ७ न कामधामहृदयं यस्य सः । ८ आरामे । ९ हन्ति । १० क–'शृणोति' । ११ गतभ्रमराणि । १२ प्राप्नोति स्म । १३ अन्यजनेषु । १४ वल्ली० । १५ क–'नेगलो०' । १६ हस्तौ । १७ क–'कौसमकन्दुका०' ।

प्रियेण पुष्पाण्यवचित्य निर्मितैः, स्वयं प्रियाऽलङ्करणैरलङ्कृता ।
किलास्त्रशाला कुसुमास्त्रभूपते-र्जगद्विजेतुर्विरराज जङ्गमा ॥ २३ ॥
विचित्रवर्णैः कुसुमैर्विधाय यां, न्यधत्त मालामधिकण्ठकन्दलम् ।
प्रियः प्रियायाः किल सा[1] पयोधरो-परि प्रपेदे हरिचापचारुताम्[2] ॥२४॥
प्रियप्रक्लृप्तान्यखिलप्रतानिनी-तरुप्रसूनाभरणानि बिभ्रती ।
प्रचारिणी काचन काननान्तरे, मता न कैः काननदेवतेत्यसौ ? ॥२५॥
प्रियो यमन्तर्गतमल्लिकं स्त्रियो, बबन्ध धम्मिल्लमयं व्यतर्कयत् ।
रसो नु शान्तो मधुमन्मथोल्लसद्-बलेन शृङ्गाररसेन[3] वेष्टितः ॥ २६ ॥
यमङ्गनाया बहिरेव मल्लिका-चयेन धम्मिल्लमवेष्टयत् प्रियः ।
न कैरतर्कीति स[4] तारकापते-र्वैरेण दारैर्विधृतो विधुन्तुदः ? ॥ २७ ॥
गतासु दोलासु दिवं मृगीदृशां, मुखेन्दुमिन्दोर्मृदुगीत[5]मोहितः ।
मृगः समेष्यन्नयनावलोकनात्, त्रपां प्रपन्नस्तु तथैव सो[6]ऽस्थित ॥ २८ ॥
परस्पराङ्गव्यतिषङ्गरङ्गयो-र्भृशं प्रिया-वल्लभयोः कयोश्चन ।
अभून्मिषं स्वेदसमुन्मिषत्पयः-प्लवस्य दोलाभ्रमणक्रम[7]श्रमः ॥ २९ ॥
चलासु दोलासु विलासकौशलं, विलासिनीनामवलोक्य विस्मिताः ।
प्रपातिशाखिर्प्रसरैर्वितेनिरे[8], प्रसूनवृष्टिं वनदेवता इव ॥ ३० ॥
प्रियस्य पार्श्वे विनिवेशिनः प्रिया, सदाऽपि दोलाभ्रमणे गलद्ध्रिया[9] ।
प्रकम्पिनीकण्ठतटावलम्बनं, भयापदेशेन रसेन निर्ममे ॥ ३१ ॥
मधूत्सवे तत्र लसद्विलासिनी-सहेलहल्लीसकमण्डली बभौ ।
अपारशृङ्गाररसभ्रमोल्लसद्-भवार्णवावर्त्तपरम्परानिभा ॥ ३२ ॥
चलच्चलाक्षीचयचञ्चरीरवाः[10], कुहूकरी[11]कण्ठकुहूकलस्वनाः ।
सरङ्ग[12]भृङ्गीकुलकूजितान्यपि, प्रपेदिरे दर्पक[13]जैत्रवाद्यताम् ॥ ३३ ॥
वनान्तरे केलिविलोलकामिनी-क्वणत्तुला[14]कोटिकलापकङ्कणैः ।
जगत्त्रयेऽस्मिन्नहमेव जित्वरो-ऽधुनेति गर्जां मकरध्वजो व्यधात् ॥३४॥
यथासुखं पौरजनेषु खेलन-प्रसक्तचित्तेष्विति नायकः[15] क्षितेः ।

---

१ माला । २ मेघधनुषो मनोहरताम् । ३ शृङ्गारस्तु कृष्णः शान्तस्तु शुक्ल इति कविसमयः । ४ धम्मिल्लः । ५ ख–'गीति०' । ६ मृगः । ७ क–'क्रम०' । ८ ख–'प्रसवैर्वितेनिरे' । ९ ख–'गलद्भया' । १० भ्रमर (?) । ११ अमावस्या० । १२ पक्षि० । १३ कामदेव० । १४ नूपुरसमूह० । १५ ऋषभदेवः ।

किमीदृशी काप्यपरत्र विद्यते, विलासलीलेति मनस्यचिन्तयत् ॥ ३५ ॥
त्रिलोकनाथोऽवधिनाऽथ बुद्धवां–स्त्रिविष्टपानां सुखमुत्तरोत्तरम् ।
'अनुत्तर' स्वर्गसुखं स्वयं च यत्, पुराऽनुभूतं [1]बहुसागरावधि ॥ ३६ ॥

प्रभोर्वैराग्यरङ्गः

विभावयन् प्राग्भवजं विजृम्भितं, विभुर्विमोहः पुनरित्यचिन्तयत् ।
धिगेष लोको विषयाभिकाङ्क्षया, कटाक्षितो नात्महिताय तिष्ठते ॥३७॥
शरीरिणामूर्ध्वमधश्च कर्मभिः, कदापि कुत्रापि गतिः प्रतन्यते ।
सदाऽप्यशक्यैर्विनिषेद्धु[2]मुद्धुरैः, रजोभराणामिव वायुडम्बरैः ॥ ३८ ॥
प्रमाद[3]मैरेयरसप्रसङ्गिनः, प्रसह्य सर्वस्वमिवायुरात्मनः ।
[4]अनेहसा संह्रियमाणमन्वहं, न हन्त जानन्ति विचेतना जनाः ॥ ३९ ॥
[5]चतुष्कषायैः स्खलिताः पृथक् पृथक्, चतुर्विधैः सञ्ज्वलना[6]दिभेदतः ।
[7]चतुर्गतिस्थप्रभवा भवेऽङ्गिनः, प्रयान्ति [8]नानन्तचतुष्टयं पदम् ॥ ४० ॥
द्रुमोद्भवं हन्ति विषं न हि द्रुमं, न वा भुजङ्गप्रभवं भुजङ्गमम् ।
अदः समुत्पत्तिपदं दहत्यहो, हहोल्बणं क्रोधहलाहलं पुनः ॥ ४१ ॥
नरो गुरूनप्यगुरून् निरीक्षते, क्षमाश्रितान् [9]माननगाग्रसङ्गतः ।
विदन्ति [10]तं तद्गतमप्यमी पुन–र्नितान्तमप्युच्चमनुच्चमेव हि ॥ ४२ ॥
निजेप्सितार्थस्पृहया हताशयो, जनो न मायां क्वचनापि मुञ्चते ।
विरक्तकान्तामिव तां न वेत्त्यसौ, मुखेऽतिसौम्यां परिणामदारुणाम् ४३
भजन्ति लोभं धनलाभकाङ्क्षया, सखाय[11]मुच्छ्रायपरायणं नराः ।
भवाटवीभ्रान्तिषु तान् क्षिपत्ययं, हठेन हत्वा नरकोरुकूपके ॥ ४४ ॥
अमीभिरात्मा विषयैः प्रतार्यते, प्रभुर्यथाऽनार्यतमैर्नियोगिभिः ।
प्रकल्प्य शर्माल्पतरं विनश्वरं, शमोत्तरं प्राग्रियते सनातनम् ॥ ४५ ॥
अतीतसङ्ख्यैर्विषयैर्निषेवितै–र्न तृप्तिमात्माऽयमुपैति कुत्रचित् ।
धनोत्करैर्वैरिनृपापराधकृत्–करप्रदानां पृथिवीपतिर्यथा ॥ ४६ ॥

---

१ त्रयस्त्रिंशत्सागरोपमपर्यन्तम् । २ ख–'मद्धुरैः' । ३ मदिरा० । ४ कालेन । ५ क्रोध-मान-माया-लोभसञ्ज्ञकैः । ६ आदिशब्देन प्रत्याख्यानावरणा-ऽप्रत्याख्याना-ऽनन्तानुबन्धिरूपा उत्तरोत्तरतीव्रतामयाः कषाया ज्ञेयाः । ७ नरक-तिर्यङ्-मनुज-देवेति । ८ ज्ञान-दर्शन-सुख-वीर्येति । ९ अहङ्कारपर्वतशिखरसङ्गेन । १० नरम् । ११ उन्नतितत्परम् ।

जरोदये यद्यपि शक्तिरङ्गिनो, गतेन्द्रियाणां विषयाभिषेवणे ।
अनन्तजन्मान्तरजातमैत्र्यया, तथापि तद्वासनया न मुच्यते ॥ ४७ ॥
सुकर्मदत्तेन्द्रियशर्मसङ्गते, गतेऽपि तारुण्यभरे शरीरिभिः ।
न ही कृतघ्नस्य विनाशिनोऽशुचेः, फलं शरीरस्य तपः प्रपद्यते ॥ ४८ ॥

लोकान्तिकानामागमनम्

जनस्वरूपं मनसा निरूपय-न्निति प्रभुर्यावदभूद् विरागभूः ।
क्षणेऽत्र सारस्वतकादयः सुराः, समाययुः पञ्चमकल्पसम्भवाः[1] ॥ ४९ ॥
सारस्वता-ऽर्का-वरुणा-[2]ऽनलानिभा-[3]ऽव्याबाध-रिष्टास्तुषिताश्च ते ताथ ।
स्युर्गर्दतोया नवभेदभाजिनो, लोकान्तिका 'रिष्ट'विमानवासिनः ॥ ५० ॥
शिरस्यमी स्वामिमुखामृतद्युते-र्विलोकनात् कुड्मलितैः कराम्बुजैः ।
प्रणम्य लोकान्तिकदेवतास्तत-स्त्रिलोकनाथं तमिति व्यजिज्ञपन् ॥ ५१ ॥
द्युसच्छिरोरत्नरुचा द्युरत्नभा-प्रभातभास्वत्कमलोपमक्रम ! ।
जगत्प्रभो ! 'भारत'वर्षवासिनां, नयाध्वमोक्षाध्वविलासदेशक[4] ! ॥ ५२ ॥
जगद्व्यवस्था प्रथमा यथा त्वया, प्रवर्त्तिता नाथ ! तथा प्रवर्त्तय ।
सुधर्मतीर्थं[5] भववार्द्धिपारदं, स्मर स्वकृत्यं त्रिजगत् समुद्धर ॥ ५३ ॥—युग्मम्
प्रतिं जनानामिति विज्ञपय्य ते, दिवौकसः सौवपदं प्रपेदिरे ।
अपि प्रभुर्नन्दनकाननाद् ययौ, निजं व्रतादानमना निकेतनम् ॥ ५४ ॥

भरतस्य राज्यप्रदानम्

अथाह्वयत् तत्र जगत्त्रयीपतिः, समं समग्रैर्भरतं तनूद्भवैः ।
भवस्य [6]वैरस्यरहस्यवेदनाद्, द्रुतं व्रतादाननिदानमानसः ॥ ५५ ॥
विभुर्बभाषे भरतं सभागतं, गृहाण राज्यं परिपालय प्रजाः ।
अतः परं वत्स ! विधातुमुत्सुका, यतो वयं संयमराज्यमुज्ज्वलम् ॥ ५६ ॥
इमां समाकर्ण्य गिरं जगद्गुरो-र्न्यगाननोऽभूद् भरतः सभाऽन्तरे ।
तदैव मूर्धन्यघिरूढमेदिनी-महाभराक्रान्त इव क्षणं स्थितः ॥ ५७ ॥
अथेति नत्वा भरतः कृताञ्जलि-र्जगाद सादेन सगद्गदां गिरम् ।
न तेन राज्येन विभो ! प्रयोजनं, त्वया वियोगो मम यत्र जायते ॥ ५८ ॥

---

१ ब्रह्मलोक० । २ ख—'निलानिला—' । ३ चिन्त्यमिदं नामेति भाति । ४ क—'देशका' ।
५ क—'स्वधर्म०' । ६ विरसतामर्म० ।

भवत्पदाम्भोरुहसेवया प्रभो !, सनातनाऽऽस्ते मम राजहंसता ।
तया विना केवलराजताभृतः, कुतोऽस्तु लाभः ? समताऽपि दुर्लभा ५९
अगामिनि स्वामिनि या विजृम्भते, कुतो गते निर्मम ! सा रतिर्मम ! ।
प्रभास्वरे भास्वति वासरस्य या, प्रभा पयोभृत्पिहितेऽत्र कुत्र सा ? ॥६०॥
नतस्य मे स्वामिपदारविन्दयो-र्नखत्विषा यो मुखरागजागरः ।
स नोच्चकैश्चामरचालिनीचलत्-करस्फुरत्कङ्कणरत्नकान्तिभिः ॥ ६१ ॥
त्रिलोककल्पद्रुम ! कल्पयत्यसौ, सुखं तवाधःस्थितिरेव सेविता ।
अलं प्रजापालनतापसङ्कुलो, न रत्नसिंहासनसंश्रयः पुनः ॥ ६२ ॥
प्रणामनम्रस्य ममोपरि स्थितात्, प्रभोः कराद्यः प्रभवत्यनातपः ।
शिरःप्रदेशे किल दासलालितात्, सितातपत्रात् स हि नो कदाचन ६३
प्रभो ! तव स्कन्धतटाधिरोहिणः, सुखं यथा स्वैरविहारकारिणः ।
करीश्वरस्कन्धसमाश्रयस्य मे, प्रभुत्वबन्धाधिकृतस्य तत् कुतः ? ॥ ६४ ॥
प्रजापते ! त्वत्पुरतः प्रधावतो, यदृच्छया यत् सुखमस्ति निस्तुषम् ।
न तद् वरस्यन्दनसंश्रितस्य मे, शुकस्य यद्वन्मणिपञ्जरस्थितेः ॥ ६५ ॥
यथेश ! पद्भ्यां प्रसरन् भवत्पुरः, सुखी तथाऽहं न तुरङ्गरङ्गणात् ।
यथा वनाद् यूथवियोजितो व्रजन्, पुरं मृगो लुब्धकवाहनाश्रयात् ॥ ६६

क्व पर्वपीयूषकरः ? क्व तारकाः ?
क्व वा स्वयम्भूरमणः ? क्व गोष्पदम् ? ।
वियन्मणिः क्व ? क्व वयोमणिः स वा ?
क्व शं प्रभूपासनजं ? क्व राज्यजम् ? ॥ ६७ ॥

जगाद नाथो जगतामथाङ्गजं, मयाऽत्र राज्ये विजयिन् ! विवर्जिते ।
अभूमिपा भूमिरसौ विसंस्थुला, गलद्गुणा हारलतेव भाविनी ॥ ६८ ॥
अराजकेऽस्मिन् जगति प्रवर्त्तते, प्रजासु मात्स्यो विनयिन् ! यतो नयः ।
नरेन्द्रदण्डस्य विना भयं जनो, मनो विधत्ते खलु पापकर्मणि ॥ ६९ ॥
इयं प्रजाऽपालि तवैव पूर्वजै-र्ध्रुवं सुपुत्रो निजपूर्वजक्रमः ।
सदाऽस्मदादेशकरोऽसि साम्प्रतं, ततोऽस्मदादेशममुं समर्थय ॥ ७० ॥

---

१ ख-'राज्य०' । २ सेवया । ३ क-'आगामिनि' । ४ क-'लासितात्' ।
५ क-'क वा' । ६ मत्स्या अन्योन्यं स्वजातीनपि गिलन्ति तादृशी प्रवृत्तिः ।

इति प्रभूक्त्या भरतोऽतिभारितो, बभार भाषां नतमौलिरोमिति ।
असौ सुपुत्रस्य परा पवित्रता, पितुर्यदाज्ञा न कदाऽपि लङ्घ्यते ॥ ७१ ॥
प्रणम्य मूर्ध्ना भरतः प्रभुं प्रभो-र्व्यभूषयत् पेश्वसुखासनं महत् ।
बभौ स तत्राभिनवोदयद्दिनः, प्रभातभास्वानिव पूर्वपर्वते ॥ ७२ ॥
अथोपविष्टः प्रभुसिंहविष्टरे, मुदाऽभिषिक्तो भरतः प्रभोर्गिरा ।
अमात्यसेनापतिभूमिपादिभिः, सुरैः सुरद्रुः सुरशैलगो यथा ॥ ७३ ॥
तदाऽऽतपत्रं भरतेशितुः शिर-स्यशोभत श्वेतसहस्रपत्रभम् ।
प्रभोः प्रसादः शरदिन्दुसोदरः, सुतोपरि स्फीतिमिवाश्रितः स्फुटम् ७४
समुज्जजृम्भे भरतस्य पार्श्वयो-श्चलोज्ज्वलैश्चामररोममण्डलैः ।
जगत्रयीसत्वरतद्गुणावली-यशोलतापङ्क्तिनवाङ्कुरैरिव ॥ ७५ ॥
स शुभ्रवासोभिरदभ्रमौक्तिकै-र्विभूषणैर्भूषितमूर्त्तिराबभौ ।
प्रभोर्मुखेन्दूद्धुरपुण्यसागरोद्-गतैस्तरङ्गैर्नु सफेनविन्दुभिः ॥ ७६ ॥
रराज राजा स नवो जनप्रियः, प्रदीप्तशूरद्युतिपूरपूरणः ।
इतीव राज्ञां निवहोऽस्य निर्ममे, नमस्क्रियां मङ्गलमण्डलस्पृहः ॥ ७७ ॥

वार्षिकदानम्

स बाहुबल्याद्यपराङ्गजन्मनां, विभज्य भर्त्ता विषयानथार्पयत् ।
वदान्यचूडामणिरेष वार्षिकं, प्रदानमप्यारभताद्भुतानकम् ॥ ७८ ॥
वनीपकः कोऽप्यवनीतले तदा, न दानमादातुमना मनागपि ।
श्रियो विशेषः प्रभुशेषयाऽनया, ममेत्युपादत्त जनोऽल्पमात्रकम् ॥७९॥
त्रपाऽस्तु मा कामगवी-सुरद्रुम-द्युसन्मणीनां बहुदानदर्शनात् ।
इतीव विश्वत्रितयैकशर्मदः, स दानमिच्छाप्रतिमानमातनोत् ॥ ८० ॥
यदीहते तल्लभते जनोऽखिलः, समेतु गृह्णातु मनःसमीहितम् ।
अपुष्यदाघोषणमुच्चकैश्चतुः-पथप्रतोल्यादिपदेष्विति प्रभुः ॥ ८१ ॥
चिरप्रनष्टानि गतप्रभूण्यपि, प्रलीनचिह्नान्यपि शैलगान्यपि ।

१ क-'भूष(य)त्यन्तसुखा०'। २ सिंहासनम्। ३ क-'पत्रलम्'। ४ क-'दूरणः'। ५ ऋषभप्रभुः। ६ देशान्। ७ दातृशेखरः। ८ क-'रेव'। ९ अद्भुतो दुन्दुभेर्ध्वनिर्यस्मिन्। १० याचकः। ११ क-'प्रणष्टानि'।

[1]संशानगान्यप्यटवीगतान्यपि, [2]प्रसून[3]संस्त्यायपुरीगतान्यपि ॥ ८२ ॥
सुवर्णरत्नप्रभृतीनि सर्वतो, धनान्युपाहृत्य विभोर[4]पूरयन् ।
सुरेश्वरादिष्टधनेश्वराज्ञया, विजृम्भिणो [5]जृम्भकसञ्ज्ञया सुराः ॥ ८३ ॥

–युग्मम्

सकोटिमेकां कनकस्य निर्व्यथ–स्तथाऽष्टलक्षीं वृषभप्रभुर्ददौ ।
दिनेश्वरस्याभ्युदयाद् दिने दिने, बभूव यावज्जनभोजन[6]क्षणम् ॥ ८४ ॥
प्रयच्छतः कोटिशतत्रयं प्रभो–रशीतिरष्टाभ्यधिकाश्च कोटयः ।
अशीतिलक्षाण्यपि सर्वसङ्ख्यया, समग्रवर्षेण सुवर्णमित्यभूत् ॥ ८५ ॥
विभाव्य दीक्षाऽभिमुखं जगद्विभुं, जनोऽपि संसारविरागसागरः ।
[7]ईयेष [8]शेषामितमेव हाटकं, [9]स्पृहाप्रदानेऽपि हि नाग्रहीद् बहु ॥ ८६ ॥

प्रभोर्दीक्षामहोत्सवः

ववर्ष वर्षं प्रतिमानुषं प्रभुः, पदार्थसार्थैर्हृदयेहितैर्हितैः ।
चलासनश्च द्युसदां पतिस्तदा, मतेशदीक्षासमयः समागमत् ॥ ८७ ॥
समं समग्रैः स सुरेश्वरः सुरैः, सदम्भसा सम्भृतकुम्भपाणिभिः ।
जगत्प्रतीक्ष्यस्य ततान दीक्षणो–त्सवाभिषेकं जननाभिषेकवत् ॥ ८८ ॥
स्ववासनावद् विशदानि वासवो, द्युवासवासांस्यथ पर्यधापयत् ।
जगत्त्रयीशेन [11]तदीयचित्तव–न्नितान्तमच्छान्यतिकोमलानि च ॥ ८९ ॥
स्वयं मुदा [12]दुश्च्यवनेन चन्दनै–र्जगत्पतिश्चर्चितमूर्तिराबभौ ।
[13]स रोमकूपान्तरवर्त्मसत्त्वरै–र्वृतः शुभध्यानविभा[14]भरैरिव ॥ ९० ॥
यदेष [15]मुक्तावलिमण्डनं विभु–र्भविष्यति ध्वस्तभवोरुबन्धनः ।
इतीव वृन्दारकनायकोऽप्यमुं, [16]विविक्तधीस्तादृशमेव निर्ममे ॥ ९१ ॥

---

१ क–'श्मशान–' । २ ख–'प्रशून्यसं०' । ३ गृह० । ४ क–'रपूर्यत' । ५ जृम्भन्ते–स्वच्छन्दचारितया चेष्टन्त इति जृम्भकाः । इमे तिर्यग्लोकवासिनो व्यन्तरदेवा अत्यर्थं केलिरसिका निधुवनशीलाः शापानुग्रहकरणसमर्थाः सदा च प्रमुदितमनसः । ते च दशविधाः प्रज्ञप्ताः, यथाहि—अन्नजृम्भकाः, पानजृम्भकाः, वस्त्रजृम्भकाः, लयन( गृह )जृम्भकाः, शयनजृम्भकाः, पुष्पजृम्भकाः, फलजृम्भकाः, पुष्पफलजृम्भकाः, विद्याजृम्भकाः, अव्यक्तजृम्भकाः । विशेषार्थिना तु प्रेक्ष्यतां भगवती( श. १४, उ. ८, सू. ५३३ )वृत्तिः । ६ ख–'क्षणः' । ७ इच्छति स्म । ८ देवनिर्माल्यप्रमाणकम् । ९ क–'गृहाप्रदाने' । १० अवलोक्यतामस्मिन्पद्यार्धे सकारबाहुल्यम् । ११ प्रभुमनोवत् । १२ इन्द्रेण । १३ प्रभुः । १४ –'वरैरिव' । १५ मोक्षगतजीवश्रेणिविभूषणम् । १६ विचारशाली ।

अथात्यतेशाय सहस्रचक्षुषा, 'सुदर्शना'ख्या शिविकाऽथ यन्निपात् ।
ससीम'सर्वार्थ'विमानमुत्कया, न्ययोजि मुक्त्येव जिनोपहूतये ॥ ९२ ॥
ततोऽधिरूढः शिबिकां स तां प्रभुः, प्रदत्तपाणिः शतकोटिपाणिना[1] ।
महोन्नते मोक्षतरौ सुशर्मणः, फलस्य निःश्रेणिमिवाशु लब्धये ॥ ९३ ॥
समुद्धृता प्राग् विधृतादरैर्नरै–रनन्तरं भक्तिविभासुरैः सुरैः ।
प्रभोः[2] श्रियाऽसौ शिविका विकाशिनी[3], स्वभाग्यशोभेव जगत्रयाद्भुता[4] ९४
विरेजिरे लोलदुकूलपल्लवा, विलोलहारा धृतरत्नभूषणाः ।
सुरा वहन्तः शिबिकां नभोऽन्तरा, सुरद्रुमा जङ्गमतां गता इव ॥ ९५ ॥
तदन्तरा सेदुषि सिंहविष्टरं, विवोढुकामे नवसंयमश्रियम् ।
वरे विभौ चालयतः स्म चामरे, तदाऽऽद्यकल्पद्वयवासवावुभौ ॥ ९६ ॥
शिरःप्रदेशे शरदिन्दुसोदरं[5], सितातपत्रं भुवनेशितुर्बभौ ।
ध्रुवं हृदध्यासितसाधुधर्मभा–वितानमूर्ध्वं दशमाध्वनिर्गतम्[6] ॥ ९७ ॥
जिनेशितुः पार्श्वयुगे ररञ्जतु–'गङ्गा'तरङ्गाकृतिधामचामरे[7] ।
किलादिमद्वीपकुमुद्वतीपति[8]–द्वयार्पितौ प्राभृतके करोत्करौ ॥ ९८ ॥
करस्फुरत्काञ्चनधूपपट्टकै–र्जगत्पतेर्व्यन्तरनिर्जरव्रजैः ।
कृतस्य धूपार्थविधेर्घनश्रियं[9][10], दधार धूमो जनपुण्यवीरुधाम् ॥ ९९ ॥
जयारवोज्जागरवक्त्रवारिजैः, शिरोऽधिरोहत्करयुग्मकुड्मलैः ।
नतश्चतुःषष्टिसुरासुरेश्वरै–स्ततः प्रतस्थे शिविकास्थितः प्रभुः ॥ १०० ॥
पुरः प्रभोर्मानव-देव-दानवै–स्तदा तथाऽवाद्यत वाद्यमण्डली ।
यथा तदीयप्रतिनादतोऽखिलाः, प्रभुप्रशंसामिव तेनिरे दिशः ॥ १०१ ॥
तदोर्जितैर्मङ्गलतूर्यगर्जितै–र्लसद्द्युसद्वारजयारवव्रजैः ।
विभुं 'विनीता'नगरीनृपाध्वना–ऽधिगत्य यान्तं परिवव्रिरे जनाः १०२
सदोच्चचारी खलु नीचचारिणां, चिराय नो लोचनगोचरे चरेत् ।
इति प्रभुं केऽपि निरीक्षितुं नरा, बृहत्तरा नारुरुहुर्महीरुहः ॥ १०३ ॥
गृहाट्टवप्रप्रमुखोन्नतेषु ये, जनाः प्रतेनुः पदमीक्षितुं प्रभुम् ।

---

१ इन्द्रेण । २ क–'प्रभुश्रिया' । ३ ख–'विकासिनी' । ४ क–'जगत्रयाद्भुता' ।
५ ख–'सुन्दरं' । ६ मस्तकमार्गान्निर्गतं । ७ इदं चरणं वर्तते 'इन्द्रवंशा'च्छन्दसि ।
८ चन्द्र- । ९ क–'धूपार्घ०' । १० मेघशोभाम् ।

[1]तदाप्तपुण्यात् खलु तेषु शीतरुक्-करायितं शूरकराः प्रपेदिरे ॥ १०४ ॥
महोन्नतेष्वप्यवनीरुहादिषु, स्थिरेषु यन्नाथनिरीक्षणं क्षणम् ।
अतो गजान् केचन जङ्गमाचलो-पमान् समारुह्य विभोः पुरोऽभवन् १०५
मरुत्त्वरैः केऽपि तुरङ्गमैर्मनो-रयैर्मयैः[2] केऽपि [3]तयो रयोत्तरैः ।
पदप्लवैः पुप्लुविरेऽपि केऽपि तु, प्रभोर्दिदृक्षात्वरिताः पुरः पुरः ॥१०६॥
रथस्य वीथीमनवाप्य केऽपि [4]तं, समर्प्य सूताय पदातयः स्वयम् ।
नतोन्नताध्वप्लवनैः प्लवङ्गवत्, पुरोऽभवन् स्वामिनिलाभनेप्सवः ॥१०७॥
जनौघसङ्कट्टतया जनान्तरात्, तटेन गन्तुं प्रभुदर्शनस्पृहाः ।
परे नरा निःसरणाय नाशकन्, कुटुम्बवासाद् विरताशया इव ॥ १०८ ॥
पुरःसरस्कन्धनिबद्धपाणयः, परे प्रणुन्ना बलतोऽनुपातिभिः ।
प्रकाममस्पृष्टमहीतलांह्रयो, [5]दिवा प्रचेलुस्त्रिदिवालया इव ॥ १०९ ॥
घनाघसम्बन्धनिबन्धनं स्त्रियो, [6]निकृत्य कृत्यं लघु [7]गेह-देहयोः ।
तदाऽऽत्मकृत्यं सुकृतैकवर्धनं, विधातुमीयुर्जगदीशदर्शनम् ॥ ११० ॥
शिरस्तटे किं मुकुटेन तेऽधुना?, स्वयं त्रिलोकीमुकुटत्वमाप्नुहि ।
ललाटपट्टे तिलकेन किं तव?, स्वयं त्रिलोकीतिलकायसे न किम्? १११
किमञ्जनं लोचनयोर्निधीयते?, सुधोपचारं रचयाऽनयोश्चिरात् ।
जगद्विभोर्वन्दन-दर्शनोत्सवै-स्तदा मिथः स्त्रीभिरिदं न्यगद्यत ॥ ११२ ॥

—युग्मम

प्रभोस्त्रिलोक्याभरणस्य भान्ति किं?, पुरो वराण्याभरणानि कानिचित् ।
ध्रुवं पुरन्ध्र्योऽपरिधाय तान्यत-स्त्वरातुरा राजपथं ययुः पराः ॥११३॥
निमित्तमावामऽनिभालने विभो-र्बभूविवार्स्या [8]धिगिति स्खलद्गतेः ।
स्तनौ परस्या रुदतः स्म पीवरौ, विशीर्णहारच्युतमौक्तिकाश्रुभिः ॥११४॥
विलोकितुं लोकगुरुं त्वरागतेः, शिरोंऽशुके स्रंसिनि केशसञ्चयः ।
अदर्शि कस्याश्चन नाथदर्शनात्, तमःसमूहस्तनुतो नु निर्गतः ॥ ११५ ॥
पदात् पदं नार्पयितुं स्वयं क्षमा, सखीद्वयस्कन्धलसत्करद्वया ।

१ तस्मादीक्षणात् प्राप्तपुण्यात् । २ उष्ट्रैः । ३ तुरङ्गमोष्ट्रयोः । ४ रथम् । ५ आकाशेन । ६ परित्यज्य । ७ ख-'देह-गेहयोः' । ८ नायिकायाः । ९ 'धिगति०' ।

पराऽपतत् प्रौढनितम्बडम्बरा, पराऽङ्गना च[1] त्वरितांह्रिसञ्चरा ॥ ११६ ॥
परा परौत्सुक्यपरा व्यतिक्रमा–दुपर्यधोवस्त्रधराऽभवद् यदि ।
रसायनं हास्यरसस्य सा तथा–ऽप्यदर्शि केन प्रभुलीनचक्षुषा ? ॥११७॥
त्रिविश्वसर्वस्वमिवेक्षितुं प्रभुं[2], स्वकीयसर्वस्वनिरादरा परा ।
विहाय शून्यं गृहमुत्सुकाऽगमत्, तदा न कोऽप्यन्यधनस्पृहः परः[3] ११८
सनातनाऽऽस्ते रसनासुधाशनं, विभुः क्व लभ्यो नयनामृतं पुनः ? ।
अतोऽर्द्धभुक्तेऽप्यपरा प्रतत्वरे, प्रभुं प्रक्लृप्ताचमना निरीक्षितुम् ॥ ११९ ॥
तदेतरस्या रभसेन विस्मृते–र्धृतैकताडङ्कमतर्क्यतानं[4]नम् ।
जगत्पतेर्दीक्षणवीक्षणक्रिया–रसप्रसक्ताऽऽगतपुष्पदन्तवत्[5] ॥ १२० ॥
विनिर्मितैपन्मृगनाभिपत्रकं, मुखं परस्यास्त्वरितागतेर्बभौ ।
जिनाननेक्षासुकृतेन सङ्कुचत्–कलङ्कपङ्को नु कुरङ्गलाञ्छनः[6] ॥ १२१ ॥
मुखं परस्याः पदयावकद्रवै[7], रयाद् विलिप्तं घुसृणभ्रमाद् बभौ ।
शशी स्वमित्रस्मरविद्विषं प्रभुं[8], निरीक्ष्य रोषादिव रक्ततां गतः ॥ १२२ ॥
रयात् परस्याः श्लथकेशबन्धन–क्षरत्प्रसूनच्युतमाल्यकैतवात् ।
मुमोच तूणादिव बाणधोरणीं, धनुस्तथा पुष्पशरः पुरः प्रभोः ॥ १२३ ॥
जगत्प्रदीपस्य पुरः प्रदीपका, भवेयुरुत्तारणकं जगद्विभोः ।
अतः पराः सप्तशिखाविभूषितं, प्रतेनुरारात्रिकमुग्रभक्तयः ॥ १२४ ॥
त्रिलोकनाथस्य विलोकनेऽञ्चला–नचालयंश्चामरवच्च काश्चन ।
किलास्य पृथ्वीपृथुभारधारणात्, क्रमस्पृशो [9]वीजनकर्म कर्मठाः[10] ॥१२५॥
चकासिरे काभिरपि प्रकाशिताः, पुरः प्रभोरक्षतपात्रपङ्क्तयः ।
समं समेता इव सेवितुं विभुं, यशोजिता दीपनदीपतीन्दवः ॥ १२६ ॥
निरन्तरं शान्तरसातिपूरिते, जिनेश्वरे [11]क्षेत्रवरेऽत्र काश्चन ।
प्रचिक्षिपुर्लाजततिं [12]कलायतिं, किलोज्वलां मङ्गलबीजमण्डलीम् ॥ १२७॥
नभोऽग्रसन्ध्याघनरागनागरी–समुच्छलन्न्युञ्छनमण्डलच्छलात् ।
जिनाधिनाथे जनचित्तभक्तिजा–ऽनुरागवीचीततयस्तदोच्छ्रिताः ॥१२८॥

---

१ क–'वत्त्वरितांह्रि०' । २ ख–'विभुं' । ३ क–'पुनः' । ४ मुखम् । ५ सूर्य-शशिवत् । ६ चन्द्रः । ७ यवसम्बन्धि० । ८ ख–'विभुं' । ९ क–'बीजन०' । १० कार्यदक्षाः । ११ उत्तमक्षेत्रे । १२ मनोज्ञोत्तरकालाम् ।

ततैश्चतुःषष्टिसुरासुरेश्वर-स्फुरद्विमानप्रकरैर्वियच्चरैः ।
अनातपः प्रादुरभूज्जगत्प्रभो-र्निरीक्षकाणामनुगामिनामपि ॥ १२९ ॥
सुपर्वगन्धर्वगणा नभोऽङ्गणे, प्रभोर्गुणान् मङ्गलगीतिरीतिभिः ।
विचित्रनाट्या-ऽभिनयक्रियानुगं, जगुर्जगत्यामपि राजगायनाः ॥१३०॥
प्रवृत्तनृत्ता नरदेवनर्त्तकी-गणास्त्रुटद्धारमणीन् निचिक्षिपुः ।
अमर्त्त्यमर्त्यद्विपदानपङ्किले, तले पृथिव्या निजपुण्यबीजवत् ॥ १३१ ॥
सुपर्वणां व्योम्नि विमानपङ्क्तिभिः, शताङ्गमातङ्गतुरङ्गसङ्गमैः ।
किल प्रभोः प्रव्रजनोत्सवं नवं, निरीक्षितुं शक्रपुराण्युपाययुः ॥ १३२ ॥
दृशामदृश्यस्फटिकालयाश्रया, विभोर्विलोकादनिमेषलोचनाः ।
सुराङ्गनाभ्यो न विभिन्नवैभवा-स्तदा व्यबुध्यन्त पुरीपुरन्ध्रयः ॥१३३॥
विभोः स्तवाढ्या इव किङ्किणिक्वणैः, प्रशस्यलास्याः प्रचलैर्ध्वजाञ्चलैः ।
क्षुरद्धिभूषासुमसम्मदाऽश्रव-स्तदाऽद्युतन् देवविमानपङ्क्तयः ॥ १३४ ॥
अमर्त्यकॢप्तैर्दिवि मर्त्यकल्पितैः, क्षितौ च सङ्गीतकनाटकस्वनैः ।
पदे पदे मण्डलनृत्यदप्सरो, नरप्रियोल्लासकरासकस्वरैः ॥ १३५ ॥
विभो! चिरं जीव जनस्य जीवन!, प्रभो! चिरं मङ्गलकन्द! नन्द च ।
इन! त्रिलोकी चिरमस्तु सुस्थिता, त्वयेति चाशीर्वचनोच्चयैर्नृणाम् १३६
पुरःसरव्योमचरत्सुरासुर-स्फुरद्विभुस्तोत्रपवित्रवाग्भरैः ।
मिथो मिलल्लोककुलाऽऽकुलारवै-र्जगत्त्रयं शब्दमयं तदाऽभवत् ॥१३७॥
—विशेषकम्
यतो न तोषं लभतेऽवहेलनाद्, भजेत भक्त्या सुकृतार्जनं जनः ।
ततः प्रतीयेष गतस्पृहः प्रभुः, प्रतन्यमानं पथि तेन मङ्गलम् ॥१३८॥
अमानया वासनया विसृत्वरान्, विभुः समग्रानसुरान् सुरान् नरान् ।
ददर्श दृष्ट्या सदृशप्रसादया, दयालुरुल्लासिसुधोर्मिसान्द्रया ॥ १३९ ॥
श्रितैकपक्षो भरतस्तदाऽभवद्, द्विपार्श्वगो बाहुबलिर्जगद्विभोः ।
बभौ स ताभ्यां धुतपातको यथा, यतीन्द्रधर्मो धृतबोध-संयमः ॥ १४० ॥
अनेकसामन्त-नरेश-मन्त्रिभिः, समं परेऽष्टानवतिस्तनूद्भवाः ।
भवार्तिनाशं भुवनेशमन्वगु-र्नयं प्रजावद् विनयं गुणा इव ॥ १४१ ॥

१ इन्द्रनगराणि । २ क-'क्षुरद्विभूषासुमसम्मुदा०' । ३ क-'नन्दन !' । ४ जनेन ।

जगद्गुरुं श्रीमरुदेवया समं, सुमङ्गला साऽथ सुनन्दया तया ।
सुताद्वयी पुत्रवधूशताश्रिता, दयेव देवाधिपधर्ममन्वगात् ॥ १४२ ॥

सिद्धार्थोद्याने प्रभोरागमनम्

स्वभावभावप्रथमानमानसै-रिति [1]त्रिलोकीपतिभिः कृतोत्सवः ।
प्रभुः स 'सिद्धार्थ'मवाप [3]तापनो, नभोवदुद्यानममानवैभवम् ॥ १४३ ॥
विनिर्मिताह्वानमिवालिनादतः, समाश्रितोऽशोकमनोकहं क्रमात् ।
अवातरत् तत्र जगत्रयीपतिः, 'सुदर्शना'या भवसन्ततेरिव ॥ १४४ ॥
बभूव 'सर्वार्थ'विमानमत्र तद्, यथा ह्यसर्वार्थमिव च्युते प्रभौ ।
तथाऽवतीर्णे शिबिका 'सुदर्शना', कुदर्शनाऽऽसीदिह सौम्यदर्शने ॥१४५॥
अहं सरागोऽपि विरागचेतसा, जगत्रयीशेन समाश्रितस्ततः ।
अशोक एवास्मि मुदेति स ध्रुवं, ननर्त्त कङ्केल्लितरुर्दलैश्चलैः ॥ १४६ ॥
स्वसारताऽहङ्कृतिवल्लिसारिणी-मसुद्रसंसारसमुद्रकौमुदीम् ।
ततोऽमुचन्मारविकारधोरणी-मिवाम्बरालङ्करणावलीं विभुः ॥ १४७ ॥
जगद्विभोः स्कन्धतले बिडौजसा, न्यवेशि वृन्दारकदूष्यमुज्ज्वलम् ।
क्षणेऽत्र तत्रैव किलाधिरोहिणः, सुसाधुधर्मस्य महोमहोर्मिवत् ॥ १४८ ॥

चैत्रकृष्णाष्टम्यां प्रभोर्दीक्षा

तदा च चैत्रे बहुलाष्टमीतिथौ, विधौ च धिष्ण्यं श्रवणादिमं श्रिते ।
दिनस्य भागे चरमे नरामरै-र्जयारवस्फारमुखैर्निरीक्षितः ॥ १४९ ॥
प्रभुश्चतुर्भिः स्वयमेव मुष्टिभिः, स्वमौलिदेशाद् बहुकाललालिताम् ।
चतुर्गतिक्लेशपरम्परामिवो-दपाटयत् केशततिं प्रसृत्वराम् ॥ १५० ॥

—युग्मम्

स्वयं स्वमूर्ध्ना विभुनाऽध्रियन्त ये, निपातमर्हन्ति न ते महीतले ।
इति प्रतीयेष शिरोरुहान् हरिः, स्वयं विनेतुर्वसनाञ्चलेन तान् ॥ १५१ ॥
ततोऽपरान् पञ्चममुष्टिना कचान्, जिघृक्षुरूचे नमुचिद्विषा प्रभुः ।
प्रसीद देवेश! तथैव तिष्ठतात्, तवावशिष्टा चिकुरावली चिरम् ॥ १५२ ॥
यदंसयोः स्वर्णसवर्णयोरियं, जगत्पते! वल्गति कुन्तलावली ।
तवेन्द्रनीलद्युतिरब्दमालिका, किलाप्तसङ्गा सुरशैलशृङ्गयोः ॥ १५३ ॥

१ क-'साव०' । २ नृपेन्द्रादिभिः । ३ सूर्यः । ४ क-'सारणी-' । ५ वस्त्रविभूषणश्रेणिम् । ६ ख-'मत्' । ७ कृष्णपक्षस्याष्टम्याम् । ८ उत्तराषाढाम् । ९ इन्द्रः । १० इन्द्रेण ।

इतीरिते खःपतिना जगत्पति-स्तथैव तां कुन्तलवल्लरीं दधौ ।
इतीव लास्यं मृदुलानिलेन सा, शनैर्लसन्ती प्रमदेन निर्ममे ॥ १५४ ॥

ततः 'सुधर्मा'ऽधिपतिः शिरोरुहान्, रयाद् गतो दुग्धपयोनिधौ न्यधात् ।
प्रभोः स शेषामिव तानरोपय-न्महोर्मिमौलौ विमलाशयः स्वयम् ॥१५५॥

समेत्य शक्रो लघु मुष्टिसञ्ज्ञया, स्वयं प्रजल्पन् समयं पुनः पुनः ।
दृशां सहस्रेण दिशो विलोकय-न्नलं त्रिलोकीतुमुलं न्यवारयत् ॥१५६॥

प्रपन्नमौने नर-देव-दानवे, क्षणेऽत्र चित्रस्थ इवैकचेतसि ।
सदाऽखिलं योगमवद्यसङ्कुलं, निराकरोमीति गिरं प्रवर्त्तयन् ॥ १५७ ॥

भवोद्भवक्लेशनिवेशवैशसं, विमुक्तमन्त्रौषधिमुक्तिकार्मणम् ।
प्रकृष्टषष्ठो नतसिद्धपद्धति-स्ततः स चारित्रमुपाददे प्रभुः ॥१५८॥-युग्मम्

तपातपच्चापनतापतापिनां, पथस्तरुच्छायमिवाध्वयायिनाम् ।
अभूत् प्रभुप्रव्रजनोत्सवे क्षणं, सुखाभिषङ्गो नरकस्पृशामपि ॥ १५९ ॥

बभूव भूरिर्भुवनेष्वपि त्रिषु, क्षणं प्रकाशः क्षणिकाप्रकाशवत् ।
तदा विभोर्ध्वस्ततमःसमुन्मिष-न्महातपस्यामहसो नु वर्णिका ॥ १६० ॥

प्रभोर्मनःपर्ययज्ञानस्योत्पादः

मनुष्यवर्षान्तरवासिनां तनू-भृतां मनोद्रव्यविकाशनक्षमम् ।
विभोर्मनःपर्ययसञ्ज्ञमुज्ज्वलं, तुरीयकं ज्ञानमथोदपद्यत ॥ १६१ ॥

कच्छादिचतुःसहस्र्या व्रतग्रहणम्

चतुःसहस्री सहकच्छभूभृतां, स्वयं महाकच्छमुखावनीभृताम् ।
निवारितानां भरतादिभिर्मुहु-र्मुहुः प्रपेदे प्रभुपृष्ठतो व्रतम् ॥ १६२ ॥

प्रभुं नुत्वा नत्वा सममरवृन्दैर्द्युपतयो
ययुर्द्वीपं 'नन्दीश्वर'मिह जनुःस्नानमहवत् ।

---

१ क्षीरसागरे । २ ख-'प्रकीर्तयन्' । ३ नाशम् । ४ पृथग्जनस्यानियतानि भक्तानि, मुमुक्षूणां सकृद् भोजनं, मध्यमजनस्य भक्तद्वयं, तत्र मध्यमां प्रतिपत्तिमाश्रित्य चतुर्थषष्ठादितपोगणना । अतीतेऽहनि भुक्त्वा प्रत्याख्यानमित्येको भोजनकालः । द्वितीयेऽहनि भक्तद्वयच्छेदः । तृतीयेऽहनि चतुर्थभक्तकाले भुङ्क्ते इति चतुर्थभक्तमुच्यते । कदाचिदुत्तरपदलोपात् चतुर्थभक्तमेव चतुर्थम्-एक उपवासः । यदि तृतीयेऽहनि भक्तद्वयच्छेदश्चतुर्थे तु षष्ठभक्तकाले भुङ्क्ते तर्हि षष्ठभक्तं षष्ठं वोच्यते; द्वौ उपवासौ इत्यर्थः । एतदर्थं प्रेक्ष्यतां तत्त्वार्थस्य श्रीसिद्धसेनगणिकृतटीकाया द्वितीयो विभागः ( पृ. ९२ ) । ५ विद्युत्० । ६ जम्बू-धातकी-पुष्करार्धेतिमनुष्यक्षेत्रवासिनाम् । ७ ख-'स्नात्रमहवत्' ।

स्थितार्हद्बिम्बानां विहितमहिमास्तेऽष्टदिवसीं
कदा द्रक्ष्यः स्वामी पुनरिति मुदा स्वं पदमगुः ॥ १६३ ॥[1]

भरत-बाहुबलिप्रमुखाश्च ते, नृपतयः परिवारजनान्विताः ।
जिनपतिं प्रणिपत्य निजं पदं, प्रययुरश्रुविमिश्रविलोचनाः ॥ १६४ ॥[2]

क्षिप्त्वा श्रीवृषभः कषायविषयक्रूरारिवीरव्रजं
जिष्णुः संयमराज्यमाप्य परमप्रीतिप्रतानप्रदम् ।
निःशेषामुपचक्रमे वसुमतीमाक्रान्तुमुद्यत्तप-
स्तेजोदुर्जयतां दधत् परिवृतः कच्छादिभिः साधुभिः ॥१६५॥[3]

॥ इति श्रीवायटगच्छीयाचार्यश्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्र-
विरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिताभिधाने महाकाव्ये
वीराङ्के श्रीआदिनाथचरिते वसन्तोत्सवखेलनभगवद्वैराग्यश्रीभरत-
राज्याभिषेकसांवत्सरिकदानदीक्षोत्सवप्रकाशो नाम
द्वादशः सर्गः[5] ॥ १२ ॥

श्रेयांसि प्रतनोतु वः प्रतिदिनं श्रीनाभिजन्मा जिनो
यस्यांसस्थलसीम्नि केशपटली भिन्नेन्द्रनीलप्रभा ।
सोत्कण्ठं परिरम्भसम्भ्रमजुषः साम्राज्यलक्ष्म्याश्चिरं
वेल्लद्बाहुविटङ्ककङ्कणकिणश्रेणीव सम्भाव्यते ॥ १ ॥[6]

स्वस्मिन् विश्वममी समीक्ष्य विमुखं मन्ये [7]विषण्णा गुणाः
श्रीमत्पद्म ! तपस्विनः शुचितमं त्वामाश्रमं चक्रिरे ।
तेनात्र त्वयि तत्प्रभावविभवैर्मुक्त्वा मिथः शाश्वतं
वैरं वारिधिपुत्रिकाविधिसुते स्वैरं [8]परिक्रीडतः ॥ २ ॥[9]

ग्रन्थाग्रं ॥ २५७ ॥[10]



१ शिखरिणी । २ द्रुतविलम्बितम् । ३ शार्दूलविक्रीडितम् । ४ क–'इत्याचार्य०' । ५ 'समाप्तः' इत्यधिकः ख–पाठः । ६ शार्दूल० । ७ क–'निषण्णा' । ८ ख–'सदा दीव्यतः' । ९ शार्दूल० । १० 'सारस्वतामृताम्भोधि–समुल्लासनचन्द्रमाः । अजरामरतां देया–दमरः स्ववचःकरैः ॥ १ ॥' इत्यधिकः ख–पाठः प्रक्षिप्त इव भाति ।

## त्रयोदशः सर्गः १३

सं[1] वोऽव्यान्नाभिभूः श्रेयः–कुम्भः शान्तरसान्तरः ।
बोधिद्रुमदलायन्ते, यस्य कण्ठतटे जटाः ॥ १ ॥[2]

श्रीयुगादिप्रभोर्जीया–न्नवीनो ज्ञानभानुमान् ।
लोकालोकावलोकाय, प्रकाशो यस्य शाश्वतः ॥ २ ॥

समं कच्छ-महाकच्छ-मुखै[3]र्ऋषिवरैर्विभुः ।
विजहारावनीं मूर्त्तै–र्मूलोत्तरगुणै[4]रिव ॥ ३ ॥

पारणाहेऽपि प्रभोः शुद्धभिक्षाया असम्भवः

न प्राप पारणाहेऽपि, क्वापि भिक्षां भ्रमन् विभुः ।
जनस्तदाऽनभिज्ञो हि, भिक्षां दातुमृजुर्भृशम् ॥ ४ ॥

केचित् त्वरापराभूत–समीरणरयान् हयान् ।
केऽपि सम्भ्रमतो जम्भ–शुम्भिकुम्भिनिभानिभान् ॥ ५ ॥

परे कुलकुमारी दिक्–कुमारीसोदरा इव ।
अन्ये स्वर्णोच्चयं स्वः[5]श्री–तेजस्तवकितं किल ॥ ६ ॥

इतरे स्फुरितव्योम–चित्रं चित्रं मणिव्रजम् ।
अपरे दिविषद्दूष्य–सममंशुकमण्डलम् ॥ ७ ॥

राजानमेव जानन्तो, जनास्ते पूर्ववत् प्रभुम् ।
भिक्षायै भ्रमतस्तस्य, प्राभृतं भक्तितो व्यधुः ॥ ८ ॥[6]–कलापकम्

विभुश्चतुर्विधाहार[7]–भिक्षामवाप्नुवन्नपि ।

---

१ इदं पद्यं न वर्तते क–प्रतौ । २ ४४१तमपर्यन्तानि पद्यानि वर्तन्तेऽनुष्टुप्छन्दसि । ३ प्रमुखैः । ४ पञ्च महाव्रतानीति मूलगुणाः, उत्तरगुणास्तु सूत्रकृताङ्ग( श्रु. १, अ. १४ )वृत्तौ निर्दिष्टा यथा—

"पिंडस्स जा विसोही समिईओ भावणा तवो दुविहा ।
पडिमा अभिग्गहा वि उत्तरगुणमो वियाणाहि ॥"
[ पिण्डस्य या विशोधिः समितयो भावनास्तपो द्विविधम् ।
प्रतिमा अभिग्रहा अपि चोत्तरगुणा ( इति ) विजानीहि ]

५ ख–'स्वश्री–' । ६ ख–प्रतौ सप्तमाष्टमयोः पद्ययोः क्रमविपर्ययः । ७ अशन-पान-खादिम-स्वादिमेत्याहारस्य चातुर्विध्यम् । तत्र "अश्यत इत्यशनम्–ओदनादि, पीयत इति पानम्–सौवीरादि, खादः प्रयोजनमस्येति खादिमं–फलवर्गादि, स्वादः प्रयोजनमस्येति स्वादिमं–ताम्बूलादि" इति स्थानाङ्ग( स्था. ४, उ. २ )वृत्तौ २२०तमे पत्रे ।

अदीनो विहरन् सेहे, क्षुत्-तृष्णाऽऽदीन् परीषहान् ॥ ९ ॥
निरीहो निर्ममो मौनी, स्वात्मारामैकमानसः ।
पवमान [1]इवाबद्धो-ऽपावयद् विहरन् महीम् ॥ १० ॥
[2]सहस्रास्तेऽपि चत्वारः, क्षितीशा दीक्षिताः स्वयम् ।
अनुजग्मुर्जगन्नाथं, यूथाधिपमिव द्विपाः ॥ ११ ॥

कच्छादीनां मुनीनां महाचिन्ता

राजन्यमुनयः कच्छा-दयः स्वच्छा[3]शयास्ततः ।
क्लान्ताः क्षुदादिभिस्तेऽथ, चेतस्येतदचिन्तयन् ॥ १२ ॥
तथा प्राक् प्रभुणाऽनेन, प्रसादं प्रापिता वयम् ।
[4]यथा नैनं विना क्वापि, प्राप्नोत्यस्मन्मनो रतिम् ॥ १३ ॥
अयमेवा[5]र्पयत् प्राज्यं, राज्यं तदमुना विना ।
किं न[6]स्तेनेति त[7]न्मुक्त्वा, प्रभुमेवानुजग्मिरे ॥ १४ ॥
असंस्तुत इवास्माकं, न सम्मुखमपीक्षते ।
सम्प्रत्यवागवात्सल्यो, नास्मानालपयत्यपि ॥ १५ ॥
तथोपरोध्यमानोऽपि, नम्यमानोऽपि मानवैः ।
दीयमानं स सन्मानं, नैव गृह्णाति किञ्चन ॥ १६ ॥
[8]मातङ्गानिव मातङ्गां-स्तुरगांस्[9]तु(स्तू?)रगानिव ।
न कन्या विषकन्याव-द्देष सद्वेषवत् स्पृशेत् ॥ १७ ॥
अकल्याणवत् [10]कल्याणं, भूषणं दूषणं यथा ।
[11]सपत्नानिव रत्नानि, [12]दाम दामेव वर्जयेत् ॥ १८ ॥
विषाक्तानीव नाश्नाति, फलानि [13]वनजान्यपि ।
नद्यादिजान्यपि जला-न्युच्छिष्टानीव नो पिबेत् ॥ १९ ॥
स्नात्रं विलेपनं वस्त्र-परिधानं विभूषणम् ।

---

१ क–'इत्यबद्धो'। २ 'सहस्र'शब्दः पुंनपुंसकलिङ्ग इति स्पष्टं ज्ञायते श्रीहेमचन्द्रसूरिकृतलिङ्गानुशासनस्य निम्नलिखितपद्यात्—

"अलिङ्गरः कूवर-कूरवेर—नीहार-हिञ्जीर-सहस्र-मेढ्राः ।
संसार-सीरौ तुवरश्च सूत्र—शृङ्गार-पुण्ड्रा-ऽन्तर-कर्णपूराः ॥ १११ ॥"

३ ख–'शयत्वतः'। ४ क–'यथाऽनेन'। ५ ख–'वार्जयत्'। ६ राज्येन। ७ राज्यम्। ८ श्वपचान्। ९ चिन्त्यं पदमिदमिति भाति। १० सुवर्णम्। ११ क–'सपत्रानिव'। १२ मालाम्। १३ क–'विविधान्यपि'।

काये करोति नो कर्म, परिकर्म कुकर्मवत् ॥ २० ॥
वपुरावृणुते रेणुः, समीरणसमीरितः ।
सोऽस्वेदस्य विभोरस्य, मलत्वं कलयेन्न तु ॥ २१ ॥
नातपेन न शीतेन, शैलवत् क्लिश्यते क्वचित् ।
न शेते नोपविशति, कदापि पवमानवत् ॥ २२ ॥
असौ सर्वसहः सर्वं–सहेव सहतेऽन्वहम् ।
मारुता-ऽऽतप-शीतानि, स्फीतान्यप्राप्तकम्पनः ॥ २३ ॥
पीड्यते क्षुत्पिपासाऽऽद्यैः, स्वामी यन्न मनागपि ।
ततो ध्रुवमयं धातु–मुक्तमूर्त्तिरमर्त्यवत् ॥ २४ ॥
भिक्षामलभमानाः क्षुत्–पिपासाभ्यां पुनर्वयम् ।
पीड्यामहेतमां स्वामी, न वक्ति किमु कुर्महे ? ॥ २५ ॥
एवं ते साधवो ध्यात्वा, स्वामिसन्निधिसेवकौ ।
स्ववर्गस्याग्रगौ कच्छ–महाकच्छौ बभाषिरे ॥ २६ ॥
अश्नात्यन्नं पिबत्यम्बु, कदापि न हि मुक्तवत् ।
नौस्वप्नं इव शेतेऽसौ, स्वामी नो वक्ति मूकवत् ॥ २७ ॥
शीते यवस्तम्ब इव, जवासक इवातपे ।
वर्षणे कर्षणमिव, स्वामी सम्मदमाश्रयेत् ॥ २८ ॥
नापेक्षते परीवारं, महारण्येष्वपि भ्रमन् ।
शाश्वताभयसन्धानः, पञ्चानन इव प्रभुः ॥ २९ ॥
तत् तपः प्रभुरेवैतत्, कर्त्तुं शक्तो वयं तु न ।
सुपर्णेनैव जलधि–र्लङ्घ्यते न तु वायसैः ॥ ३० ॥
उत्तीर्यते हि जङ्घालै–र्महारण्यं न पङ्गुभिः ।
प्रकाश्यते भास्वतैव, भुवनं तारकैर्न तु ॥ ३१ ॥–युग्मम्
तदा त्यक्तानि राज्यानि, स्वानि स्वाम्यनुगामिभिः ।
भरतेन गृहीतानि, तानि नास्माल्लभामहे ॥ ३२ ॥
यद्येनमेव भरतं, भजामो जीविकाकृते ।
मुक्त्वा स्वामिनमस्माकं, ततं एव भयं ततः ॥ ३३ ॥

१ ख–'किञ्चित्'। २ पृथ्वीव। ३ पवन०। ४ क–'नाखिन्न'। ५ देवः। ६ क–'यवा०'। ७ भरतात्। ८ क–'न त'। ९ भरतात्।

तदाऽऽर्यौ ! क्व वयं यामः[1]?, क्वास्महे? किमु कुर्महे ? ।
युवामेव यदासन्नौ[2], स्वामिनो भाववेदिनौ ॥ ३४ ॥
इति तैः कथिते कच्छ–महाकच्छावथोचतुः ।
भावः सम्भाव्यते नाम, स्वामिनः केन मौनिनः ? ॥ ३५ ॥
यदि तीरागतैस्तागः[3], सागरस्यावगम्यते ।
यदि मूलाश्रितैर्मेरो–र्मौलिचूलाऽवलम्ब्यते ॥ ३६ ॥
यदि व्योमचरैर्व्योम्नो, मानमुन्मीयते क्वचित् ।
पार्श्वे श्रितैस्तदाऽस्माभिः, प्रभोर्भावो विभाव्यते ॥ ३७ ॥–युग्मम्
कलत्रपुत्रपौत्रादि, सर्वं निर्मुच्य निर्ममः ।
प्रत्यहं पूज्यमानोऽपि, सुरासुरनरेश्वरैः ॥ ३८ ॥[4]
प्राज्यं साम्राज्यमुत्सृज्य, दुस्तपं तप्यते तपः ।
कामेन येन केनापि, जानाति प्रभुरेव तम्[5] ॥ ३९ ॥–युग्मम्
इत्याद्यालोच्य 'गङ्गा'या–स्तीरगानि वनानि ते[6] ।
सर्वे शिश्रियुरासंश्च, कन्दमूलफलाशिनः ॥ ४० ॥
कन्दमूलफलाहारा, जटावल्कलधारिणः ।
ततः प्रभृति सम्भूता–स्तापसा वनवासिनः ॥ ४१ ॥

नमिविनम्योस्तापसवेषधारिस्वपितृसमीपमागमनम्

ततः कच्छ-महाकच्छ–तनुजौ[7] मनुजोत्तमौ ।
प्रयातपूर्विणौ दूर–देशमीशनिदेशतः ॥ ४२ ॥
नामतो नमि-विनमी, प्राप्तौ तत्काननाध्वना ।
प्रेक्ष्य स्वपितरावेतौ, चेतसीति प्रदध्यतुः ॥ ४३ ॥–युग्मम्
जगन्नाथेऽपि नाथे किं, निर्नाथाविव दुःस्थितौ ? ।
आवयोर्जनकावेतौ, निर्जने कानने स्थितौ ॥ ४४ ॥
क्व रत्नमुकुटो मौलौ?, क्व जटावलिमण्डलम् ? ।
क्वाङ्गे कस्तूरिकालेपः ?, क्व रजःस्वेदजो मलः ? ॥ ४५ ॥

---

१ क–'यामः' । २ क–'सदासन्नौ' । ३ तलस्पर्शः । ४ इदं पद्यमलं न समस्ति क–प्रतौ । ५ मनोऽभिलाषम् । ६ कच्छादयः । ७ ख–'तनूजौ' ।

क्वानुकूलं दुकूलं तत्?, प्रतिकूलं क्व वल्कलम्? ।
क्व स स्तंम्बेरमस्कन्धा-रोहः? क्वांह्रिविहारता ॥ ४६ ॥
कामधेनोरपत्यानां, दुग्धालब्धिरियं ध्रुवम् ।
कल्पद्रुमूलीनाना-मियं दारिद्र्यदीनता ॥ ४७ ॥
करस्थचिन्तारत्नाना-मियं चिन्तितविच्युतिः ।
तपनोपान्तमाप्ताना-मियं ध्वान्तविडम्बना ॥ ४८ ॥
सुधाकुण्डसनीडानां, पीडाऽसौ पापतापजा ।
यदेते भूभृतोऽभूवन्, दुर्विधाः स्वामिसन्निधौ ॥ ४९ ॥-विशेषकम्
ध्यात्वेति पृष्टौ नत्वाऽऽभ्यां, किमेतत् पितराविति ।
स्वच्छौ कच्छ-महाकच्छौ, तावप्येतदवोचतुः ॥ ५० ॥
तृणवद् राज्यमुत्सृज्य, भुवं कृत्स्नां विभज्य च ।
प्रददौ भरतादिभ्यः, स्वयं स्वाम्यभजद् व्रतम् ॥ ५१ ॥
वत्सौ! दीक्षा तदा मौन-शालिना स्वामिना समम् ।
भक्तिवेश्मभिरस्माभि-रभाजि रभसावशात् ॥ ५२ ॥
सा दीक्षा क्षुत्तृषारुग्णै-र्गलिभिर्धूरिवोक्षभिः ।
तद्भारधारणासह्यै-र्निर्लज्जैस्त्यज्यतेतराम् ॥ ५३ ॥
जगन्नाथादृते मार्गे, यद् गन्तुं पङ्गवो वयम् ।
स्थितास्तत् त्यक्तगार्हस्थ्याः, पवित्रेऽत्र तपोवने ॥ ५४ ॥
आवामप्यर्थयिष्यावः, पृथ्वीभागं जगद्विभोः ।
इत्युक्त्वा नमि-विनमी, तौ नत्वा प्रभुमीयतुः ॥ ५५ ॥
स्थितः प्रतिमया मौनी, निर्ममो निष्परिग्रहः ।
ताभ्यामित्यर्थितो नाथः, क्व विवेकोऽथवार्थिनि? ॥ ५६ ॥
आवां प्रतीक्ष्य! सम्प्रेष्य, दूरदेशान्तरे स्वयम् ।
भूरियं भरतादिभ्यो, विभज्य भवता ददे ॥ ५७ ॥
आवयोरपि विश्वेश!, क्ष्मालेशः प्रेष्यलेशयोः ।
अर्प्यतां सविता विश्वे, वसुभिः किं न भासयेत्? ॥ ५८ ॥

१ हस्तिस्कन्ध० । २ ख-'क्वाङ्घ्रिविहारिता' । ३ क-'व्रजद् व्रतम्' । ४ वृषभैः । ५ अस्माभिः । ६ क-'भरतो' । ७ सेवकाण्वोः ।

आवां न तावकादेश–सेवाहेवाकतश्च्युतौ ।
प्रभो ! ततः कुतो नो वाङ्–मात्रेणापि प्रसीदसि ? ॥ ५९ ॥
इत्युच्चैरुच्यमानोऽपि, किञ्चित् प्रोवाच न प्रभुः ।
यः स्वदेहेऽपि निर्मोहः, समोहः क्वास्तु सोऽनयोः ? ॥ ६० ॥
स्वाम्ययं वक्तु वा मा वा, नावयोर्नायकोऽपरः ।
क्व चक्रा-ऽम्बुजयोः सूर्या–दन्यत्र स्वेरता मता ? ॥ ६१ ॥
प्रतिश्रुत्येति तौ सेवां, नाथस्यैवाथ तेनतुः ।
एकाग्रहृदयैः सर्वं, गृहीतं हि फलेग्रहि ॥ ६२ ॥
नीराश्रयाहृतैर्नीरै–रन्वहं नलिनीदलैः ।
प्रभोरभ्यर्णभूस्ताभ्यां, सिक्ता भक्तिरसैरिव ॥ ६३ ॥
रजोवियुक्ता निस्तापा, पयोभिस्तैः पृथिव्यभूत् ।
सद्यः प्रभुपदस्पर्श–प्रकृतैः सुकृतैरिव ॥ ६४ ॥
यं प्रभोः परितः पुष्प–प्रकरं किरतः स्म तौ ।
सं तयोर्भ्रमराराव–निभाद् भावमवर्णयत् ॥ ६५ ॥
कृष्टासी सन्निकृष्टे तौ, प्रभोरुभयतः स्थितौ ।
असिधारेशतपसो–स्तैक्ष्णान्तरमिवेक्षितुम् ॥ ६६ ॥
तत्खड्गयोः प्रभुर्धारा–चतुष्के प्रतिबिम्बितः ।
पञ्चमूर्तिरभूत् पञ्चे–न्द्रियारिविजयोद्यतः ॥ ६७ ॥
तौ सदेशं सदेशस्य, तमो हर्तुं विहारिणः ।
न मुञ्चतः स्म चण्डांशोः, शुक्रचन्द्रसुताविव ॥ ६८ ॥
रजश्रीराञ्चलैनैतौ, देहतो जह्रतुः प्रभोः ।
ध्यानावेशेन तस्यैव, हृदः शम-दमाविव ॥ ६९ ॥
दंशादीन् देहदेशात् तौ, वारयामासतुर्विभोः ।
धरित्रीशस्य सन्मन्त्र–विक्रमाविव शात्रवान् ॥ ७० ॥
भक्त्या वितत्य दध्राते, प्रभोरुपरि तौ पटम् ।
नभोनभस्यावम्भोद–वद् विश्वस्यातपच्छिदे ॥ ७१ ॥

१ चक्रवाक-पद्मयोः । २ जनैः । ३ पुष्पप्रकरः । ४ क–'प्रतिबिम्बतः' । ५ प्रभोः । ६ शुक्र-बुधौ । ७ श्रावण-भाद्रपदौ मासौ ।

स्वामिनः स्थान-यानादि, तौ सदैवानुसंश्रितौ ।
जितेन्द्रियत्वं सत्पुंसो, विवेक-विनयाविव ॥ ७२ ॥
[1]मुखमङ्गोत्तमं शब्द-[2]प्रवणौ श्रवणाविव ।
प्रेक्षाप्रख्ये श्रितौन्नत्यं, नासावंशमिवेक्षणे ॥ ७३ ॥
सरलौ विपुलश्रीकं, वक्षःपीठं भुजाविव ।
निष्प्रकम्पप्रभास्मेरौ, मेरुं शशि-रवी इव ॥ ७४ ॥
धीरं धर्माश्रितौ चक्र-रक्षाविव महारथम् ।
सेव्यं सेवारसावीशं, चामरो[3]च्चालिनाविव ॥ ७५ ॥
तावहर्निशमुद्युक्तौ, प्रतिमोपासनापरम् ।
देवदेवं सिषेवाते, पार्श्वद्वयकृताश्रयौ ॥ ७६ ॥—कलापकम्
प्राञ्जली [4]प्राञ्जलौ नित्य-मित्यनल्पमजल्पताम् ।
तौ प्रभुं प्रभुरन्यो नौ, नाभूद् भूपत्वदो भव ॥ ७७ ॥

धरणस्य नमिविनमिभ्यां सहालापसंलापः

अन्यदा धरणो नाम, नागानामधिपः प्रभुम् ।
प्राप पुण्यस्पृहो नन्तुं, शास्त्रेप्सुरिव सद्गुरुम् ॥ ७८ ॥
स भक्त्या सपरीवारो, नत्वाऽर्चित्वाऽस्तवीत् प्रभुम् ।
कदापि हि न मुह्यन्ति, दक्षाः स्वार्थसमर्थने ॥ ७९ ॥
सोऽपश्यन्नमि-विनमी, प्रभोः पार्श्वद्वयाश्रितौ ।
पूर्णिमारजनीप्रान्ते, [5]वियतोऽर्कविधू इव ॥ ८० ॥
चिन्तितं याचमानौ ता-वकिञ्चनमपि प्रभुम् ।
आर्जवाञ्जनकं बाला-विवालापीत् फणीश्वरः ॥ ८१ ॥
कौ युवां त्रिजगन्नाथं, स्वार्थप्रार्थनमानसौ ।
भजेथे किमजल्पन्तं, जीमूतं चातकाविव ? ॥ ८२ ॥
ददाने वार्षिकं दानं, [6]विभौ कुत्र युवां गतौ ? ।
न श्रेयोऽवसरज्ञाः स्युः, सुकृतैर्दूरतः कृताः ॥ ८३ ॥
सर्वोऽप्यवसरे श्रेयः, प्रसरन् श्रयति स्फुटम् ।

१ क-'मुख०' । २ क-'प्रवणं' । ३ क-'चालना' । ४ सरलौ । ५ आकाशस्य ।
६ क-'कुत्र युवां विभौ गतौ' ।

रजन्यामेव भजते, चन्द्रश्चन्द्रातपं[1] चरन् ॥ ८४ ॥
प्रार्थयेतार्थिदत्तार्थै-र्निःस्वान् विज्ञो न दानिनः ।
याचते चातको नैव, नीरं शारदनीरदान् ॥ ८५ ॥
दानम्र्लान[2]धनो दानी, धिनोत्यर्थैः कुतोऽर्थिनः ? ।
किं चन्द्रोऽह्नि चकोराणां, तुच्छज्योत्स्नः प्रयच्छति ? ॥ ८६ ॥
सम्प्रति प्रतपत्येष, त्यक्ताशेषपरिग्रहः ।
प्रभुस्तपस्ये शाखीव, क्षिप्ताखिलदलावलिः ॥ ८७ ॥
निर्नीरानिव कासारान्, निच्छायानिव पादपान् ।
लूनान्नानिव केदारान्, कः सुधीर्निर्धनान् श्रयेत् ? ॥ ८८ ॥
अवश्यं देवदेवस्य, सेवकः कोऽप्यसाविति ।
गौरवात् तावुभौ नाग-विभुं प्रति जजल्पतुः ॥ ८९ ॥
चकोराणां यथा चन्द्रो, रथाङ्गानां यथा रविः ।
तथा स्वाम्ययमस्माकं, वयमस्यैव सेवकाः ॥ ९० ॥
प्रभोरादेशतो देश-मावां दूरं गतौ तदा ।
स्वेभ्योऽभ्यदाद् विभज्योर्वीं, विभुर्वत्सलतामिव ॥ ९१ ॥
स्वयं राज्यं परित्यज्य, प्रव्रज्यां भेजिवान् विभुः ।
यदर्थं शक्यते तन्न, ज्ञातुं कर्मविपाकवत् ॥ ९२ ॥
प्रस्तावोऽङ्गसहोत्थानां, स्वामिनोऽनुगमे सदा ।
किं कदापि न जायेत, छाया कायाऽनुयायिनी ? ॥ ९३ ॥
अकिञ्चनोऽपि नौ स्वामी, सम्पदं प्रापयिष्यति ।
दत्ते चिन्तामणिश्चेत-श्चिन्तितान्यपरिग्रहः ॥ ९४ ॥
अजल्पन्तोऽपि कल्याण-रूपाः कल्याणकारिणः ।
श्रेयसे किं न दूर्वा-ऽऽम्र-पिप्पला-ऽशोकपल्लवाः ? ॥ ९५ ॥
दारिद्र्यं विद्रवत्याशु, सेवयैव शुभात्मनः ।
शमं[3] तमः समभ्येति, प्रभयैव प्रभापतेः ॥ ९६ ॥
इत्युक्तवन्तौ तौ व्याल-पतिरालपति स्म सः ।
किं विषादपि पीयूषं, स्यादिति भ्रान्तिदं वचः ॥ ९७ ॥

---

१ चन्द्रिकात् । २ क-'म्लान०' । ३ नाशम् ।

वत्सावच्छाशयौ ! युक्ति-युक्तोक्तिर्युवयोरियम् ।
किन्तूपदिश्यते स्वामि-सेवासाधर्म्यतो हितम् ॥ ९८ ॥
स्वामीव स्वामिनो मान्यः, सूनुरूपगुणोऽपि सन् ।
पङ्गुः[1] प्रवेशितः पङ्क्तौ, ग्रहाधीशसुतो[2] ग्रहैः ॥ ९९ ॥
स्वामिभूः स्वामिनः श्रीमान्, सेव्योऽनणुगुणाग्रिमः ।
भरतो वां भजेद् भृङ्गः, कैरवं कमलान्[3]निशि ॥ १०० ॥
स्वाम्येव सेवितः सत्यं, सेविते स्वामिसम्भवे ।
शरीरेऽलङ्कृतोऽन्तस्थः, शरीरी स्यादलङ्कृतः ॥ १०१ ॥
सा सेवकस्य भक्तिर्या, स्वामिनोऽनु तदाऽऽत्मजे ।
प्रत्यक्षं न तथा[4] प्रीतिः, स्तुत्येऽत्यक्षं[5] स्तुतेर्यथा ॥ १०२ ॥
इत्युक्तिपारे पाताल-पालमालपतः स तौ ।
श्रुतिपीततद्वाग्भार-सुधोद्गारकिरा गिरा ॥ १०३ ॥
सेव्यः स्वामिसुतः किन्तु, स्वामिनि स्वर्गगामिनि ।
सर्पाः स्युः शाश्वते शम्भौ, भूषणं षण्मुखस्य[7] न ॥ १०४ ॥
स्वामिनोऽनाज्ञया स्वामि-सूनुः सेव्यो न सेवकैः ।
अहेतिहननं[8] ज्ञेयं, राज्ञामाज्ञावहेलनम् ॥ १०५ ॥
नयज्ञा नाश्रयन्त्येव, सति स्वामिनि तत्सुतम् ।
कदाऽपि जनकेऽपि स्यु-स्तनया विनयातिगाः ॥ १०६ ॥
स्वामिनं जनिता जन्म-जीवनं निर्जने वने ।
सन्त्यज्यैकाकिनं तद्भू[9]-भजने को नयोऽस्तु नौ ? ॥ १०७ ॥
स्वामिनं मलिनात्मा[10]ऽऽशु, श्रिया मुक्तं समुज्झति ।
दिनान्ते नलिनं म्लानं, मधुपो नैव सेवते ॥ १०८ ॥
जीवनेनापि निर्मुक्तं, कुलीनो नोज्झति प्रभुम् ।
अपि शुष्कं त्यजेन्नैव, सरस्तीरं तरूत्करः ॥ १०९ ॥
सेवित्वा स्वामिनममुं, नैव सेवावहे परम् ।

---

१ अनूरुः । २ सूर्यस्य पुत्रः-शनैश्चरः । ३ क-'कमलान्यपि' । ४ क-'तदा' । ५ क-'स्तुत्योन्यक्षं' । ६ परोक्षंस्तवार्हे पुरुषे । ७ कार्तिकेयस्य । ८ अशस्त्रो वधः । ९ भरत० । १० पुरुषः ।

चिन्तारत्नं करे कृत्वा, काचं कश्चेतनः श्रयेत् ? ॥ ११० ॥
प्राप्य कल्पतरोश्छायां, [1]थुहिमायाति कः कृती ? ।
क्षीरनीरनिधेः क्षीरं, पीत्वा क्षाराम्बु कः पिबेत् ? ॥ १११ ॥—युग्मम्

वाचा याचावहे नावां, कामितं स्वामितोऽपरम् ।
हित्वाऽम्भोदं नदाद्यम्भ-श्चातकोऽपि न चुम्बति ॥ ११२ ॥

किमनल्पेन जल्पेन, स्वामिनं तावदावयोः ।
मुक्त्वैनमात्मानमिव, मुमुक्षोर्नाश्रयः परः ॥ ११३ ॥

भरतः कुरुतां राज्यं, [2]प्राज्यं न जल्प्यतां त्वया ।
तेनापि नौ परा प्रीति-र्यद्भवत्यमुतः प्रभोः ॥ ११४ ॥

इत्येतयोः प्रभौ भक्त्या, प्रसन्नः पन्नगेश्वरः ।
बभाषे तोषपीयूष-संश्लेषसुभगां गिरम् ॥ ११५ ॥

साधु साधु महासत्त्वौ !, प्रतिज्ञा युवयोरियम् ।
यदेनं स्वामिनं हित्वा, नावां सेवावहे परम् ॥ ११६ ॥

अहो वां निबिडा भक्ति-रहो वां निश्चयो दृढः ।
अहो वां परमं स्थैर्यं, पर्युपास्तौ जगत्पतेः ॥ ११७ ॥

जयत्यपि जगन्नाथे, भक्तिः स्वस्यैव सिध्यति ।
स्फुरत्यपि सहस्रांशौ, दृष्टिः स्वस्यैव पश्यति ॥ ११८ ॥

तत्त्वमेतत् [3]त्वसावेव, प्रभुस्त्रिभुवनोत्तरः ।
भविनो भुवनैश्वर्यं, यत्प्रभावान्न दुर्लभम् ॥ ११९ ॥

न भक्तेष्वनुरक्तोऽयं, नाभक्तेषु विरक्तिभाक् ।
श्रेयोऽश्रेयः सृजेत् तत् तत्, [4]तेषु स्यात् त्वस्य वैभवात् ॥ १२० ॥

सेवयैवास्य दास्यः स्यु-रवश्यं राज्यसम्पदः ।
पुंसां सद्यो भवेद् भाग्यं, सुभगंभावुकात्मनाम् ॥ १२१ ॥

योऽस्यैवांह्रिसरोजेषु, [5]राजहंसायतेऽन्वहम् ।
यशो-महोभ्यामैश्वर्याद्, राजहंसति स क्षितौ ॥ १२२ ॥

---

१ 'थोर' इति भाषायाम् ।　२ क—'न प्राज्यं' ।　३ ख—'तदसावेव' ।　४ भक्ताऽभक्तेषु ।　५ राजहंस इवाचरति ।

योऽतिपुष्यत्यमुष्यांह्रि–सरोरुहि षडंह्रिताम् ।
षट्खण्डोर्वीशेखरांह्रिं, तमुत्काऽश्नति चक्रिता ॥ १२३ ॥
यः सरत्यनुरक्तोऽह्रि–पद्ममस्यारुणप्रभम् ।
आकृष्टेव पुरस्तिष्ठ–त्यस्य[1] विद्याधरेन्द्रता ॥ १२४ ॥
सेवयाऽस्य वशीकार–विद्ययेव वशीकृताः ।
पुमांसमुपसर्पन्ति, त्रिदशाधिपतिश्रियः ॥ १२५ ॥
यो महत्तममारोह–त्यस्य सेवाक्रमं [2]विभोः ।
तेनोन्नतमपि प्राप्यं, सुखेन पदमक्षयम् ॥ १२६ ॥

नमिविनमिभ्यां गौरीप्रज्ञप्त्यादिविद्यानां वैताढ्यपर्वतराज्यस्य च वितरणम्

धरणो नाम नागाना–मिन्द्रः पातालपालकः ।
नन्तुमेनं[3] समेतोऽस्मि, स्वामिनोऽस्यैव सेवकः ॥ १२७ ॥
युवामपि यदस्यैव, सेवकौ तद् दिशामि वाम् ।
वयं[4] विद्याधरैश्वर्यं, प्रभुभक्तिर्भवं फलम् ॥ १२८ ॥
प्रभोरेव प्रसादोऽयं, माऽन्यथा मान्यतामिदम् ।
यदिन्दुकान्तादमृतं, तदिन्दोः स्रवति ध्रुवम् ॥ १२९ ॥
यदादर्शोद्भवं तेज–स्तमो हन्ति तदर्कजम् ।
वायुर्व्यनक्ति सौरभ्यं, यत् तत् कुसुमसम्भवम्[5] ॥ १३० ॥
यदम्बुदो ददात्यम्बु, तदम्बुनिधिसंश्रितम् ।
अम्भोभिर्मन्त्रितं यद् रुग्–घ्नं तन्मन्त्रजृम्भितम् ॥ १३१ ॥
इत्युक्त्वा गौरी-प्रज्ञप्ति–प्रमुखाः पाठसिद्धिदाः ।
सोऽ[6]ष्टचत्वारिंशत् सह–स्राणि विद्यास्तयोर्ददौ ॥ १३२ ॥

–प[7]ञ्चभिः कुलकम्

'वैताढ्या'द्रिं युवां यात्वा, श्रेणियुग्मे पुरावलीम् ।
संस्थाप्य राज्यं कुर्वाथा–मित्थं तावादिशच्च सः ॥ १३३ ॥
सद्यो हृदाऽऽलवालोद्यद्–विद्यावल्लिभवं नवम् ।
'पुष्पकं' पुष्पकं नाम, विमानं तौ विचक्रतुः ॥ १३४ ॥

---

१ नरस्य । २ ख–'प्रभोः' । ३ भगवन्तम् । ४ क–'भवे' । ५ क–'सौरभम्' ।
६ एतासां सर्वासां नामानि क्वापि नोपलभ्यन्ते । ७ क–'विशेषकम्' ।

तौ नत्वैनं[1] विमानं त-न्नागनेतुरनुज्ञया ।
आरोहतः स सद्वृत्तं, यशःश्रेयश्रयाविव ॥ १३५ ॥
पुण्येनेव वपुःस्थेन, नागनाथेन सङ्गतौ ।
विमानस्थौ प्रतस्थाते, तारापथपथेन[2] तौ ॥ १३६ ॥

पुष्पकविमाने उपविश्य वैताढ्यं प्रति गमनम्

प्रभूपास्तिफलं लक्ष्मीं, लक्षयन्तावथाक्षयाम् ।
प्रीतिं पित्रोः कच्छ-महा-कच्छयोस्तावयच्छताम् ॥ १३७ ॥
तथा प्रभुप्रसादोऽभू-न्न युष्मासु यथाऽऽवयोः ।
इत्यंयोध्यापतेस्तौ[3] स्वं, विद्यैश्वर्यमशंसताम् ॥ १३८ ॥
आकार्यावर्ज्य स्वजनान्, प्रीत्या परिजनानपि ।
विमानमुरुसन्मान-[4]मिवारोहयतः स तौ ॥ १३९ ॥
[5]तैरन्वितौ 'विनीता'याः, सम्भाष्य भरतादिकान् ।
तौ गतौ प्रति 'वैताढ्यं', श्रियाऽऽढ्यं करणं नृणाम् ॥ १४० ॥

मार्गस्य वर्णनम्

पूर्वा-ऽपरदिशो रत्न-लुब्धेनेवाब्धिना श्रितम्[6] ।
सीमायै सेतुं 'भरत'-दाक्षिणौदीच्यभागयोः ॥ १४१ ॥
पञ्चाशद्[7]योजनपृथुं, याम्योदीचीनदेशयोः ।
लभमानं नभोलक्ष्म्या, वेदीशयनविभ्रमम् ॥ १४२ ॥
सक्रोशषड्योजनानि, यातमन्तर्महीतलम् ।
भुवनेन्द्राणां भुवन-लक्ष्मीमिव निरीक्षितुम् ॥ १४३ ॥
पञ्चविंशतिसङ्ख्यानि, योजनानि समुन्नतम् ।
कर्तुं मुक्ताजालमिव, मौलौ[8] तारकमालया ॥ १४४ ॥
यान्तीभ्यां जनकाद् वार्द्धि-भर्त्तारं हिमभूभृतः ।
'गङ्गा'-'सिन्धु'भ्यां संश्लिष्टं,ताररूपं रसोर्मिभिः ॥ १४५ ॥
वहन्तं 'खण्डप्रपाता'-'तमिस्रा'ऽऽह्वावहे गुहे ।

---

१ प्रभुम् । २ आकाशमार्गेण । ३ भरतस्य । ४ क-'सुरसन्मान०' । ५ स्वजनैः । ६ 'वैताढ्य'पर्वतम् । ७ २४ अङ्गुलानि=१ हस्तः; ४ हस्ताः=१ धनुः, २००० धनूंषि=१ क्रोशः; ४ क्रोशाः=१ योजनम् । ८ मस्तके ।

पूर्व-पश्चिमदिग्लक्ष्म्यो-र्विलासनिलयाविव ॥ १४६ ॥
'सिद्धायतन'कूटेन, शाश्वतप्रतिमावता ।
शीर्षे सर्वेषु शैलेषु, मुकुटेनैव मण्डितम् ॥ १४७ ॥
तत्त्वैरिवार्हतं धर्मं, ग्रहैरिव मरुत्पथम् ।
सुमनःसंश्रयै रत्न-कूटैर्नवभिरङ्कितम् ॥ १४८ ॥
ऊर्ध्वं विंशतियोजन्या, याम्योदीचीनपार्श्वयोः ।
वहन्तं व्यन्तरावास-श्रेण्यौ कर्णावतंसवत् ॥ १४९ ॥
आमूलचूलिकं रूप्य-शिलावलयशालिनम् ।
शिरोधृतशाश्वतार्हद्-भवैः पुण्यैरिवोज्वलम् ॥ १५० ॥
कृतनृत्तं मरुत्कम्पैः, शाखिशाखाभुजव्रजैः ।
तौ तदाप्तिमुदेवाढ्यं, 'वैताढ्यं' प्रापतुर्गिरिम् ॥ १५१ ॥

—एकादशभिः कुलकम्

धरातो दशयोजन्या, तत्रोर्ध्वं धरणाऽऽज्ञया[2] ।
पुराणि दक्षिणश्रेण्यां, न्यधात् पञ्चाशतं नमिः ॥ १५२ ॥
पुरं श्री'रत्नपूर[3]-चक्रवाला'ऽऽह्वयं वरम् ।
पञ्चाशत्पुरमध्यस्थ-मध्यतिष्ठन्नमिः स्वयम् ॥ १५३ ॥
तथा तत्रोत्तरश्रेण्यां, धरणेन्द्रस्य शासनात् ।
पुराणि तत्क्षणं षष्टिं, निर्ममे विनमिर्नृपः ॥ १५४ ॥
विनमिर्नगरं नाग-नायकानुज्ञया स्वयम् ।
भेजे तत्पुरगर्भस्थं, नाम्ना 'गगनवल्लभ'म् ॥ १५५ ॥

---

१ "सिद्धायतनं कूटं १ दक्षिणभरतार्धनामधेयं २ च ।
खण्डप्रपातकूटं ३ तुर्यं तन्माणिभद्राख्यम् ४ ॥ ८३ ॥
वैताढ्याख्यं ५ पञ्चममथ षष्ठं पूर्णभद्रसंज्ञं ६ च ।
भवति तमिस्रगुहं ७ चोत्तरभरतार्धं च वैश्रमणम् ॥ ८४ ॥
वैताढ्ये नव कूटान्येवं ज्ञेयानि तत्र पूर्वाब्धेः ।
सविधे सिद्धायतनं ततः क्रमात् प्रत्यगखिलानि ॥ ८५ ॥"
इति क्षेत्रलोकप्रकाशे षोडशे सर्गे ।

२ क-'न्यया' । ३ ख-'रथ०' ।

ते प्रांशुरत्नवप्रांशु–पूरिताशापरम्परे ।
शिश्रियाते पुरश्रेण्यौ, शैलतव्योर्धटी[1]श्रियम्[2] ॥ १५६ ॥
तौ शाखानगरग्राम–स्तोमान् जनपदानपि ।
निवेश्योर्वीतलान्नीत्वा, वासयामासतुर्जनान् ॥ १५७ ॥
तत्राहूयाहिता यस्माद्, यस्माज्जनपदाज्जनाः ।
कृतास्तत्रापि तन्नाम्ना, ताभ्यां जनपदाभिधाः ॥ १५८ ॥
निजेषु नमि-विनमी, पुरेषु वृषभप्रभुम् ।
भक्तितोऽधिसभं जीव–मिवाध्यासयतां ततः ॥ १५९ ॥
मा[3] कार्षुर्दुष्कृतं विद्या–धरा विद्याभिरुद्धुराः ।
इत्येषां धरणोऽकार्षी–न्मर्यादां विदितामिति ॥ १६० ॥
अर्हतामर्हचैत्यानां, चरमां तनुमीयुषाम् ।
प्रतिमाप्रतिपन्नानां, चारुचारित्रधारिणाम् ॥ १६१ ॥
[4]विद्योद्धरा विधास्यन्ते, येऽवहीलनलङ्घने ।
सद्यो विद्या [5]विहास्यन्ति, तान् निर्भाग्यानिव श्रियः ॥१६२॥—युग्मम्
ये योषितं हनिष्यन्ति, नरं वा सात्मयोषितम् ।
अकाङ्क्षन्त्याश्च रन्तारो, विद्यास्त्यक्ष्यन्ति तान् क्षणात् ॥ १६३ ॥
एवमुद्दीर्य मर्यादा–मुच्चकैरुदचीकरत् ।
भुजङ्गपुङ्गवो रत्न–[6]मयभित्तिप्रशस्तिषु ॥ १६४ ॥
विद्याधराधिपत्ये तौ, निधायाराधकौ प्रभोः ।
व्यवस्थां तां व्यवस्थाप्य, तिरोऽभूद् भुजगप्रभुः ॥ १६५ ॥
विद्याः षोडश गौर्याद्या, जाता विद्याभृतां तथा ।
तेषां निकायास्तत्सङ्ख्याः, स्वस्वविद्याऽऽख्यया श्रुताः ॥ १६६ ॥
गौरीणां नाम्ना गौरेया, मनूनां मनुपूर्वकाः ।
गान्धारीणां तु गान्धारा, मानवीनां तु मानवाः ॥ १६७ ॥
विद्यानां कौशिकीनां तु, कौशिकीपूर्विकाः स्मृताः ।
विद्यानां भूमितुण्डानां, विदिता भूमितुण्डकाः ॥ १६८ ॥

---

१ "घटी चीरे च वाससः" इति मेदिनीकोशे ( द्विके श्लो० १८ )। २ ख–'वैटीश्रियम्'। ३ क–'अकार्षुर्दुष्करं'। ४ ख–'विद्याधरा'। ५ क–'निहास्यन्ति'। ६ ख–'मया०'।

विद्यानां मूलवीर्याणां, जल्पिता मूलवीर्यकाः ।
शङ्कुकानां शङ्कुकास्तु, पाण्डुकानां च पाण्डुकाः ॥ १६९ ॥
कालीनां कालिकेयाश्च, श्वपाकीनां श्वपाककाः ।
मातङ्गीनां च[1] मातङ्गाः, पार्वतीनां च पार्वताः ॥ १७० ॥
वंशालयानां विद्यानां, जाता[2] वंशालया इति ।
विद्यानां पांशुमूलानां, प्रथिताः पांशुमूलकाः ॥ १७१ ॥
विद्यानां वृक्षमूलानां, विख्याता वृक्षमूलिकाः ।
निकाया जज्ञिरे स्वस्व–विद्यानाम्नेति षोडश ॥ १७२ ॥
विद्याभृतां विभज्याष्ट, निकायान् नमिरग्रहीत् ।
अष्टौ विनमिरित्येतौ, जातौ विद्याधरेश्वरौ ॥ १७३ ॥
स्वीये स्वीये निकाये तौ, श्रेयःश्रीतुष्टिपुष्टिदाः ।
स्थापयाञ्चक्रतुश्चित्त, इव विद्याऽधिदेवताः ॥ १७४ ॥
सेवाकृतौ निष्प्रतिमौ, प्रतिमामृषभप्रभोः ।
नित्यं कृतक्षणौ भावात्, तात्रपूजयतामुभौ ॥ १७५ ॥
विभुभक्तिभवं विद्या–भृत्प्रभुत्वमुपेत्य तौ ।
बुभुजातेऽद्भुतान् भोगान्, धर्माभोगाविरोधतः ॥ १७६ ॥
मेर्वादिशैलोद्यानेषु, देवाविव कदापि तौ ।
विद्याधरीपरीवारौ, स्वैराचारौ विचेरतुः ॥ १७७ ॥
'नन्दीश्वरा'दितीर्थेषु, तौ कदाचन चक्रतुः ।
शाश्वतप्रतिमापूजां, सम्प्राप्तुं शाश्वतं पदम् ॥ १७८ ॥
'नन्दना'दिषूद्यानेषु, चारणर्षिमुखाम्बुजात् ।
कदापि पपतुः प्रीतौ, तौ भृङ्गाविव वाङ्मधु ॥ १७९ ॥[3]
तौ कदापि 'विदेहे'षु, विहृत्य श्रीमदर्हताम् ।
पीत्वा वागमृतं तृष्णा–तापपातकमौज्झताम् ॥ १८० ॥[4]
श्रितेऽपि तादृशैश्वर्ये, समं सन्मानसेवनात् ।
हर्षादिव त्रिवर्गेणा–लिङ्गितौ तौ निरर्गलम् ॥ १८१ ॥
जगन्नाथांहिहेमाब्जे, मञ्जुले मानसे तयोः ।

---

१ ख–'तु' । २ क–'याता' । ३–४ एतयोः पद्ययोः पूर्वापरीभावः क–प्रतौ ।

निवासं जनयामास, सम्यग् धर्मसितच्छदः ॥ १८२ ॥
प्रयोज्य प्रयतौ न्याय–रसायनमहर्निशम् ।
प्रजानामात्मनोऽप्यर्थं, तौ तुष्टिं निन्यतुः पराम् ॥ १८३ ॥
रङ्गरङ्गत्कुरङ्गाक्षी–नेत्रभङ्गितरङ्गिते ।
सुखं लक्ष्म्या समं राज्य–सरस्यैतौ विलेसतुः ॥ १८४ ॥
ते तु कच्छादयो राज–तापसा वल्कवाससः ।
महाशीता-ऽऽतपसहा, जटापटलशालिनः ॥ १८५ ॥
वनजीवकृतासङ्गा, 'गङ्गा'दक्षिणकूलगाः ।
सर्वंसहारुहो रेजु–र्गता जङ्गमतामिव ॥ १८६ ॥—युग्मम्
तेषां चतुर्थ-षष्ठादि–तपोभिस्तनुतो ध्रुवम् ।
निरीयुर्दुरितव्राता–स्ते कृशाकृतयस्ततः ॥ १८७ ॥
चकार पारणाहेऽपि, शीर्णपर्णाशिनां तपः ।
तेषां न तापं हृद्गर्भा–हितेशांह्रिसरोरुहाम् ॥ १८८ ॥
आर्या-ऽनार्येषु देशेषु, मौनवान् भगवानपि ।
विजहार निराहारो, निर्मोहत्वसहायवान् ॥ १८९ ॥

तपसो महिमा

अहो तपस्तीव्रतरं, त्यक्त्वा तीर्थङ्करैरपि ।
नापरास्त्रमुपादायि, कर्मणां मर्ममर्दने ॥ १९० ॥
ज्ञानैश्चतुर्भिर्युक्तोऽपि, सेवितोऽपि सुरा-ऽसुरैः ।
जिनोऽपि केवलज्ञानं, न प्राप्नोति विना तपः ॥ १९१ ॥
बाह्येनाभ्यन्तरेणापि, दीपितेन तपोऽग्निना ।
देहा-ऽऽत्मनोरन्तरस्थं, दह्यते कार्मणं वपुः ॥ १९२ ॥
देहदुर्गमुदग्राणि, तावत् कर्माणि देहिनाम् ।
नोज्झन्ति यावदन्नाम्बु–प्रवेशोऽत्र निरर्गलः ॥ १९३ ॥
ततो वर्षं निराकाङ्क्षो, वपुष्यपि परीषहान् ।
सहमानो निराहारः, प्रचचार धरां प्रभुः ॥ १९४ ॥

१ ख–'मालिनः' । २ क–'रुहम्' । ३ क–'परीग्रहान्' ।

देहिनां ध्रुवमाहार, एवाधारः[1] स्वधारणे ।
अनाददानस्तं स्वामी, कथं तीर्थप्रवर्तकः ? ॥ १९५ ॥
एवं[2] सुरासुरकुले, सकलेऽप्याकुलात्मनि ।
धैर्यधुर्योर्जितः स्वामी, मनस्येवममन्यत ॥ १९६ ॥

आहारस्यावश्यकता

आहारेण विनाऽङ्गानि, नाङ्गिनां दधति स्थितिम् ।
शस्यान्यवश्यं नश्यन्ति, सिच्यन्ते सलिलैर्न चेत् ॥ १९७ ॥
जलैर्वियोजिता नैव, जीवन्ति जलजन्तवः ।
आरामवृक्षाः शुष्यन्ति, सारिणीवारिणा[3] विना ॥ १९८ ॥—युग्मम्
[4]द्विचत्वारिंशता काले, भिक्षादोषैरदूषितः ।
आहारो माधुकर्या तु, वृत्त्या ग्राह्यः सुसाधुना[5] ॥ १९९ ॥
[6]गृह्णामि यदि नाहारं, पुनरद्याप्यभिग्रहम् ।
तनोमि[7] तपसैव स्यात्, प्रशमः कर्मणामिति ॥ २०० ॥
तदा कच्छादय इव, निराहारतयाऽर्दिताः ।
भग्नव्रता भविष्यन्ति, भविष्यन्तोऽपि[8] साधवः ॥ २०१ ॥
एवं विचिन्त्य चित्तेन, चिरं प्रचलितः प्रभुः ।
निर्दोषभिक्षामाकाङ्क्षन्, पुरं 'गजपुरं' ययौ ॥ २०२ ॥

श्रेयांसादीनां स्वप्नाः

तत्र बाहुबलेर्नप्ता[9], सोमप्रभनृपात्मभूः ।
श्रेयांससञ्ज्ञो युवराट्, स्वप्नमेवं व्यलोकयत् ॥ २०३ ॥
यन्मया श्यामलीभूत-शैलं[10]तं[11]कौम्भीयभूमिभृत् ।
पयःकुम्भैरभिक्षाल्य, निर्मलो निर्ममेऽभितः ॥ २०४ ॥
श्रेष्ठ्यैक्षिष्ट सुबुद्धिर्गो-सहस्रं गोपतेश्च्युतम् ।
श्रेयांसो न्यस्तवांस्तत्र, तेनार्कोऽभूदतिद्युतिः ॥ २०५ ॥
राजा सोमयशाः स्वप्ने, प्राज्यै रुद्धं विरोधिभिः ।
एकं श्रेयांससाहाय्या-ज्जयभाजं न्यभालयत्[12] ॥ २०६ ॥

---

१ क–'धारस्तु धारणे'। २ क–'पदं'। ३ क–'सरणी०'। ४ विलोक्यतामेकत्रिंशत्तमं पृष्ठम्। ५ ख–'स साधुना'। ६ क–'गृह्णाति'। ७ क–'तनोति'। ८ क–'भविष्यन्ति न साधवः'। ९ पौत्रः। १० 'मेरु'गिरिः। ११ ख–'कुम्भीय०'। १२ क–'व्यमालयत्'।

मिलित्वैकत्र तेऽन्योन्यं, ग्रातः स्वमान् न्यवेदयन् ।
न किञ्चिन्निर्णयन्ति स्म, यान्ति स्म स्वस्ववेश्मनि ॥ २०७ ॥

भिक्षार्थं प्रभोर्गजपुरे आगमनं मुग्धजनानां च विज्ञप्तयः

शस्तयानः[1] स इस्तीव, भिक्षार्थं 'हस्तिनापुर'म् ।
तद्[2] विवेश जितक्लेश-स्तीर्थेशः प्रथमस्तदा ॥ २०८ ॥
निराहारोऽपि वर्षं सो-ऽविहस्तो[3] 'हस्तिनापुर'म् ।
प्रविशन् ददृशेऽकस्मा-न्नागरैर्मर्दसागरैः ॥ २०९ ॥
स्वयं श्रीवृषभस्वामी, समेतोऽस्तीत्युदन्ततः ।
क्वास्ते क्वास्ते प्रभुरिति, त्वरमाणा जगुर्जनाः ॥ २१० ॥
स्वस्वस्थानकतो वेगा-दुत्थायोत्थाय धावितैः ।
संमन्ततः प्रभुः पौरै-र्भक्तिगौरैरवेष्ट्यत ॥ २११ ॥
ते लगित्वा लगित्वांह्रौ, धृत्वा धृत्वा करे प्रभुम् ।
ममावासं ममावासं, समेहीति पृथग् जगुः ॥ २१२ ॥
प्रभुर्मनागप्यभिन्न-मनास्तद्भक्तिभङ्गिभिः ।
प्रसङ्गागतमेवागा-दगारं भैक्ष्यकारणात् ॥ २१३ ॥
कैश्चिदूचे चिरान्नाथ !, नेत्रयोरमृतायसे ।
श्रान्तोऽस्यंह्रिविहारेण, सिंहासनमिदं श्रय ॥ २१४ ॥
कोऽप्याह स्नाहि श्रान्तोऽसि, स्वामिन् ! स्नानीयमस्त्यदः ।
स्नेहादिमुग्धो नाबोधि, सोऽस्य नाङ्गे मल-श्रमौ ॥ २१५ ॥
शरीरावरणं स्वामिं-श्चिरेणानेन रच्यताम् ।
इत्यूचेऽन्यः स नाज्ञासी-दनेनैवावृतं जगत् ॥ २१६ ॥
कोऽप्यजल्पत् कर्पूराद्यै-रमीभिः सुरभीकुरु ।
वपुः प्रभोः स सौरभ्यं, नास्याज्ञासीत् स्वभावजम् ॥ २१७ ॥
अन्योऽभ्यधादमीभिः स्वं, भूषणैर्भूषय प्रभो ! ।
विभुमेव त्रिभुवना-भरणं स विवेद न ॥ २१८ ॥
परो जजल्प तेऽपीन्द्राः, सदा तव पदातयः ।
युक्ता पदातिता ते किं, स्वीकुर्वश्वान् रथान् गजान् ॥ २१९ ॥

---

१ प्रशास्तगतिः । २ पुरम् । ३ अव्याकुलः । ४ हर्षसमुद्रैः । ५ ख-'ससम्भ्रमं' ।

साहान्यः स्वीकुरु स्वामिन् !, कन्या धन्या भवन्त्यमूः ।
न विवेद स कन्दर्प–शस्त्रं न प्रभवेत् प्रभौ ॥ २२० ॥
कोऽप्यदोऽवददादत्स्व, रसालानि फलानि मे ।
स न वेत्ति स्म महते, फलाय यतते यतिः ॥ २२१ ॥
गृहाण पत्रपूगानि, क्षीणरागं मुखं तव ।
कोऽपीत्यूचे न तच्चित्त–मप्यरागममंस्त सः ॥ २२२ ॥
प्रभुस्तु कल्प्यवस्त्वर्थं, गेहं गेहमुपागमत् ।
पुष्पं पुष्पं यथा भृङ्गो, राशिं राशिं यथा ग्रहः ॥ २२३ ॥
तद्कल्प्यमिति किम–प्यगृह्णानो जगत्पतिः ।
मौनवान् निर्ममो लोकै–रित्यनल्पमजल्प्यत ॥ २२४ ॥
त्वां निरीक्ष्य चिरेणाद्या–नन्दः[1] कन्दलितोऽस्ति नः ।
तं[2]मातिथ्यमगृह्णानः, किं म्लानिं नयसि प्रभो ! ॥ २२५ ॥
प्रसादः क्रियतां स्वामिन् !, विषादस्त्वदनादरात् ।
प्रमादः कोऽपि नो[3] नास्ते–ऽपवादः प्रसरेत् पुनः ॥ २२६ ॥
न ते युक्तमवज्ञातु–मेनं प्रणयिनं जनम् ।
उपायनमिदं नाथ !, गृहाणानुगृहाण माम् ॥ २२७ ॥
तद् वात्सल्यं तदालाप–दानं तत् प्रतिपालनम् ।
जन्मतो जनयित्वा नः, कथमेकपदे गतम् ? ॥ २२८ ॥
अथवा वनवासे त्वं, नास्माभिर्यदनुश्रितः[4] ।
किमु तेनापराधेन, प्रतिवाचं न यच्छसि ? ॥ २२९ ॥
इदं विप्रियमत्यन्त–मेकं स्वामिन् ! क्षमस्व नः ।
स्वपालितेषु लोकेषु, कृपां कुरु कृपाऽऽकर ! ॥ २३० ॥
तथेश ! दर्शनान्न प्राक्, प्रजानां प्रमदाश्रुभिः ।
श्रेयः पल्लवितं नाथा–नादानोत्थैर्यथाऽश्रुभिः ॥ २३१ ॥

लोके कलकलः

लोककोलाहले तत्र, श्रवणातिथितां श्रिते ।
किमेतदिति श्रेयांसे–नोक्ते वेत्री व्यजिज्ञपत् ॥ २३२ ॥

---

१ आनन्दम् । २ अतिथ्यर्थे आतिथ्यम् । ३ अस्माकम् । ४ ख–'सृतः' ।

विस्मेरयन्ति वदना-ऽरविन्दानि नतान्यपि ।
सुरेन्द्राणां यदीयांह्रि-नखशीतत्विषोऽद्भुताः ॥ २३३ ॥
पित्रेव जीवनोपाया, जनानां येन तेनिरे ।
येनार्पि भरतादिभ्यो, युष्मभ्यं च विभज्य भूः ॥ २३४ ॥
येन राज्यं विहायोच्चै-र्गृहावकरहेलया ।
जगृहे गहनावासो, विलासावासलीलया ॥ २३५ ॥
ततः प्रभृत्यसौ स्वामी, मौनवान् ममतोज्झितः ।
पद्भ्यां पवित्रयत्युर्वीं, निराहारो विहारवान् ॥ २३६ ॥—कलापकम्
तीव्रातपेऽप्यसौ सर्पन्, स्वामी नोद्विजतेऽन्यवत् ।
किलेति कलयामास, प्रीत्याऽसौ सप्रकाशताम्[1] ॥ २३७ ॥
विभुर्नाभिलषत्येष, मामशेषजनो यथा ।
इतीव दुःखतश्छाया, समायाति स्म कृष्णताम् ॥ २३८ ॥
यस्तपत्यातपे शैलः, शीते भवति शीतलः ।
कोभयत्र समः स्वामी, स्थैर्यात् तेनोपमीयते[2] ? ॥ २३९ ॥
जीवानुकम्पया नाथो, युगमात्रं प्रदत्तदृक् ।
स्वांह्रिन्यासादिव श्रान्तां[3], सिञ्चन्नेत्रामृतैर्महीम् ॥ २४० ॥
प्रत्यक्ष इव ते पुण्य-प्राग्भारः प्रपितामहः[4] ।
दिष्ट्याऽत्रैव समायाति, स मायातिमिरांशुमान्[5] ॥ २४१ ॥—युग्मम्
अनुस्वामिनमेतेषां, पौराणां परिसर्पताम् ।
अयमाकर्ण्यते कर्णा-मृतं कलकलः कलः ॥ २४२ ॥

श्रेयांसस्य स्वामिनः पुरतो गमनं जातिस्मरणं च

श्रेयांसोऽप्युपेयिवांसं, स्वामिनं स्वाश्रयाग्रतः ।
प्रेक्ष्य स्राक्[6] सम्भ्रमेणेवो-त्पाटितः समुदस्थित ॥ २४३ ॥
अच्छत्रोपानहोऽधावत्, कुमारोऽनु जगत्पतिम् ।
पर्षज्जनस्तथैवैनं, यूथं यूथपतिं[7] यथा ॥ २४४ ॥
लोलकुण्डलश्लिष्टाभिः, कण्ठिकाभिः क्वणच्छलात् ।

---

१ ख–'प्रकाश्यताम्' । २ शैलेन समम् । ३ खेदिताम् । ४ प्रपितामहः । ५ माया-रूपान्धकारं प्रति सूर्यतुल्यः । ६ क–'श्राक्' । ७ क–'पतिर्यथा' ।

युवराजस्त्वरायानो-ऽनूयतानुजिनं व्रजन् ॥ २४५ ॥
श्रेयांसः संश्रितस्ताथ, नाथस्यावसथाङ्गणम्[1] ।
क्रमावमार्जयत्[2] केशै, रजो हर्तुमिवाध्वजम् ॥ २४६ ॥
गुरोर्धर्मध्वजेनेव, शिष्यः केशचयेन सः ।
आश्रयाजिरमास्तस्य[3], ममार्ज स्वामिनः क्रमौ ॥ २४७ ॥
उत्थाय स विधायाथ, नाथस्य त्रिः प्रदक्षिणाम्[4][5] ।
स्नपयन् भूरिहर्षाश्रु-सलिलेनानमत्[6] क्रमौ ॥ २४८ ॥
ऊर्ध्वीभूय पुरोभूय, स्वामिनो वदनाम्बुजे ।
चञ्चरीकीचकारायं, कुमारो लोचने चिरम् ॥ २४९ ॥
ईदृग् लिङ्गं मया प्रैक्षि, क्वापीति[7] विचिन्तयन् ।
स प्राप जातिस्मरणं, प्राग्जन्मप्रेक्षणेक्षणम् ॥ २५० ॥
विवेदेति च यत् पूर्वं, 'विदेहे' भगवानयम् ।
वज्रनाभश्चक्रवर्ती, जातोऽस्याहं च[8] सारथिः ॥ २५१ ॥
वज्रसेनाह्वयोऽस्यैव, पिता तत्र भवेऽभवत्[9] ।
स[10] मया तीर्थकृल्लिङ्ग-मीदृशं ददृशे दधत् ॥ २५२ ॥
पार्श्वे श्रीवज्रसेनस्य, मुक्त्वा राज्यमुपाददे ।
व्रतं श्रीवज्रनाभोऽय-मस्याहमपि पृष्ठतः ॥ २५३ ॥
वज्रनाभोऽयं 'भरत'-क्षेत्रे प्रथमतीर्थकृत् ।
भविष्यतीति भगवान्, वज्रसेनस्तदादिशत् ॥ २५४ ॥
[11]स्वयम्प्रभाप्रभृतयो-ऽष्टौ भवाः[12] प्रभुणाऽमुना ।
समं पर्यटिरे सम्प्र-त्यसौ मे प्रपितामहः ॥ २५५ ॥
ललिताङ्गभवेऽप्येष, स्वामी निर्नामिकां यथा ।
अनुग्रहीतुमागान्मां, सम्प्रत्यप्यागमत् तथा ॥ २५६ ॥
दिष्ट्या दिष्ट्याऽद्य दृष्टोऽयं, दृष्टिपीयूषवृष्टिकृत् ।
[13]अहो नवभवस्वामी, यथाकामीनतां श्रितः ॥ २५७ ॥

१ गृहाङ्गणम् । २ क-'दमार्जयत्' । ३ गृहाङ्गणम् । ४ क-'प्रदक्षिणम्' । ५ सर्वासु दिक्षु विदिक्षु च परिभ्रमतः पूजकस्य दक्षिण एव वन्द्यो भवति यस्यां सा प्रदक्षिणा । ६ क-'भत्' । ७ ख-'वितर्कयन्' । ८ ख-'तु' । ९ क-'भवे भवे' । १० वज्रसेनः । ११ प्रेक्ष्यतां ६८तमं पृष्ठम् । १२ क-'भव्यप्रभुणा' । १३ क-'अथो' ।

अहो महोत्सवः कश्चि-दहो भाग्यमहोदयः ।
अहो माहात्म्यविस्फूर्ति-रहो श्रेयःसमुन्नतिः ॥ २५८ ॥
यदयं जगतां स्वामी, स्वयं सौधाङ्गणे मम ।
जङ्गमः कल्पशाखीव, भूषणत्वमवाप्तवान् ॥ २५९ ॥–विशेषकम्

श्रेयांसेन स्वामिनः पारणककारणम्

भिक्षादानानभिज्ञेऽस्मिन्, जने वर्षमुपोषितः ।
पारणं कारणीयोऽद्य, प्रभुः प्रासुक[1]वस्तुभिः ॥ २६० ॥
इति रोमभिरुद्भिन्नैः, श्रेयोवल्ल्यङ्कुरैरिव ।
श्रेयांसः[2] समभिव्याप्तो, यावद् भावयते हृदि ॥ २६१ ॥
तावदावसथद्वारे, राजसूनोरुपायने ।
केनचिच्चक्रिरे कुम्भा, नवेक्षुरससम्भृताः ॥ २६२ ॥–युग्मम्
श्रेयांसो जातिस्मरणाद्, भिक्षादोषोज्झितं रसम् ।
मत्वा कल्प्यममुं स्वामिन्!, गृहाणेत्यभ्यधात् प्रभुम् ॥ २६३ ॥
प्रभुणाऽप्यञ्जलीकृत्य, पाणिपात्रे पुरो धृते ।
स रसं कलशश्रेण्या-श्चिक्षेपेक्षुसमुद्भवम् ॥ २६४ ॥
यथा यथा रसपूरैः, पूर्यते साञ्जलिः प्रभोः ।
श्रेयोराशिभिरश्रान्तं, श्रीश्रेयांसस्तथा तथा ॥ २६५ ॥
सम्भृतेऽपि रसैः स्वामि-पाणिपात्रान्तरे मुहुः ।
भूरयोऽपि रसा भूयो, वार्द्धाविव सरित्प्लवाः[3] ॥ २६६ ॥
पाणिपात्रे प्रभोरासी-दभ्रंलिहशिखो रसः ।
दातुरद्भुतभावोत्थात्, स्तम्भितो विस्मयादिव ॥ २६७ ॥
रसस्य बिन्दुरेकोऽपि, नागलत् पाणितः प्रभोः ।
प्राज्ञस्य[4] मानसाद् ग्रन्थ-बोधस्येव लवो बहिः ॥ २६८ ॥
वृद्धिं रसशिखा लेभे, प्रभुपाणौ यथा यथा ।
स्पर्द्धयेव कुमारस्य, वासनाऽपि तथा तथा ॥ २६९ ॥
द्रवरूपोऽपि स रसः, स्त्यानरूप इव प्रभोः ।

---

१ क–'प्राशुक' । २ श्रेयांसः । ३ क–'सरिद्भवाः' । ४ क–'प्रज्ञस्य' ।

नापतत् पाणितः सोऽभूत्, प्रभावः [1]प्राभवोऽद्भुतः ॥ २७० ॥
अकारि रसपूरेण, प्रभुणा तेन पारणम् ।
जगत्त्रयजनश्रेयः–स्थिरीकरणकारणम् ॥ २७१ ॥
दारणं दुरितौघस्य, वारणं क्रूरकर्मणाम् ।
तारणं भवपाथोधेः, पारणं तत् प्रभोरभूत् ॥ २७२ ॥
श्रीश्रेयांसो रसैर्नाथं, त्रिजगन्मङ्गलद्रुमम् ।
सिक्त्वा मङ्गलपूर्णानि, जगन्ति त्रीण्यपि व्यधात् ॥ २७३ ॥

पञ्च दिव्यानि

दिग्भागा दुन्दुभिध्वान–प्रतिध्वानैस्तदोद्धुरैः ।
प्रभुपारणतः प्रीत्या, सांराविणमिव व्यधुः ॥ २७४ ॥
श्रेयांसौकसि रत्नानि, वृष्टितो लुलुठुस्तदा ।
रत्नाधिकं जिनाधीशं, समाराद्धुमिवोत्सवे ॥ २७५ ॥
[2]पञ्चवर्णानि पुष्पाणि, तत्र कीर्णानि नाकिभिः ।
निपेतुस्तद्विमानौघ–सङ्घट्टभ्रष्टरत्नवत् ॥ २७६ ॥
गन्धाम्बुवृष्टिभिर्बाढं, भूमिः सुरभिशीतला ।
सत्वरीभिः सुरैश्चक्रे, श्रेयांसेन तु कीर्त्तिभिः ॥ २७७ ॥
[3]चित्रचेलचयोत्क्षेप–मिषादनिमिषा दिवि ।
श्रेयांसदानयशसो, न्युञ्छनानीव तेनिरे ॥ २७८ ॥
वैशाखे मासि शुक्लायां, तृतीयायां तदक्षयम् ।
दानं जज्ञे पर्वा'ऽक्षय–तृतीये'ति ततोऽभवत् ॥ २७९ ॥
एतस्यामवसर्पिण्यां, क्षेत्रेऽत्र 'भरता'भिधे ।
श्रेयांसाद् दानधर्मोऽभूद्, विश्वाचार इव प्रभोः ॥ २८० ॥
प्रभुपारणकानन्द–सन्दर्भादुन्मदिष्णवः ।
प्रशंसामिति सन्तेनुः, श्रेयांसस्य दिवौकसः ॥ २८१ ॥

देवैः श्रेयांसस्य प्रशंसनम्

भो भो श्रेयांस! धन्योऽसि, पुण्योऽसि गुणवानसि ।
अद्य लोकत्रये पुण्य–कृतां मौलिमणीयसे ॥ २८२ ॥

---

१ स्वामिसम्बन्धी । २ कृष्ण-नील-रक्त-पीत-श्वेतेति वर्णपञ्चकम् । ३ ख–'चित्रं'

यद्य निरवद्येन, रसपूरेण पारणम् ।
[1]विभुं वर्षनिराहारं, कारयामासिवान् भवान् ॥ २८३ ॥
व्रतादनन्तरं तीर्थ-करा यन्मन्दिराजिरम् ।
पवित्रयन्तः प्रथमं, पारणं प्रथयन्त्यहो ॥ २८४ ॥
भवे भवेयुर्भविन-स्ते तत्राथ तृतीयके ।
संसारपारदृश्वानः, सिद्धिस्थानधृताश्रयाः ॥ २८५ ॥—युग्मम्
पारणं कारयेद् भक्त्या, सामान्यानपि यो मुनीन् ।
अङ्कं नयति निःशङ्कं, तमुत्का मुक्तिकामिनी ॥ २८६ ॥
कश्चनापि क्षुत्तृट्क्रान्तं, प्रासमन्नोदकैर्मुदा ।
यस्तर्पयति सर्पन्ति, स्वर्भोगास्तमपि ध्रुवम् ॥ २८७ ॥
किमप्यतिथिदानस्य, माहात्म्यं [2]सुमहत्तमम् ।
यत्रान्नमात्रतः स्वर्गा-ऽपवर्गसुखसङ्गमः ॥ २८८ ॥
आद्यः पारयिता तीर्थ-ङ्करो वर्षमुपोषितः ।
[3]त्वन्मनः क्षुब्धदुग्धाब्धि-शुद्धश्रद्धोर्मिधार्यदः ॥ २८९ ॥
प्रासुकश्चैषणीयश्च, कल्प्यश्चेक्षुरसोऽप्यसौ ।
सत्पात्र-चित्त-वित्तानां, भाग्यैर्योगोऽभवत् तव ॥ २९० ॥—युग्मम्
दानानन्दोद्भवैरश्रु-सलिलैस्तैर्निरर्गलैः ।
अमीभिः शमितो नूनं, ज्वलन् भवदवानलः ॥ २९१ ॥
भूभृद्-यति-जिनेन्द्राणां, यथा ते प्रपितामहः ।
श्रेयांसः प्रथमो दाता, भवान् भुवि तथाऽभवत् ॥ २९२ ॥
यथा 'गङ्गा'ऽम्बुविस्तार-स्[4]तुंपारधरणीधरात् ।
भवतो 'भरत'क्षेत्रे, दानधर्मस्तथाऽभवत् ॥ २९३ ॥
त्वत्साधितममुं साधु-धर्मस्थितिनिबन्धनम् ।
जना दानविधिं विश्वे, वर्तयिष्यन्त्यतः परम् ॥ २९४ ॥
गायन्तीनां द्युकान्तानां, तव दानाङ्कितं यशः ।
'नन्दने'ऽलिरवैः स्थान-दायिनः कल्पपादपाः ॥ २९५ ॥

१ क-'विभुर्वर्षं निराहारः' । २ ख-'सुमहत्तरम्' । ३ क-'तन्मनः०' । ४ हिमाचलात् ।

श्रेयांसमिति ते स्तुत्वा, स्वं स्थानं स्वर्गिणोऽगमन् ।
धिग् नो मुनिदानानर्हा–नात्मनिन्दापरा इति ॥ २९६ ॥
प्रभुपारणगीर्वाण–सम्पातश्रवणोन्मदाः ।
भूरयः स्वस्वदेशेभ्यो, नागरा नगराधिपाः ॥ २९७ ॥
अपरेऽपि तेऽपि कच्छ–प्रमुखाः क्षत्रतापसाः ।
श्रेयांसस्याययुर्वेश्म, सुकृतानीव सात्त्विकम् ॥ २९८ ॥—युग्मम्

कच्छादीनां श्रेयांसेन सह सम्भाषणम्

श्रेयांसं प्रेक्ष्य ते धर्म–प्रकर्षेण बभाषिरे ।
सुधामधुरवाक्पूरा, मयूरा इव वारिदम् ॥ २९९ ॥
श्रेयांस! श्रेयसां राशिं, श्रितस्त्वं तर्पितो रसैः ।
यत् तपःस्वस्त्वया नाथो, यथा पाथोभृता जनः ॥ ३०० ॥
रत्ना-ऽश्वे-भा-ऽस्त्र-कन्यादि, सर्वस्वं ददतामपि ।
किञ्चिन्नादत्त नः स्वामी, हहा हत्याकृतामिव ॥ ३०१ ॥
ग्रामाकर-पुरा-ऽरण्या–न्यटन् संवत्सरं विभुः ।
न नो वेश्मसु विश्राम–मप्यकार्षीद् द्विषामिव ॥ ३०२ ॥
पालयित्वा प्रभुः पूर्वं, पूर्वलक्षाण्यपत्यवत् ।
वाचाऽपि नालापयति, कृतघ्नानिव नोऽधुना ॥ ३०३ ॥
प्रति नम्रा प्रभोरेतान्, जल्पतः प्रतिजल्पितैः ।
प्रीणयामास पर्जन्यो, गर्जितैरिव केकिनः ॥ ३०४ ॥
अलं प्रलप्यते किं भो, मुग्धा! दुंग्धान(श ?)नैरिव ।
स्वीकरोति न सावद्यं, निरवद्यपरः प्रभुः ॥ ३०५ ॥
पुरेव नृपतिर्नासा–वासादितपरिग्रहः ।
सम्प्रति प्रतिनिवृत्त–दुर्वृत्तो वर्त्तते यतिः ॥ ३०६ ॥
रत्नैरश्वैरिभैस्तस्य, कार्यं यो राज्यमीहते ।
निरीहस्यास्य किं भर्त्तु–रहितैरात्मनो हि तैः ? ॥ ३०७ ॥

१ ख–'गर्हा०'। २ क–'नागरा०'। ३ क–'प्रेष्य ते'। ४ ख–'हर्ष–'। ५ मेघेन। ६ क–'मनो'। ७ बालकैः। ८ ख–'नृपतितिनासा०'। ९ क–'कार्यें'।

वध्यं किमपि यस्यास्ते, धत्ते शस्त्राणि स ध्रुवम् ।
प्राणिरंक्षापरस्यास्य, प्रभोः किं तैः कृपावतः ? ॥ ३०८ ॥
अङ्गनाङ्गीकृतिस्तस्य, यस्य रागातुरं मनः ।
वीतरागस्य सा तस्य, वियत्कुसुमसोदरा ॥ ३०९ ॥
निःसङ्गताऽस्य सर्वस्वं, शाश्वतानन्दसुन्दरम् ।
नरकैकनिदानेन, सर्वस्वेनास्य वोऽस्तु किम् ? ॥ ३१० ॥
स्यात् प्रासुकं कल्पनीय–मेषणीयं च वस्तु यत् ।
तद् गृह्णाति यतिर्नान्यद्, विदितं भवतां न तत् ॥ ३११ ॥
शिल्पादेरधिकं ह्येत–ज्ज्ञापिताः स्वामिना न हि ।
कुतो ज्ञातं त्वयेत्युक्ते, तैः श्रेयांसोऽवदत् पुनः ॥ ३१२ ॥
निभालनाज्जगद्भर्तु–र्जातिस्मरणमद्य मे ।
समुत्पन्नं यथा ज्योति–रादर्शस्यार्कदर्शनात् ॥ ३१३ ॥
अमर्त्त्यमर्त्यविश्रान्त–रमुना स्वामिना समम् ।
भ्रान्तोऽष्टाऽहं भवानेष, ममाभून्नवमो भवः ॥ ३१४ ॥
इतो भवात् तृतीयेऽभूद्, भवेऽतीते व्रती विभुः ।
'विदेहे' वज्रसेनस्य, पितुस्तीर्थकृतोऽन्तिके ॥ ३१५ ॥
स्वामिनोऽहमपि स्नेहा–दनु प्रव्रजितस्ततः ।
तज्जन्मस्मृतितोऽज्ञायि, सर्वमेतन्मयाऽधुना ॥ ३१६ ॥

स्वप्नत्रयस्य निर्णयः

त्रिस्वप्नी तातपादानां, सुबुद्धिश्रेष्ठिनो मम ।
याऽऽसीत् तस्याः फलेनाद्य, निर्णयः समजायत ॥ ३१७ ॥
आक्षिप्तः प्रतिपक्षैर्यः, प्रैक्षि क्ष्मापेन स प्रभुः ।
मत्पारणसहायत्वात्, पराजैषीत् परीषहान् ॥ ३१८ ॥
स्रस्तं सुबुद्धिनाऽदर्शि, गोसहस्रं यदुष्णगोः ।
न्यस्तं मया रयात् तत्र, तेनार्को नितरां बभौ ॥ ३१९ ॥
प्रभुः प्रद्योतनस्तस्य, केवलं द्युतिमण्डलम् ।
भ्रष्टं तत्र मयाऽरोपि, पारणात् तच्च सोऽरुचत् ॥ ३२० ॥

१ क–'रक्षाकर०' । २ क–'श्रान्त–' ।

मयैक्षि श्यामलो [1]हिमा-ऽचलो यत् क्षालितो जलैः ।
स हि स्वामी तपःक्षामः, श्रीमानिक्षुरसैरभूत् ॥ ३२१ ॥
श्रुत्वेति तत् तपो भर्त्तु-स्तद् दानं तन्नृपात्मजम् ।
प्रशशंसुस्त्रयं विश्व-त्रयपावित्र्यकृज्जनाः ॥ ३२२ ॥
ग्राहं ग्राहं जनाः श्रेयः, श्रेयांसस्यानुमोदनात् ।
मौलिकम्पमिषात् कामं, तेनात्मानमपूरयन् ॥ ३२३ ॥
श्रेयांसः श्रेयसः किञ्चि-दानन्त्यं यद् भृशं जनैः ।
अनुमोदनयाऽग्राहि, हीयते स न तत् पुनः ॥ ३२४ ॥
जना जनपदेशास्ते, प्रणम्यारं प्रभोस्ततः ।
आपृच्छ्य कृतसन्मानं, स्थानं जग्मुर्निजं निजम् ॥ ३२५ ॥
श्रेयांसवेश्मनोऽन्यत्र, पारणानन्तरं प्रभुः ।
ततो जगाम नो धाम-स्थितयो यतयो यतः ॥ ३२६ ॥

पारणकभूमौ रत्नपीठस्य निर्मापणम्

मा कोऽपि पारणक्षोणिं, प्रभोराक्रमतादिति ।
तत्र रत्नमयं पीठं, राजसूनुरकारयत् ॥ ३२७ ॥
तद् राजसूनुरानर्च, रत्नपीठं प्रयत्नवान् ।
त्रिसन्ध्यमप्यथ स्माह, किमेतदिति तं जनः ॥ ३२८ ॥
आदिकृन्मण्डलमिदं, सोऽप्यजल्पत् ततो जनः ।
प्रभुर्यत्राग्रहीद् भिक्षां, तत्र तन्मण्डलं व्यधात् ॥ ३२९ ॥
ततो निर्मीयमाणेऽत्र, कर्मणि क्रमतो जनैः ।
जनेऽत्रादित्यपीठस्य, तत्स्थाने स्थापनाऽजनि ॥ ३३० ॥

तक्षशिलायां प्रभोरागमनं बाहुबलस्य वन्दनमनोरथश्च

विहरन् 'बहली'देशे, पुरीं बाहुबलेः प्रभुः ।
सायं 'तक्षशिलां' प्राप्यो-द्याने प्रतिमया स्थितः ॥ ३३१ ॥
[3]तदायुक्तोदिते स्वाम्या-गमे बाहुबलिर्नृपः ।
मुदाऽऽदिक्षत् पुरारक्षं, हट्टशोभाकृते पुरि ॥ ३३२ ॥

---

१ ख-'हेमा-' । २ क-'क्षालितोऽञ्जनैः' । ३ उद्यानभृत्योक्ते ।

सेरा श्रीरसदप्येषां, [१]श्रुतेत्येतत्पुरीगृहान् ।
मञ्चा द्रष्टुमिवाप्तानि, स्वर्विमानानि रेजिरे ॥ ३३३ ॥
पौरवारैः पुरीपृथ्व्यः, प्रतिरथ्यं पृथूत्सवैः ।
मूर्त्तेनेवानुरागेण, सिक्ताः कुङ्कुमवारिणा ॥ ३३४ ॥
कुसुमानि प्रकीर्णानि, प्रतिवर्त्म विरेजिरे ।
स्वाम्यागमे गृहश्रीणा-मिव हर्षाश्रुबिन्दवः ॥ ३३५ ॥
[२]चेलानां मालिकामाला, बभुर्बाहुबलिं[४] प्रति ।
पुर्या इवानुरागाब्धे-र्लहर्योऽनिललोलिताः ॥ ३३६ ॥
चित्रास्तरङ्गितीकृत्यो-द्धिता वस्त्रपरम्पराः ।
नगर्या वर्यसौभाग्य-मञ्जर्य इव रेजिरे ॥ ३३७ ॥
द्योतन्ते स्म दुकूलानां, [३]पंञ्चकानि पदे पदे ।
विलासनलिनानीव, [४]सानन्देयगुणश्रियाम् ॥ ३३८ ॥
रम्भास्तम्भेषु नीलानि, दलान्यनुपदं बभुः ।
[५]पुर्याः कज्जललक्ष्माणि, चक्षुर्दोषभयादिव ॥ ३३९ ॥
ते तस्यां पर्वशर्वर्यां, श्रीविराजिनि राजिनि ।
गर्जयोज्जागरा रेजु-र्नागराः सागरा इव ॥ ३४० ॥
प्रातस्तातपदाम्भोज-पर्युपास्तिपरायणः ।
राजहंसो भविष्यामी-तीहां बाहुबलिर्व्यधात् ॥ ३४१ ॥
प्रभोरुत्कण्ठयोत्तालः, प्रातःकालविलम्बतः ।
अयं बाहुबलिर्बाहु-बलान्मां दलयिष्यति ॥ ३४२ ॥
इति शङ्कातुरा शङ्के, निशा देशान्तरे ययौ ।
[६]उज्जगार जगद् भाभि-र्भासयन् भानुमानपि ॥ ३४३ ॥
नन्तुं विश्वपतिं बाहु-बले ! किमु विलम्बसे ? ।
इति पत्रितिध्वान-निभेन [७]ककुभोऽभ्यधुः ॥ ३४४ ॥
मद्वीक्षणादिव क्षोणि-तमो मम तमः प्रभोः ।
दर्शनाद् यात्वितीवोच्चैः, श्रितोऽर्कः [८]प्राग्गिरेः शिरः ॥ ३४५ ॥

---

१ क-'श्रितोऽप्येतत् पुरीग्रहात्' । २ क-'वेलानां' । ३ रक्तबिन्दुकानि । ४ बाहुबलि० । ५ क-'पुर्या' । ६ ख-'उज्जगाम' । ७ क-'ककुभो व्यधुः' । ८ उदयाचलस्य ।

पारितप्रतिमो नाथः, प्रतस्थेऽन्यत्र कुत्रचित् ।
छद्मस्थतीर्थकृद् वायु–र्नैकत्र कुरुतः स्थितिम् ॥ ३४६ ॥
निशान्ते स्वामिनं नन्तुं, सौनन्देयस्त्वरातुरः ।
स्नातश्चन्दनलिप्तोऽभा–च्चन्द्रिकास्मेरमेरुवत् ॥ ३४७ ॥

बाहुबलेः प्रयाणशोभावर्णनम्

तन्मौलौ मुकुटो रत्न–रश्मिविसेरिताम्बरः ।
बभौ हृदो विभुध्यान–महस्तोम इवोद्गतः ॥ ३४८ ॥
तमिन्दुर्मुक्तताडङ्क–द्वयदम्भेन सेवितुम् ।
निर्जितो यशसाऽऽस्येन, द्वैधीभूय ययौ ध्रुवम् ॥ ३४९ ॥
माणिक्यकण्ठिकाकान्ति–पटली पाटलप्रभा ।
तस्य वक्षःस्थितेर्लक्ष्म्याः, कौसुम्भांशुकवद् बभौ ॥ ३५० ॥
तस्य वक्षःस्थले हार–मुक्तास्तद्धाऽम्बुहारिणि ।
बभुः प्रतिगुणक्रीडत्–कीर्तिवल्ल्यालिबीजवत् ॥ ३५१ ॥
जितेन भुजगेन्द्रेण, तद्भुजौ भूंधृतिक्षमौ ।
रत्नाङ्गदमिषाद् रत्न–मुकुटाभ्यामिवार्चितौ ॥ ३५२ ॥
तस्य प्रकोष्ठयोः शोण–मणिकङ्कणकान्तयः ।
खेलन्ति सोष्मशिखिनो, विस्तारिण्य इव त्विषः ॥ ३५३ ॥
तत्पाण्योर्जितकल्पद्रु–नवपल्लवयोर्बभौ ।
रत्नोर्मिकाद्युतिव्रातः, प्रताप इव विस्फुरन् ॥ ३५४ ॥
चित्रवर्णानि चीराणि, बिभ्रद् बाहुबलिर्बभौ ।
सन्ध्याऽभ्रपटलाश्लिष्ट, इव सौपर्वपर्वतः ॥ ३५५ ॥
सुनन्दासूनुरन्यून–श्रितालङ्करणांशुकः ।
अथारुरोह हस्तीन्द्र–मुदयाद्रिमिवार्यमा ॥ ३५६ ॥
शिरःस्थेनातपत्रेण, स शुभ्रेणाशुभद् भृशम् ।
पर्वोद्गर्वेण चन्द्रेण, प्राचीनपर्वतो यथा ॥ ३५७ ॥
रेजतुः पार्श्वयोस्तस्य, वारनार्यौ सचामरे ।
क्षात्रमन्त्रश्रियौ मूर्त्ते, यशोभिः शोभिते इव ॥ ३५८ ॥

१क–'भूद्वति' । २ प्रज्वलद्वह्नेः । ३ देवपर्वतो 'मेरुः' । ४ पूर्णिमागर्ववता ।

वसन्तश्रीप्रभृतयः, शतशोऽन्तःपुरस्त्रियः ।
गुणश्रिय इवाङ्गिन्य-स्तं पतिं परिवव्रिरे ॥ ३५९ ॥
प्रससार प्रतीहारः, पुरतो दुरतिक्रमः ।
तस्य चण्डस्फुरद्दण्डो[1], मूर्त्तिमानिव विक्रमः ॥ ३६० ॥
ततो मतिलताकन्दैः, कीर्त्तिकैरविणीन्दुभिः ।
नीतिनिर्झरिणीशैलैः[2], शालितो मन्त्रिमण्डलैः ॥ ३६१ ॥
वृतो व्यूहैर्महीन्द्राणां[3], माणिक्यमुकुटोत्कटैः ।
रत्नाद्रिरिव सद्रत्न-वप्रैः प्रत्यन्तपर्वतैः ॥ ३६२ ॥
रविरथ्यैरिवाबद्ध-स्पर्द्धैर्धूतवियत्प्लवैः ।
तुरङ्गमगणैः सङ्ख्या-ऽतिक्रान्तैर्वेष्टितोऽभितः ॥ ३६३ ॥
तत्स्थैर्यनिर्जितैः सेवा-कृते जङ्गमतां गतैः ।
नगैरिव वृतो नागै-र्विगलन्मदनिर्झरैः ॥ ३६४ ॥
तरङ्गरङ्गणोत्तुङ्ग-तुरङ्गै रत्नभूषणैः ।
पौरैः श्रियामकूपारै-रपारैः परिवारितः ॥ ३६५ ॥
स्फूर्जद्भिस्तुर्यनिर्ह्रादै-र्बन्दिवृन्दजयारवैः ।
चचाल स्तुतिवाचालाः, कुर्वन् बाहुबलिर्दिशः ॥३६६॥–षड्भिः कुलकम्
प्रभुपादपवित्रं त-दवाप्योपवनं नृपः ।
हस्तिनोऽवरुरोह द्राग्, मोहादिव महामतिः ॥ ३६७ ॥
राजचिह्नानि राजेन्दु-च्छत्रादीनि परित्यजन्[4] ।
स विवेश तमारामं, नन्तुमुत्को जगत्पतिम् ॥ ३६८ ॥
जगन्नाथं स नापश्यत्, तमारामं समाश्रयन्[5] ।
सुखोल्लासमिवोपास-मानः कुस्वामिनं जनः ॥ ३६९ ॥
तपोहीनं यथा ज्ञानं, ज्ञानहीनं यथा तपः ।
स्वामिहीनं तदुद्यानं, तस्य नातिमुदेऽजनि ॥ ३७० ॥
स वनस्थानथेत्याह, तातपादाः क्व सन्ति ते ।
अपि त्रिविष्टपस्वाम्यं, न काम्यं यदुपासनात् ॥ ३७१ ॥

---

१ ख–'चण्डः' । २ ख–'शीलैः' । ३ क–'महेन्द्राणां' । ४ क–'त्यजेत्' । ५ क–'श्रयत्' ।

तेऽप्याहुः स सहस्रांशौ, [1]सहस्राक्षदिशं श्रिते ।
स्वामी ययौ वनादस्मात्, [2]पार्वणेन्दुरिवाम्बरात् ॥ ३७२ ॥
यावदावसथं देव-स्यायाम इति शंसितुम् ।
तावत् प्राप्तः स्वयं [3]देवः, सेवनोत्कण्ठया [4]प्रभोः ॥ ३७३ ॥

प्रभोर्दर्शनवञ्चनात् सौनन्देयस्य विलापः

तदाकर्ण्य वचः कर्ण-कीलं 'तक्षशिला'पतिः ।
सद्यो दधार धीरोऽपि, नेत्रे बाष्पजलाविले ॥ ३७४ ॥
दध्यौ वन्ध्योद्यमश्चेति, चेतितं न मयेति यत् ।
व्रतात् प्रभृति [5]नैकत्रा-वस्थितिं कुरुते प्रभुः ॥ ३७५ ॥
अपि [6]प्रकृतिपौराद्याः, प्राप्नुवन्तु पवित्रताम् ।
इति तैः सह वन्दिष्ये, स्वामिपादान् दिनोदये ॥ ३७६ ॥
मनोरथो मे भग्नोऽय-[7]मभाग्योद्घातपाततः ।
हाहा हतोऽस्म्यहं पापो, निष्पुण्यानां शिरोमणिः ॥ ३७७ ॥-युग्मम्
विलम्बकारिणं धिग् मां, लोकानुग्रहकारणात् ।
परार्थकाम्यया मौर्ख्यात्, स्वार्थभ्रंशोऽभवन्मम ॥ ३७८ ॥
धिग् मामबुद्धिमूर्द्धन्यं, धिग् धिग् मां च प्रमादिनम् ।
यत् तातचरणाब्जाना-मर्चनेनास्मि वञ्चितः ॥ ३७९ ॥
वृथा मम समुत्पन्नो, विभ्रमो यद् विभावरी ।
तद् दिनं दृश्यते यस्मि-न्निनो विश्वप्रकाशकः ॥ ३८० ॥
भास्वन्तं सवितारं तं, विनाऽहरपि शर्वरी ।
जाता यन्मे तमोजालैः, किलान्धाः सकला दिशः ॥ ३८१ ॥
प्रमादसदनं स्वामिन्!, यद्यहं तत् कथं त्वया ।
नात्मपुत्रप्रमोदाय, दिनमेकमपि स्थितम्? ॥ ३८२ ॥
लोकेष्वपत्यवत् पूर्वं, ममत्वमकृथा यथा ।
साम्प्रतं निर्ममत्वं ते, तथाऽपत्येषु लोकवत् ॥ ३८३ ॥

---

१ पूर्वदिशम् । २ पूर्णिमाचन्द्रः । ३ ख-'देव!' । ४ क-'प्रभो!' । ५ ख-'नैकत्र वसतिं' । ६ क-'प्रकृत०' । ७ अभाग्यारम्भपतनात् । ८ प्रभुः ।

धिग् मामेकदिनाहार-ग्रहणेनापि न प्रभुः[1] ।
मानितस्त्रिजगन्मान्यो[2], जनसामान्यमप्यहो[3] ॥ ३८४ ॥
त्वदसम्भावनोद्भूतं[4], प्रभूतं मे पराभवम् ।
अपनेष्यति को नाम, नाथ! नाथं विना परः? ॥ ३८५ ॥
यावत् तेऽजनि वात्सल्यं, सर्वेष्वन्येषु सूनुषु ।
मय्यासीत् तावदेकस्मिन्, कुत्र[5] तत् ते गतं प्रभो! ॥ ३८६ ॥
बाल्येऽपि हृदयक्रोडे, सदा मां कृतवानसि ।
सम्प्रत्यपि ततो नाथ!, हृन्मध्ये धृतवान्न किम्? ॥ ३८७ ॥

मन्त्रिणा प्रबोधनम्

लोकभर्तुरनालोक-शोकशङ्काऽतिसङ्कुलम् ।
ततस्तं विषमूर्च्छाल-मिव मन्त्रीत्यबोधयत् ॥ ३८८ ॥
नृप! नालोकि लोकेश!, इत्यर्त्ति मा वृथा कृथाः ।
यन्मानसे कृतावासः, स तवास्ते दिवानिशम् ॥ ३८९ ॥
श्रितान्तःस्वामिनि स्वान्ते, किमित्येतत् तमस्तव? ।
अप्रकाशं किमाकाशं, भासमानेऽपि भास्वति? ॥ ३९० ॥
किञ्चैतदपि चित्तान्त-र्विचारज्ञ! विचारय ।
गर्भस्थितस्य[6] कस्यापि, पिता दैवाद् विपद्यते ॥ ३९१ ॥
बाल्येऽङ्कं नीत्वा बाहुभ्यां, धृत्वा न्यस्यानने दृशौ ।
पित्राऽर्पितां पिबत्येष[6], श्रुत्वा नोल्लापनासुधाम्? ॥ ३९२ ॥
बहिस्तो[7] गेहमागच्छन्, रममाणं गृहाङ्गणे ।
प्रीत्योत्पाद्य रजोयुक्तं, जनकस्तं[8] न चुम्बति ॥ ३९३ ॥
सम्प्रेक्ष्य जननी तस्य, श्रीमत्पुत्रानलङ्कृतान् ।
तत्तद्याच्ञाकरं चैनं, साऽश्रुनेत्रा वदत्यदः ॥ ३९४ ॥
मां मुक्त्वैकाकिनीं तात!, पिता ते त्रिदिवं गतः ।
कस्तेऽर्थानर्थितानेवं, तं विना पूरयिष्यति? ॥ ३९५ ॥
मा रोदीस्तात! ते सर्वं, दास्ये स्वतनुजन्मनः ।

---

१ क-'प्रभो!' । २ क-'जगन्मान्य!' । ३ क-'मप्यहम्' । ४ तवासत्कारजन्यम् ।
५ क-'कुतस्तत्' । ६ मृतपितृको बालः । ७ बाह्यप्रदेशात् । ८ मृतपितृकं बालम् ।

अप्यन्यसदने दास्यं, कारं कारं शनैः शनैः ॥ ३९६ ॥
इति मातुर्गिरो दीनाः, शृण्वन् दीनाननोऽन्वहम् ।
तया दुःखशतैः पाल्याद्, बाल्यादुत्तार्यते सुतः ॥ ३९७ ॥
स्वजनैरप्यवज्ञाता, सज्जनैरनुशोचिता ।
कृच्छ्रान्माता विना पत्या, निजापत्यानि वर्द्धयेत् ॥ ३९८ ॥
अहो बाहुबले ! धन्य-स्त्वदन्यः कोऽस्तु भूतले ? ।
लालितः पालितश्चासि, जगन्नाथेन यः स्वयम् ॥ ३९९ ॥
तेनैवानुदिनं देव !, ग्राहितस्त्वमनुग्रहात् ।
बालेन्दुरिव पक्षेण, शुक्लेन सकलाः कलाः ॥ ४०० ॥
तेनैव भूरिशो भूभृत्-पुत्रिकाः परिणायितः ।
त्वं ताभिः शोभसेऽत्यन्तं, ताराभिरिव चन्द्रमाः ॥ ४०१ ॥
विभज्य भरतादिभ्यो, भूविभागान् जगद्विभुः ।
तुभ्यं तु 'बहली' देशं, बहुदेशोत्तमं ददौ ॥ ४०२ ॥
सम्प्रति त्यक्तराज्योऽयं, विहरन् निरवग्रहः ।
प्रयाति यत्र तत्रापि, यत्र तत्रापि तिष्ठति ॥ ४०३ ॥
विभुस्त्रिभुवनस्यापि, यदेवं तप्यते तपः ।
तन्मन्येऽतःपरं किञ्चित्, परं चिन्तयति प्रभुः ॥ ४०४ ॥
[1]भवदर्थान् समर्थ्यासौ, स्वार्थं साधयतेऽधुना ।
तत् किमद्यापि तापाय, तवास्यानुग्रहस्पृहा ? ॥ ४०५ ॥
अथ ते तातपादानां, पूजनोत्कण्ठया मनः ।
ताम्यत्यतीव तत् तेषां, बिम्बान्येतानि पूजय ॥ ४०६ ॥
नतैः प्रभोः पादबिम्बैः, प्रभुपादा नता ध्रुवम् ।
बिम्बदर्शनतः किं न, देवबुद्धिर्विजृम्भते ? ॥ ४०७ ॥
इति मन्त्रिगिरा बुद्धः, शुद्धभक्तिः प्रभोर्नृपः ।
पदबिम्बे ववन्देऽब्ज-वज्र-मत्स्यादिलाञ्छिते ॥ ४०८ ॥

प्रभुबिम्बपूजनम्

वाद्येषु वाद्यमानेषु, मणिपुष्पमुखैस्ततः ।

१ क-'भवदर्थ्यान् समर्प्यासौ' ।

सोऽपूजयत् पादबिम्बे, साक्षात् पादाविव प्रभोः ४०९ ॥
अथान्तःपुरपौराद्या, गौरान्तःकरणाः प्रभोः ।
ववन्दिरे पादबिम्बे, भालचुम्बितभूमयः ॥ ४१० ॥
प्रभोर्माऽऽक्रमतात् कोऽपि, पदस्थानमिति द्रु[1]तम् ।
तत्र रत्नमयं चक्रे, धर्मचक्रं धराधवः ॥ ४११ ॥
तदेकयोजनौन्नत्य-मष्टयोजनविस्तृतम् ।
अरैः श्रेष्ठं सहस्रेण, करैर्बिम्बं रवेरिव ॥ ४१२ ॥
तत् क्षे[2]णं तत्क्षणात् प्रैक्षि[3], प्रभावातिशयात् प्रभोः ।
यद् विना वैक्रियीं शक्तिं, शक्रैरपि सुदुष्करम् ॥ ४१३ ॥
सर्वतः पर्वतप्र[4]ख्यं, राज्ञा पुष्पैस्तदार्चितम् ।
शुशुभे भुवि तस्यैव, [5]श्रेयः स्थेय इवोच्छ्रितम् ॥ ४१४ ॥
निर्वाह्याष्टाहिकां कृत्वा, रक्षकानर्चकानपि ।
त[6]स्य क्ष्म[7]नति'स्तक्ष-शिलां' बाहुबलिर्ययौ ॥ ४१५ ॥
भगवानपि निःसङ्गः, स्वाङ्गेऽपि ममतोज्झितः ।
व्यहरद् वसुधामेको, ध्यायन्नात्मानमात्मना ॥ ४१६ ॥
जन्मलक्षाप्तजन्मानि, दुष्कर्माणि शरीरिणाम् ।
दह्यन्ते गहनान्युच्चै-स्तप्तेनैव तपोऽग्निना ॥ ४१७ ॥
विघ्नियाकम्पदायीनि, जगद्व्यापीनि देहिनाम् ।
तुहिनानीव कर्माणि, विलीयन्ते तपोऽनलैः ॥ ४१८ ॥
इत्युत्कटतपोनिष्ठः, कष्टवल्गदभिग्रहः ।
स्वामी भ्रमन् [8]हताकाङ्क्षो, देहे सेहे परीषहान् ॥ ४१९ ॥
आलोकात् तु प्रभोर्लोकाः, प्राक् तद्वात्सल्यवासिताः ।
तद्भक्तिं व्यक्तिमानिन्यु-स्ताभिस्ताभिरुपास्तिभिः ॥ ४२० ॥
प्रभोः पादाम्बुजद्वन्द्वे, लक्ष्मीखेलनसद्मनि ।
रजः प्रमार्जयामासुः, केशपाशेन केचन ॥ ४२१ ॥
तीर्णे भवार्णवे तीर-पङ्कोत्तारपरायणाः ।

---

१ क-'भुवम्' । २ ख-'कृतं' । ३ जनैरिति शेषः । ४ सदृशम् । ५ ख-'स्थेयः श्रेय' । ६ धर्मचक्रस्य । ७ ख-'कृशानति' । ८ ख-'हताकाङ्क्षो' ।

भूपीठलुठनैः केऽपि, [1]प्रापुः पारमिव प्रभुम् ॥ ४२२ ॥
चर्चितौ चन्दनैः कैश्चि–च्चरणौ रेजतुः प्रभोः ।
नखेन्दुनिचयस्वच्छ–ज्योत्स्नाविच्छुरिताविव ॥ ४२३ ॥
भर्त्तरीदृग्भवावर्त्त–क्रोडात् कर्षेति याच्ञया ।
किल चेलाञ्चलैः केचि–न्न्युञ्छनानि विभोर्व्यधुः ॥ ४२४ ॥
केचिदद्भुतसौभाग्य–गुणाकृष्टा [2]जगत्प्रभुम् ।
अनुजग्मुर्यथा यान्तं, भृङ्गाः सुरभिमारुतम् ॥ ४२५ ॥
आत्मानं सुकृतैः पूर्णं, कुर्वाणाः केचन प्रभुम् ।
पारणं कारयामासुः, प्रासुकैः पायसादिभिः ॥ ४२६ ॥
पूज्यमानो जनैरेवं, पादन्यासैः पवित्रयन् ।
देशाद् देशं ययौ स्वामी, द्वीपाद् द्वीपमिवार्यमा ॥ ४२७ ॥
तद्भक्तिमपि तां त्यक्तु–कामोऽकाममनाः प्रभुः ।
आर्य[3]भूमिमथामुञ्चद् विरक्तो वनितामिव ॥ ४२८ ॥

अनार्यदेशेषु प्रभोर्विहारः

[4]यवना–ऽडम्ब–इल्लादि–[5]म्लेच्छनीवृत्स्वनार्यकान् ।
दर्शनाद् भद्रकीचक्रे, सोऽर्कवत् कमलाकरान् ॥ ४२९ ॥

---

१ क–'प्राप्तपार०' । २ ख–'जगत्पतिम्' । ३ क–'भूमी०' ।

४ प्रभुणा विहारद्वारा का का भूमिरलङ्कृतेति जिज्ञासायास्तृप्त्यर्थं प्रोक्त**मावश्यकनिर्युक्तौ**–

"बहली अडंब इल्ला, जोणगविसओ सुवन्नभूमी अ ।
आहिंडिया भगवया, उसभेण तवं चरंतेण ॥ ३३६ ॥"
[ बहली अडम्ब इल्ला योनकविषयः सुवर्णभूमिश्च ।
आहिण्डिता भगवता ऋषभेण तपश्चरता ]

५ **प्रश्नव्याकरणे** आश्रवद्वारे चतुर्थे सूत्रे विषयोऽयं दरीदृश्यते, यथाहि—

"बहवे मिलिक्खुजाती के ते ?" सक-जवण-सबर-बब्बर-गाय-मुरुंड-उद(ड्ड)-भडग-ति(भि)-त्तिय-पक्कणिय-कुलक्ख-गोड-सिंहल-पारस-कोंच-अंध-दविल-बिल्लल(चिल्लय)-पुलिंद-अरोस-डोव-पोक्कण-गंधहारग बहलीय-जल्ल रोम-मास-बउस-मलय-चुंचुया य चूलिया कोंकणगा भेत्त-पण्ह(ल्ह)व-मालव-महुर-आभासिय-अणक्क-चीण-ल्हा(ला)सिय-खस-खासिया नेहु(ट्ठ)र-मरहट्ठ-मुट्ठिय-आरब-डोबिलग-कुहण-केकय-हूण-रोमग-रुरु-मरुगा चिलायविसयवासी य पावमतिणो ।"

[बहवो म्लेच्छजातयः कास्ताः ? शक–यवन–शबर–बर्बर-काय-मुरुण्ड–उद(ड्ड)-भडक–ति(भि)-त्तिक-पक्कणिक-कुलाक्ष–गौड–सिंहल–पारस-क्रौञ्चा–ऽन्ध्र–द्राविड-बिल्वल-पुलिन्दा–ऽऽरोष-डोम्ब–पोक्कण-गन्धहारक-बहलीक-जल्ल-रोम-माष-बकुश-मलय-चुञ्चुकाश्च चूलिकाः कोङ्कणका भेद–पह्लव-

उपसर्गाः क्वचिन्नोप-सर्पन्ति स्मादिमं जिनम् ।
तमांसीव त्विषामीशं, सर्पा इव [1]पतत्पतिम् ॥ ४३० ॥
वायूनामपि यत् काय-स्पर्शिनां स्पर्शनाज्जनान् ।
नास्पृशन्नुपसर्गास्ते, [2]सैन्नं तस्य श्रयन्तु किम् ? ॥ ४३१ ॥
महारण्येषु निष्कम्पः, पुरेषूपवनेष्विव ।
[3]विनेष्यन्निव सिंहादीन्, व्यहार्षीद् वृषभप्रभुः ॥ ४३२ ॥
[4]घूंकानां घोरघूत्कारैः, [5]फेरूणां स्फारफेत्कृतैः ।
[6]फणिनां रौद्रफूत्कारै-र्व्याघ्राणां बाढबूत्कृतैः ॥ ४३३ ॥
आत्मारामात् परिष्वक्तं, नाऽऽकर्षि वृषभप्रभोः ।
भ्रान्तानां वाक्यैः सन्मार्गाद्, विविक्तस्येव मानसम् ॥ ४३४ ॥--युग्मम्
[7]पारीन्द्रः प्रोच्छलत्पुच्छ-च्छटाच्छोटैरपुस्फुटत् ।

---

मालव-मद्दुरा-ऽऽभाषिका-ऽनक्क-चीन-ल्हा(ला)सिक-खस-खासिका　नेह(ष्ट)र-महाराष्ट्र-मौष्ट्रिका-ऽऽरब-डोबि(म्ब)लक-कुहण-केकय-हूण-रोमक-रुरु-मरुकाः किरातविषयवासिनश्च पापमतयः ।]
प्रज्ञापनासूत्रे प्रथमे पदे ३७तमे सूत्रेऽपि म्लेच्छविषयक उल्लेखो वर्तते, किन्तु ग्रन्थगौरव-भयान्नावतार्यतेऽत्र । जिज्ञासुना द्रष्टव्यं मदीयं स्पष्टीकरणं ( पृ० ५९ ) ऋषभपञ्चाशिकायाः ।
प्रवचनसारोद्धारेऽनार्यदेशा निर्दिष्टा यथाहि–
"सग-जवण-सबर-बब्बर-काय-मुरंडोड्ड(डड्ड)-गोण(ड्ड)-पक्कणया ।
अरबाग-हो(हू)ण-रोमय-पारस-खस-खासिया चेव ॥ १५८३ ॥
दुंबिल(विल)य-लउ(कु)स-बोक्कस-भिल्लंध-पुलिंद-कुं(कों)च-भमररुआ ।
कोवा(कावो)य-चीण-चं(चुं)चुय-मालव-दमिला(विडा)-कुलग्घा(त्था) य ॥१५८४॥
केक्कय-किराय-हयमुह खरमुह गयतुरयमिंढयमुहा य ।
हयकन्ना गयकन्ना अन्ने वि अणारिया बहवे ॥ १५८५ ॥"
[ शक-यवन-शबर-बर्बर-काय-मुरुण्ड-उड्ड-गोड्ड-पक्वणकाः ।
अरबाक-हूण-रोमक-पारस-खस-खासिका एव ॥
दुम्बिलक-लकुश-बोक्कस-भिल्ला-ऽऽन्ध्र-पुलिन्द-क्रौञ्च-भ्रमररुताः ।
कापोत-चीन-चञ्चुक-मालव-द्रविड-कुलार्थाश्च ॥
कैकेय-किरात-हयमुखाः खरमुखा गजतुरङ्गमेण्ढकमुखाश्च ।
हयकर्णा गजकर्णा अन्येऽपि अनार्या बह्वः ॥ ]
धनुश्चिह्नान्तर्गताक्षराणि प्रायोऽभिधानराजेन्द्रपाठविषयकाणि ।
सूत्रकृताङ्गे १२३तमे पत्रेऽपि गाथाद्वयमाद्यं प्रायोऽक्षरशो दृश्यते ।

१ गरुडम् ।　२ क–'सङ्गतस्रा' ।　३ विनये स्थापयन्निव ।　४ 'प्रकामं घोर०' ।
५ शृगालानाम् ।　६ नागानाम् ।　७ शरभः ।

अटव्युर्वी पुनर्गुर्वी, नाधीशध्यानधारणाम् ॥ ४३५ ॥
मत्तेभैर्भज्यमानेषु, स्थानेषु स्वेषु शाखिषु ।
चक्रिरे पुरतः पत्युः, खगाश्चुम्ब्रा इवारवैः ॥ ४३६ ॥
तेजसेऽशतपस्तेजः-स्पर्द्धां[1] विदधतो ध्रुवम् ।
दावधूमध्वजा[2] धूम्या[3]-मकीर्त्तिमिव तेनिरे ॥ ४३७ ॥
उपाद्रवन् कुरङ्गाद्यान्, कुरङ्गेन्द्रादयोऽपि नं[4] ।
प्रभावाद् यस्य ते तस्य, बाधां कुर्वन्तु किं प्रभोः ? ॥ ४३८ ॥
स्वामी शिरसि यस्याद्रेः, प्रतिमां प्राप तेन सः[5] ।
भूभृद्वृन्देऽभवल्लब्ध-कल्याणमुकुटः स्फुटम् ॥ ४३९ ॥
महातरङ्गिणीतीरे, प्रभुः प्रतिमया [6]स्थितः ।
रराज तरुवत् किन्तु, पवनैरप्यकम्पितः ॥ ४४० ॥
चतुर्थादि मासिकादि, विदधद् विविधं तपः ।
व्यहार्षीदार्यदेशेषु, कृशोऽप्यक्षीणशक्तिकः ॥ ४४१ ॥
वल्गन्तः प्रेत-वेताल-पिशाचाः प्रतिमापरम् ।
प्रभुं प्रेक्ष्य तमीषु द्राक्, श्मशाने सौम्यतां ययुः ॥ ४४२ ॥
ग्रीष्मभीष्मतरभास्करत्विषो, भर्त्तुरुग्रतपसोऽग्रतो हिमाः ।
यत्[8] स्थितः प्रतिमया स कामया-मास तासु न मनाग[9]नातपम् ४४३[11]
वर्षारात्रौ तस्य धाराधराणां, धारासारैः स्फारझञ्झामरुद्भिः ।
कायोत्सर्गासङ्गितः शैलशृङ्गे, नो विध्यातो ध्यानदीपः प्रदीपः ४४४[12]
[13]हैमनीष्वपि तमीषु स धीर-स्तीरसीम्नि सरितः प्रतिमास्थः ।
मारुतैः सतुहिनैरपि ना-ऽऽप [14]क्रान्तिमान्तरमहस्ततिलीनः ॥ ४४५ ॥[15]

कायस्यास्य प्रतिभवमुपक्रम्यते शर्म कर्त्तुं
जीवैस्तत् तानुपदमुपायाति जन्मान्तरेऽसौ ।
इत्येतस्मिन्नुपरतमनास्तापशीतादिपुष्टं
कष्टं चक्रे यतिपतिरयं केवलत्वं किलेप्सुः ॥ ४४६ ॥[16]

---

१ क-'शस्तप०'। २ दावानलाः। ३ धूमसंहतिम्। ४ क-'च'। ५ पर्वतः। ६ ख-'स्थिरः'। ७ सार्धपञ्चविंशतिसङ्ख्येषु। ८ क-'यः'। ९ सूर्यकान्तिषु। १० छायाम्। ११ रथोद्धता। १२ शालिनी। १३ हेमन्तरात्रिषु। १४ क-'क्लान्त०'। १५ स्वागता। १६ मन्दाक्रान्ता।

खेलन्तु दंशमशका महिषा वृषाश्च, कण्डूयनानि जनयन्तु मुदा मदङ्गे ।
तेषां सुखार्थमिति पारयति स्म कायो-त्सर्गं प्रभुर्न समयेऽपि दयामयोऽसौ ४४७[1]

आसंसारं प्रियसहचरीं मामनादृत्य मौनी
कामक्षामः[2] श्रयति करुणामेष सम्प्रत्यकम्प्रः ।
त्यक्ष्याम्येनं तदिह बहवः सन्ति सक्ता मयीति
द्वेषात् प्रैक्षि त्रिभुवनविभुर्नान्वहं मोहलक्ष्म्या ॥ ४४८ ॥[3]

जन्माम्बायां विमोहः प्रवचनजननीपालने यत्नमश्नन्
सर्वत्रोच्चैर्दयालुर्भवपरिभवने निष्कृपत्वं वितन्वन् ।
शान्तस्वान्तोऽन्तरङ्गद्विषदभिकषणे रोषणत्वं प्रपुष्यन्
कामं काम्येऽस्तकामः प्रभुरहह तपो दुस्तपं तप्यते स्म ॥ ४४९ ॥[4]

बिभ्रति भावमभावं, स्तवनं निन्दामुपास्तिमनुपास्तिम् ।
स जने सम एव जिनः, क्वापि[5] न तेने पुनः परं पक्षम् ॥ ४५० ॥[6]

शत्रौ मित्रे समः स्वामी, किन्तु यस्यान्तराऽरयः ।
शान्ताः के वयमस्येति, नासन् बाह्याः खलु द्विषः ॥ ४५१ ॥[7]

यत् तप्तुं दिनमपरैर्न शक्यमेकं, स्वाम्येकं दिनमिव तत्समाः सहस्रम् ।
अम्लानः किमपि तपः प्रतप्यमानः, शान्तात्मा भुवमनवग्रहो व्यहार्षीत्४५२[8]

स 'पुरिमताला'भिख्ये, शाखानगरे विभु'र्विनीता'याः ।
अतिनन्दनमुत्तरतः[9], 'शकटायन'काननमुपेतः ॥ ४५३ ॥[10]

तदुद्यानान्तरव्यग्रो, न्यग्रोधस्य तरोरधः ।
कृताष्टमतपाः स्वामी, प्रतिमां प्रतिपन्नवान् ॥ ४५४ ॥[11]

परमज्योतिरुद्द्योत-भिद्यमानतमोभरः ।
बभौ प्रतिमया स्वामी, सुवर्णप्रतिमेव सः ॥ ४५५ ॥[12]

उद्धर्तुमुग्रनरकान्तरगान् कृपालु-रालम्बमानगुरुबाहुयुगो जिनेन्द्रः ।
आलोकनामृतरसैः किल सेक्तुमेतान्,नासाग्रनीतनयनो विभुराबभासे४५६[13]

अष्टमादिषु गुणस्थानेषु प्रभोरारोहः

गुणस्थानादप्रमत्त[14]-संयताख्यात् तदा प्रभुः ।

---

१ वसन्ततिलका । २ अतिकृशः । ३ मन्दाक्रान्ता । ४ स्रग्धरा । ५ क-'कोऽपि' । ६ आर्या । ७ अनुष्टुप् । ८ प्रहर्षिणी । ९ पुरिमतालादुत्तरस्यां दिशि । १० आर्या । ११-१२ अनुष्टुप् । १३ वसन्ततिलका । १४ सप्तमात् ।

भेजेऽष्टमं गुणस्थान-मपूर्वकरणाह्वयम् ॥ ४५७ ॥[१]

शब्दं श्रोत्रादर्था-दर्थं शब्दाद् विभुर्व्रजन् भेजे ।
नानात्वश्रुतवीचा-रं शुक्लध्यानमाद्यमथ ॥ ४५८ ॥[२]

अनिवृत्तिबादरमतो-ऽप्यथ परिणामानिवृत्तिकृन्नवमम् ।
वृणुते स्म गुणस्थानं, वप्राद् वप्रं हरिरिवाद्रेः ॥ ४५९ ॥[३]

अथ सूक्ष्मसम्परायं, दशमं स्वामी श्रितो गुणस्थानम् ।
किट्टीकृतलोभतया, सोपानादिव स सोपानम् ॥ ४६० ॥[४]

मोहस्य क्षयतः क्षीण-मोहाह्वं द्वादशं ततः ।
प्रभुः प्राप गुणस्थानं, ग्रामाद् ग्राममिवाध्वगः ॥ ४६१ ॥[५]

ऐक्यश्रुतं द्वितीयं, शुक्लध्यानं दधाववीचारम् ।
तस्य गुणस्थानस्या-ऽन्तिमक्षणे त्रिजगतीनाथः ॥ ४६२ ॥[७]

अमुना ध्यानेन मनः, परमाणौ सकललोकविषयमधात् ।
सर्वाङ्गीणं दंशे, विषमिव मन्त्रेण विश्वेशः ॥ ४६३ ॥[८]

अपकृष्टेन्धननिवहः, शेषस्वल्पेन्धनोऽनलो ज्वलितः ।
निर्वाति यथा क्षणतो, निर्वाणं तन्मनोऽथ तथा ॥ ४६४ ॥[१०]

पञ्च ज्ञानावरणीं[११], दृष्ट्यावरणं चतुर्विधं स विभुः ।
पञ्चान्तरायभेदा-ननीनशद् घातिशेषमिति ॥ ४६५ ॥[१२]

प्रभोः केवलज्ञानस्य प्राप्तिः

ततो व्रताद् गते वर्ष-सहस्रे मासि फाल्गुने ।
कृष्णैकादश्यां शीतांशा-वुत्तराषाढया श्रिते ॥ ४६६ ॥[१३]

प्रातः कालत्रयीं लोक-त्रयीं लोकत्रयीपतेः ।
प्रत्यक्षीकुर्वदुत्पेदे, केवलज्ञानमुज्ज्वलम् ॥ ४६७ ॥[१४]-युग्मम्

अस्माकं पतयः परां मुदमवाप्स्यन्ति प्रभोर्वाक्सुधां
स्वादं स्वादमितीव पीवरमुदा मन्ये प्रसेदुर्दिशः ।

---

१ अनुष्टुप् । २-४ आर्या । ५ अनुष्टुप् । ६ क्षीणमोहगुणस्थानस्य । ७-८ आर्या । ९ प्रभोर्मनः । १० आर्या । ११ ख-'ज्ञानावरणं' । १२ आर्या । १३-१४ अनुष्टुप् ।

स्वर्गौकःकृतगन्धवारिसुमनःप्राग्भारवर्षेण नः
सौरभ्यं प्रभविष्यतीति मरुतो वान्ति स्म शान्ताः सुखाः ॥४६८॥[2]
को धीरः प्रतिवीरतां जनयतु श्रीमद्युगादिप्रभोः
कल्याणप्रकराकरे त्रिजगतां यज्ज्ञानकल्याणके ।
किं ब्रूमो मरुतामभूद् भुवि मनुष्याणां तिरश्चां क्षणं
तेषां श्वभ्रनिवासिनामपि सुखोल्लासः प्रकाशान्वितः ॥ ४६९ ॥[3]

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापरनाम्नि श्रीजिनेन्द्रचरिताभिधाने महाकाव्ये वीराङ्के श्रीआदिनाथचरिते छद्मस्थविहारे कच्छमहाकच्छस्वरूप-नमिविनमिविद्याधरैश्वर्य-श्रेयांसकारितप्रभुपारणक-केवलज्ञानोत्पत्तिप्रकाशन-त्रयोदशः सर्गः ॥ १३ ॥

किं दातुर्भावनायाः किमु तदभिनवप्रोद्भवत्पुण्यपङ्क्तेः
किं वर्षान्तात्तशुद्धाहृतिविशदतमस्वामिचारित्रलक्ष्याः ।
किं विश्वश्रेयसां किं त्रिदशपतिमुदां स्पर्द्धया वर्द्धमाना
श्रेयांसक्षिप्यमाणेक्षुरससततिशिखा पातु नाभेयपाणौ ॥ १ ॥[5]
औन्नत्यं कठिनत्वमित्रमचले गाम्भीर्यमम्भःपतौ
क्षारत्वेन कुटुम्बितं दहनताहर्म्यं हुताशे महः ।
चन्द्रे सान्द्रमलाः कला इति गुणस्त्वेकः सदोषस्त्वसौ
पद्मेऽस्मिन्नमिता गुणाः पुनरहो दोषस्य लेशोऽपि न ॥ २ ॥[7]

[8]ग्रन्थाग्रं ५६७ ॥



---

१ देवकृत० । २-३ शार्दूलविक्रीडितम् । ४ क-'भव०' । ५ स्रग्धरा । ६ घनमलाः । ७ शार्दूल० । ८ ख-'श्लोकसङ्ख्या ५८० त्रयोदशानां सर्गाणां श्लोकसङ्ख्या ४१९१ जाताऽनुमीयते' ।

# चतुर्दशः सर्गः १४

सकलमङ्गलमण्डलकैरवा-[1]करविकाशकरामृतदीधितिः ।
निचितनेत्रचकोरमदो मुदे, भवतु भावभृतां वृषभप्रभुः ॥ १ ॥[2]

केवलज्ञानमहोत्सवे देवागमनम्

किमु प्रमादो भवतां जगत्प्रभोः, प्रकल्प्यतां केवलपर्वमङ्गलम् ।
इतीरितुं स्वस्वपतीनिव द्रुतं, सुरेन्द्रपीठान्यधिकं चकम्पिरे ॥ २ ॥[3]

प्रवादितानां मरुदीश्वरैर्महा-घण्टाघटानां रणितैरुदित्वरैः ।
प्रमादनिद्रां परितर्ज्य[4] निर्जराः, श्रितत्वराः स्वान् परिवव्रिरे प्रभून् ॥३॥[5]

द्रुतं 'सुधर्मा'धिपतेर्थियासतः, स्वाम्यन्तिकं सौकृतपिण्डवत् पुरः ।
अवल्गदैरावणवारणप्रभु-र्भूत्वा सुरः शुभ्रविभाविभासुरः ॥ ४ ॥[6]

वपुर्वलक्षद्युतिलक्षयोजन-प्रमाणमत्यायतदन्तकं दधौ ।
'कैलास' शैलः किल काञ्चनाचल-स्पर्द्धानुबन्धी स सुराधिपद्विपः ॥५॥[7]

तस्य प्रभाराशिभिरभ्रमुप्रभोः, शुभ्रांशुशुभ्रैः ककुभो बभासिरे ।
सद्यः 'सुधर्मा'धिपतेर्जिनाधिप-ध्यानप्रसूतैः सुकृतोत्करैरिव ॥ ६ ॥[8]

जजृम्भिरे जम्भनिशुम्भिकुम्भिनो-ऽनिला विशालश्रुतितालचालनात् ।
मन्ये भिदायै श्रमघर्ममर्मण-स्त्वराभरेणापततां दिवौकसाम् ॥ ७ ॥[10]

सिन्दूररेणुप्रसरेण भासुरौ, कुम्भौ स[11] भेजे जय-विक्रमश्रियोः ।
विलासशैलाविव [12]तद्विलासतः, सक्तक्रमालक्तकरक्तरोचिषौ ॥ ८ ॥[13]

कर्णानिलैस्तस्य मदाम्बुबिन्दवः, समन्ततः श्यामलकान्तयोऽपतन् ।
दुष्कर्मलेशा इव देहदेशतो[14], जिनेशसेवारसिनां सुधाऽशिनाम् ॥ ९ ॥[15]

वराणि माणिक्यघटाविटङ्कितैः, कल्याणपट्टैः कमलासनैरिव ।
सदामदोऽष्टौ वदनानि सोऽवहत्, किलाष्ट काष्ठाः[16] सममेव चुम्बितुम् १०[17]

विशालदीर्घान् मधुमञ्जुलत्विषो, मुखे मुखेऽष्टौ दशनान् दधार सः ।
चेतांसि विस्मापयितुं समेष्यतां, तदा चतुःषष्टिविडौजसामिव ॥ ११ ॥[18]

---

१ ख-'करविलास०' । २ द्रुतविलम्बितम् । ३ वंशस्थविलम् । ४ ख-'वर्ज्य' ।
५-७ इन्द्रवंशा । ८ चन्द्रोज्ज्वलैः । ९ इन्द्रवंशा । १० वंशस्थविलम् । ११ ऐरावणः ।
१२ तयोः क्रीडया । १३ इन्द्रवंशा । १४ क-'लेशतो' । १५ इन्द्रवंशा । १६ दिशः ।
१७-१८ इन्द्रवंशा ।

पीयूषकुण्डानि नवाप्यनेकधा, कृत्वा ध्रुवं पुष्करिणी[1] रदे रदे ।
सोऽष्टौ च पद्मानि किलोल्लसत्पयो-देवी[2]मुखानि प्रति पुष्करिण्यधात् १२[3]
तेनेऽष्टपत्रीं प्रति पद्ममायतां[4], किलाष्टदिक्पल्लवितां सुशिल्पिताम् ।
स नाटकानि प्रतिपत्रमष्ट च, श्रेयोधराणि स्वधियो गुणानिव ॥ १३ ॥[5]
द्वात्रिंशताऽथ प्रतिनाटकं स्थितैः, पात्रैश्चतुर्धाऽभिनयः प्रपञ्चितः ।

---

१ क-'पुष्करिणां' ।　　२ जलदेवी० ।　　३ इन्द्रवंशा ।　　४ क-'मायतं' ।
५ "तए णं से **सूरियाभे** देवे तप्पढमयाए णाणामणिकणगरयणविमलमहरिहनिउणोवचिय-मिसिमिसिंतविरतियमहाभरणकडगतुडियवरभूसणुज्जलं पीवरं पलंबं दाहिणं भुयं पसारेति । तओ णं सरिसयाणं सरित्तयाणं सरिव्वयाणं सरिसलावण्णरूवजोवनगुणोववेयाणं एगाभरणवसणगहियणिज्जोआणं दुहतोसंवलियग्गणियत्थाणं आविद्धतिलयामेलाणं पिणिद्धगेविज्जकंचुयाणं उप्पीलियचित्तपट्टपरियरसफेणकावत्तरइयसंगयपलंबवत्थंतचित्तचिल्ललगनियंसणाणं एगावलिकंठरइयसोभंतवच्छपरिहत्थभूसणाणं अट्ठसयं णट्टसज्जाणं देवकुमाराणं णिगच्छति । तयाणंतरं च णं णाणामणि जाव पीवरं पलंबं वामं भुयं पसारेति, तओ णं सरिसयाणं सरित्तयाणं सरिव्वतीणं सरिसलावण्णरूवजोव्वणगुणोववेयाणं एगाभरणवसणगहियनिज्जोयाणं दुहतोसंवेल्लियग्गनियत्थीणं आविद्धतिलयामेलाणं पिणद्धगेवेज्जकंचुतीणं णाणामणिरयणभूसणविराइयंगमंगाणं चंदाणणाणं चंदद्धसमनिलाडाणं चंदाहियसोमदंसणाणं उक्का इव उज्जोवेमाणीणं सिंगारागारचारुवेसाणं हसियभणियचिट्ठियविलाससललियसंलावनिउणजुत्तोवयारकुसलाणं गहियाउज्जाणं अट्ठसयं नट्टसज्जाणं देवकुमारियाणं णिग्गच्छइ । तए णं से **सूरियाभे** देवे अट्ठसयं संखाणं विउव्वति, अट्ठसयं संखवायाणं विउव्वइ, अट्ठसयं सिंगाणं विउव्वइ, अट्ठयसं सिंगवायाणं विउव्वइ, अट्ठसयं संखियाणं विउव्वइ, अट्ठसयं संखियवायाणं विउव्वइ, अट्ठसयं खरमुहीणं विउव्वइ, अट्ठसयं खरमुहिवाइयाणं विउव्वइ, अट्ठसयं पेयाणं विउव्वति, अट्ठसयं पेयावायगाणं, अट्ठसयं पीरपीरियाणं विउव्वइ, एवमाइयाइं एगूणपण्णं आउज्जविहाणाइं विउव्वइ २ त्ता तए णं ते बहवे देवकुमारा य देवकुमारीयाओ य सद्दावेति, तए णं ते बहवे देवकुमारा य देवकुमारीयो य **सूरियाभेणं** देवेणं सद्दाविया समाणा हट्ठ जाव जेणेव **सूरियाभे** देवे तेणेव उवागच्छन्ति तेणेव २ त्ता **सूरियाभं** देवं करयलपरिग्गहियं जाव वद्धावित्ता एवं वयासी-संदिसंतु णं देवाणुप्पिया ! जं अम्हेहिं कायव्वं । तए णं से **सूरियाभे** देवे ते बहवे देवकुमारा य देवकुमारीओ य एवं वयासी-गच्छह णं तुब्भे देवाणुप्पिया ! समणं भगवं **महावीरं** तिक्खुत्तो आयाहिणपयाहिणं करेह, करित्ता वंदह नमंसह, वंदित्ता नमंसित्ता **गोयमाइयाणं** समणाणं निग्गंथाणं तं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं दिव्वाणुभावं दिव्वं बत्तीसइबद्धं णट्टविहिं उवदंसेह, उवदंसित्ता खिप्पामेव एयमाणत्तियं पच्चप्पिणह । तए णं ते बहवे देवकुमारा देवकुमारियो य **सूरियाभेणं** देवेणं एवं वुत्ता समाणा हट्ठजाव करयल जाव पडिसुणंति २ जेणेव समणे भगवं **महावीरे** तेणेव उवागच्छंति २ समणं भगवं **महावीरं** जाव नमंसित्ता जेणेव **गोयमा**दिया समणा निग्गंथा तेणेव उवागच्छंति, तए णं ते बहवे देवकुमारा देवकुमारियो य समामेव समोसरणं करेंति, समा २ त्ता समामेव पंतिओ बंधंति, समामेव

पंतिओ बंधित्ता समामेव पंतिओ नमंसंति, समामेव २ सित्ता समामेव पंतीओ अवणमंति २ त्ता समामेव उन्नमंति २ एवं सहितामेव ओनमंति, एवं सहितामेव उन्नमंति, सहियामेव उण्णमित्ता थिमियामेव ओणमंति, थिमियामेव उन्नमंति, संगयामेव ओनमंति, संगयामेव उन्नमंति २ त्ता समामेव पसरंति २ त्ता समामेव आउज्जविहाणाइं गेण्हंति समामेव पवाएंसु पगाइंसु पणच्चिंसु, किं ते ?, उरेण मंदं सिरेण तारं कंठेण वितारं तिविहं तिसमयरेयगरइयं गुंजावक्ककुहरोवगूढं रत्तं तिठाणकरणसुद्धं सकुहरगुंजंतवंसतंतीतलताललयगहसुसंपउत्तं महुरं समं सललियं मणोहरं मिउरिभियपयसंचारं सुरइ सुणइ वरचारुरूवं दिव्वं णट्टसज्जं गेयं पगीया वि होत्था, किं ते ?, उद्धमंताणं संखाणं सिंगाणं संखियाणं खरमुहीणं पेयाणं परपिरियाणं आहंमंताणं पणवाणं पडहाणं अप्फालिज्जमाणाणं भंभाणं होरंभाणं [ वीणाणं वियवी(पंची)णं ] तालिज्जंताणं भेरीणं झल्लरीणं दुंदुहीणं आलिवंताणं [ मुरयाणं ] मुइंगाणं नन्दीमुइंगाणं उत्तालिज्जंताणं आलिंगाणं कुंतुंबाणं गोमुहीणं मद्दलाणं मुच्छिज्जंताणं वीणाणं विपंचीणं वल्लकीणं कुट्टिज्जंताणं महंतीणं कच्छभीणं चित्तवीणाणं सारिज्जंताणं बद्धीसाणं सुघोसाणं णंदिघोसाणं फुट्टिज्जंतीणं भामरीणं छब्भामरीणं परिवायणीणं छिप्पंतीणं तूणाणं तूंबवीणाणं आमोडिज्जंताणं आमोताणं कुंभाणं नउलाणं अच्छिज्जंतीणं मुगुंदाणं हुडक्कीणं विचिक्कीणं वाइज्जंताणं करडाणं डिंडिमाणं किणियाणं कडंबाणं वाइज्जंताणं दद्दरगाणं दद्दरिगाणं कुतुंबाणं कलसियाणं मड्डुयाणं आवडिज्जंताणं तलाणं तालाणं कंसतालाणं घट्टिज्जंताणं रिंगिरिसियाणं लत्तियाणं मगरियाणं सुसुमारियाणं फूमिज्जंताणं वंसाणं वेलूणं वालीणं परिलीणं बद्धगाणं, तए णं से दिव्वे गीए दिव्वे नट्टे दिव्वे वाइए एवं अब्भुए सिंगारे उराले मणुन्ने मणहरे गीते मणहरे नट्टे मणहरे वातिए उप्पिंजलभूते कहकहभूते दिव्वे देवरमणे पवत्तेया वि होत्था" इति **राजप्रश्नीये** २३तमे सूत्रे **सूर्याभदेवकृतनाटकस्योपक्रमः**। ६ इन्द्रवंशा।

७ नाट्यविधीनां सम्यक् स्वरूपप्रतिपादनं पूर्वान्तर्गते 'नाट्यविधि'प्राभृते आसीत्। तच्चेदानीं व्यवच्छिन्नम्। अस्य किञ्चित् स्वरूपं समस्ति **राजप्रश्नीये** (सू. २४), तद् यथा—

"तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ **महावीरस्स** सोत्थियसिरिवच्छणंदियावत्तवद्धमाणगभद्दासणकलसमच्छदप्पणमंगल्लभत्तिचित्तं णामं दिव्वं नट्ट विधिं उवदंसेंति १। तए णं ते बहवे देवकुमारा य देवकुमारीओ य सममेव समोसरणं करेंति २ त्ता तं चेव भाणियव्वं जाव दिव्वे देवरमणे पवत्तेया वि होत्था, तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ **महावीरस्स** आवडपच्चावडसेढिगसेढिसोत्थियसोवत्थिअपूसमाणगमच्छंडमगरंडजारामाराफुल्लावलिपउमपत्तसागरतरंगवसंतलतापउमलयभत्तिचित्तं णाम दिव्वं णट्टविहिं उवदंसेंति २। एवं च एक्केक्कियाए णट्टविहीए समोसरणादीया एसा वत्तव्वया जाव दिव्वे देवरमणे पवत्तेवियां वि होत्था। तए णं ते बहवे देवकुमारा देवकुमारियाओ य समणस्स भगवतो **महावीरस्स** ईहामिहउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं णामं दिव्वं णट्टविहिं उवदंसेंति ३। एगतो वक्कं दुहओ वक्कं [एगतो खुहं दुहओ खुहं] एगओ चक्कवालं दुहओ चक्कवालं चक्कद्धचक्कवालं णामं दिव्वं णट्टविहिं उवदंसंति ४ चंदावलिपविभत्तिं च वलियावलिपविभत्तिं च हंसावलिपविभत्तिं च सूरावलिपविभत्तिं च एगावलिपविभत्तिं च तारावलिपविभत्तिं च मुत्तावलिपविभत्तिं च कणगावलिपविभत्तिं च रयणावलिपविभत्तिं च णामं दिव्वं णट्टविहं उवदंसेंति ५ चंदुग्गमणपविभत्तिं सूरुग्गमणपविभत्तिं च उग्गमणुग्गमणपविभत्तिं च णामं

दिव्वं णट्टविहं उवदंसेंति ६ चंदागमणपविभत्तिं च सूरागमणपविभत्तिं च आगमणागमणपविभत्तिं च णामं दिव्वं णट्टविहं उवदंसंति ७ चंदावरणपविभत्तिं च सूरावरणपविभत्तिं च णामं दिव्वं णट्टविहं उवदंसंति ८ चंदत्थमणपविभत्तिं च सूरत्थमणपविभत्तिं च अत्थमणऽत्थमणपविभत्तिं नाम दिव्वं णट्टविहं उवदंसंति ९ चंदमंडलपविभत्तिं च सूरमंडलपविभत्तिं च नागमंडलपविभत्तिं च जक्खमंडलपविभत्तिं च भूतमंडलपविभत्तिं च [ रक्खस० महोरग० गंधव्व० मंडलपविभत्तिं च ] मंडलपविभत्तिं णामं दिव्वं णट्टविहं उवदंसेंति १० उसभललियवक्कंतं सीहललियवक्कंतं हयविलंबियं गयविलंबियं मत्तहयविलसियं मत्तगयविलसियं दुयविलंबियं णामं दिव्वं णट्टविहिं उवदंसंति ११ सागरपविभत्तिं च नागरपविभत्तिं च सागरनागरपविभत्तिं च णामं दिव्वं णट्टविहं उवदंसंति १२ णंदापविभत्तिं च चंपापविभत्तिं च नन्दाचंपापविभत्तिं च णामं दिव्वं णट्टविहं० १३ मच्छंडापविभत्तिं च मयरंडापविभत्तिं च जारापविभत्तिं च मारापविभत्तिं च मच्छंडामयरंडाजारामारापविभत्तिं च णामं दिव्वं णट्टविहिं उवदंसेंति १४ कत्तिककारपविभत्तिं च खत्तिखकारपविभत्तिं च गत्तिगकारपविभत्तिं च घत्तिघकारपविभत्तिं च ङत्तिङकारपविभत्तिं च ककारखकारगकारघकारङकारपविभत्तिं च णामं दिव्वं णट्टविहं उवदंसेंति १५ एवं चकारवग्गो वि १६ टकारवग्गो वि १७ तकारवग्गो वि १८ पकारवग्गो वि १९ असोयपल्लवपविभत्तिं च अंबपल्लवपविभत्तिं च जंबूपल्लवपविभत्तिं च कोसंबपल्लवपविभत्तिं च पल्लव २ पविभत्तिं च णामं दिव्वं णट्टविहं उवदंसेंति २० पउमलयापविभत्तिं च जाव सामलयापविभत्तिं च लयालयापविभत्तिं च णामं दिव्वं णट्टविहं उवदंसेंति २१ दुयणामं णट्टविहं उवदंसति २२ विलंबियं णामं णट्टविहिं २३ दुयविलंबियं णामं णट्टविहिं २४ अंचियं २५ रिभियं २६ अंचियरिभियं २७ आरभडं २८ भसोलं २९ आरभडभसोलं ३० उप्पयनिवयपवत्तं संकुचियं पसारियं रया(खेय)रइयमंतसंभंतणामं दिव्वं णट्टविहिं उवदंसेंति ३१ । तए णं ते बहवे देवकुमारा य देवकुमारीयाओ य समामेव समोसरणं करेंति जाव दिव्वे देवरमणे पवत्तेया वि होत्था । तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ **महावीरस्स** पुव्वभवचरियणिबद्धं च ( देवलोयचरियनिबद्धं च ) चवणचरियणिबद्धं च संहरणचरियनिबद्धं च जम्मणचरियनिबद्धं च अभिसेअचरियनिबद्धं च बालभावचरियनिबद्धं च जोव्वणचरियनिबद्धं च कामभोगचरियनिबद्धं च निक्खमणचरियनिबद्धं च तवचरणचरियनिबद्धं च ( णाणुप्पायचरियनिबद्धं च ) तित्थपवत्तणचरियनिव्वपरिनिव्वाणचरियनिबद्धं च चरिमचरियनिबद्धं च णामं दिव्वं णट्टविहिं उवदंसेंति ३२ ।

अस्य प्रतिच्छायास्थाने **जीवाजीवाभिगम**( सू. १४१ )वृत्तिगतो निम्नलिखित उल्लेखोऽवतार्यते—

"तत्र स्वस्तिकश्रीवत्सनन्दावर्त्तवर्द्धमानकभद्रासनकलशमत्स्यदर्पणरूपाष्टमङ्गलाकाराभिनयात्मकः प्रथमो नाट्यविधिः १, द्वितीय आवर्त्तप्रत्यावर्त्तश्रेणिप्रतिश्रेणिस्वस्तिकपुष्पमाणवकवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलताभक्तिचित्राभिनयात्मकः २, तृतीय ईहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुशरभचमरकुञ्जरवनलतापद्मलताभक्तिचित्रात्मकः ३, चतुर्थ एकतोच(तश्र)क्रद्विधातोच(तश्र)क्र एकतश्चक्रवालद्विधातश्चक्रवालचक्रार्द्धचक्रवालाभिनयात्मकः ४, पञ्चमश्चन्द्रावलिप्रविभक्तिसूर्यावलिप्रविभक्तिवलयावलिप्रविभक्तिहंसावलि-

प्रविभक्तितारावलिप्रविभक्तिमुक्तावलिप्रविभक्तिरत्नावलिप्रविभक्तिपुष्पावलिप्रविभक्तिनामा ५, षष्ठश्चन्द्रोद्गमप्रविभक्तिसूर्योद्गमप्रविभक्त्यभिनयात्मक उद्गमनोद्गमनप्रविभक्तिनामा ६, सप्तमश्चन्द्रागमनसूर्यागमनप्रविभक्त्यभिनयात्मक आगमनागमनप्रविभक्तिनामा ७, अष्टमश्चन्द्रावरणप्रविभक्तिसूर्यावरणप्रविभक्त्यभिनयात्मक आवरणावरणप्रविभक्तिनामा ८, नवमश्चन्द्रास्तमयनप्रविभक्तिसूर्यास्तमयनप्रविभक्त्यभिनयात्मकोऽस्तमयनास्तमयनप्रविभक्तिनामा ९, दशमश्चन्द्रमण्डलप्रविभक्तिसूर्यमण्डलप्रविभक्तिनागमण्डलप्रविभक्तियक्षमण्डलप्रविभक्तिभूतमण्डलप्रविभक्त्यभिनयात्मको मण्डलप्रविभक्तिनामा १०, एकादश ऋषभमण्डलप्रविभक्तिसिंहमण्डलप्रविभक्तिहयविलम्बितगजविलम्बितहयविलसितगजविलसितमत्तहयविलसितमत्तगजविलसितमत्तहयविलम्बितमत्तगजविलम्बिताभिनयो द्रुतविलम्बितनामा ११, द्वादशः सागरप्रविभक्तिनागप्रविभक्त्यभिनयात्मकः सागरनागप्रविभक्तिनामा १२, त्रयोदशो नन्दाप्रविभक्तिचम्पाप्रविभक्त्यभिनयात्मको नन्दा चम्पाप्रविभक्त्यात्मकः १३, चतुर्दशो मत्स्याण्डकप्रविभक्तिमकराण्डकप्रविभक्तिजारप्रविभक्तिमारप्रविभक्त्यभिनयात्मको मत्स्याण्डकमकराण्डकजारमारप्रविभक्तिनामा १४, पञ्चदशः क इति ककारप्रविभक्तिः ख इति खकारप्रविभक्तिर्ग इति गकारप्रविभक्तिर्घ इति घकारप्रविभक्तिर्ङ इति ङकारप्रविभक्तिरित्येवं क्रमभाविककारादिप्रविभक्त्यभिनयात्मकः ककारखकारगकारघकारङकारप्रविभक्तिनामा १५, एवं षोडशश्चकारछकारजकारझकारञकारप्रविभक्तिनामा १६, सप्तदशः टकारठकारडकारढकारणकारप्रविभक्तिनामा १७, अष्टादशस्तकारथकारदकारधकारनकारप्रविभक्तिनामा १८, एकोनविंशतितमः पकारफकारबकारभकारमकारप्रविभक्तिनामा १९, विंशतितमोऽशोकपल्लवप्रविभक्त्याम्रपल्लवप्रविभक्तिजम्बूपल्लवप्रविभक्तिकोशाम्बपल्लवप्रविभक्त्यभिनयात्मकः पल्लव २ प्रविभक्तिनामा २०, एकविंशतितमः पद्मलताप्रविभक्त्यशोकलताप्रविभक्तिचम्पकलताप्रविभक्तिचूतलताप्रविभक्तिवनलताप्रविभक्तिवासन्तीलताप्रविभक्त्यतिमुक्तलताप्रविभक्तिश्यामलताप्रविभक्त्यभिनयात्मको लताप्रविभक्तिनामा २१, द्वाविंशतितमो द्रुतनामा २२, त्रयोविंशतितमो विलम्बितनामा २३, चतुर्विंशतितमो द्रुतविलम्बितनामा २४, पञ्चविंशतितमः अञ्चितनामा २५, षड्विंशतितमो रिभितनामा २६, सप्तविंशतितमोऽञ्चितरिभितनामा २७, अष्टाविंशतितम आरभटनामा २८, एकोनत्रिंशत्तमो भसोलनामा २९, त्रिंशत्तम आरभटभसोलनामा ३०, एकत्रिंश उत्पातनिपातप्रसक्तसङ्कुचितप्रसारितरेकरचितभ्रान्तसम्भ्रान्तनामा ३१, द्वात्रिंशत्तमस्तु चरमचरमनामानिबद्धनामा, स च **सूर्याभदेवेन** भगवतो **वर्द्धमान**स्वामिनः पुरतो भगवतश्चरमपूर्वमनुष्यभवचरमदेवलोकभवचरमच्यवनचरमगर्भसंहरणचरमभरतक्षेत्रावसर्पिणीतीर्थकरजन्माभिषेकचरमबालभावचरमयौवनचरमकामभोगचरमनिष्क्रमणचरमतपश्चरणचरमज्ञानोत्पादचरमतीर्थप्रवर्त्तनचरमपरिनिर्वाणाभिनयात्मको भावितः ३२।"

समीक्ष्यतां यदुक्तं **भरत**महर्षिकृते **नाट्यशास्त्रे**ऽष्टमेऽध्याये—

"आङ्गिको वाचिकश्चैव, आहार्यः सात्त्विकस्तथा। ज्ञेयस्त्वभिनयो विप्रा–श्चतुर्धा परिकल्पितः ॥९॥"

एतस्य नवमेऽध्याये ससंयुतहस्तस्याभिनयस्त्रयोदशविधः प्रदर्शितः। तत्र स्वस्तिकस्य वर्धमानस्य च स्वरूपे एवम्—

"मणिबन्धनविन्यस्ता–वरालौ स्त्रीप्रयोजितौ। उत्तानौ वामपार्श्वस्थौ, 'स्वस्तिकः' परिकीर्तितः १२१"

"विज्ञेयो 'वर्धमान'स्तु, हंसपक्षौ पराङ्मुखौ। जालवातायनादीनां, प्रयोक्तव्यो विघाटने ॥१५०॥"

**मकराभिनयः**—"पताकौ तु यदा हस्तौ, मूर्धाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ, तदा स 'मकरः' करः ॥ १४२ ॥"

**पद्माभिनयः**—"आवर्तिन्यः करतले, यस्याङ्गुल्यो भवन्ति हि ।
पार्श्वगताविकीर्णाश्च, स भवे'दलपद्मकः' ॥ ८५ ॥"

**गजदन्ताभिनयः**—"कूर्परासञ्चितौ हस्तौ, यदाऽऽस्तां सर्पशीर्षकौ ।
'गजदन्तः' स विज्ञेयः, कर्म चास्य निबोधत ॥ १४४ ॥"

**हंसवक्त्राभिनयः**—"तर्जनीमध्यमाङ्गुष्ठा-स्त्रेताग्निस्था निरन्तराः ।
भवेयु'र्हंसवक्त्र'स्य, शेषे द्वे सम्प्रसारिते ॥ ९८ ॥"

**हंसपक्षाभिनयः**—"समाः प्रसारितास्तिस्र-स्तथा चोर्ध्वा कनीयसी ।
अङ्गुष्ठः कुञ्चितश्चैव, 'हंसपक्ष' इति स्मृतः ॥ १०० ॥"

एकादशेऽध्याये मण्डलानां विंशतिर्वर्णिता । तन्नामानि यथा—

"अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
सूचीविद्धं दण्डपाद-विहृतालातके तथा ॥ २ ॥
वामबन्धं सललितं, क्रान्तं चाकाशगामि च ।
भ्रमरास्कन्दिते स्राता-मावर्तं च तथा परम् ॥ ३ ॥
समाक्रन्दितमप्याहु-रेडका क्रीडितं तथा ।
अड्डितं शकटास्यं च, तथाऽध्यर्धकमेव च ॥ ४ ॥
पिष्टकुट्टं च विज्ञेयं, तथा चाषगतं पुनः ।
भूमिकामण्डला ह्येते, लक्षणं च निबोधत ॥ ५ ॥"

एकत्रिंशेऽध्याये **लयत्रयम्**—"ततः कलाकालकृतो, 'लय' इत्यभिसंज्ञितः ।
त्रयो लयास्तु विज्ञेया, द्रुत-मध्य-विलम्बिताः ॥ ४ ॥"

अष्टमेऽध्याये **शिरोविषयकमञ्चितम्**—"किञ्चित् पार्श्वानतग्रीवं, शिरो विज्ञेय'मञ्चित'म् ।
व्याधिते मूर्च्छिते मत्ते, सचिन्ते दुःखिते भवेत् ॥ २९ ॥"

दशमेऽध्याये पादसत्कोऽ**ञ्चितः**—"पार्ष्णिर्यस्याञ्चिता भूमौ, ऊर्ध्वाग्रतलं तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः, स पादस्त्वञ्चितः स्मृतः ॥ ४८ ॥"

द्वाविंशेऽध्याये **आरभटीवर्णनम्**—"संरम्भावेगबहुलै-र्नानाचारीसमुत्थितैः ।
नियुद्धकरणैश्चित्रै-र्निर्मिता'ऽऽरभटी' ततः ॥ १४ ॥"

हरिदाससंस्कृतग्रन्थमालासमाख्यकाशीसंस्कृतसीरीज़पुस्तकमालायाः ६०तमग्रन्थाङ्करूपेण प्रसिद्धस्य श्रीभरतमुनिप्रणीतस्य **नाट्यशास्त्र**साधारेण अध्यायाद्यङ्को दत्तोऽत्र ।

७ दार्ष्टान्तिक-प्रात्यन्तिक-सामन्तोपनिपातिका-ऽन्तर्मध्यावसानिकेति चतुर्विधताऽभिनयस्य इति **राजप्रश्नीय**( सू. २५ )गतनिम्नलिखितपङ्क्तिभावार्थः—

"तए णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्विहं अभिणयं अभिणयेंति, तं जहा-दिट्ठंतियं पाडिंतियं सामंतोवणिवाइयं अंतोमज्झावसाणियं" ।

यस्यावलोके सफलत्वमावहत्[1], सहस्रनेत्रस्य सहस्रनेत्रता ॥ १४ ॥[2]
रदोत्करैरङ्कुरितैस्तथाऽद्भुतैः, प्रभावनाकन्द इवाभ्रमुप्रभौ।
अतिष्ठदग्रासनगोऽत्र गोत्रभित्–कुम्भस्थलापह्नुतनाभिमण्डलः ॥१५॥[3]
पृष्ठाधिरूढे सपरिच्छदे हरौ, 'सौधर्म'तः सोऽभ्रमतङ्गजोऽचलत्[4]।
तन्नाटकालोककुतूहलोत्सुकैः, स्तुतोत्सवैरुन्नतनुर्विमानिभिः[5] ॥ १६ ॥[6]
गर्वं गुरुत्वं त्रिजद्गुरोः पुरः, किलेति पर्जन्यगजो[7] व्रजन् पथि।
लघूभवन् 'पालक'वत् पदे पदे, पदं प्रपेदे प्रभुपावनं क्रमात् ॥ १७ ॥[8]
व्यक्तिं स्वभक्तेरपरेऽपि सत्वराः, परस्परं दर्शयितुं पुरन्दराः।
विचित्रचित्राभिनवैर्महोत्सवैः, प्रभोः पदं स्वस्वपदात् प्रपेदिरे ॥ १८ ॥[9]

अवकरमपहृत्यादित्यपादास्तमोवद्
द्रुतमनिलकुमारास्तत्र[10] धात्रीप्रदेशम्।
समवसरणयोग्यं योजनं यावदेकं
गतदुरितमिव स्वं पावनीचक्रुरुच्चैः ॥ १९ ॥[11]

तदनु घनकुमारा गन्धवारामुदारं
सुरभिपरिमलेनोत्कर्षयन्ति स्म वर्षम्।
भुवनविभुविभावाद् भूरिभिर्बाष्पधूमैः
क्षितिरपि निरयद्भिः पापभारै[12]रिवाभात् ॥ २० ॥[13]

समवसरणरचना

व्यन्तरसुराः सुवर्णै–र्वर्ण्यैर्मणिभिश्च समवसरणाय।
जगतीं[14] बबन्धुरद्भुत–भक्त्या स्वस्मै च सुकृततततिम् ॥ २१ ॥[15]
प्रासुकजानुमितानि, स्थलजलभवपञ्चवर्णसुरभीणि।
व्यकिरन् व्यन्तरदेवा, न्यत्कृतवृन्तानि तत्र कुसुमानि ॥ २२ ॥[16]
प्रकरकुसुमानि वन्धन–मधो व्यधुर्विभुविभावतो नियतम्।
स्मेरोन्मुखतामवहन्, ज्ञानमहनिर्भालनायेव[17] ॥ २३ ॥[18]

---

१ क–'वहन्'। २–३ इन्द्रवंशा। ४ ऐरावणः। ५ ख–'स्थन्नतनुविभाविभिः'। ६ इन्द्रवंशा। ७ ऐरावणः। ८–९ इन्द्रवंशा। १० प्रभुस्थाने। ११ मालिनी। १२ क–'भारै०'। १३ मालिनी। १४ कुट्टिमतलम्। १५ आर्या। १६ गीतिः। १७ क–'भालनायैव'। १८ आर्या।

जगत्यामेतस्यां भुवनपतिभिस्तारततिभिः[1]
प्रतेने प्राकारः कनककपिशीर्षव्यतिकरः ।
प्रभोर्भक्तान् कर्तुं गलितदुरितान् कुण्डलतया
स्थितो रत्नद्योतैः किल कपिलमौलिः फणिपतिः ॥ २४ ॥[2]

अन्तर्धृत्वा रमणधरणीं तस्य गर्भे द्वितीयं
वप्रं पृथ्व्याः सुरगिरिमिव प्रोन्नतं पीठमूर्ध्नि ।
पिण्डीभूतैरिव तनुभवैर्ज्योतिषां चक्रवालैः
स्वैर्ज्योतिष्काः कनकनिकरैः कल्पयामासुराशु ॥ २५ ॥[3]

[4]ते तस्मिन् मणिकपिशीर्षकाण्यकार्षु-र्यत्कान्तिर्जनितजपात्रपा विरेजे ।
प्रारम्भे शुभतरवासरस्य भूता, सन्ध्येव त्रिभुवनवासिनां जनानाम् ॥२६॥[5]

तस्यान्तरे रमणभूमितलं विमुच्य
पीठोपरि प्रवररत्नमयस्तृतीयः ।
वप्रो विमानिभिरतन्यत यन्महोभि-
र्मध्यन्दिनेऽपि दिनकृद्दिवसोदयश्रीः ॥ २७ ॥[6]

वैमानिकैरेव विनिर्मिताऽत्र, माणिक्यचक्रैः कपिशीर्षपङ्क्तिः ।
व्योमार्णवे स्वामियशोऽम्बुपूर्णे, यद्वा बभुर्विद्रुमपल्लवाभाः ॥ २८ ॥[7]

तस्याप्यन्तर्मुक्त्वा, रमणोर्वीं व्यन्तरा मणिप्रकरैः ।
पीठं घटयामासु-र्जिनभर्त्तरि भक्तिरागभङ्गिमिव ॥ २९ ॥[8]

वप्राणां त्रितयेऽपि तत्र परितः क्लृप्तानि सार्थैर्मणि-
स्वर्णानां कपिशीर्षकाणि किरणक्षीणान्धकाराण्यभान् ।
लोकालोकविकासकेन कलितं ज्ञानेन जाने जगन्-
नाथं द्वीपनदीपकान्तिपतयः प्राप्ताः किलाप्ताधिपम् ॥ ३० ॥[9]

वप्रे वप्रे किञ्चिदुच्चाश्चतस्रः, केतुश्रेष्ठाऽट्टालजालाः[11] प्रतोल्यः ।
सम्प्राप्तानां द्वादशानां किलासन्, कल्प[12]श्रीणां क्रीडनस्थानकानि ॥३१॥[13]

---

१ रौप्यश्रेणिभिः । २ शिखरिणी । ३ मन्दाक्रान्ता । ४ ज्योतिष्काः । ५ प्रहर्षिणी । ६ वसन्ततिलका । ७ इन्द्रवज्रा । ८ गीतिः । ९ युक्तम् । १० शार्दूलविक्रीडितम् । ११ ओटलो इति भाषायाम् । १२ ख–'स्त्रीणां' । १३ शालिनी ।

रत्नस्वर्णैर्व्यन्तरैर्निर्मितानि, द्वारे द्वारे रेजिरे तोरणानि ।
स्वामिस्थानोपास्तये द्वादशस्वः-श्रीभिर्मुक्तास्तर्कये स्वस्वकण्ठ्यः ॥ ३२ ॥[१]
[२]तेषां स्तम्भाग्रेषु कम्प्राः पताका, भेजुः शोभां शातकौम्भाश्च कुम्भाः ।
तीर्थेशार्हन्नामकर्माङ्घ्रिपस्य, प्रोद्भिन्नानां पल्लवानां फलानाम् ॥ ३३ ॥[३]

छत्राणि [४]तेषु शरदिन्दुसमच्छवीनि
पाञ्चालिका रुचिररत्नचयैः कृताश्च ।
व्यातेनिरे विश्वविजृम्भिविभाविवाद्धौं
डिण्डीरपिण्डपटलीजलमानुपीत्वम् ॥ ३४ ॥[५]

समवसरणनिर्मितेर्निमित्तं, [६]मम मणिमण्डलमात्मसात् कुरुध्वम् ।
गदितुमिति सुरानमीषु रेजुः, किल मकरा मकराकरेण नुन्नाः ॥ ३५ ॥[७]

स्वस्तिकप्रभृतिमङ्गलाष्टकं, [८]तोरणान्तरधरातलं दधौ ।
अष्टकर्मजयजाऽष्ट[९]दिग्गत-स्वामिकीर्त्तिलतिकाऽष्टबीजवत् ॥ ३६ ॥[१०]

रम्भास्तम्भाः सत्फलास्तोरणेषु, द्वारे द्वारे मारुताऽऽन्दोलिताग्रैः ।
पत्रव्रातैस्तालवृन्तैरिवास्थुः, सम्प्राप्तानां प्राणिनां तापलुप्त्यै ॥ ३७ ॥[११]

त्रिगुणाऽऽम्रपत्रफलवन्दनमालाः, प्रतितोरणं रुरुचिरेऽन्ववसन्नाः ।
अनिलैर्जगत्त्रयगुरोर्गुणलक्ष्मी-गणदोलनाय तरलाः किल दोलाः ॥३८॥[१२]

शरज्ज्योत्स्नास्वच्छस्फटिकघटिता द्वादशद्वारगाणां
[१३]नवाङ्गी वेदीनां प्रमदमतनोत् पार्श्वयोस्तोरणानाम् ।
नवानां तत्त्वानां निचितततिरिव स्थापिताऽत्र प्रदातुं
चतुर्दिक्प्राप्तानां त्रिभुवनजुषां योषितां पूरुषाणाम् ॥ ३९ ॥[१४]

त्रिभुवनजनश्रेणी श्रेयस्करा नयनप्रिया
मुदम्[१५]मदयन् वेदी नेदीयसीह ज(य?)वाङ्कुराः ।
जिनपतियशोमैत्र्यान्मुक्ताः किलामृतरश्मिना
समवसरणे द्वारे द्वारे विभज्य निजांशवः ॥ ४० ॥[१६]

---

१ शालिनी । २ तोरणानाम् । ३ शालिनी । ४ स्तम्भेषु । ५ वसन्ततिलका । ६ क-'ममणि०' । ७ पुष्पिताग्रा । ८ तोरणमध्यभागे । ९ क-'दिग्गतः-' । १० रथोद्धता । ११ शालिनी । १२ कुटजा । १३ द्वादशद्वारतोरणानां पार्श्वयोर्नव नव वेदिकाः सन्ति । १४ मेघविस्फूर्जिता । १५ क-'मर्दयन्' । १६ हरिणी ।

स्तम्भेषु तोरणानां, मङ्गलकलशैस्तले[1] स्थितैकैकः।
ते किल भर्तुर्गुणतति[2]-कीर्त्तिलतानां ततः कन्दाः ॥ ४१ ॥[3]
एकैका धूपघटी, सुवर्णघटिताऽनुतोरणस्तम्भम्[4]।
यासां धूमोर्मिभिरभूत्, ककुभां मृगनाभिभङ्गिरिव ॥ ४२ ॥[5]
वप्रत्रितये पीठ्या-मपि मणिसोपानपङ्क्तयो रेजुः।
आत्माङ्गुलेन रचिता, हस्तोच्चा हस्तपृथुलाश्च ॥ ४३ ॥[6]
वाप्योऽरुचन् रूप्यमयोरुवप्र-प्रतोलिकामध्यगपक्षयुग्मे।
याः स्वागतं स्माहुरिवालिरावै-र्भव्यान् सितस्वर्णसरोरुहास्याः ॥ ४४ ॥[7]
सोपानैः कनकमयैः सुखावताराः, पातालावधिमधुराऽम्बुपूर्णमध्याः।
जन्तूनां कृतशुचितातृषापहारै-र्वाप्योऽमूर्व्यधुरमृतं धरातलेऽधः[8] ॥ ४५ ॥[9]
दृष्टमात्रमपि तृप्तिकारकं, स्पृष्टमात्रमपि खेदभेदकम्।
पीतमात्रमपि रोगयोगहृद्, वापिकास्वजनि तासु [10]जीवनम् ॥ ४६ ॥[11]
सुवर्णप्राकारेशानदिग्भित्तिभागे
बभौ देवच्छन्दः स्वामिविश्रामहेतोः[12]।
किलोत्कण्ठापूर्णं प्राप '[13]सर्वार्थसिद्धि'-
विमानं [14]तन्मानीभूय नाभेयनाथम् ॥ ४७ ॥[15]
वप्रे रत्नमये क्रमेण परितो वैमानिकौ व्यन्तरौ
ज्योतिष्कौ भुवनप्रभू स्म भवतः पूर्वादिदिग्द्वारगौ।
द्वौ द्वौ वेत्रधरौ [16]हिरण्यहिमरुक्प्राभातिकाऽहर्पति-
प्रावृड्वारिददीधिती किल मिथो जातप्रतिच्छन्दकौ ॥ ४८ ॥[17]
द्वारेषु पूर्वविधिनैव सुवर्णवप्रे
पाशा-ऽङ्कुशा-ऽभयद-मुद्गरपाणयोऽमूः।
देव्यो जयाऽपि विजयाऽप्यजिताऽपराजि-
ताऽऽख्ये च चक्रुरखिलं प्रतिहारकर्म ॥ ४९ ॥[18]

---

१ क-'मूले'। २ ख-'भर्तृगुण०'। ३ आर्या। ४ तोरणस्तम्भं तोरणस्तम्भं प्रति। ५-६ आर्या। ७ उपजातिः। ८ अमृतमप्यधश्चक्रिरे। ९ प्रहर्षिणी। १० जलम्। ११ रथोद्धता। १२ ख-'श्राणहेतोः'। १३ क- 'सर्वार्थसिद्धिं'। १४ देवच्छन्दं प्रमाणीभूय। १५ चन्द्रिणी, "म्भौ रौ गश्चन्द्रिणी चैः" इति छन्दोऽनुशासने तस्या लक्षणम् (२०४)। १६ क्रमेण वेत्रधराणां कान्तिः। १७ शार्दूल०। १८ वसन्ततिलका।

एताः शशाङ्का-ऽरुण-काञ्चना-ऽब्द-समानदेहद्युतिभासमानाः ।
पूर्वादिदिग्द्वारगता विरेजु-श्चतुः[1]सह[2]क्षायुधशस्तहस्ताः ॥ ५० ॥[3]

नृकपालालङ्करणः, खट्वाङ्गजटाधरः प्रतिद्वारम् ।
रौप्ये वप्रे हर इव, तुम्बुरुरेकः प्रतीहारः ॥ ५१ ॥[4]

दिव्यदुकूलालङ्कृति-कलाः कनकदण्डमण्डितकराग्राः ।
भूपीठाऽस्पृष्टपदाः, सर्वेऽप्येते प्रतीहाराः ॥ ५२ ॥[6]

तृतीयप्राकारान्तरगमणिपीठान्तरवनी-
तलोल्लासी क्रोशत्रितयमुदयी व्यन्तरकृतः ।
अशोकद्रुः सान्द्रोऽरुणनवभवत्पल्लवगणै-
र्नेनर्त्तेव स्वःस्त्रीकरकिसलयश्रेणिविजयात् ॥ ५३ ॥[7]

न्यग्रोधाख्यक्ष्मारुहाऽन्येन शाखा-वृन्दैरेष च्छादितश्चैत्यशाखी ।
अस्य क्लान्ता कोमला पल्लवाली, मा भूदू भाभिस्तीव्रभानोरितीव ॥५४॥[8]

चैत्यद्रुमस्य चतसृष्वपि दिक्षु रेजु-
र्द्राग् व्यन्तरैः प्रगुणितानि मणीमयानि ।
सिंहासनानि किल सारचतुःप्रकार-
धर्मश्रियामलिकमण्डनपुण्ड्रकाणि ॥५५॥[9]

प्रत्येकमेषामु[11]परि स्थितानि, त्रीण्यातपत्राणि शशिप्रभाणि ।
[12]पतिभ्रमान्मौक्तिकपङ्क्तिदम्भादू, वृतानि ताराभिरिवाभितोऽपि ॥५६॥[13]

प्रत्यक्षमेषा[14]मपि पक्षयोर्द्वयो-र्यक्षौ वलक्षौ धरतः स्म चामरौ ।
प्रकाशयन्ताविव विष्टपप्रभो-स्त्रिलोकलोकोत्तरकीर्त्तिवर्णिकाम् ॥५७॥[15]

निजनिजकुसुमर्द्धिभिः समग्राः, सममृतवः प्रभुसेवने समुत्काः ।
समवसरणमाश्रयन् समेताः, स्फुरति कुतो जिनसन्निधौ विरोधः ? ॥५८॥[16]

दशप्रकारा अपि कल्पपादपाः, साकं परै[17]र्नाकसदामनोकहैः ।
तत्रावतीर्णाः किल कल्पनाधिक-प्रकल्पनं ज्ञातुमिवान्तिके प्रभोः ॥ ५९ ॥[18]

---

१ चतुर्हस्तेषु सहशायुधवत्यो जयादिकाः । २ 'सहस्रायुध०' । ३ उपजातिः । ४ आर्या । ५ मनोहराः । ६ आर्या । ७ शिखरिणी । ८ शालिनी । ९ वसन्त० । १० क-'मेका०' । ११ सिंहासनानाम् । १२ चन्द्रभ्रमात् । १३ उपजातिः । १४ सिंहासनानाम् । १५ इन्द्रवंशा । १६ पुष्पिताग्रा । १७ देववृक्षैः । १८ इन्द्रवंशा ।

समवसरणमुख्यद्वारि हेमारविन्द–
स्थितमुरुरुचिचक्रं व्यन्तरा धर्मचक्रम् ।
नवमिव दिननाथं [1]माथिमिथ्यात्वरूप–
प्रसृमरतिमिराणां तेनिरे तानवाय ॥ ६० ॥[2]

प्राकारेभ्यः कृत्यमन्यत् समस्तं, तत्रोद्युक्तास्तेनिरे व्यन्तरा द्राक् ।
मन्दायन्ते कोविदाः किं कदापि, प्राप्ये पुण्यैः पुण्यपूरप्रदेऽर्थे ? ॥ ६१ ॥[3]

इतः कृतजयारवैः सुरवरैः शिरोऽग्रस्फुरत्–
कराञ्जलिपुटैर्वृतस्त्रिजगतीपतिः सोऽचलत् ।
सुवर्णनववारिजेष्वमरचारितेष्वग्रतो–
ऽग्रतो विनिहितक्रमः [4]समवसर्त्तुमह्नोमुखे ॥ ६२ ॥[5]

दिवि दिविषदो वाद्यारावैः सदुन्दुभिघोषणै–
र्विरचितविभुस्तोत्रं चक्रुर्नभः किल केचन ।
कतिचन कृतैश्चेलोत्क्षेपैर्दिशोऽष्ट सपल्लवाः
कतिचिदमृतोद्गारं गीतैः प्रमोदपरायणाः ॥ ६३ ॥[6]

गीतार्हद्गुणजालतालगलसत्तालीक्वणत्कङ्कण–
प्रक्काणश्रवणत्रसच्चतुलता[7]लीना[8]ऽर्वकाकोलकाः ।
श्रेणीभिः [9]पविलक्ष्मपक्ष्मलदृशां हल्लीसकाविर्भवद्–
भावाभिर्ददिरे जगज्जनमनःप्रोल्लासका रासकाः ॥ ६४ ॥[10]

आनन्दकन्दलघटा–कन्दच्छन्दःकदम्बसन्दर्भैः ।
स्तवनैर्विभुं नवनवै–रिति देवास्तुष्टुवुस्तुष्टाः ॥ ६५ ॥[11]

देवैः कृता स्तुतिः

जिनपते ! द्रुतमिन्द्रियविप्लवं, दमवता[12]मवतामवतारणम् ।
वितनुषे भववारिधितोऽन्वहं, [13]सकलया [14]कलया कलया कया ॥ ६६ ॥[15]

---

१ प्रबल० । २ मालिनी । ३ शालिनी । ४ समवसरणे समुपवेष्टुम् । ५ पृथ्वी । ६ हरिणी । ७ क–'लीनापका०' । ८ वायसाः । ९ इन्द्राणीनाम् । १० शार्दूल० । ११ आर्या । १२ दयावताम् । १३ सम्पूर्णया । १४ मनोज्ञया । १५ अतः परं ७४तमं पद्यं यावत् द्रुतविलम्बिते रचना ।

तव सनातनसिद्धिसमागमं, [1]विनयतो [2]नयतो [3]नयतो जनम् ।
जिनपते ! सविवेकमुदित्वरा-ऽधिकमला [4]कमला [5]कमलासयत् ? ॥ ६७ ॥
भवविवृद्धिकृते कमलागमो, जिनमऽतो [6]नमतो न मतो मम ।
न रतिदाऽमरभूरुहकामधुक्-सुरमणीरमणीरमणीयता ॥ ६८ ॥
किल यशःशशिनि प्रसृते शशी, नरकतारक ! [7]तारकतामितः ।
व्रजति शोषमतोऽपि [8]महामहो, [9]विभवतो [10]भवतो भवतोयधिः ॥ ६९ ॥
न मनसो मम येन जिनेश ! ते, रसमयः [11]समयः [12]समयत्यसौ ।
जग[13]दभेदि विभाव्य ततः क्षणा-दुपरता [14]परता परतापकृत् ॥ ७० ॥
त्वयि बभूव जिनेश्वर ! शाश्वती, [15]शमसमता ममता मम तादृशी ।
यतिपते ! तदपि क्रियते न किं, शुभवता भवता भवतारणम् ? ॥ ७१ ॥
[16]भवति [17]यो जिननाथ ! मनः [18]शमा-ऽश्रितनुते तनुतेऽतनुतेजसि ।
किमिव नो भविनस्तमसां सुख-प्रसविता सविता स वितारयेत् ॥ ७२ ॥
[19]परमया रमया रमयात् तवां-ह्रिकमलं कमलं कमऽलम्भयम् ।
न नतमानतमानतमानमन्, वरविभा रविभा रविभा[20]सुर ! ॥ ७३ ॥
अमरसामरसामरनिर्मिता, जिन[21]नुतिर्ननु तिग्मरुचिर्यथा ।
रुचिरसौ चिरसौख्यपदप्रदा-निहतमोहतमोरिपुवीर ! ते ॥ ७४ ॥
मूर्त्तैर्यन्मूर्त्तिरानन्द-द्रव्यैरिव विनिर्मिता ।
तं नेत्रानन्दनं सेवे, देवेशं नाभिनन्दनम् ॥ ७५ ॥[22]
त्वदीयदर्शनान्नेत्र-द्वयानन्दाश्रु[23]दम्भतः ।
इहामुत्र मया स्वामिन् !, दत्तमश्रेयसां पयः ॥ ७६ ॥[24]
तव स्तुवन्ति तीर्थेश !, निःस्पृहत्वं मुदा बुधाः ।
पश्यतामपि येन त्वं, मनो हरसि भाविनाम् ॥ ७७ ॥[25]

---

१ विनयात् । २ नीतितः । ३ प्रापयतः । ४ लक्ष्मीः । ५ अपि तु न कमप्यलासयत् । ६ प्रणमतः । ७ तारकत्वं प्राप्तः । ८ ख-'महानहो' । ९ प्रभावात् । १० तव । ११ सिद्धान्तः । १२ गच्छति । १३ अविनश्वरम् । १४ शत्रुता । १५ उपशमगर्भा । १६ त्वयि । १७ साधुः । १८ शमेनाश्रितैः स्तुते । १९ अस्मान्वयाङ्कार्थं विलोक्यतां मदीयाभूमिका (पृ. ९) श्रीशोभनस्तुतेः (आगमोदयसमितिग्रन्थोद्धारे ग्रन्थाङ्कः ५१) । २० क-'सुतः' । २१ ख-'नुतिर्न तु' । २२ अनुष्टुप् । २३ क-'दन्ततः' । २४-२५ अनुष्टुप् ।

त्वमेव सिद्धिसुन्दर्या, दर्शनप्रतिभूः प्रभो ! ।
धृतोऽस्य दर्शयन्नेनां, तेनासिन् हृदयालये ॥ ७८ ॥[1]
त्वद्दर्शनेन हर्षाश्रु–प्रवाहः स ममाभवत् ।
मूलादुन्मूलितो येन, स्वामिन् ! सोऽपि भवद्रुमः ॥ ७९ ॥[2]
त्वत्पुरो हर्षरोमालि–मालिनो भविनो बभुः ।
स्वामिन् ! सलोहसन्नाहा–इव मोहारिभित्तये ॥ ८० ॥[4]
स्वामिन् ! सत्यमनन्तस्य, श्रेयसः संश्रयो भवान् ।
हीयते दीयमानं यत्, तन्नात्यन्तमपि त्वया ॥ ८१ ॥[5]
सदा भवतु भावेन, नमतो मम निर्मम ! ।
मुदश्रुपयसा सान्द्रं, भवदंह्रिसरोरुहम् ॥ ८२ ॥[6]
इति [7]त्रिवर्ग्या रहिता स्तुतिस्ते, नाभेय ! भिन्नान्तरवैरिवीर ! ।
अस्पृष्टशाठ्यं पठतां प्रदत्ते, पदं त्रिवर्ग्याः परमङ्गभाजाम् ॥ ८३ ॥[8]

समवसरणे प्रभोः प्रवेशः

एवं देवैः स्तवनततिभिः स्तूयमानोऽतिमात्रं
गात्रं रोमाङ्कुरपरिकरं भाववद्भिर्भजद्भिः ।
वारंवारं प्रसृतनयनैः प्रेक्ष्यमाणोऽप्यपूर्वः
पूर्वद्वारा समवसरणं प्राविशद् विश्वनेता ॥ ८४ ॥[9]

प्रदक्षिणां चैत्यतरोः प्रदाय, [10]नमोऽस्तु तीर्थाय वदन्निदं च ।
सिंहासने प्राग्वदनो न्यषीदद्, विभुर्विवेकः कृतिनां हृदीव ॥ ८५ ॥[11]
[12]प्राग् व्यन्तरास्त्रीण्यपरासु दिक्षु, सदृक्षरूपाणि विभोर्विचक्रुः ।
प्रभुश्चतुर्मूर्त्तिरभूद[13]मीभि–र्धर्मं चतुर्भेदमिवोपदेष्टुम् ॥ ८६ ॥[14]
विभुमूर्त्तेर्व्यन्तरकृत–मूर्त्तीनां कोऽपि नैव यद् भेदम् ।
वेत्ति स स प्रभावः, समभूद् भुवनप्रभोरेव ॥ ८७ ॥[15]
भामण्डलमाविरभूत्, त्रिभुवननाथस्य मौलिपृष्ठतले ।
आन्तरतमःशमकला–शिक्षायै रविरिवानुगतः ॥ ८८ ॥[16]

---

१–२ अनुष्टुप् । ३ 'भवतु' इति क–पाठश्चिन्त्यः । ४–६ अनुष्टुप् । ७ क-च-टेतिवर्गत्रितयेन रहिता । ८ उपजातिः । ९ मन्दाक्रान्ता । १० क–'तीर्थं शिरःकूसकरं प्रणम्य' । ११ उपजातिः । १२ ख–'द्राग्' । १३ क–'दमूभिः' । १४ 'उपजातिः । १५–१६ आर्या ।

तारस्वरेण जगदीशगुणप्रतान-
मानस्पृशः किल दिशः सकलाः प्रकुर्वन् ।
प्रावृट्पयोदरवसोदरतां दधानै-
र्ध्वानैर्भृशं नभसि दुन्दुभिरुन्ननाद ॥ ८९ ॥[1]

प्रतोलिकानां प्रतिदिशं बहिर्दिवि
ध्वजाः सहस्रेण लघुभिर्ध्वजैर्वृताः ।
बभुः पताका ध्रुवममीषु पल्लवा
विभोर्नभोमण्डपगकीर्त्तिवल्लिजाः ॥ ९० ॥[2]

आसन् सुमनो-मानव-दानवयानानि रौप्यवप्रान्तः ।
तिर्यञ्चश्च्युतवैराः, स्वर्णप्राकारगर्भे तु ॥ ९१ ॥[3]

रत्नमयशालमध्ये, द्वादशसङ्ख्याः सभा विभान्ति स्म ।
आग्नेयाद्येषु पुन-स्तिस्रस्तिस्रश्चतुर्षु कोणेषु ॥ ९२ ॥[4]

प्राग्द्वारा स्वर्नार्यः, प्रविश्य दत्त्वा प्रदक्षिणास्तिस्रः ।
तीर्थकृतं तीर्थं च, प्रणम्य दिशि पूर्वदक्षिणाख्यायाम् ॥ ९३ ॥[६]

साधूनां साध्वीनां, स्थानं मुक्त्वा तदन्तरे तस्थुः ।
ऊर्ध्वस्थास्तीर्थाधिप-मुखेन्दुना मुदितलोचनचकोराः ॥ ९४ ॥[७]-युग्मम्

भुवनपति-ज्योतिष्क-व्यन्तरनार्यस्तु दक्षिणद्वारा ।
आगत्य प्राग्विधिना, नैर्ऋतककुभि क्रमात् तस्थुः ॥ ९५ ॥[८]

प्रत्यग्द्वारा भुवन-ज्योतिष्क-व्यन्तराः प्रविश्य सुराः ।
पूर्वविधिपूर्वमासन्, मरुदाशायां समासीनाः ॥ ९६ ॥[११]

एत्योदग्द्वारा प्राक्-कल्पात् कल्पामरा नरा नार्यः ।
अवतस्थिरेऽन्धकान्तक-दिश्यूर्ध्वस्थाः पुरन्ध्र्यस्तु ॥ ९७ ॥[१३]

पूर्वायातोऽल्पर्द्धि-स्तत्रायातं महर्द्धिकं नतवान् ।
तं स्थितवन्तं सविनय-सदनं सदसो नमन्निरगात् ॥ ९८ ॥[१५]

पूर्वं तत्रायातो, महर्द्धिकोऽल्पर्द्धिकं समायातम् ।
साधर्मिक इति मुदितः, कृतबहुमानं सदाऽलापीत् ॥ ९९ ॥[१६]

---

१ वसन्त० । २ मञ्जुभाषिणी । ३ आर्या । ४ गीतिः । ५ अग्निकोणे । ६-७ गीतिः । ८ आर्या । ९ क-'भुवनपज्योतिष्क०' । १० वायुकोणे । ११ आर्या । १२ ईशानकोणे । १३ आर्या । १४ समायाः । १५-१६ आर्या ।

समवसरणे न विकथा, न भयं न नियन्त्रणा न मात्सर्यम् ।
न[1] तु बाधा तिर्यङ्-नर-देवानां कोटिकोटीनाम् ॥ १०० ॥[2]

समवसरणस्य बाह्ये, केषाञ्चिद् गच्छतां च केषाञ्चित् ।
आगच्छतां च सङ्ख्या, नासीत् तिर्यङ्-नृ-देवानाम् ॥ १०१ ॥[3]

जगत्पतिं स्तोतुमथ प्रचक्रमे, प्रणम्य 'सौधर्म'पतिः कृताञ्जलिः ।
अन्तःप्रदीप्तप्रभुभावभानुभी-त्रस्यत्तमिस्रोपमरोमकण्टकः ॥ १०२ ॥[4]

संसारसारं शैवश्री-सरसीसरसीरुहम् ।
ऋषीश्वरं वृषावासं, श्रेयसां संश्रयं श्रये ॥ १०३ ॥[5]

सुरावा[6]सश्रिया स्वैरं, [7]स[8]सर्वसहया सह ।
आशा यशःशशी यस्य, सहासाः सहसाश्रयत् ॥ १०४ ॥-युग्मम्

[9]वृषेशं रोषविषय-वैरिशोषरसैर्वरम् ।
उषाहः-सायं-वेलासु, सेवेयाहं लवे लवे ॥ १०५ ॥

[10]श्रेयःश्रीव[11]ल्लिवलय-शालशीलालया[12]शय ! ।
उर्वीशेखरसेव्योऽसि, [13]रसावासववासवैः ॥ १०६ ॥

[14]रसाशीविषविश्वस्व-विहायस्सु शिवाश्रय ! ।
[15]अवार्यवीर्यसूर्योऽसि, [16]वसुराशिविलास[17]सूः ॥ १०७ ॥

[18]संसारवैरिवैरस्या-[19]ऽवसायहर ! संहर ।
अहोऽरिवारं विश्वस्य, श्रेयःश्रीशर्वरी[20]श्वरः ॥ १०८ ॥

[21]अशरीरारिसंहार-हर्षसंहर्षसाहस ! ।
विश्वविश्वेश ! [22]विश्वीय-सर्वांहोविसरं हर ॥ १०९ ॥

[23]पञ्चवर्गरहितामिमां स्तुतिं, पिष्टपञ्चविषयाः पठन्ति ये ।

---

१ ख-'नाबाधा' । २-३ आर्या । ४ इन्द्रवंशा । ५ अतः परं १०९तमपर्यन्तानां पद्यानां छन्दोऽनुष्टुप् । ६ क-'श्रियोः स्वैरं' । ७ सभूम्या स्वर्गश्रिया । ८ प्रभोः । ९ क-'वृषेशां' । १० हे मोक्षलक्ष्मीलताधारशीलरूपशालवृक्षाधारहृदय ! । ११ क-'वलयः' । १२ क-'शयः' । १३ नृपैरिन्द्रैश्च । १४ पातालनागलोकादि० । १५ क-'अवार्यवीर्यः' । १६ किरणसमूह० । १७ क-'भूः' । १८ संसारशत्रुवैरस्य निश्चयेन हारक ! । १९ क-'दसायिहर' । २० ख-'श्वर !' । २१ कामवैरि० । २२ जगत्पापविस्तारम् । २३ क-च-ट-त-प-वर्गाक्षररहितामित्यर्थः ।

पञ्चपञ्चितमहाव्रता द्रुतं, पञ्चमीं गतिमवाप्नुवन्ति ते ॥ ११० ॥[२]

स्तुत्वा त्रिलोकनायक–मिति नारी-नर-नृ-देव-देवानाम् ।
पुरतः पुरन्दरोऽस्थाद्, विश्वमुखनिहितेक्षणसहस्रः ॥ १११ ॥[३]

प्रातर्धृतभक्तिरितः, श्रीमरुदेव्याः पदाम्बुजोपास्तिम् ।
कर्तुं 'मयोध्या' पुर्यां, श्रीभरतो राजहंसोऽगात् ॥ ११२ ॥[४]

सुताऽर्त्तिस्रुताऽश्रुजलोत्थनीलिका–विलुप्तनेत्राम्बुरुहां पितामहीम् ।
तवाद्य पौत्रो नमति क्रमाविति, क्षितेः पतिर्विज्ञपयन् ननाम ताम् ११३[६]

पौत्रं भरतं प्रति मरुदेवायाः पुत्रार्त्तिवचनानि

भरताय साऽऽशिषमदान्मुदितः, स जगाद मातरसि सुस्थमनाः ? ।
पुनरुज्जगार गिरमेवमियं, हृदयोद्भवामिव सुतार्त्तिततिम् ॥ ११४ ॥[७]

वदसीदमेव दिवसाभ्युदये, प्रणतक्रमः सुगुण ! नित्यमपि ।
हृदि सुस्थता सुत ! ममास्तु कुत–स्तनुजः स यां परिजहार हहा ॥११५॥[८]

म्लानां मौलिस्रजमिव परित्यज्य मां त्वां च देह–
प्रादुर्भूतं मलमिव जरच्चीरवच्चेश्वरत्वम् ।
एकाकी मे गहनमगमत् सोऽङ्गजस्तं शृणोमि
क्षुत्-तृष्णाभ्यां बत द्रुतमहो दुर्मरा न म्रियेऽहम् ॥ ११६ ॥[९]

भरते नृपतौ पुरःस्थिते, स्मृतपुत्रेश्वरतापरोन्नतिः ।
स्रवदश्रुविमिश्रलोचना, मरुदेवा व्यलपत्तरामिति ॥ ११७ ॥[१०]

क्व तदाऽऽतपवारणं पुरा, मम सूनोः शिरसीन्दुसुन्दरम् ? ।
अधुना क्व दवानलोल्बणं, तपचण्डं तपनांशुमण्डलम् ? ॥ ११८ ॥

क्व स चामरचारुचालनै–श्चलनेत्राकरकङ्कणक्वणः ? ।
श्रवसोरधुना सुतस्य मे, मशकश्रेणिगुणत्कृतिः क्व सा ? ॥ ११९ ॥

---

१ 'पञ्चपञ्चिन्महाव्रता ध्रुवं' इति पाठः प्रवर्तकश्रीमत्कान्तिविजयमुनिपुङ्गवसत्कायां एकपत्रात्मिकायां प्रतौ "इति पञ्चवर्गपरिहारसाधारणस्तवनं पद्मानन्दमध्यगतं ॥ छ ॥ संवत् १४८९ वर्षे चैत्र ष(शु?)दि ५ दिनेऽलेखि ॥ छ ॥ श्रीः ॥ छ ॥" इति पुष्पिकापल्लवितायाम् । २ रथोद्धता । ३–४ आर्या । ५ 'सुताश्रुसूतार्त्ति०' । ६ वंशस्थम् । ७–८ प्रमिताक्षराच्छन्दः । ९ मन्दाक्रान्ता । १० अतः प्रभृति १३५तमपर्यन्तानि पद्यानि 'प्रबोधिता'च्छन्दसि वर्तन्ते, **छन्दोऽनुशासने** एतल्लक्षणं तु एवम्—"साज्गाः सभल्गाः प्रबोधिता"; 'ओजे स इयं जगौ च युजि सभरलगाः' ।

क्व पुरा रथवारणादिभिः, सुखयानानि ममाङ्गजन्मनः ।
अधुना क्व पदातिचारिता, चरणत्राणमृते विहारिणः ? ॥ १२० ॥
मणिपश्चमुखासने सुखा-सनमन्तः सदनं क्व तस्य तत् ? ।
क्व निरासनता वनान्तरे, गिरिशीर्षे निरतस्य साम्प्रतम् ? ॥ १२१ ॥
क्व तदस्य सदैव देवतो-पहृताहारजलोपजीवनम् ।
क्व स सम्प्रति भैक्ष्यसम्भृता-ऽभ्यवहारस्तदसम्भवोऽपि वा ॥ १२२ ॥
श्रवणामृतवर्षणं क्व तन्-मृदुगीतं शयने बुभुत्सुवाम् ।
क्व वनेऽस्य सुतस्य साम्प्रतं, श्रुतिसूचीघनघूकघूत्कृतिः ॥ १२३ ॥
स्तनयित्नुकृतं तपात्ययो-द्धुरधाराजलमुल्वणानिलम् ।
सहते स तमस्विनीषु ही, गिरिसङ्गी गजवन्ममाङ्गजः ॥ १२४ ॥
कमलाकरवद् वनाश्रयो, हिमसन्दोहमयानिलोर्मिभिः ।
रजनीषु स हैमनीषु ही, क्रममेत्यावरणेन वर्जितः ॥ १२५ ॥
भृशमुष्णऋतौ सुदारुणैः, किरणैरुष्णरुचेश्चिरं स्थिरैः ।
ग्लपिताननीरजोऽङ्गजः, स सरोवत् परितोऽपि शुष्यति ॥ १२६ ॥
स निरावरणो निराश्रय-स्तनयो मे विसहाय एव हा ।
शवरो गिरिगः स्फुरद् यथा, खलु कालेष्वखिलेषु दुःखितः ॥ १२७ ॥
पृथिवीं परिपालयन्त्यमी, भरतो बाहुबलिः सुताः परे ।
न तु कोऽपि करोति सङ्कथा-मपि सूनोर्मम धिग् विधिक्रमः ॥१२८॥
इति सन्ततसंस्मृतेः सुतं, पुरतः सङ्गतवद् विजानती ।
इदमालपति स सा भृशं, समुपालम्भनकारिवाग्भरा ॥ १२९ ॥
न कदापि ददासि दर्शनं, विशदज्ञाननिधानमानस ! ।
किमु वत्स ! न वेत्सि वत्सलां, जननीं शोकसमाकुलामिमाम् ? ॥१३०॥
जरतीत्यवधीरणाऽस्ति चेन्-मयि पौत्राः प्रतिपौत्रकास्ततः ।
किमु लल्लुरजल्पिनोऽपि नो, कथमुक्तं प्रथयन्ति ते मनः ? ॥ १३१ ॥
अनुगै रहितोऽसि वत्स ! तै-रपि कच्छप्रमुखैः क्षितीश्वरैः ।
कथमेकक एव कानने, चरसि क्रूरमृगारिभैरवे ? ॥ १३२ ॥

---

१ क-'कुलोप०'। २ क-'पूत्कृतिः'। ३ क-'मिति'। ४ अग्रतः स्थितमिव।
५ अवज्ञा। ६ अव्यक्तमधुरजल्पिनः।

अनुगम्य भवन्तमात्मजं, स्वमवश्यं वरिवस्ययाम्यहम्[1] ।
तव दुःखजरोदनाश्रुभिः, किमु कुर्वे बत लुप्तलोचना ? ॥ १३३ ॥
भजति त्वयि राज्यमुज्ज्वलं, सुखमुन्मेषमियेष[2] यन्मयि ।
अधुना विपिनं श्रयत्यऽभू–दसुखं कोटिगुणं ततः सुत[3] ! ॥ १३४ ॥
इति सा भृशमात्मसम्भवा–ऽसुखसम्भावनयाऽभिभाविता[4] ।
गलदश्रुजलप्लुतांशुका, व्यलपत् कल्पितमौलिचालना ॥ १३५ ॥

मरुदेवां प्रति भरतवाक्यानि

तद्विलापजनितं हृदि दुःखं, सन्निरुध्य भरतोऽद्भुतधैर्यः ।
कल्पिताञ्जलिरजल्पदनल्पा–नन्दकन्दवचनो मरुदेवाम् ॥ १३६ ॥[5]
स्थैर्यनिर्जरगिरेः[6] शतधार–स्फारसारपरसत्त्वधरस्य[7][8] ।
त्वं जगत्त्रयपतेरसि माता, क्लेशमाविशसि देवि ! किमेवम् ? ॥ १३७ ॥[9]
जाता जगत्त्रयपतेरपि तस्य माता
किं शोकसङ्कुलतया विकलत्वमेषि ? ।
दुर्वात्यया भृतवियत्पथगर्भयाऽपि
सञ्चाल्यते क्वचन काञ्चनशैलचूला ? ॥ १३८ ॥[10]
गन्तुं महानन्दपुरे सुदुस्तरं, संसारकान्तारमलं लिलङ्घिषुः ।
मत्वा समग्रान् पदबन्धनानिन–स्तत्याज नेता जगतामपि स्वयम् ॥१३९॥[11]
यस्य प्रभावेण शमं प्रपन्नान्, मृगद्विषो नैव भयं मृगाणाम् ।
कुतो वनान्तः सृजतो विहारं, तस्यापदः श्वापदवृन्दतः स्युः ? ॥१४०॥[12]
क्षुधा-पिपासा-ऽऽतप-शीतमुख्याः, परीषहा देवि ! सुदुस्सहा ये ।
तस्यासहायस्य सहायतां ते, कुर्वन्ति दुष्कर्मविमर्दनाय ॥ १४१ ॥[13]
यन्नाममन्त्रस्मृतिमात्रतोऽपि, ये स्युः प्रजानां दुरुपद्रवा न ।
तत्रैव तान्[14] स्वामिनि शङ्कमाना, वृथा कथं ताम्यसि मातरित्थम् ? १४२[15]
एकाक्ययं मत्तनयो न योद्धुं, शक्तः समं गन्धगजेन्द्रयूथैः ।
पञ्चानने काननचारिणि[16] स्या–च्चिन्तेति चित्ते किमु तस्य मातुः ? १४३[17]

---

१ सेवां करोमि । २ प्रादुर्भावम् । ३ क–'सुतः' । ४ पुत्रदुःखकल्पनया । ५ स्वागता । ६ स्थिरतायां 'मेरु'तुल्यस्य । ७ वज्रतुल्यसत्त्ववतः । ८ क–'धरः' । ९ स्वागता । १० वसन्त० । ११ इन्द्रवंशा । १२–१३ उपजातिः । १४ दुरुपद्रवान् । १५ उपजातिः । १६ क–'चारिणी' । १७ इन्द्रवज्रा ।

ज्ञानं ससत्त्वं सनयं नृपत्वं, श्रीर्दानशस्या शमभृत् तपस्या ।
यस्यास्ति तं सत्पुरुषावतंसं, प्रसौति[1] रामा सुकृताभिरामा ॥ १४४ ॥[2]
स सुरैरसुरैस्तवाभिषिच्य–स्तनयस्तादृगधृष्य एव देवि ! ।
तनुते नु[3] तपः सुदुस्तपं यत्, सुमहत् तस्य फलं विलम्बि नास्य १४५[4]

केवलज्ञान-चक्रोत्पत्तिः

अत्रान्तरे नरौ नृप–मुपेयतुर्यमक-शमकनामानौ ।
सविवेकमिव शम-दमौ, सुकृतिनमिव विभवविभुभावौ[6] ॥ १४६ ॥[7]

नत्वाऽवदन्नृपमिदं यमकः क्षितीन्दो !
दिष्ट्याऽद्य केवलमभूद् वृषलक्ष्मभर्तुः ।
ज्ञानं परं 'पुरिमताल'पुरे त्रिकाल–
व्यालोककारि 'शकटानन'काननान्तः ॥ १४७ ॥[8]

नत्वा व्यजिज्ञपदिदं शमको नृपास्त्र–
शालान्तरे समुदपद्यत चक्ररत्नम् ।
मार्त्तण्डमण्डलविडम्बि वियद्विलम्बि–
लम्बोदितद्युतिकदम्बकडम्बरश्रि ॥ १४८ ॥[10]

इतस्त्रिजगतीपतिर्जयति केवलस्योदया–
दितोऽप्यजनि चक्रिताजननहेतुचक्रं[11] महत् ।
ततः प्रथममर्चनं विरचयामि कस्येत्यसौ
विमृश्य भरतः क्षणं पुनरिदं हृदि ध्यातवान् ॥ १४९ ॥[12]

जगदभयदः कायं स्वामी क्व चक्रमिदं सदा–
ऽप्यसुमदसुहृत् स ध्यात्वैवं प्रभोर्महिमाकृते ।
भरतनृपतिः सामन्तादीन् स्वकान् समवीवहद्[13]
यमक-शमकौ तौ सम्मान्य श्रिया विससर्ज सः ॥१५०॥[14]

भरतेन दर्शिता समवसरणसम्पद् मरुदेवायै

अथेदं पृथ्वीन्द्रोऽभ्यधित मरुदेवां जननि ! मां
सदुःखेत्यादिक्षः सततमतिकष्टी मम सुतः ।

---

१ उत्पादयति । २ उपजातिः । ३ क–'तु' । ४ औपच्छन्दसिकच्छन्दो वैतालीयम् । ५ पुरुषम् । ६ क–'विदुभावौ' । ७ आर्या । ८ वसन्त० । ९ चित्रविचित्रशोभायुक्तम् । १० वसन्त० । ११ क–'चक्रहेतुं' । १२ पृथ्वी । १३ सम्प्रचालयति स्म । १४ हरिणी ।

तदैश्वर्यं विश्वाधिपतिभिरनंध्यास्यमधुना
स्वयं पश्येत्युक्त्वा द्विरदपतिमारोहयदिमाम् ॥ १५१ ॥[२]

सुवर्णमणिभूषणस्फुरितभानुभानूच्चय-
प्रपाञ्चितचलाचलत्रिदशचापचक्रस्ततः ।
गजा-ऽश्व-रथ-पत्तिभिः परिवृतः प्रभूत्कण्ठितः
समं स मरुदेवया 'भरत'भूमिभर्त्ताऽचलत् ॥ १५२ ॥[४]

'पुरिमताल'पुरान्तिकमाश्रितो, वियति वीक्ष्य मणिध्वजमग्रतः ।
पथि करीन्द्रगतां करिणि स्थितो, भरतभूपतिराह पितामहीम् ॥१५३॥[५]

वप्रत्रयं जननि ! रूप्य-सुवर्ण-रत्नै-
रूर्ध्वोर्ध्वमत्र पुरतः सुरक्लृप्तमेतत् ।
गर्भेऽस्य पीठमपि शंसति ते सुतस्य
विश्वत्रयोपरि पदं प्रभुताप्रभावम् ॥ १५४ ॥[६]

अहंप्रथमिकारसप्रसरतः प्रभूपास्तये
रयेण समुपेयुषामनिमिषेक्षणानां गणैः ।
अयं जयजयारवो जननि ! जन्यमान्योऽधुना
तनोत्यमृतवर्षणं श्रवणगोचरे सञ्चरन् ॥ १५५ ॥[७]

गभीरमधुरो ध्वनिर्नभसि दुन्दुभेरुद्भवन्
दशापि कुरुते दिशः प्रतिरवेण पूर्णान्तराः ।
शुचिक्रमकृतोन्नतेर्विभुविभाववार्द्धेरयं
तरङ्गरवडम्बरः परमवृद्धिमाप्तो ध्रुवम् ॥ १५६ ॥[९]

वप्रालीकपिशीर्षमण्डलचलच्चिह्नानि रत्नध्वज-
स्तस्योपान्तलघुध्वजाश्च विबुधश्रेणीविमानानि च ।
प्रौढप्रक्वणकिङ्किणीगणझणत्कारैरपारैः पुरो
मातस्तातगुणावलीमिव मुदा गायन्त्यमून्युच्चकैः ॥ १५७ ॥[१०]

[११]दिष्ट्या दृश्योऽद्य विश्वप्रभुरिति विततोत्कण्ठया प्रस्थितानां
दूरादप्युन्नताग्रं समवसृतिगतं चैत्यवृक्षं निरीक्ष्य ।

१ अप्राप्यम् । २ शिखरिणी । ३ क-'भानुद्वय०' । ४ पृथ्वी । ५ द्रुतविलम्बितम् । ६ वसन्त० । ७ पृथ्वी । ८ आषाढमासकृतोन्नतेः, पक्षे शुद्धाचरणकृतोन्नतेः । ९ पृथ्वी । १० शार्दूल० । ११ ख-'दृश्यो दिष्ट्याऽद्य' ।

उद्भ्रान्ताः स्वान्तहर्षोर्मय इव मुखरीभूतदिग्व्योमदेशाः
श्रूयन्ते सिंहनादा दिशि विदिशि भृशं सत्वराणां सुराणाम् ॥१५८॥[1]
स्वामिप्रेक्षाप्रवृत्तोत्सुकसकलसुनासीरनासीरगाणां[2]
गन्धर्वाणां सुराणां प्रतिनदितदिशश्चित्रवादित्रनादाः ।
सद्भक्त्या भावितान्तःकरणपरिणतिस्निग्धमुग्धोरुवर्णाः
कर्ण्यन्तेऽमी च मातस्त्रिदशचलदृशां चञ्चरीचारुरावाः ॥ १५९ ॥[3]
तद्रवश्रवणतोऽद्भुतरूपं, स्वाम्यमात्मतनये कलयन्त्याः[4] ।
नीलिका लघु दृशोर्मरुदेव्याः, सम्मदाश्रुसलिलेन विलीना ॥१६०॥[5]

तीर्थङ्करर्द्धिदर्शनेन मरुदेवाया अन्तकृत्केवलित्वम्

प्रेक्ष्य तीर्थकरसम्पदमुच्चैः, स्वाङ्गजस्य विविधातिशयर्द्धिम् ।
प्रोल्लसत्परमसम्मदलीना, तन्मयी समभवन्मरुदेवा ॥ १६१ ॥[6]
स्वाँगपूर्वकरणक्रमतोऽसौ, श्रेणिमाश्रितवती 'क्षपका'ऽऽख्याम्[7] ।
एककालगलिताखिलकर्मा, ज्ञानमभ्यगमदप्रतिपाति ॥ १६२ ॥[8]
ततोऽन्तकृत्केवलितामवाप सा, स्कन्धाधिरूढैव मतङ्गजेशितुः ।
मोक्षाभिधानं भरतस्य पश्यतः, पदं प्रपेदे मरुदेव्यनश्वरम् ॥१६३॥[9]
अस्यामवसर्पिण्यां, प्रथमः सिद्धोऽजनिष्ट येनासौ ।
सम्पूज्य तद्वपुरतः, क्षीराम्भोधौ न्यधुर्विबुधाः ॥ १६४ ॥[10]
तदादि मर्त्यस्य मृतस्य पूजा, प्राप प्रवृत्तिं पृथिवीतलेऽत्र ।
यद्यन्महान्तो हि सृजन्ति विश्वे, तत् तत् सदाचार इति प्रचारः ॥१६५॥[11]
[12]मातुर्मृतिं निर्वृतिमप्यवेत्य, सदुःखहर्षो भरतस्तदाऽभूत् ।
चन्द्रोदयारम्भ इवान्धकार-चन्द्रातपोद्गारधरोऽर्द्धरात्रः ॥ १६६ ॥[13]
ततस्त्यक्त्वा विश्वान्यपि नृपतिचिह्नानि चरण-
प्रचारैर्भूपालो निखिलपरिवारेण भरतः ।
उदीचीनद्वारा समवसरणक्रोडमविशद्
विवेकेन च्छेकः प्रशममिव सर्वार्त्तिशमनम् ॥ १६७ ॥[14]

---

१ स्रग्धरा । २ समग्रेन्द्रशिबिरस्थितानाम् । ३ स्रग्धरा । ४ स्वामित्वम् । ५–६ स्वागता । ७ क–'आ(द्वा?)गपूर्व' । ८ स्वागता । ९ इन्द्रवंशा । १० आर्या । ११ उपजातिः । १२ क–'मातुर्वृतिं' । १३ उपजातिः । १४ शिखरिणी ।

तत्रादिदेवं दिविषन्निकायै-श्चतुःप्रकारैः परितः परीतम् ।
न्यभालयद् भूमिविभुस्तमेव, [1]विश्राणनाद्यैः सुकृतै[2]रिवासौ ॥ १६८ ॥[3]

रत्नत्रयप्राप्तिकृतप्रयत्न-मेनं नरेशो भुवनत्रयेशम् ।
प्रदक्षिणास्त्रिर्निकषा प्रतेने, मायेव [4]वर्णो वरमन्त्रयन्त्रम् ॥ १६९ ॥[5]

पञ्चेन्द्रियाणि विषयानपि पञ्च जित्वा
योऽपञ्चयत् किमपि पञ्च महाव्रतानि ।
चक्री स पञ्चमगतिप्रयतस्य तस्य
[6]पञ्चाङ्गचुम्बितधरोऽरचयत् प्रणामम् ॥ १७० ॥[7]

भरतकृता प्रभोः स्तुतिः

आत्मनो जनकमाप्तकेवलं, तं युगादिजिनमानतं सुरैः ।
सन्निभाल्य भरतश्चिरात् प्रभुं, स्तोतुमारभत भूरिभक्तिभृत् ॥ १७१ ॥[8]

प्राकारत्रयमध्यमञ्जुलमणीनद्धोरुवेदीतले
[9]विष्वङ्न्यस्तसपादविष्टरचतुःसिंहासनाध्यासि[10]नम् ।
त्वां विश्वेश ! चतुर्मुखं सुखनिधे ! धर्मोपदेशोद्यतं
सर्वात्मीयविभूतिभूषितमिति ध्यायन् [11]विमाय ! स्तुवे ॥१७२॥[12]

स्वर्गिश्रेणिविकीर्णपुष्पनिकरव्याजेन पुष्पायुधो
निर्जित्येव युधाऽऽयुधानि तरसा नाथ ! त्वया त्याजितः ।
कर्तुं [13]तज्जयघोषणामिव जगत्क्रोडे परिक्रीडिनीं
देवैर्दुन्दुभि[14]राहतः प्रमुदितैस्त्वद्देशनासंसदि ॥ १७३ ॥

त्वद्भामण्डलभाप्ररोहलहरीसंश्लेषणाऽऽविर्भवद्-
द्विर्भावारुणपल्लवावलिरसौ स्वामिन्नशोकद्रुमः ।
रागो रागवशात् त्वया प्रतिहतस्फूर्त्तिः स मूर्त्तिं गतः
सेवां कर्तुमिव त्रिविष्टपपते ! पृष्ठं तवाशिश्रिये ॥ १७४ ॥

मध्ये देह[15]मनर्गलं विमलतां कृत्वा सतत्त्वाश्रयं
शुक्लध्यानमहस्तवेश ! दशमद्वाराऽन्तरालोद्गतम् ।

---

१ दानाद्यैः । २ धर्मैः । ३ उपजातिः । ४ क-'वर्णोत्तर०' । ५ उपजातिः । ६ हस्तयुग्म-जानुद्वयशीर्ष० । ७ वसन्ततिलका । ८ रथोद्धता । ९ चतुर्दिक्षु न्यस्तपादासन० । १० क-'सितम्' । ११ क-'निनाय' । १२ अतः परं १८१तमपर्यन्तानि पद्यानि शार्दूलविक्रीडित-च्छन्दसि सन्ति । १३ कामविजय० । १४ क-'दो नादमुदितै०' । १५ क-'मनिर्मलं' ।

तल्लोकत्रयपावनाय विशदच्छत्रत्रयीकैतवात्
त्वन्मूर्ध्नि प्रसृतं त्रिधेति भगवन् ! मेऽस्तु त्रिधा शुद्धये ॥ १७५ ॥
उद्भ्रान्तैस्तव देशनासुरनदीडिण्डीरपिण्डैरिव
प्रेक्षाक्षिप्तजनप्रसन्ननयनप्रद्योतदण्डैरिव ।
आस्याम्भोजसितच्छदैरिव रदस्वच्छांशुगुच्छैरिव
[1]प्रीतेन्द्रावलिचालितैर्विरुरुचे स्वामिन् ! पुरश्चामरैः ॥ १७६ ॥
प्राप्तो दुर्गमदुर्गतेरिव दिवः क्रोडं कुहूक्रीडित-
ध्वान्तौघादिव [2]कौमुदीवरयितुर्बिम्बान्तरा लम्बितः ।
ग्रीष्मोदग्रदवानलादिव मुदा स्नातः सुधाबन्धुरे
वार्द्धौ रूपनिरूपणात् तव शुभोदर्कीत्यहं तर्कये ॥ १७७ ॥
प्रीतिः स्फीतिमवाप तापममुचन्मूर्त्तिर्बभौ स्फूर्त्तिभि-
र्नेत्रं गद्गदतां ततान च वचो लेभे मनो मूर्च्छनाम् ।
देव ! त्वन्मुखवीक्षणक्षणचमत्कारैरपारैरसा-
वात्मा किं तु जगाम कामपि कलामेतन्न मे गोचरः ॥ १७८ ॥
देव ! त्वद्वदनावलोकनविधौ दृग्भ्यां द्रुतं वर्द्धितो
हर्षः [3]सोऽयमिहैव तौर्यनिवहै[4]र्विघ्नं कृतघ्नो व्यधात् ।
दत्त्वा पक्ष्मकपाटिकामिति निजस्थाने समाक्रम्य [5]तत्
[6]तद्वेश्मैव मनो जिनेश ! [7]निभृते त्वामेव [8]ते पश्यतः ॥ १७९ ॥
अश्रान्तं रसना तव स्तवरसा कर्णावपि त्वद्गुण-
ग्रामाकर्णनकर्णिकौ तव मुखप्रेक्षाजुषी चक्षुषी ।
मौलिस्त्वत्पदमण्डनस्तव दृढध्यानैकधन्यं मनो
भूयान्मे भुवनैकनायक ! स्यादात्माऽप्ययं त्वन्मयः ॥ १८० ॥
भक्त्या नाम यदि प्रकामकृतया प्रीतो ददासि प्रियं
तद्बद्धाञ्जलिरुज्ज्वलेन मनसा याचे चिरं किञ्चन ।
नाथ ! त्वच्चरणारविन्दयुगलीसेवारसं मेऽनिशं
स्वादं स्वादयतोऽन्तरायपदवीदुःखाश्मभूर्मा स्म भूः ॥ १८१ ॥

---

१ क-'पीतेन्द्राबलिचालिभि०' । २ चन्द्रस्य । ३ हर्षः । ४ ख-'विभवै०' । ५ मनः । ६ हर्षस्य गृहम् । ७ क-'निवृते' । ८ दृशौ ।

स्तुत्वैवं जिनपतिमाप्तरोमहर्षो[1], हर्षोद्यन्नयनजलोज्ज्वलाननाब्जः ।
स्वर्लोकेशितुरचलापतिः[2] स तस्थौ[3], सन्तुष्टेरिव सुखसङ्गमोऽनुपृष्ठम् १८२[4]
तिर्यङ्-मनुष्या-ऽमरकोटिकोटय-श्चिरान्निराबाधतया परस्परम् ।
क्षेत्रे ममुर्योजनमात्रकेऽपि यत्, प्रभुप्रभावप्रभुताऽद्भुता हि सा ॥१८३॥[5]
मैत्रीं प्रमोदं करुणामुदासतां[6], प्रभुस्तथाऽपुष्यदिमां सभां यथा ।
द्वेषो विषादोऽकृपता स्वकाम्यता, तेषां[7] द्विषोऽमी न भिया प्रपेदिरे १८४[8]
मन्येऽन्योन्यं प्राग् रणः कोऽपि येषां, द्वेषान्धास्तत्स्कन्धधावत्कबन्धाः ।
निर्वैरास्ते विश्वनेतुः प्रभावा-न्मित्रीभूतास्तत्र तस्थुः क्षितीन्द्राः ॥१८५॥[10]
मदोत्थतापेन विकम्पमानं, पञ्चाननोऽनेकपमाननोत्थैः[11] ।
प्रभोः सभां प्राप्य सभाजनेन, श्वासानिलैः शीतलतां निनाय ॥१८६॥[12]
कुरङ्गपोतः पुरतः प्रदीर्ण-व्याघ्रास्यदंष्ट्राऽङ्कुरकोटिदेशे ।
तिष्ठन् प्रभोः पर्षदि हर्षनिष्ठः, कण्डूयनं नेत्रपुटस्य तेने ॥ १८७ ॥[13]
प्राक् पूरितायां तुरगः सभायां, प्रभूपदेशश्रुतये समेतः ।
स्थानाय सङ्कोचपरायणासु, लुलायमालासु निलीयते स्म ॥ १८८ ॥[14]
आतपादुपसृतं सरीसृपं, तप्तगात्रमतिमात्रविह्वलम् ।
[15]बर्हिणो बहुलबर्हवीजनैः[16], सुस्थतामिह दयामयोऽनयत् ॥ १८९ ॥[17]
स्वैर्बालमित्रैरिव मूषकोत्करै-र्मुक्त्वा ललन्तं निजपोतमोतवः ।
शुनां गणैराननसिंहनादिभिः[18], समं रमन्ते स्म मुदेह संसदि ॥१९०॥[19]
धनाद् यथा हीनकुलः[20] कुलाढ्यतां, चन्द्राद् यथा चन्द्रदृषत् सुधार्द्रताम् ।
यथाऽऽविलाम्भः कतकाद् विशुद्धतां, यथा कुपात्रं तपसः सुपात्रताम् १९१[21]
लोहं यथा सिद्धरसात् सुवर्णतां, यथाऽन्तरात्माऽऽत्मलयात् परात्मताम् ।
प्रभुप्रभावादिह देहिनां तथा, ध्रुवं विरोधोऽधित बन्धुरूपताम् ॥१९२॥[22]

—युग्मम्

---

१ क–'माप्यरोम०' । २ भरतः । ३ 'तुष्टो' इति क-पाठो विचारणीयः । ४ प्रहर्षिणी । ५ इन्द्रवंशा । ६ क–'करणानुदासतां' । ७ मैत्र्यादीनाम् । ८ द्वेषादयः । ९ इन्द्रवंशा । १० शालिनी । ११ हस्तिनम् । १२–१४ उपजातिः । १५ ख–'बर्हणो' । १६ मयूरपिच्छ० । १७ रथोद्धता । १८ क–'सिंघना०' । १९ इन्द्रवंशा । २० क–'कला कलाढ्यतां' । २१–२२ इन्द्रवंशा ।

अङ्गं सङ्गतशीतमन्दपवनस्पर्शाद् रसज्ञां विभु-
स्तोत्रस्यन्दिसुधारसद्[1] घुसुमनःसौरभ्यतो नासिकाम् ।
चक्षुर्नाथमुखेक्षणात् सुखमयं निर्माय संसज्जनाः
श्रोत्रं स्वामिवचःश्रुतेः[2] सुखयितुं तस्थुस्तदास्योन्मुखाः १९३[3]

पञ्चत्रिंशत्स्फुरदतिशयश्रव्यया सर्वभाषा-
संश्लेषिण्या प्रसरपरया योजनं विश्वदिक्षु ।
उच्चैरुच्चैः परपदगृहारोहनिश्रेणिरूपां
विश्वश्रेणिप्रभुरथ गिरा देशनामित्यकार्षीत् ॥ १९४ ॥[4]

समवसरणे प्रभोर्देशना

धर्मोऽयं पितृमातृबान्धवसुहृत्सुस्वामिसद्भृत्यसद्-
दारेभ्योऽपि विशिष्यते स्वयममी यस्मान्न दीर्घायुषः ।
नो जन्मान्तरगाः समं हितकृतौ नैव क्षमाः शाश्वतं
जन्मान्ते सहयायिनं हितकरं सेवध्वमेनं ततः ॥ १९५ ॥[5]

तोयेनेव सरः श्रियेव विभुता [6]सेनेव सुस्वामिना
जीवेनेव कलेवरं जलधरश्रेणीव वृष्टिश्रिया ।
प्रासादस्त्रिदशार्चयेव सरसत्वेनेव काव्यं प्रियः
प्रेम्णेव प्रतिभासते नहि विना धर्मेण जन्तुः क्वचित् ॥ १९६ ॥[7]

अधर्मोपासनात् ताप-भीष्माद् ग्रीष्मादिवोदधिः ।
संसारः स्फारतामेति, दुरुत्तारः शरीरिणाम् ॥ १९७ ॥[8]

कुग्राहग्राहदुर्गो[9] द्रुमरतममहामोहरोहज्जलौघः
प्रोच्चैश्चश्चत्कषायोच्चयलहरिरयच्छन्नसज्ज्योतिरध्वा ।
रागावर्त्तोग्रगर्भो भवजलधिरयं तीर्यते यद्यगण्यैः
पुण्यैरासाद्य सद्यो जिनसमयमयं जन्तुभिर्यानपात्रम् ॥१९८॥[10]

मानुषं भवमवाप्य दक्षिणा-वर्त्तशङ्खवदमुं भवोदधौ ।
पूरयेत् सुकृतगाङ्गवारिणा, क्रूरवृत्तसुरया तु नोत्तमः ॥ १९९ ॥[11]

---

१ 'सुवर्णसारद्यु०' इति क-पाठः; परन्तु सोऽनादरणीयः, छन्दोभङ्गात् । २ क-'स्मृतेः' । ३ शार्दूल० । ४ मन्दाक्रान्ता । ५ शार्दूल० । ६ क-'सेवेव' । ७ शार्दूल० । ८ अनुष्टुप् । ९ क-'दुर्गै' । १० स्रग्धरा । ११ रथोद्धता ।

नदीपूरप्लावे तटविटपिशाखाग्रमटवी–
पथध्वान्ते[1] दीपं जलधिपतने पोतफलकम् ।
दरिद्रत्वे चिन्तामणिमिह भवे मानवभवं
प्रमादेन प्राज्ञः सुकृतशतदत्तं क्षिपति कः ? ॥ २०० ॥[2]

गीर्वाणत्वे विषयकलुषैर्नारकत्वे व्यथार्त्तै–
स्तिर्यक्त्वेऽपि प्रकृतिविततांज्ञानसन्तानमूढैः ।
जीवैः सम्यग् न विरतिरिह प्राप्यते[3] मुक्तिहेतु–
स्तन्मानुष्यं जयति [4]विरता यान्त्यमी यत्र मुक्तिम् २०१[5]

क्व यान्ति चिन्तामणि-कामधेनु–कल्पद्रुमा मर्त्यभवस्य साम्यम् ।
एतैरदेयं वितरत्यमेयं, योऽर्हन्मुखानामपि मोक्षसौख्यम् ॥ २०२ ॥[6]

मोक्षाप्तौ न जरा नाधि–र्न व्याधिर्न शुचो न भीः ।
न मृत्युर्न परावृत्तिः, प्राप्यन्ते पुनरात्मना ॥ २०३ ॥[7]

परानन्दः परिज्ञानं, परमे वीर्य-दर्शने ।
तत्र प्राप्नोत्यनन्तानि[8], परात्मा केवलोऽव्ययः ॥ २०४ ॥[9]

जीवः स्वीकुरुते चतुर्गतिचतुर्द्वारेऽत्र [10]रत्नाधिकं
प्राप्तो धर्मचतुष्पथं भवपुरे यां [11]स्वेन रत्नत्रयीम् ।
तस्मै साधुपथे कषायविषयस्तेनाग्रतो रक्षिता
दत्तेऽसौ[12] शिवपत्तनं श्रितवतेऽनन्तां प्रमोदश्रियम् ॥२०५॥ [13]

ज्ञानदर्शनचारित्रा–[14]णीयं रत्नत्रयी श्रिता ।
व्यक्तं प्राणभृतां मुक्ति–कामिनीकार्मणं परम् ॥ २०६ ॥[15]

ज्ञानं मत्तमनोमतङ्गजसृणिस्तृष्णानिशाऽहर्मणि-
स्तत्त्वालोकनलोचनं मदविषज्वालासुधासेचनम् ।
अंहःकारणदारुदा[16]रणदवः क्लेशाग्नितोयप्लवः
कल्याणद्रुमकाननं कृतधियः सिद्ध्यङ्गनाऽऽराधनम् ॥२०७॥[17]

---

१ क–'परे ध्वान्ते' । २ शिखरिणी । ३ क–'भ्राम्यते' । ४ क–'चिरता' । ५ मन्दाक्रान्ता । ६ उपजातिः । ७ अनुष्टुप् । ८ एतदनन्तचतुष्टयमुच्यते प्रेक्ष्यतां २३२तमं पृष्ठम् । ९ अनुष्टुप् । १० क–'रत्नाधिकात्' । ११ आत्मना, पक्षे द्रव्येण । १२ रत्नत्रयी । १३ शार्दूल० । १४ क–'णीव' । १५ अनुष्टुप् । १६ क–'दारुणदतः' । १७ शार्दूल० ।

तत्त्वानां विस्तराद् वा तेषु सङ्क्षेपतो वा
जीवाद्यानां नवानां योऽवबोधो यथावत् ।
सम्यग्ज्ञानं तदेतत् तच्च पञ्चप्रकारं
ज्ञेयं मत्यादि मुक्त्यारोहसोपानरूपम् ॥ २०८ ॥[1]

सिद्धान्तोक्तेषु शुद्धा तत्त्वेषु यद् वासना
सम्यक् सम्यक्त्वमेतच्छङ्कादिदोषोज्झितम् ।
जायेतैतन्निसर्गात् संसर्गतो वा गुरोः
संसारस्फाररूपाऽकूपारपारप्रदम् ॥ २०९ ॥[2]

मोहग्रन्थितमीं विभिद्य भविनां सद्दर्शनोष्णद्युति-
र्यातो यद्युदयं प्रभूतदुरितध्वान्तोपहं[3] वा ततः ।
सन्मार्गाः प्रकटीभवन्ति भुवने भावा यथावस्थितं
भाव्यन्ते शुभवैभवो दिनसमारम्भः[4] समुज्जृम्भते ॥ २१० ॥[5]

चारित्रं स्यात् सर्वसावद्ययोग-त्यागो रागद्वेषसंश्लेषशून्यः ।
तच्चाहिंसा सत्यमस्तेयमुच्चै-र्ब्रह्मा-ऽकिञ्चन्यं च पञ्चप्रकारम् ॥ २११ ॥[6]

सर्वे धर्मा दान-सत्यादयो ये, यन्मूलास्ते[7] सत्फलत्वं सृजन्ति ।
एकैवेयं सा दया सावधानैः, साध्या सद्भिः सिद्धिसन्धानदूती ॥२१२॥[8]

लक्ष्म्या गार्हस्थ्यमक्ष्णा मुखममृतरुचिः श्यामयाऽम्भोरुहाक्षी
भर्त्रा न्यायेन राज्यं वितरणकलया श्रीर्नृपो विक्रमेण ।
नीरोगत्वेन कायः कुलममलतया निर्मदत्वेन विद्या
निर्दम्भत्वेन मैत्र्यं किमपि करुणया भाति धर्मोऽन्यथा न ॥२१३॥[9]

निरालम्बे व्योम्नि स्फुरति पतिरह्नां यदनिशं
विशन्ति क्ष्मां भीमा न यदहतसीमा जलधयः ।
न यद्दिंध्ये[10] दीप्तो दहति दहनः प्राणिनिवहान्
महानेष प्रेङ्खत्यहह तद्[11]मिथ्योक्तिमहिमा ॥ २१४ ॥[12]

---

१ लक्ष्मीः, "म्रौ तौ गौ लक्ष्मीः" इत्येतल्लक्षणं छन्दोऽनुशासने (२२६)। २ ज्योत्स्ना, "म्रम्यलगा ज्योत्स्ना" इत्यस्या लक्षणं छन्दोऽनुशासने (२२७)। ३ क-'ता ततः'। ४ ख-'समुज्जृम्भिते'। ५ शार्दूल०। ६ शालिनी। ७ दयामूलाः। ८ शालिनी। ९ स्रग्धरा। १० 'धीजकरणे' इति भाषायाम्। ११ सत्योक्तिप्रभावः। १२ शिखरिणी।

मोहः कर्मसु दुर्दमेषु मदनो द्रोहेषु विश्वस्तहृद्-
बन्धुव्याहतिरिन्द्रियेषु रसना क्रोधः कषायेष्वपि ।
दौर्जन्येषु कृतघ्नता चपलतापात्रेषु लोलेक्षणा
दुर्वारेषु मनः परस्वहरणं पापेषु चूडामणिः ॥ २१५ ॥[1]

पीयूषमौषधिषु शाखिषु कल्पशाखी
चिन्तामणिर्मणिषु धेनुषु कामधेनुः ।
ध्यानं तपस्सु सुकृतेषु कृपा व्रतेषु
ब्रह्मव्रतं क्षितिपतित्वमुरीकरोति ॥ २१६ ॥[2]

दारिद्र्येण गृहस्थता गुणततिर्लोभेन दुर्वेधसा
सर्वारम्भपरिश्रमः परपरिद्रोहेण धर्मक्रमः ।
नास्तिक्येन सुरार्चनं गुरुतपः कोपेन विद्या मदो-
द्रेकेणात्मगतिः[3] परिग्रहपरीणाहेन रीणायते ॥ २१७ ॥[4]

आपत्तापव्यापपीयूषपेया, श्रेयोवल्लीजालजीमूतमाला ।
कैवल्यश्रीनित्यसाङ्गत्यदूती, प्रव्रज्याऽसौ साधुभिः साधु साध्या २१८[5]

आर्हत्यं ध्रुवमपि तद्भवे भविष्य–ज्ञानन्तोऽप्ययनधिगतास्तपः कृते याम् ।
नार्हन्तः कथमपि केवलं लभन्ते, प्रव्रज्यां श्रयत मुमुक्षवो ! न किं ताम् ? २१९[6]

मणिः शाणोल्लेखात् कनकमनलान्तर्निपतनात्
सुरूपं संस्कारान्मुकुरतलमुन्मार्जनविधेः ।
सुचारित्र्याज्जन्तुः कलयति महानन्दपदवीं
स्वभावश्रेष्ठत्वं दधदपि परं ज्ञानमहसा ॥ २२० ॥[10]

सम्यग्ज्ञानचरित्रदर्शनमया यत्र त्रयोऽमी क्षणाः[11]
स्तम्भाली प्रगुणाग्रिमोत्तरगुणाश्चेतोविशुद्धिः सुधा ।
कीर्त्तिः श्वेतवितानमग्रगचतुर्द्धर्मीचतुर्द्वारके[12]
श्रेयोवेश्मनि तत्र वासरसिको नाप्नोति को निर्वृतिम् ? ॥२२१॥[13]

---

१ शार्दूल० । २ वसन्त० । ३ ख–'रतिः' । ४ विस्तारेण । ५ शार्दूल० । ६ शालिनी । ७ अप्राप्ताः । ८ प्रव्रज्याम् । ९ प्रहर्षिणी । १० शिखरिणी । ११ महोत्सवाः । १२ क-'द्वारकं' । १३ शार्दूल० ।

सर्वात्मनैतद् यतिपुङ्गवानां, चारित्रमुक्तं भवकन्दभेदि ।
श्राद्धेषु देशादिदमेव साधु-धर्मानुरक्तेषु विमुक्तये स्यात् ॥ २२२ ॥[१]
सम्यक्त्वेन रम्याण्यणु-गुणशिक्षाव्रतानि तु ।
स्युः पञ्च त्रीणि चत्वारि, क्रमेण गृहिणामिति ॥ २२३ ॥[३]
सद्देवे सुगुरौ शुद्ध-धर्मे या वासना स्थिरा ।
सम्यक्त्वं तदिदं सम्यग्, मिथ्यात्वं तद्व्यतिक्रमात् ॥ २२४ ॥[४]

संवेगादीनां व्याख्या

संवेग-निर्वेद-शमाऽनुकम्पा-ऽऽस्तिक्यानि पञ्चास्य सुलक्षणानि ।
संसारवैरस्यविमर्शनेन, 'संवेग' उक्तो विषयेष्ववशक्तिः ॥ २२५ ॥[५]
संसारवासः स्फुटमेष कारा, दारादिवर्गो निगडानुबन्धः ।
मोक्षं विना नैव सुखानि याऽसौ, चिन्ता स 'निर्वेद' इति प्रतीतः २२६[६]
उदयो न कषायाणां, स्याद् यदनन्तानुबन्धिनां स 'शमः' ।
स प्रकृतितः कषाय-क्रूरविपाकेक्षणादथवा ॥ २२७ ॥[८]

एकेन्द्रियाद्यसुमतां पततां भवाब्धौ
क्लेशावलोकनवशाद्धृदयार्द्रता या ।
तद्दुःखदुःखिततयाऽथ यथाऽऽत्मशक्ति-
र्यत् तद्व्यथापहरणं किल साऽनुकम्पा' ॥ २२८ ॥[९]

स्थिरा निराकाङ्क्षतया प्रवृत्ति-स्तत्त्वेषु तत्त्वान्तरकर्णनेऽपि ।
अर्हत्प्रणीतेषु भवेद् यदेत-'दास्तिक्य'मुन्मुद्रितधर्मकर्म ॥ २२९ ॥[११]
शङ्का-ऽभिकाङ्क्षा-विचिकित्सनानि, मिथ्यादृगाशंसनसङ्गती च ।
सम्यक्त्वमेतानि हि दूषयन्ति, पञ्चेन्द्रियार्था इव धर्मबोधम् ॥२३०॥[१२]
श्रीजिनसमये स्थैर्यं, प्रभावना कौशलं भक्तिः ।
तीर्थोपास्तिः पञ्च हि, सम्यक्त्वं भूषयन्त्युच्चैः ॥ २३१ ॥[१३]

द्वादश व्रतानि

अहिंसनाद्यानि महाव्रतानि, सर्वात्मना स्युर्विरतिश्रितानाम् ।

---

१ ख-'तन्मुनि०' । २ इन्द्रवज्रा । ३ अनुष्टुप् (?) । ४ अनुष्टुप् । ५-६ इन्द्रवज्रा । ७ विपाकानुभवात् । ८ आर्या । ९ वसन्त० । १० प्रकटित० । ११ उपजातिः । १२ इन्द्रवज्रा । १३ आर्या ।

अणुव्रतानि प्रथितानि पञ्च, तान्येव देशाद् विरतिस्पृशां तु ॥२३२॥[1]

दिक्षु दशस्वपि सीमा, कृता न यल्लङ्घ्यते प्रथममेतत् ।
'दिग्विरति'रिति गुणव्रत-मगारिणां गुणकृतिप्रगुणम् ॥ २३३ ॥[2]

भोगोपभोगयोर्यत्[3]-सङ्ख्या यत्र प्रकल्प्यते गृहिणा ।
'भोगोपभोगमानं', द्वितीयमेतद् गुणव्रतं भवति ॥ २३४ ॥[4]

आर्त्तं रौद्रं यदप-ध्यानं यत् पापकर्मणां शिक्षा ।
हिंसोपकारि दानं, यद् वा यद्[5] वा प्रमादकृतिः ॥ २३५ ॥[6]

स्यादय'मनर्थदण्ड'-श्चतु[7]ष्प्रकारो विवर्जनममुष्य ।
क्रियते विवेकिना यत्, तार्त्तीयीकं गुणव्रतं तत् स्यात् ॥ २३६ ॥[8]

रौद्रा-ऽऽर्त्तध्यानाभ्यां, सावद्यैः कर्मभिश्च मुक्तस्य ।
समता भवति मुहूर्त्तं, यत् तत् 'सामायिक'व्रतं ज्ञेयम् ॥ २३७ ॥[9]

यद् दिग्व्रते प्रमाणं, पुनरपि सङ्क्षेपणं यदेतस्य ।
दिवसे निशि वा 'देशा-वकासिकं' तद् व्रतं भवति ॥ २३८ ॥[10]

कुर्वीत चतुष्पर्व्यां, विजितात्मा यत् तपो यथाशक्ति ।
ब्रह्माचरणं स्नाना-दित्यागं 'पौषधं' तत् स्यात् ॥ २३९ ॥[11]

दानं चतुष्प्रकारा-ऽऽहारा-ऽऽच्छादन-निवास-पात्रादेः ।
अतिथिभ्यो य'दतिथिसं-विभाग'सञ्ज्ञं व्रतं तत् स्यात् ॥ २४० ॥[12]

रत्नत्रयमिदं यत्न-पैर्यदात्मसात् कृतम् ।
तल्लब्धा सा ध्रुवं सिद्धि-स्तानाश्लिष्यति हेलया ॥ २४१ ॥[13]

देशनामृषभसेनसञ्ज्ञया, तां निशम्य भरतस्य नन्दनः ।
[14]स्वामिनो भवविरागसागरो, योजिताञ्जलिरिदं व्यजिज्ञपत् ॥ २४२ ॥[15]

भरतपुत्रेण पुण्डरीकेण प्रभोः स्तुतिः

आधिव्याधिमयस्फुलिङ्गचयमानस्तोकशोकस्फुरद्-
धूमः सप्तभयातिदप्तविलसज्ज्वालाकरालात्मकः ।

---

१ उपजातिः । २ आर्या । ३ क-'यच्छक्त्या' । ४ आर्या । ५ क-'यत्त्वा' । ६ आर्या । ७ अपध्यान-पापोपदेश-हिंस्रप्रदान-प्रमादचरितेति प्रकारचतुष्टयम् । ८-९ गीतिः । १०-१२ आर्या । १३ अनुष्टुप् । १४ ख-'स्वामिनं' । १५ रथोद्धता ।

संसारोरुदवश्चतुर्गतिचतुर्दिङ्मूलकूलङ्कषः
　[1]प्लुष्यत्येष कुतोऽप्यनागतपरित्राणान् हहा प्राणिनः ॥ २४३ ॥[2]
भवदावातुरप्राणि–त्राणाय करुणार्णवः ।
समुज्जगार संसार–सारं तत्त्वामृतं भवान् ॥ २४४ ॥[3]
कल्याणकमलोल्लास–वासराधिपदीधितिम् ।
तमःस्तोमच्छिदादक्षां, दीक्षां देहि जगत्प्रभो ! ॥ २४५ ॥[4]
इत्युक्त्वा भरतस्यै–केनोनैः पञ्चभिः शतैरपरैः ।
पुत्रैः सह पौत्रशतैः, सप्तभिरपि वल्गदुग्रसंवेगैः ॥ २४६ ॥[5]
आदायि पुण्डरीका–परनाम्ना [6]समदमृषभसेनेन ।
दीक्षा मोक्षसुखांह्रिप–जननमही शमरसप्रसरा ॥ २४७ ॥[7]–युग्मम्
उपास्यमानं सानन्दं, [8]विश्वेशं देवतेश्वरैः ।
निभाल्य भेजे प्रव्रज्यां, मरीचिर्भरताङ्गभूः ॥ २४८ ॥[9]
ब्राह्मी विसृष्टा भरतेन भेजे, व्रतं विरक्ता भववासदुःखात् ।
को वाऽन्धकूपे पतितः [10]सुबुद्धि–र्लब्धाऽवलम्बं कुरुते विलम्बम् ? ॥२४९॥[11]
　मुक्ताऽपि बाहुबलिना व्रतमाजिघृक्षुः
　　सा सुन्दरी भरतभूपतिना निषिद्धा ।
　सुश्राविका समजनि प्रथमाऽथ नाथ–
　　पादान्तिके [12]द्विगुणषड्व्रतसंश्रयेण ॥ २५० ॥[13]
श्रेयोमयः श्रावकतां प्रपद्य, प्रभोः पदान्ते भरतो बभूव ।
स्पृष्टा हि पीयूषमयूषकान्तिः, पीयूषवर्षं वपुषि प्रपुष्यात् ॥ २५१ ॥[14]
तिर्यक्षु देवेषु नरेषु केऽपि, सद्दर्शनं श्रावकधर्ममन्ये ।
दीक्षां च केचिज्जगृहुर्जिनेन्दोः, सद्धर्मकल्पद्रुमतो यथेच्छम् ॥ २५२ ॥[15]
[16]राजन्यतापसाः कच्छ–महाकच्छविवर्जिताः ।
तेऽपि प्रपेदिरे दीक्षां, समेत्य स्वामिनोऽन्तिके ॥ २५३ ॥[17]

---

१ दहति । २ शार्दूलविक्रीडितम् । ३–४ अनुष्टुप् । ५ गीतिः । ६ सहर्षम् । ७ आर्या । ८ ख–'विभुं वृन्दारकेश्वरैः' । ९ अनुष्टुप् । १० क–'सबुद्धिः' । ११ उपजातिः । १२ द्वादश० । १३ वसन्त० । १४ उपजातिः । १५ इन्द्रवज्रा । १६ क्षत्रिय० । १७ अनुष्टुप ।

श्रीपुण्डरीकप्रमुखा व्रतस्था, ब्राह्म्यादयः प्रव्रजिता बभूवुः ।
सुश्रावकाः श्रीभरतेश्वराद्याः, सुश्राविकाः सुन्दरिकादिकाश्च ॥२५४॥[1]

तदेति यां विश्वविभुर्व्यवस्थां, व्यधत्त सङ्घस्य चतुर्विधस्य ।
सीमा स्रवन्तीपतिनेव सेय-मद्यापि केनापि विलङ्घ्यते न ॥ २५५ ॥[3]

ऋषीणामृषभसेन-मुख्यानां शेमुषीजुषाम् ।
चतुर्भिरधिकाशीते-र्गणभृन्नामकर्मणाम् ॥ २५६ ॥[4]

उत्पाद-विगम-ध्रौव्य-मयीं सम्यक्पदत्रयीम् ।
तदोद्दिदेश विश्वेशो, निःशेषश्रुतबीजवत् ॥ २५७ ॥[5]—युग्मम्

तन्निपद्यनुसारेण, पुण्डरीकादयः क्रमात् ।
ते सूत्रं सूत्रयामासु-रङ्गैर्द्वादशभिः श्रितम् ॥ २५८ ॥[7]

दिव्यचूर्णचयापूर्णं, तूर्णं स्वर्णायकस्ततः ।
स्थालमादाय पादान्ते, प्रभोर्देवैर्वृतोऽभवत् ॥ २५९ ॥[9]

समुत्थाय ततस्तेषां, सर्वेषां गणधारिणाम् ।
चूर्णक्षेपं सृजन् सूत्रे-णार्थेनैतद्द्वयेन च ॥ २६० ॥[10]

द्रव्यैर्गुणैः पर्यायैश्च, नयैर्[11]रपि यथाक्रमम् ।
ददावनुयोगानुज्ञा-गणानुज्ञे जगत्पतिः ॥ २६१ ॥[12]—युग्मम्

ततो नरैः सुरैर्विद्या-धरैस्तत्स्त्रीभरैरपि ।
समं चिक्षिपिरे तेषु, [13]गन्धा ध्वनति दुन्दुभौ ॥ २६२ ॥[14]

वासानां प्रसरः सुरासुरनरोर्[15]दस्तः सदोऽभ्यन्तरे
सौरभ्यस्फुरितद्विरेफपटलीगाढावगूढो बभौ ।
स्वामिज्ञानदिनाधिनाथविकसन्निःशेषविश्वत्रयी-
श्रेयःपद्मवनीपरागनिवहप्रागल्भ्यलीलावहः ॥ २६३ ॥[16]

पुनः सिंहासनासीन-स्तेषां गणभृतां पुरः ।
अनुशिष्टिमयीं तेने, देशनां विश्वनायकः ॥ २६४ ॥[17]

---

१ इन्द्रवज्रा । २ समुद्रेण । ३ उपजातिः । ४-५ अनुष्टुप् । ६ प्रेक्ष्यतां ११४-तमं पृष्ठम् । ७ अनुष्टुप् । ८ ख-'स्वर्नायक०' । ९-१० अनुष्टुप् । ११ नैगम-सङ्ग्रह-व्यवहार-र्जुसूत्र-शब्द-समभिरूढै-वम्भूता इति नयसप्तकम् । १२ अनुष्टुप् । १३ दिव्य-चूर्णमया । १४ अनुष्टुप् । १५ उत्क्षिप्तः । १६ शार्दूल० । १७ अनुष्टुप् ।

स्वामिनो वदनचन्द्रचन्द्रिकां, देशनाममृतमिश्रिताश्रिताम् ।
पातुमुन्मुखतयाऽवतस्थिरे, तेऽग्रतो गणधराश्चकोरवत् ॥ २६५ ॥[1]
प्राणिनां शिवमयी सुधामयी, चिन्मयी महमयी महोमयी ।
क्लेशराशिदलनेशदेशना–पूरितावधिरपूरि पौरुषी ॥ २६६ ॥[2]
बलिः प्रक्लृप्तः कलमैरखण्डै–स्तुषोज्झितैः शङ्खवलक्षवर्णैः ।
तदा चतुष्प्रस्थमितो[3] विशाल–स्थालस्थितो यत्नपरम्परात्तः ॥ २६७ ॥[4]
निर्मापितः श्रीभरतेन नाकि–विकीर्णगन्धद्विगुणं सुगन्धिः ।
विचित्रवादित्रनिनादवृन्द–प्रतिध्वनिध्वानितदिग्विभागः ॥ २६८ ॥[6]
अन्वीयमानो वरवर्णिनीनां, गणैर्मुदा मङ्गलगायिनीनाम् ।
पौरैः परीतः प्रविवेश पूर्व–द्वारेण विश्वैकविभोः सभायाम् २६९[7] विशेषकम्
स्वामिसेवनकृतां शरीरिणां, पुण्यराशिरिव मूर्त्ततां श्रितः ।
नेतुरेव स जने प्रसन्नता , पिण्डितेव बलिरुज्ज्वलो बभौ ॥ २७० ॥[8]
प्रदक्षिणीकृत्य विभुं स शालि–बलिः पुरोऽक्षिप्यत पुष्करान्तः ।
कल्याणवल्ल्यावलिबीजरूपो, जगत्त्रये विघ्नविघातनिघ्नः ॥ २७१ ॥[10]
तस्यान्तरिक्षात् पतदर्द्धमग्रही–न्मुक्तौघमब्दादिव देवतागणः ।
ततोऽर्द्धमर्द्धस्य धरां प्रपेदुषः, समाददे श्रीभरतो धराविभुः ॥२७२॥[11]
द्रव्यजातमिव स्वीय–जनकस्य सहोदराः ।
सभासद्भ्यः प्रसादाप्त–मिव सङ्गीतकोविदाः ॥ २७३ ॥[12]
साधारणक्रयाणोत्थ–मिव लाभं वणिग्जनाः ।
शेषास्तु शेषमर्द्धार्द्धं, विभज्य जगृहुर्जनाः ॥ २७४ ॥[13]–युग्मम्
बलेस्तस्य प्रभावेण, रोगाः प्राक्सम्भवा रयात् ।
सर्वे शाम्यन्ति षण्मासा–न्नोत्पद्यन्ते नवाः पुनः ॥ २७५ ॥[14]
समुत्थितोऽथ प्रभुरुत्तरस्य, द्वारस्य मार्गेण विनिर्जगाम ।
जयेति नन्देति गिरं गृणद्भि–र्गीर्वाणवृन्दैः [15]परितः परीतः ॥ २७६ ॥[16]

---

१–२ रथोद्धता । ३ असतिद्वयं=१ प्रसृतिः, प्रसृतिद्वयं=१ सेतिका, सेतिकाचतुष्टयं=१ कुडवः, कुडवचतुष्टयं=१ प्रस्थ इति अनुयोगद्वारात् ( सू० १३२ ) । ४ क–'परं नरात्तः' । ५–७ उपजातिः । ८ रथोद्धता । ९ नभोमध्ये । १० उपजातिः । ११ इन्द्रवंशा । १२–१४ अनुष्टुप् । १५ समन्ताद् वेष्टितः । १६ उपजातिः ।

दिश्यैशान्यां मध्यवप्रद्वयान्त–र्देवच्छन्दे व्यश्रमद् विश्वनाथः ।
शिष्योत्तंसो देशनां पुण्डरीक–श्चक्रे नेतुः पादपीठे स्थितोऽथ ॥२७७॥[1]

प्रभोः खेदच्छिदा तस्य, शिष्येषु गुणदीपना[2] ।
प्रत्ययः स्यादुभयतो, गणभृद्देशनागुणाः ॥ २७८ ॥[3]

ततो द्वितीयपौरुष्यां, पूर्णायां गणभृद्वरे ।
देशनाविरते नाथं, नत्वा सर्वेऽप्ययुर्गृहान्[4] ॥ २७९ ॥[5]

वराक्षस्रग्युताऽवाम–दोर्युगो गजवाहनः[6] ।
समातुलिङ्गपाशान्य–दोर्द्वयः कनकद्युतिः ॥ २८० ॥[7]

समुत्पेदे जगद्भर्त्तुः, सदासन्निधिसेवकः ।
तीर्थत्राणकलादक्षो, यक्षो गोमुखसञ्ज्ञया ॥ २८१ ॥[8]–युग्मम्

प्रभोरप्रतिचक्राऽऽख्या, तीर्थे शासनदेवता ।
युता सचक्रपाशेषु–वरदैर्दक्षिणैः करैः ॥ २८२ ॥[9]

चक्रा-ऽङ्कुश-धनु-र्वज्र–लक्षणैर्दक्षिणोत्तरैः ।
सुपर्णवाहना स्वर्ण–वर्णा सन्निधिवर्त्तिनी ॥ २८३ ॥[10]–युग्मम्

ततो यतियुतोऽन्यत्र, विहर्त्तुं प्रभुरप्यगात् ।
तस्य विश्वोपकाराय, नैकत्र स्थितिरर्कवत् ॥ २८४ ॥[11]

चतुस्त्रिंशताऽतिशयै–स्तैः पञ्चत्रिंशता गिरः ।
अष्टमहाप्रातिहार्यै-र्विजहार युतो विभुः ॥ २८५ ॥[12]

अतिशयानां वर्णनम्

सहजैश्चतुर्भिरेका–दशभिः कर्मक्षयेण सम्पन्नैः ।
सुरजनितैरेकोन–विंशत्याऽर्हन् युतोऽतिशयैः ॥ २८६ ॥[13]

अङ्गं प्रस्वेदमलै–रहितं नीरोगमद्भुतामोदम् ।
अत्यन्ताद्भुतरूपं, तथाऽब्जसमपरिमलश्वासः ॥ २८७ ॥[14]

आहारो नीहारो, जनैरदृश्यौ तथा धवलवर्णे[15] ।

---

१ शालिनी । २ क–'दीपनाः' । ३ अनुष्टुप् । ४ "गृहाः पुंसि च भूम्न्येव" इति अमरकोशे ( श्लो. ३०२ ) । ५ अनुष्टुप् । ६ इदं पद्यत्रयं न वर्तते क–प्रतौ । ७–१२ अनुष्टुप् । १३–१४ आर्या । १५ क–'धवले' ।

रुधिरामिषे अविस्ने, चत्वारो जन्मतस्त्वेते ॥ २८८ ॥[२]
रोगेतिवैरमार्यो-ऽतिवृष्ट्यवृष्टी निजा-ऽन्यचक्रभयम् ।
दुर्भिक्षं न क्वापि, क्षेत्रे योजनमितेऽपि पुनः ॥ २८९ ॥[३]
माति नृतिर्यक्कोटि-र्वाणी संवादिनी च सर्वेषाम् ।
एकादशेत्यतिशयाः, कर्मक्षयजा जिनेन्द्रस्य ॥ २९० ॥[४]—युग्मम्
खे धर्मचक्रचामर-सिंहासनमातपत्रकत्रितयम् ।
रत्नध्वजश्च पाद-न्यासे नव कनककमलानि ॥ २९१ ॥[५]
वप्रत्रयचतुरङ्ग[६]-त्वचैत्यवृक्षौ द्रुमानतिः पथि च ।
दुन्दुभिनादोऽधोमुख-कण्टकवातानुकूलत्वे ॥ २९२ ॥[७]
शकुनाः प्रदक्षिणा[८] अपि, गन्धाम्भोवर्षणं कुसुमवृष्टिः ।
वृद्धिर्न केश-नखर-श्मश्रुभवा पार्श्वतः सततम् ॥ २९३ ॥[९]
कोटिर्जघन्यभावा-दपि देवानां चतुर्निकायानाम् ।
ऋतुषट्कस्य तथा विष-याणामप्यानुकूल्यतावश्यम् ॥ २९४ ॥[१०]
सुरजनिता इत्येको-नविंशतिः श्रीजिनेश्वरातिशयाः ।
एवं सर्वेऽपि चतु-स्त्रिंशदमी श्रेयसे सन्तु ॥ २९५ ॥[११]
[१२]मालवकैशिक्यादि-प्रधानरागप्रयोगसंयुतया ।
योजननीहारिण्या, मिथ्यात्वतमोरविप्रभया ॥ २९६ ॥[१३]
सुरनरतिर्यग्भाषा-संवादिन्या च धर्मबोधिकया ।
[१४]क्षीराश्रवादिलब्ध्य-न्वितया परमातिशयवत्या ॥ २९७ ॥[१५]

---

१ दुर्गन्धरहिते । २-५ आर्या । ६ चतुर्बिम्बत्वम् । ७ आर्या । ८ अनुकूलाः । ९-११ आर्या । १२ 'मालकोश' इति भाषायाम् । [illegible] आर्या । १४ एतन्नामा-द्युल्लेखो वर्तते ११७तमे पृष्ठे । एतत्स्वरूपार्थं तु विलोक्यतां नभद्रगणिक्षमाश्रमणकृतस्य **विशेषावश्यक**( गा० ७९९ )स्य वृत्तिर्मलधारिश्रीहेमच त्रिता । तत्रोक्तं क्षीराश्रावा-दिलब्धिस्वरूपं यथा—

"चीर्णग्रन्थिपर्णकादिवनस्पतिविशेषस्य चक्रवर्तिसम्बन्धिनो गोलक्षस्यार्धार्धक्रमेण पीतगोक्षीरस्य पर्यन्ते यावदेकस्या गोः सम्बन्धि यत् क्षीरं तदिह गृह्यते । मध्वपि किमप्यतिशायि शर्करा-दिमधुरद्रव्यम् । एवं सर्पिरपि किमप्यतिशायि द्रष्टव्यम् । एवम्भूतक्षीर-मधु-सर्पिषां य आस्वाद-स्तदुपमाप्यायकवचना ये तीर्थकर-गणधरादयस्ते तदाश्रवा मन्तव्याः, क्षीर-मधु-सर्पिराश्रवा इत्यर्थः, वचनेन यथोक्तक्षीरादीनिव ते स्रवन्तः सकलजनं सुखयन्ति ।" १५ आर्या ।

दानं शीलं च तपः, शुभभावं देशनाविधौ भगवान् ।
वाण्या व्याचख्यौ स, प्राग्यामे प्रान्त्ययामे च ॥ २९८ ॥[1] –विशेषकम्
जिनधर्मचक्रमभितो, मृगीमृगावूर्ध्वकर्णकावचलौ ।
यत् तिष्ठतः स साक्षा–न्महिमा दिव्यध्वनेरेषः ॥ २९९ ॥[2]

पञ्चत्रिंशद्गुणोपेतत्वं वाण्याः

संस्कारवत्त्वमौदा–त्यमहार्थत्वाब्द्रवगभीरत्वम् ।
उपचारपरीतत्वो–पनीतरागत्वमौदार्यम् ॥ ३०० ॥[3]
अव्याहतत्वं शिष्ट–त्वमिथः साकाङ्क्षता प्रतिध्वनिता ।
अविकीर्णप्रसृतत्वा–स्वश्लाघाऽन्यजननिन्द्यत्वे ॥ ३०१ ॥[4]
मधुरातिस्निग्धत्वं, निराकृतान्योत्तरत्वमद्भुतता ।
निःसंशयता हृदय–ङ्गमता भ्रान्त्याद्ययुक्तत्वम् ॥ ३०२ ॥[5]
अनतिविलम्बत्वं दा–क्षिण्यं वर्णपदवाक्यवैविक्त्यम् ।
प्रस्तावोचितताऽने–कजातिवैचित्र्यतत्त्वनिष्ठत्वे ॥ ३०३ ॥[6]
अभिजाततयाऽलङ्कृत–मपरजनामर्मवेधकत्वं च ।
अन्यच्च कारकाद्यवि–पर्यासत्वं प्रशस्यत्वम् ॥ ३०४ ॥[7]
सत्त्वप्रधानता चि–त्रकृत्त्वमव्युच्छिदाऽप्यखेदित्वम् ।
धर्मार्थप्रतिबद्ध–त्वमथारोपितविशेषत्वम् ॥ ३०५ ॥[8]
पञ्चत्रिंशत्सङ्ख्यै–र्वचनातिशयैरमीभिरभियुक्तः ।
समवसरणोपविष्ट–श्चक्रे व्याख्यां जिनाधीशः ॥ ३०६ ॥[9]

प्रातिहार्याष्टकम्

छत्रत्रितयं चामर–दुन्दुभि-भामण्डलानि चैत्यतरुः ।
मणिमयसिंहासनमपि, दिव्यध्वनि-पुष्पवृष्टी च ॥ ३०७ ॥[10]
चतुस्त्रिंशदतिशये–ष्वित्यष्ट प्रथिताः पुनः ।
प्रातिहार्याख्ययाऽमीभिः, शोभितो व्यहरत् प्रभुः ॥ ३०८ ॥[11]

जिनस्याष्टादशदोषराहित्यम्

लाभे वीर्ये भोगो–पभोगदानेषु चान्तरायगणः ।

---

१–५ आर्या । ६ गीतिः । ७–१० आर्या । ११ अनुष्टुप् ।

हासो रत्यरतिभयं, जुगुप्सनं शोक-मिथ्यात्वे ॥ ३०९ ॥[1]

राग-द्वेषावविरत्य-ऽज्ञानं स्वाप-कामसेवे च ।
इत्यष्टादशदोषै-रपरामृष्टो जिनाधीशः ॥ ३१० ॥[2]

विश्वानां कृतविस्मयैरतिशयैरेवं स देवाधिपै-
रप्याराधितसन्निधिः प्रतिदिनं विश्वत्रयीनायकः ।
व्याख्यानामृतवर्षणैः क्षितितले त्रैलोक्यलोकंपृणो
जीमूतप्रतिवीरतां विरचयंश्चक्रे [3]विहारक्रमम् ॥ ३११ ॥[4]

॥ इत्याचार्यश्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दा-
परनाम्नि श्रीजिनेन्द्रच[5]रिताभिधाने महाकाव्ये वीराङ्के श्रीआदिनाथ-
चरिते समवसरणवर्णन-श्रीमरुदेवानिर्वाण-प्रभुदेशना-सङ्घ-
स्थापनाप्रकाशनश्चतुर्दशः सर्गः ॥ १४ ॥

पिण्डीभूतं तप इव पुरो यस्य नश्यत्तमिस्रं
मिथ्यादृग्भिः कलुषहृदयैरप्रध[6]र्षप्रकर्षम् ।
सत्तेजोभिः सुजनमनसां शर्मकृद् धर्मचक्रं
रेजे श्रेयो जनयतु स वः श्रीयुगादिर्जिनेन्दुः ॥ १ ॥[7]

खेलन्तीन्दुधिया मुखे भ्रुवि लसन्निस्त्रिंशलेखाशया
नीलेन्दीवरशंसया दृशि गिरां भारेऽब्धिवीचिभ्रमात् ।
मत्तेभप्रभुहस्तविभ्रमतया बाहौ करेऽम्भोरुह-
भ्रान्त्याऽस्यैव सदैव पद्मसचिवं श्रीदेवता सेवताम् ॥ २ ॥[10]

ग्रन्थाग्रं ॥ ४५६ ॥



---

१–२ आर्या । ३ 'विहारं प्रभुः' इति ख–टि-पाठः । ४ शार्दूल० । ५ ख–'चरिते' ।
६ क–प्रधृष्यप्रकर्षे' । ७ मन्दाक्रान्ता । ८ तरवारि० । ९ क–'क्रमात्' । १० शार्दूल० ।

# पञ्चदशः सर्गः १५

यद्गोभिस्तमसि गतेऽधिगम्य सम्यग्-दृष्टित्वं शुभपथपान्थतां जनोऽधात् ।
विश्वानामुपकृतये कृतोद्यमः श्री-नाभेयः स भवतु वोऽर्कवद् विभूत्यै ॥ १ ॥[1]

भरतनृपकृतं चक्ररत्नपूजनम्

सम्प्राप्तः [2]प्रभुतनुभूरितो[3] 'विनीतां', चक्रस्य प्रथममनैतिं चकार चक्री ।
उत्कण्ठाऽतिशयवशात् पुरोऽस्त्रदेवीं, प्रत्यक्षामिव मनसा स मन्यमानः ॥ २ ॥
येनास्वाद् भवति रजोगुणातिरेकः, सम्भाव्यं तदिह [illegible]जः किलेति बुद्ध्या ।
श्रद्धालुः स्वयमुपगृह्य रोमहस्तं, तच्चक्रं भरतमहीपतिर्ममार्ज ॥ ३ ॥
चक्रित्वव्यतिकरजीवने निमित्तं, भाव्येतद् ध्रुवमिति [5]जीवनैः पवित्रैः ।
चक्रस्य स्नपनमकारि चक्रिणाऽसौ, भक्तानां क्रम इति [6]तत्र किं रजोऽभूत् ? ॥४॥
विन्यस्ता दिशि दिशि तत्र चान्दनीया, हस्ता ये [illegible]भरतनरेश्वरेण भक्त्या ।
प्रत्यक्षाः स्वयमभयप्रदानहस्ता-[7]स्तेनासै निखिलदिशां जयाय क्लृप्ताः ॥ ५ ॥
चक्रेऽस्मिन् शुभसुरभिप्रसूनमाला, क्ष्मापालावलितिलकेन [8]कल्पिता या ।
[9]तद्व्याजान्नृपविजयश्रियं निरोद्धुं, मन्येऽसौ प्रगुणित एव [10][illegible] ॥ ६ ॥
नानाभैर्निवसनराशिभिः प्रसून-प्राग्भारैर्मणिमयभूषणप्रकारैः ।
तच्चक्रं नरपतिनाऽर्चितं चकासे, सङ्कल्पार्पणकरणैककल्पवृक्षः ॥ ७ ॥
तस्याग्रे स रजततन्दुलैर्लिलेख, श्रेष्ठानि स्फुटतरमष्ट मङ्गलानि ।
तान्यासन् द्रुततरमेष्यदष्टकाष्ठा-लक्ष्मीनां खलु विनिवेशनासनानि ॥ ८ ॥
तस्याग्रे नृपतिवरेण पञ्चवर्णैः, पुष्पैर्यो निपुणमकल्प्यतोपहारः ।
अश्रान्तं विषयसुखानि पञ्च रूपा-ण्यप्यसै समजनि [11]लग्नकः स दातुम् ॥ ९ ॥
यत् कृष्णागुरुमुख[12]धूपधूमचक्रं, चक्राग्रे चिर[13]मचलावरेण चक्रे ।
तेनैव प्रसरणकारिणाऽनुकाष्ठं, विद्विष्टाननमलिनत्वमर्प्यते स्म ॥ १० ॥
चक्रस्याकृत नृपतिः प्रदक्षिणास्त्रिः, सप्ताष्टान्यथ स ततः पदान्यपागात् ।

---

१ २१४तमपर्यन्तानां 'प्रहर्षिणी'च्छन्दः । २ भरतः । ३ समवसरणात् ।
४ क-'ततिं' । ५ जलैः । ६ क-'तव' । ७ क-'नस्तेनासै' । ८ भरतेन । ९ मालामिषात् ।
१० भरतेन । ११ 'जामीन' इति भाषायाम् । १२ क-'धूम्यपधूम०' । १३ भरतेन ।

आकुञ्च्य प्रपदमदक्षिणं[1][2] च जानुं, न्यस्योर्व्यां परमकरोत् प्रणाममस्य ॥ ११ ॥
अष्टानामपि विजयी सदा मदाना-मष्टानामपि ककुभां प्रभुत्वमीप्सुः ।
अष्टाहान्यकृत महामहं महीन्दु-श्चक्रस्याहितवसतिः स शस्त्रसौधे ॥ १२ ॥
पूर्वोक्तैः प्रकलितविस्मयप्रमोदै-श्चक्रस्यार्चनरचना प्रपञ्च्यते स्म ।
भक्त्याऽर्चां रचयति यस्य भूमिजानि-स्तस्योच्चैर्जनयति को न पूजनानि? ॥१३॥

दिग्विजयार्थं भरतस्योपक्रमः

चक्रस्य क्षितिपतिरस्य शक्रदेश्यो, दिक्चक्राक्रमणकलं फलं जिघृक्षुः ।
सामन्तान् सह समवीवहन्महस्वी, तीक्ष्णांशुः किरणवृतो हि दुर्निरीक्ष्यः ॥१४॥
प्रस्थानं शुभदिवसे वसुन्धरेशः, सर्वाशाविजयि(य)निबन्धनं विधास्यन् ।
मङ्गल्यस्नपनजलैरिलामसिञ्चत्, तापोऽस्याः[3] प्रचलबलेन मास्त्वितीव ॥ १५ ॥
स्नानान्ते 'मलय'जलिप्तमूर्त्तिराभाद्, वासोभिर्धृतशरदभ्रशुभ्रशोभैः[4][5] ।
सोत्कण्ठं किल विजयश्रियः कटाक्षै-र्विक्षिप्तैः सपदि वृतोऽभितो वलक्षैः ॥१६॥
आकल्पानविरलसंक्तमौक्तिकेयान्[6][7], बिभ्राणः स 'भरत'भूविभुर्बभासे ।
विक्रीडन् परमपराक्रमार्णवान्त-स्तत्कालं वृत इव फेनबिन्दुवृन्दैः ॥ १७ ॥
क्षोणीन्दोरलिकतले विशेषकस्य[8], श्रीखण्डद्रवलिखितोन्मिमेष लेखा ।
षट्खण्डक्षितिविभुताफलोद्भवार्थं[9][10], पुण्यद्रोरभिनवमञ्जरीव जाता ॥ १८ ॥
तं भूमीविभुमभिशातकुम्भकुम्भ-भ्राजिष्णुप्रसृतसितातपत्रदम्भात् ।
षट्खण्डक्षितिविजयोत्सवे विधित्सू, साहाय्यं समुपगतौ तु पुष्पदन्तौ[11] ॥ १९ ॥
पार्श्वस्थे भरतनृपस्य वारनार्यौ, स्फूर्जद्भिश्चलचमरोद्धवैर्मरुद्भिः ।
[12]जिह्वालं किल कुरुतः स वैरिवंश-व्यूहानां दहनकृते प्रतापवह्निम् ॥ २० ॥
विद्वेषिक्षितिपतमोभिदाप्रगल्भै-स्तेजोभिर्जगदभिनन्दयन्नदभ्रैः ।
पूर्वाद्रिं दिनवदने यथोष्णभानु-र्भूसुभ्रूविभुरिभरत्नमारुरोह[13] ॥ २१ ॥

---

१ क-'प्रमद०'। २ पादाग्रम्। ३ पृथ्व्याः। ४ ख-'वासोभिर्भृत०'। ५ क-'शरदि'। ६ 'पोशाक' इति भाषायाम्। ७ संलग्नमौक्तिकान्। ८ तिलकस्य। ९ प्रादुर्भूता। १० 'भरत'वर्षस्य मध्ये पूर्वस्मात् समुद्रात् पश्चिमसमुद्रपर्यन्तविस्तारवान् 'वैताढ्यः' पर्वतो वर्तते। किञ्चास्मिन् वर्षे 'गङ्गा' 'सिन्धु'श्चेति महानद्यौ। एतैर्वर्षस्य षड् विभागा भवन्ति ये 'खण्डा' इति व्यवह्रियन्ते। 'भरत'स्योत्तरार्धे यथा खण्डत्रयं वर्तते तथा दक्षिणार्धेऽपि। ११ सूर्यचन्द्रौ। १२ जिह्वावन्तम्। १३ क-'रमरत्त(?)मारुरोह'।

तन्वानैरनवरतं शरीररक्षां, यक्षाणां भुजगुणिताऽष्टभिः सहस्रैः[1] ।
पार्श्वस्थैः स भरतभूपतिर्बभासे, श्रेयःश्रीव्रततिभवैरिव प्ररोहैः ॥ २२ ॥
तत्कालं जयजयवादिवन्दिमाला–नादानां प्रतिरवकैतवेन तेनुः ।
दिक्चक्राक्रमणसमुद्यतस्य तस्य, क्षोणीन्दोः सपदि जयाशिषं दिशोऽपि ॥२३॥
विद्वेषिक्षितिपतिदन्तिसिंहनादः, स्वाजन्याश्रितशिखिसङ्घमेघनादः ।
क्रोडस्थीकृतततवन्दिवृन्दनादः, सङ्क्रान्तो दिशि दिशि हृद्यवाद्यनादः[3] ॥ २४ ॥
षट्खण्डं 'भरत'मशेषमेष जेतुं, षट्सङ्ख्यप्रगुणगुणप्रयोगदक्षः ।
नाभेयप्रभुपदपद्मषट्पदः[4] प्राक्, पूर्वाशां प्रति 'भरत'प्रभुः प्रतस्थे ॥ २५ ॥
आक्रष्टुं निखिलधराधिनाथलक्ष्मीं, ध्यानं यद् दधुररुणं सदा हृदन्तः ।
तद्योतिः[5] शिरसि विसृत्वरं श्रयन्तः, सिन्दूरं किल करिणां गणाः प्रसस्रुः २६
पाताले नृपमहसः प्रवेशनाय, क्ष्मापीठं हयततयः खुरैः प्रचख्नुः ।
तस्यैव[6] त्रिदिवभुवि ध्रुवं प्रयातुं, पद्यां द्यामनु दधुरुद्धतै रजोभिः ॥ २७ ॥
रोहद्भिः कनकमणिप्रभाप्ररोहै–र्विस्तारं रविकरसङ्गमाद् व्रजद्भिः ।
सम्पूर्णां निजरथिनामिव[7] प्रतापैः, सम्बाधामिव विपुलां रथाः प्रचक्रुः ॥ २८ ॥

चक्रादिरत्नपुरस्सरं चक्रिणः प्रयाणम्

पादातैर्द्रुततरजातपादपात–न्यञ्चद्भूकृतभुवनेशदेशशङ्कैः ।
उद्धूतोद्धतविविधायुधाग्रबिभ्यद्–द्योलोकै रिपुकुलकम्पदैः प्रचेले ॥ २९ ॥
शर्वर्यामपि तिमिरोज्झितं वितन्वद्, दिक्चक्रं रुचिनिचयेन चक्ररत्नम् ।
सैन्याग्रे नभसि चचाल तत् त्रपावान्, मार्तण्डोऽजनि रजसां भरैरदृश्यः ॥३०॥
प्राग् रत्नं हयमधिरुह्य दण्डरत्नं, पाण्यग्रे दधदथ दण्डनाथरत्नम् ।
प्राचालीद् रिपुकुलमृत्युदस्तदग्रे, कालोऽयं किल तनुमान् सुषेणनामा ॥ ३१ ॥
यन्मन्त्रैर्द्रुतममृतप्लवैरिव द्राग्, दीर्यन्ते दुरितविषार्चिषो जनानाम् ।
श्रेयःश्रीव्रततिपयोधरः पुरोधा–रत्नं स क्षितिपतिना समं प्रतस्थे ॥ ३२ ॥
अग्रेऽभूद् गृहपतिरत्नमप्रयत्नं, यद् दातुं क्षममशनान्यभीप्सितानि ।
क्षोणीशाखिलशिविरा[8]श्रयेषु कृत्वा, पुंरूपान्तरमिव चित्रकल्पशाखी ॥ ३३ ॥

---

१ षोडशसहस्रैः । २ क–'नन्दि०' । ३ भेरीप्रभृतिमनोहरवादित्रध्वनिः । ४ क–'पद्श्रीप्राक्' । ५ ख–'तज्ज्योतिः' । ६ भरतप्रतापस्यैव । ७ रथस्थितसुभटानाम् । ८ ख–'शिबरा०' ।

यत् कर्त्तुं कटकनिवेशनाद्यभिज्ञं, तद्रत्नं सममिह वर्द्धकिः प्रतस्थे ।
तद् रत्नद्वयमपि काकिणी मणिश्च, प्रद्योतैर्द्युमणिनिशामणिप्रकाशम् ॥ ३४ ॥
स्रष्टुं यत् क्षममुरुचक्रिसैन्यमानं, विस्तारं[3] तद्चलदत्र चर्मरत्नम् ।
तादृक्षं तदपि तथा[1]ऽऽतपत्ररत्नं, नैद्यम्भस्तरणघनाम्बुवारणार्हम्[2] ॥ ३५ ॥
यल्लक्ष्मीविलसनवेश्म शाश्वतं यद्, रोलम्बावलिरिव पाणिपुण्डरीके ।
यत् पृथ्वीजयमयमन्त्रयन्त्रपीठं, तद् भेजे भरतनृपः कृपाणरत्नम् ॥ ३६ ॥
चक्रस्यानुग इति सैन्यचक्ररत्नै, रोचिष्णुः समगमदादिमः स चक्री ।
माणिक्यस्फुटमुकुटेद्धमूर्द्धदेशै-रुर्वीशैरनुदिशमावृतः कृतज्ञैः ॥ ३७ ॥
तत्कालं लुलदनुकूलवायुवल्गद्-दीर्घाग्रैर्ध्वजनिचयैश्चमूसमूहः ।
स्वव्यासे[4] स्फुरति गुरौ पुरोऽपसारं, शङ्केऽसौ त्रिदशपतेर्दिशो दिदेश ॥ ३८ ॥
तस्योर्वीशितुरनुकूलतां प्रपन्नैः, सम्पन्नैः पथि शकुनैरिदं न्यवेदि ।
षट्खण्डक्षितिविजयेऽत्र ते करिष्य-न्त्याश्लेषं सकलदिशां श्रियोऽनुकूलाः ३९
सैन्येशोऽकृत पथि चण्डदण्डरत्न[5]-व्याघातैर्विषमपदं समं स्थितोऽग्रे ।
साम्राज्ये सचिव इवाद्भुतैरुपायैः, सिद्धान्ते शुभमतिवद्गुरूपदेशैः ॥ ४० ॥
राजानं समुदयिनं निरूप्य सैन्या[6]-ऽकूपारः स परिलसन्नदृश्यपारः ।
रोहद्भिर्[7]महदिभबृंहिता-ऽश्वहेषा-नृक्ष्वेडा-रथिरथचीत्कृतैर्जगर्ज ॥ ४१ ॥
बाह्लीक[8]प्रखरखुरोत्थरेणुपूरै-रापूर्णान्तरमभितोऽम्बरं बभासे ।
द्विड्वंश[9]ज्वलितनृपप्रतापवह्ने-रुद्भूतै[10]रिव नवधूमचक्रवालैः ॥ ४२ ॥
तच्चक्रं पवनपथे पुरः स्फुरद्भि-स्तेजोभिर्व्यजयत तद्रजोऽन्धकारम् ।
येनोच्चैः पिहितमहर्पतिं समूहैः, स्वैर्भासामहसिषुरश्ववारकुन्ताः ॥ ४३ ॥
तच्चक्रं गगनगमेकयोजनाग्रे, गत्वाऽस्थात् प्रगुणगभस्तिदुर्निरीक्ष्यम् ।
यद् रेजे तिलकमिवाखिलक्षमाभृत्-क्षोभार्थं भरतनृपप्रतापलक्ष्म्याः ॥ ४४ ॥
चक्रेऽत्र[11] स्थितवति तत्र तत् प्रयाणे, प्रामाण्यं समजनि योजनस्य मानम् ।
तत्रोर्वीविजयमहे नृपप्रयाणं[12], जज्ञेऽहर्दिनमपि योजनप्रमाणम् ॥ ४५ ॥

---

१ क-'यथा' ।　२ क-'नद्यम्बुस्तरण०' ।　३ चमूविस्तारे ।　४ क-'सव्यासे' ।
५ क-'दण्डचण्डरत्न-' ।　६ सेनासमुद्रः ।　७ प्रादुर्भवद्भिः ।　८ काम्बोजाश्व० ।
९ क-'द्विड्भ्रंश०' ।　१० क-'रुद्भूतैः ।　११ एकयोजनाग्रे ।　१२ क-'प्रमाणं' ।

निर्मायाध्वनि तृणवन्नतान् नरेन्द्रा-नुन्मूल्यानिलवदनोकहानिवान्यान् ।
भूभर्त्ता कतिभिरपि प्रयान् प्रयाणै-'र्गङ्गा'याः पुलिनमवाप दक्षिणं सः ॥४६॥

गङ्गातटवर्णनम्

सौरभ्यं सरसिरुहोद्भवं तुषारान्, बिभ्राणोऽनुपम[1]मुपायनं नियुक्तः ।
'जाह्नव्या' मृदुसहजो निजप्रधान- स्तं भेजे नृपतिवरं तरङ्गवायुः ॥ ४७ ॥
सेराम्भोरुहसुरभिं मृदुस्वभावं, तं वायुं ससुरतरङ्गिणीप्रसङ्गम् ।
हाहेति ध्वनिनिभृता स[2]रोमहर्षा, स्राक् सेना मुकुलितनेत्रमालिलिङ्ग ॥ ४८ ॥
स्वर्दण्डः किमु पतितोऽन्तरिक्षदेशात्, किं शेषद्युतिविततिस्तलाद् गतोर्ध्वम् ? ।
किं मुक्तावलिकलिताऽत्र कण्ठिकोर्व्या ?, [3]व्योमस्थैर्विमलजलेत्यतर्कि या प्राक् ४९
तीरद्रुप्रतिमितिभिर्विवर्णताभाग्, विस्फूर्जद्विविधविहङ्गकूजिताढ्या ।
विस्सेराम्बुजवदना सकम्पसम्पद्, याऽऽश्लिष्यत्युदधिमहो तरङ्गहस्तैः ॥ ५० ॥
विश्वाऽन्तर्वहति महत्त्वतत्त्वमुच्चै-र्दुर्लङ्घ्यां परमगभीरतां बिभर्त्ति ।
तापार्त्तिं व्यपनयति द्रुतं श्रितानां, या साधुस्थितिरिव निर्मलस्वभावा ॥ ५१ ॥
या तीरद्वयवलये विशालशाल-च्छायाभिः शितिजलपद्धतिच्छलाभ्याम् ।
संश्लिष्टा समदमुदन्वता तताभ्या-मायान्ती निजदयिता ध्रुवं भुजाभ्याम् ॥५२॥
तीरान्तोपवनततिः प्रियाऽन्वितानां, संवासैरिह सुरसिद्धपद्धतीनाम् ।
शून्या यद् भवति न मु[4]क्तनन्दनानां, या तेनाजनि 'सुरसिद्धसिन्धु'सञ्ज्ञा ५३
चक्रस्यानुचरणमाचरन् स चक्री, पूर्वा[5]ब्धि सुरसरिता तयाऽवगूढम् ।
अद्राक्षीत् प्रसमरमेदुरप्रमोदो, रोदोऽन्तर्विततपतत्तरङ्गभङ्गम् ॥ ५४ ॥—कुलकम्

पूर्वसमुद्रस्य वर्णनम्

पू[7]र्वाब्धिं रसरभसाऽभिषङ्गि'गङ्गा'-सङ्गार्थं बहुलविलोलवीचिबाहुम् ।
आलोक्याङ्कुरितगुरुप्रमोदकन्दः, सन्दध्याविति भरतः स भूमिभर्त्ता ॥ ५५ ॥
पर्यन्तस्थितजलनुन्नरत्नपालि-र्द्वीपालिः कलितविशालजातरूपा ।
वृत्ताऽस्मिन् कृतबहुकु[6]ण्डलप्रकारा-दाराणामिव सरितां कृते चकास्ति ॥ ५६ ॥
ए[8]तस्मिंस्तरुणतमालमेचकाना-मुत्तुङ्गा नियतमपां जयन्त्युरोजाः ।
मुक्ता[9]स्रक्चयमिव बिभ्रतो वनाली-नीलाङ्गाः कुसुमसमूहमन्तरीपाः ॥ ५७ ॥

१ प्राभृतम् । २ क–'सुरोम०' । ३ देवैः । ४ त्यक्त'नन्दन'वनानाम् । ५ पूर्वाब्धौ । ६ क–'मण्डल०' । ७ पूर्वाब्धौ । ८ स्तनाः । ९ क–'स्रग्वयमिव' ।

वर्षाभिर्विपुलपयोधराभिरुर्वी, पुत्रीवत् खलु गमिता मयैव[3] वृद्धिम् ।
पाल्याऽसौ निजरमणीति रत्नरूपा-मस्याज्ञामिव[2] शिरसा भजन्ति भूपाः ॥ ५८॥
नक्षत्रं न भवतु जन्मनोऽप्यनादिः, पानीयैरनसदृशो वरोऽयमास्ते ।
इत्यस्मै निजतनया[3] तु नामराशेः[4], साधर्म्याद्ददत सिन्धवे[5] क्षितिध्राः ॥ ५९ ॥
किं नीरद्विरदमदप्लवैः किमर्क-त्रस्तान्तर्धृतविततान्धकारभारैः ।
[6]किं वाऽन्तः प्रतिमिततारकाध्वभावा-दम्भोधिः समजनि [7]मेचकोऽयमुच्चैः ६०
गर्भान्तर्गुरुतरगोत्रचन्द्रकान्तं, प्रत्यग्रप्रस्रुतसुधातरङ्गिणीभिः ।
अभ्येते तुहिनरुचौ तमीषु सोऽयं, [9]सोत्तालस्फुरिततरङ्गसङ्गमः स्यात् ॥ ६१ ॥
तीर्थं यद् ध्रुवमिह 'मागधा'भिधानं, जेयोऽस्याधिपतिरिदं हृदा विमृश्य ।
तत्तीरे स बहुमहीरुहे विधित्सु-र्विश्रामं शिबिरनिवेशनं व्यधासीत् ॥ ६२ ॥
स द्वाभ्यां युतदशयोजनानि दैर्घ्ये, विस्तारेऽजनि नववाहिनीनिवेशः ।
चित्राट्टालयचयचत्वरादितत्रा-'ऽयोध्या'यामिव विविधं बभूव सर्वम् ॥ ६३ ॥
धीवारांनिधिरिह वर्द्धकिर्विचित्रा-नावासान् दिशि दिशि सर्वसैनिकानाम् ।
एकां च व्यतनुत पौषधस्य शाला-मालानं किल सुकृतद्विपाधिपस्य ॥ ६४ ॥
शालायां स्वमनसि मागधेशमस्यां, राट् स्मृत्वाऽष्टमतपसा सपौषधोऽस्थात् ।
संपूर्णावधिविधिपौषधोऽह्नि तुर्ये-ऽध्यारोहद् रथमुदयाद्रिवत् प्रगेऽर्कः ॥ ६५ ॥
पाथोधेः पयसि शताङ्गनाभिदघ्ने, स्थित्वोर्वीपतिरकरोद् धनुस्ततज्यम् ।
तर्जन्यङ्गुलिरिव मागधेन्द्रलक्ष्मी-मैत्र्यार्थं नृपतिमहःश्रियो नता तत् ॥ ६६ ॥
क्षोणीन्दुर्विशिखमृजुं स्वनामयुक्तं, सत्तेजो विकटमयुङ्क्त कार्मुकेऽत्र ।
सत्कृत्ये सुहृदमिवाथ तत्र[11] कृष्टे, जिह्वावद् यमवदनेऽन्तरा स रेजे ॥ ६७ ॥
आकर्णप्रगुणगुणस्य कार्मुकस्य, क्रोडस्थं व्यरुचत चक्रवर्त्तिविक्रम्[12] ।
बाणेनोल्बणपरिवेषि केतुनेव, व्यासक्तं भुवनभयाय भानुबिम्बम् ॥ ६८ ॥
यः पुङ्खे बहिरबहिर्मुखे[13] गरुत्मद्, [14]दैत्याऽहिप्रमुखसुरैरधिष्ठिताङ्गः ।
तं भूमीविभुरभि[15] 'मागधा'धिनाथं, स्वं दूतं किल विससर्ज पत्रवाहम् ॥ ६९ ॥

---

१ समुद्रेण । २ समुद्रस्य । ३ नदीः । ४ समुद्रस्य नदीनामपि सिन्धुरिति नामसादृश्यम् । ५ पर्वताः । ६ क-'किंवान्तःप्रतिमितितारका०' । ७ 'सेवको' । ८ क-'कान्तप्रत्यग्र०' । ९ क-'सोत्तालं' । १० भरतः । ११ कार्मुके । १२ ख-'चक्रम्' । १३ अमोघे । १४ क-'दैत्यारि०' । १५ ख-'रनु मागधा०' ।

निर्घातध्वनिजनिताद्भुतप्रकम्पः, सम्पातज्वलितदिगन्तरालजालः ।
षड्द्विघ्नान्युरुगति योजनानि गत्वा, बाणोऽसौ सदसि पपात मागधेन्द्रोः ॥७०॥

बाणवीक्षणेन मागधाधिनाथस्य स्थितिः

[1]धूमोर्णापरिबृढदण्डवत् प्रचण्डा-पातं तं विशिखमवेक्ष्य मागधेन्द्रः ।
[2]साटोपभ्रुकुटिकरालभालपट्टः, प्राकुप्यत् [3]कलितवपू रसो नु रौद्रः ॥ ७१ ॥
कुञ्जान्तः शयनजुषः सुखं मुखे कः, सिंहस्य प्रणिहितवान् हठेन यष्टिम् ? ।
ज्वालाभिर्ज्वलति वने भृशं कृशानौ, कश्चक्रे चरणनिवेशनं [4]विसञ्ज्ञः ? ॥७२॥
तस्याहं हरिरिव हस्तिनः प्रभूतं, प्रोद्भूतं मदमपहर्तुमुद्यतोऽस्मि ।
इत्येषः स्फुरदधरः क्रुधा प्रजल्प-न्नुत्तस्थौ पुरत इव स्थिते विरुद्धे ॥७३॥-युग्मम्
रेजेऽसौ [5]यमरसनासनाभिमभ्रा-दभ्राभाभरमभिकम्पयन् कृपाणम् ।
उज्ज्वालः किल तनुमान् प्रकोपवह्नि-र्व्योमाध्वप्रसृमरधूमधोरणीद्धः ॥ ७४ ॥
[6]धूतासाविह रभसोत्थिते तदानीं, प्रक्षुब्धः सपदि परिच्छदोऽप्युदस्थात् ।
ग्रीष्मर्तौ स्फुरदुदये कुरङ्गलक्ष्म-[7]ण्युद्वेलो जलधिरिवानणुप्रणादः ॥ ७५ ॥
केषाञ्चिद् दिवि वितताः कृपाणसङ्घाः, कान्त्योघैरसिततरैः किलेत्यशंसन् ।
ईदृग् वो नियतमिहोद्यमे भवित्री, दुष्कीर्त्तिः शमर्मसमं ततः श्रयध्वम् ॥७६॥
अश्रान्त[9]श्रमकृतसम्भ्रमेण [10]शून्ये, कुर्वाणाः कतिचिदपि क्षुरीप्रहारान् ।
आरम्भं निभृतमसूचयन् स्वकीयं, जेतव्यप्रसभपराजयेन शून्यम् ॥ ७७ ॥
केषाञ्चित् सपदि धनुर्भिराततज्यैः, सा पर्षज्जनितसहस्रलोचनेव ।
संरम्भादशुभदमुष्य सायकस्य, क्षेप्तारं प्रतिदिशमीक्षितुं क्षणेऽत्र ॥ ७८ ॥
उज्जह्रुः कतिचन कुन्तचक्रवालं, संश्लिष्यद्रविकिरणावलीकरालम् ।
[11]यज्ज्योतिस्ततिभिरतीव तीव्रमेषा-मुन्मेषादरम[12]यथाबलं जहास ॥ ७९ ॥
[13]यं प्रेक्ष्य प्रधनभुवि [14]त्रयीतनुत्विड्-दुर्द्धर्षं त्रिजगदपि प्रकम्पमेति ।
द्विट्शक्तित्रितयविमूलनं त्रिशूल--व्रातं तं प्रजगृहिरे परे करेण ॥ ८० ॥
[15]यौ साकं युधि जयकीर्त्तिवल्लरीभि-र्भिन्दन्ति त्रसदिति विद्विषां शिरांसि ।
तान् पर्शूनकृशकृशानुभानुशोभा-सम्भारानभिजगृहुः करेण केचित् ॥ ८१ ॥

---

१ यमराज० । २ क-'साटोपिभ्रुकुटि' । ३ मूर्तिमान् । ४ मूढः । ५ कालजिह्वासदृशम् । ६ कम्पितखड्गे । ७ क-'लक्ष्म्य-' । ८ अनुपमम् । ९ निरन्तरोद्यमेन । १० आकाशे । ११ कुन्तचक्रवालप्रभा० । १२ अनुचितबलम् । १३ क-'यत्' । १४ सूर्यप्रभा० । १५ ख-'ये' ।

केऽप्युच्चिक्षिपुरुरुशीर्षसैंहिकेयान्, सन्मुष्टिस्वभुजवराश्च मुद्गरान् खे ।
कल्लोलानिव निविडस्वधैर्यवार्द्धेः, केऽप्युद्यन्मदमुदलालयंश्च दण्डान् ॥ ८२ ॥
व्यातेनुः कतिचन सिंहनादमुच्चै–र्यं श्रुत्वा लघु दिगिभावलीमदोऽगात् ।
वित्रस्तो न (नु?) विधुमृगस्तु यत्कलाभि–र्बद्धोऽयं दृढतरमस्य तत् क्व मोक्षः? ८३
आकुञ्चयोरसि विनिवेश्य वामबाहू–नास्फोटान् व्यधुरपरेऽन्यपाणिभिर्यान् ।
तज्जन्मा ध्वनिरगमत् तदाऽब्धिमध्ये, सोऽद्यापि स्फुरति तरङ्गरङ्गणेषु ॥ ८४ ॥
इत्यासीत् सदसि परिच्छदो मदोग्रः, संरम्भाद् विविधविचेष्टितः स यावत् ।
तावत् तत् सचिववरेण तत्र बाणे, वर्णाली रणविनिवारिणीत्यलोकि ॥ ८५ ॥
कार्यं चेन्निजधन-राज्य-जीवितव्यैः, सेवां नस्तनुत ततः स्वरत्नदानैः ।
इत्याज्ञां वितरति वो युगादिभर्तुः, पुत्रोऽयं भुवि भरतोऽद्य सार्वभौमः ॥८६॥

शराक्षरदर्शनानन्तरं वचनानि सचिवस्य

मन्त्रीत्यक्षरविधितोऽवधेश्च मत्वा, तत्तत्त्वाच्छरमपि दर्शयन् विभोस्तम् ।
इत्यूचे सकलपरिच्छदप्रवीरान्, भो भो धिक् सरभसकार्यकारिणो वः ॥८७॥
क्षेत्रेऽभूद् बत 'भरते'ऽत्र चक्रवर्ती, पूर्वोऽयं भरत इति प्रतीतनामा ।
सूनुः श्रीवृषभविभोः स दण्डमिच्छ–त्युच्चैर्वः शिरसि च शासनं निधातुम् ॥८८॥
चेद् विद्याधर-नर-किन्नरा-ऽसुराद्याः, सम्भूय प्रसभजयेच्छया यतन्ते ।
प्राक् पुण्योपनतसनाकिचक्रचक्रो, भूशक्रो न युधि तथापि जीयतेऽसौ ॥८९॥
दम्भोलिः कथमपि दल्यते बलेना–कूपारः कथमपि तीर्यते भुजाभ्याम् ।
स्वर्णाद्रिः कथमपि चूर्ण्यते प्रकोष्ठै–र्नैवोर्व्यां कथमपि जीयते तु चक्री ॥ ९० ॥
देव! त्वं भुजगकुमारजातिरेष, द्रेष्याशीविषविषभृद् रिपुश्च चक्री ।
तत् क्रोधादयमपवर्त्यतां स्वलोक–स्तस्याज्ञां धर शिरसाऽद्य देहि दण्डम् ॥९१॥
श्रुत्वैवं सचिववचः शरे च वर्णान्–निर्वर्ण्य प्रशममवाप मागधेन्द्रः ।
तं स्वर्णाशुगमुपदां च सम्प्रगृह्य, प्राप्योर्वीपतिमुपनम्य चेत्यवोचत् ॥ ९२ ॥

मागधेन्द्रेण कोपशमनानन्तरं चक्रिणः स्तुतिः

दिष्ट्या मे नयनपथं गतोऽद्य देवः, प्रत्यूषे रविरिव पङ्कजाकरस्य ।
तातस्ते जिनपतिरादिमो यथाऽऽस्ते, त्वं चक्री जयसि तथाऽऽदिमो जगत्याम् ९३
नेतस्त्वां प्रति नियतं न केऽपि वीरा, गन्धेभं प्रति किमिभाः परे मदान्धाः? ।

१ क–'यन्मद०' । २ विधुमृगस्य । ३ क–'मदग्रः' । ४ क–'प्रभोः' । ५ ख–'स्वर्लोक–' ।

पारीन्द्रं[1] प्रति पृषतां[2] गणा द्विषः किं, तीक्ष्णांशुं प्रति तिमिराणि किं स्थिराणि ? ९४
पाण्यग्रात् पविमिव पाकशासनस्य, कुलेश्यामह इव वक्त्रतो महर्षेः ।
आक्रोशोक्तमिव सतीजनस्य कोपात्, कश्चापात् तव सहते पतत् पृषत्कम् ? ९५
बाणोऽयं मयि तु वितन्वता प्रसादं, यः प्रैषि प्रकृतिपुमानिव[3] त्वयाऽद्य ।
हृद्दर्पोपशमनदेवसेवनाद्ये,[4] कर्तव्यावगमविधौ गुरुः स[5] नोऽभूत् ॥ ९६ ॥
देवाद्यप्रभृति शिरोमणिस्त्वदाज्ञा, मान्या मे यदिति गृहाण मौलिरत्नम् ।
इत्युक्त्वा व्यतरदसौ तदस्य बाणं, तं तीर्थोदकमणिमौलिकुण्डलैश्च ॥ ९७ ॥
प्रत्यैच्छत् सकलमिदं च चक्रवर्त्ती, तं चारं[6] सदकृत दंकुश्रवःकुमारम्[7] ।
स प्राग्दिग्जय[8] इव मूर्त्तिमाँश्च राज्ञा, विन्यस्तः[9] पुनरपि 'मागधा'ख्यतीर्थे ॥९८॥
पाथोधेरवनिपतिस्ततो निवासात्, श्रित्वाऽस्मात् तदनु चकार पारणं सः ।
अष्टाहीमहमकृताथ मागधेन्दो-र्नम्राणां ददति हि गौरवं महान्तः ॥ ९९ ॥
खे भीष्मद्युति तदथाचलद् रथाङ्गं,[10] यत् प्रेक्ष्य स्फुरदरुणो[11] हृदेति दध्यौ ।
चक्रं मे भवति रथे द्वितीयमेतत्, स्वीकर्तुं 'भरत'भयात् पुनर्न शक्यम् ॥१००॥
याम्यायां दिशि 'वरदाम'नामतीर्थं, प्रत्युच्चैश्चलनमिदं चकार चक्रम् ।
तत्तेजोज्ज्वलित[12]दिगन्तरालजालः, क्ष्मापालः पवनमिवाग्निरन्वचालीत् ॥१०१॥

वरदामतीर्थेशस्य वशीकरणवर्णनम्

वित्रस्यत्परनरपान्धकारपङ्क्ते-श्चक्रस्यानुग इति [13]योजनप्रयाणैः ।
क्षोणीन्द्रस्तटमटति स्म दक्षिणाब्धे-स्तीक्ष्णांशोरिव दिवसो मरुत्पथस्य ॥१०२॥
तत्रैला[14]-क्रमुक-लवङ्ग-नागवल्ली-कक्कोलावलिबहुले बहून् वलानाम्[15] ।
आवासान् व्यतनुत वर्द्धकिर्नृपाज्ञां, प्राप्य प्रागिव लघु पौषधालयं च ॥१०३॥
क्षोणीन्द्रो हृदि 'वरदाम'धामदेवं, स ध्यात्वाऽष्टमतपसाऽऽत्तपौषधोऽभूत् ।
तुर्येऽसौ निरसरदह्नि पौषधौकः-क्रोडाङ्कादिव गिरिकन्दरान्मृगेन्द्रः ॥ १०४ ॥
आरूढो रथमथ पार्थिवः स तस्थौ, पाथोधेः पयसि रथाङ्गनाभिसंस्थे ।

---

१ सिंहम् । २ मृगविशेषाणाम् । ३ सचिव इव । ४ क-'हृद्दर्शोपशमनमेव (सेव)नाद्ये' । ५ बाणः । ६ क-'वारं' । ७ नागकुमारम् । ८ क-'प्राग्जय' । ९ क-'विज्ञस्तपुन०' । १० चक्रम् । ११ सूर्यस्य सारथिः । १२ चक्रस्य द्युति० । १३ क-'योजनं' । १४ एलची-सोपारी-लवेंग-नागरवेल-कंकोळेत्यनुक्रमपूर्वकभाषापर्यायात्मकपृथ्वीका-पूगवृक्ष-देवकुसुम-ताम्बूलवल्ली-कोशफलश्रेणि० । १५ क-'छलानाम्' ।

क्लृप्तार्थः किल विलसत्तरङ्गहस्तो–त्सङ्गस्थोल्बणमणिमण्डलेन तेन ॥ १०५ ॥
[1]स्तब्धानां न हि गुणधारणेति कृत्वा, प्राङ् नम्रं स धृतगुणं धनुर्व्यधत्त ।
तेनेऽथ क्षुभितसुरासुरेन्द्रवारं, टङ्कारं सुभटशिरोमणिर्गुणस्य ॥ १०६ ॥
क्वापि प्राग् 'भरत'विभुः प्रभाव[2]नम्रे, निःशेषक्षितिपचये न यं न्ययुङ्क्त ।
तद्दुःखं स[3] दधदधोमुखो [4]निषङ्गात्, तेनात्तो मणिम[5]हसा स्रि(स्थि?)तस्तदेषुः १०७
कर्णान्तप्रणयिगुणं सबाणदण्डं, कोदण्डं यदकृत मण्डलं महीन्द्रः ।
यात्रार्थै त्रिजगति तत्प्रतापभानो–[6]र्भूगर्भस्थितिरथचक्रमेकमेतत् ॥ १०८ ॥
यं बाणं प्रति 'वरदाम'तीर्थदेवं, [7]दिग्ज्योतिर्द्युतिनिचयं मुमोच चक्री ।
चापाद् द्वे दश च स योजनानि यात्वा, पर्जन्यादशनिरिवापतत् तदग्रे ॥१०९॥
उद्दामद्युति'वरदाम'राट् कराल–क्रोधाग्निः शरपतनेन तेन जज्ञे ।
इत्यूचे वचनमयं च पञ्चवक्त्रः, केनांह्रि[8]प्रहतिकृता विनिद्रितोऽद्य ॥ ११० ॥
बाणेन स्वयममुनैव तस्य हन्मी–त्युक्त्वाऽसौ रणकरणाग्रहोऽग्रहीत् तम् ।
तां तत्राक्षरपटलीं निरीक्ष्य रोषं, तत्याज द्रुतमपि [9]जाङ्गुलीमिवाहिः ॥ १११ ॥
आदाय प्रवर[10]मुपायनं पृषत्कं, तं चागान्नृपमुपनम्य सोऽब्रवीच्च ।
आहूतः क्षितिपुरुहूत! पत्रिणा ते, [11]नाप्तोऽहं स्वयमिह यत् सहस्व तन्मे ॥ ११२ ॥
नाथातः परमिह नाथवांस्त्वयाऽस्मी–त्युक्त्वाऽसौ भरतनृपाय भूरिभक्तिः ।
तं बाणं मणिकटिसूत्ररत्न[12]राशि–मुक्तानां चयमुपदीचकार चारु ॥ ११३ ॥
तद्वस्तुग्रहणमनुग्रहं महीन्द्रः, कृत्वाऽसाविह 'वरदाम'नाम्नि तीर्थे ।
आरोप्य स्वजयजकीर्तनं किलैनं, पाथोधेः शिबिरमगाद् वियद्वदर्कः ॥ ११४ ॥
स्नात्वाऽसौ विरचितपारणो महाढ्या–मष्टाहीमथ 'वरदाम'तीर्थनेतुः ।
व्यातेनेऽवनिवनितापतिः प्रतिष्ठा–[13]मिष्टानां प्रणतिजुषां सृजन्त्यधीशाः ॥११५॥

पश्चिमसमुद्रे प्रभासतीर्थेशवशीकरणम्

तच्चक्रं चलितमथ प्रति प्रतीचीं, शिष्यस्तद्गुरुमिव पार्थिवोऽन्वगच्छत् ।
[14]प्रत्यञ्चं जलधिमभि 'प्रभास'तीर्थं, स [15]प्रापत् कतिभिरपि प्रयान् प्रयाणैः ॥११६॥

---

१ अभिमानिनाम् । २ क–'मग्ने' । ३ बाणः । ४ तूणिरात् । ५ क–'महसी' । ६ क–'धूंगर्भ०' । ७ क–दिग्द्योतिद्युति०' । ८ क–'प्रहृति०' । ९ क–'जाङ्गली०' । १० क–'मुपायने तृषत्कं' । ११ क–'नात्तोऽयं' । १२ क–'राशीरत्नानां' । १३ क–'मृष्टनां प्रणतिजुषामृज०' । १४ पश्चिमम् । १५ क–'प्राप क्षितिभि०' ।

तत्तीरे बहुलनिरन्तरालशाल-श्रेणीभिः सततनिवारितार्कतापे ।
सैन्यानि क्षितिपतिना निवेश्य तस्थे, [1]संस्मृत्याष्टमतपसा 'प्रभास'नाथम् ॥११७॥
पर्जन्याद् रविरिव पौषधीयपस्त्या-[2]न्निर्यातो नृपतिरतीव तीव्रतेजाः ।
आरूढो रथमथ [3]पूरिताष्टमोऽयं, प्राप्तोऽब्धेः पयसि रथाङ्गनाभिभाजि ॥ ११८ ॥
आक्रम्य स्वकर[4]बलाद् व्यधत्त नम्रं, कोदण्डं दृढमपि चण्डबाहुदण्डः ।
क्ष्मापालोऽरिकुलमिवाथ मौलिना त[5]त्, तस्याज्ञामिव बिभराम्बभूव जीवाम् ११९
हुङ्कारं स परमहीन्द्रभूतिकृष्ट्यै, स्वीकारं 'भरत'[6]धराधिपत्यलक्ष्म्याः ।
ओङ्कारं रणकरणस्य चक्रवर्ती, टङ्कारं तदनु धनुर्गुणस्य तेने ॥ १२० ॥
इष्वासे विततगुणे सुवंशजाते, सत्कोटिश्रिणि[7] सुमहत्यनन्यधार्ये ।
कल्याणोल्बणमहसं सुपर्वशस्यं, माहात्म्ये स्वमिव शरं नृपो न्ययुङ्क्त ॥ १२१ ॥
[8]कर्णान्तप्रणयिगुणे शरासनेऽस्मिन्, शौर्यश्रीविलसनपल्वले विशाले ।
ताडङ्कद्वयमणिकङ्कणांशुनीरे, राजास्यं विकचसरोजवद् [9]विरेजे ॥ १२२ ॥
विक्षिप्तः क्षितिपतिना करद्रु[10]शाखाः, क्षिप्त्वा खे सपदि दिदेव दिव्यप[11]त्री ।
पक्ष्मान्तोदितपवमानपूरदूर-प्रक्षुब्धाम्बुधिविलसद्विलोलवीचिः ॥ १२३ ॥
सोऽब्धेर्द्वादश लघु योजनानि यात्वा, स्फूर्जद्वां नभसि सभां 'प्रभास'भर्त्तुः ।
[12]आयत्या कृतततविस्मयस्मिताक्षीं, सङ्क्षोभस्फुरितविसंस्थुलस्वरूपाम् ॥ १२४ ॥
बाणेऽस्मिन् विषमशरस्य जात[13]पाते, यां रक्तः क्रुधमभजत् 'प्रभास'भर्त्ता ।
सद्वर्णेक्षणवशतस्तु [14]भीतिसक्ते, तस्मिन् सा[15]ऽद्भुतममुचत् [16]तमीर्ष्ययेव ॥ १२५ ॥
तं गृह्णन् शरमुपदां परां च गत्वा, नत्वाऽसौ नृपतिमिदं व्यजिज्ञपच्च ।
भर्त्रोर्वीधव ! भवता प्रभासितोऽहं, सत्योऽद्य ध्रुवमभवं भुवि प्रभासः ॥१२६॥
विश्वस्येश्वर ! शिरसा श्रये [17]त्वदाज्ञां, प्रत्यग्दिग्वसतिरहं तवाश्रितोऽस्मि ।
इत्युक्त्वा भरतनरेश्वरस्य भक्त्या, तं बाणं स्वयमुपदां मुदाऽर्पयच्च ॥ १२७ ॥
उन्मीलन्निजविशुतालताप्रसून-स्रग्भारानिव नवशौक्तिकेयहारान् ।

---

१ क-'संस्मृताऽष्टम०'। २ गृहात्। ३ क-'पूरितोऽष्टमो'। ४ ख-बलाद्-भक्त'। ५ कोदण्डस्य। ६ क-'नृपाधि०'। ७ 'शृणि'। ८ क-'कर्णान्ते प्रणय-गुणे'। ९ क-'रराजे'। १० ख-'शाखास्त्यक्त्वा'। ११ बाणः, पक्षे पक्षी। १२ क-'आपत्या ततविस्मयस्मितक्ष्मा-संक्षोभक्षुभित०'। १३ क-'पाने'। १४ क-'भीतसक्ते'। १५ क्रुध् स्त्रीलिङ्गे। १६ 'प्रभास'भर्तारम्। १७ क-'त्वदीक्षां'।

रत्नौघान् स्वघनमहोऽनलस्फुलिङ्गान्, स्फीताभानिव तदुरुप्रभावशीतान् ॥१२८॥
निष्कादीन् कटकगणं कटीगुणं च, द्वौ चूडाहृदयमणी च चक्रभर्तुः ।
एतानि स्वयमयमर्पयाञ्चकार, प्राक्पुण्योज्ज्वलपृथिवीरुहः फलानि ॥ १२९ ॥

—युग्मम्

आदत्तानुपममुपायनं नृपस्त—न्नेतुर्हि प्रथममिदं प्रसादचिह्नम् ।
तीर्थेऽस्मिन्नमुमधिरोप्य स स्वकीर्त्ति—स्तम्भाभं जलनिधितो ययौ बलं स्वम् १३०
स्नात्वाऽसौ विरचितपारणोऽकृतोच्चै—रष्टाहीमहमहिमां 'प्रभास'नेतुः ।
सम्प्राप्ते महति निजानुवृत्तिभावं, माहात्म्यं विमलमतिर्निहन्ति नैव ॥ १३१ ॥

सिन्धुदक्षिणतटे तद्देवीवशीकरणम्

चक्रस्यानुसरणमाश्रयन् स राजा, जन्तोर्धीव्यतिकरवत् पुरा कृतस्य ।
याऽऽम्नाता त्रिजगति 'सिन्धु'नामधेया, प्राप्तोऽस्यास्तटमथ दक्षिणं तटिन्याः १३२
पूर्वाशाभिमुखमटंस्तटेन 'सिन्धो'—रेतस्याः सदनसदेशमाप भूपः ।
सेनानामिह स निवेश्य वृन्दमेना—मुद्दिश्याष्टममतनोन्महास्रवन्तीम् ॥ १३३ ॥
धत्ते साऽऽसनमथ 'सिन्धु'सिन्धुदेव्यो—र्वातोर्मिप्रतिहतबोधिपत्रलीलाम् ।
सा बुध्वाऽवधिविधिना च चक्रिणं तं, सत्कर्तुं त्वरितमुपायनैरुपायात् ॥१३४॥
सेत्यूचे जय जय नन्द नन्द चक्रि—न्नित्याशीर्वचनपुरःसरं पुरः खे ।
देवाऽद्यप्रभृति भवन्निदेशदासी—स्थानेऽस्मिन्नहमियमस्मि तन्निदेश्या ॥ १३५ ॥
जुष्टं साऽष्टभिरथ रत्नसम्भवानां, कुम्भानामवनिभुजे ददौ सहस्रम् ।
एष्यद्भिः किल नवभिर्निधानकुम्भै—रग्रे स्वं प्रहितमपत्यचक्रवालम् ॥ १३६ ॥
राज्ञे साऽदित मणिनिर्मिते यशःश्री—तेजःश्रीयुगलकृते तु भद्रपीठे ।
प्रीत्याऽऽसैः प्रवरतरैः प्रियात् पयोधे—रत्नौघैः खलु घटितांश्च बाहुरक्षान् ॥१३७॥
साऽयच्छन्मणिकटकानतुच्छगुच्छ—च्छायार्चिश्छुरितदिगन्तराम्बरान्तान् ।
ऊर्वश्येः किरणगणैरिवार्णवार्णः—संवासव्यतिकरशीतलैः प्रक्लृप्तान् ॥ १३८ ॥
अर्णोधेर्बहुविधवर्णरत्नरोचिः—प्राग्भारैरिव रचितानि सद्मचीनि ।
श्लक्ष्णत्वक्षतकदलीदलस्मयानि, क्ष्माभर्त्रेऽदित मुदिता च साऽंशुकानि ॥१३९॥

१ क—'मर्घयाञ्चकार' ।　२ ख—'सिन्धुदेव्या वातोर्मि०' ।　३ पिप्पलदलशोभाम् ।
४ क—'तन्निदेश्याः' ।　५ क—'कुन्ता०' ।　६ क—'निर्मिते मणिः श्री—' ।　७ 'सुभद्रपीठे' ।
८ क—'सद्रनीनि' (सद्वतीनि ?) ।　९ कोमलतया दूरीकृतरम्भापत्राभिमानानि ।

तत् 'सिन्धो'र्जलमिव [1]सिन्धुराट् समस्तं, स्वीकृत्यामृतमधुरैर्वचोभिरेनाम् ।
सत्कृत्य व्यसृजदपांनिधेः स सैन्यं, श्रित्वाऽस्नात् तदनु चकार पारणं च १४०

वैताढ्येशस्य वशीकरणम्

अष्टाहीमतनुत 'सिन्धु'देवताया, धात्रीशः क्रमसमुपासिनो हि सन्तः ।
[2]ऐशान्यामथ दिशि सञ्चचाल चक्रं, 'वैताढ्यं' तदनुगमोऽद्रिमाप भूपः ॥१४१॥
आदेशाद् भरतनरेश्वरस्य सेना, तस्याद्रेर्न्यविशत दक्षिणे नितम्बे ।
ध्यात्वाऽद्रेः पतिमकृताष्टमं महीन्द्रो-ऽकम्पिष्टासनमिति सोऽपि भूपमापत् १४२
'वैताढ्या'धिपतिरसौ नभःश्रितोऽग्रे, [3]प्राहेदं जय जय देव! सेवकोऽहम् ।
[4]एषोऽद्यप्रभृति तवेह मां प्रशाधि, प्रोच्येति व्यतरदुपायनं नृपाय ॥ १४३ ॥
रत्नालङ्करणकदम्बदेवदूष्य-प्राग्भारान् मणिगणभद्रपीठपङ्क्तीः ।
स व्यश्राणयदवनीधवाय सर्वं, तेनार्चं नतमवमानयन्ति नेशाः ॥ १४४ ॥
सत्कृत्य व्यसृजदमुं मुदाऽष्टमान्ते, मर्त्यानां पतिरपि पारणं चकार ।
'वैताढ्या'धि[5]पविबुधस्य निर्ममेऽसा-व[6]ष्टाहीं जितमखिला विशेषयन्ति ॥ १४५॥
ग्रीष्मार्कप्रतिममहो गुहां 'तमिस्रा'-मुद्दिश्याचलदथ चक्ररत्नमुच्चैः ।
सर्वत्रास्खलितविलासमन्वचालीत्, तद् राजा तप इव चिन्तितार्थसार्थः ॥१४६॥
सम्प्राप्तोऽवनिवनितापति'स्तमिस्रां', तत्पार्श्वे कृत[7]पृतनाततिप्रतिष्ठः ।
संस्मृत्याकृत कृतमालमष्टमं सो-ऽकम्पिष्टासनमिति भूपतिं प्रपेदे ॥ १४७ ॥
द्वाःस्थोऽहं नृपतिवरास्मि ते 'तमिस्रा'-द्वारेऽस्मिन्निति स वदन् शिरोधृताज्ञः ।
भूभर्त्रेऽदित तिलकांश्चतुर्दश स्त्री-रत्नायाऽऽभरणचयं स्रजोंऽशुकानि ॥ १४८ ॥
आदत्ताखिलमिदमुर्वराहृदीशो, नो दण्डं त्यजति [8]जयानकं जिगीषुः ।
सम्भाष्य व्यसृजदमुं स पारणं च, क्ष्माभृद्भिः सह विदधे धरास्थपात्रैः ॥१४९॥
अष्टाहीमकृत सुरस्य तस्य चक्री, नेतारो ददति करप्रदे महत्त्वम् ।
सैन्येशं तदनु 'सुषेण'मित्यभाणीत्, सेनाभिर्व्रज जय 'सिन्धु'निष्कुटं त्वम् १५०

सिन्धुनिष्कुटजयाय सेनापतेः प्रेषणम्

'वैताढ्या'चलजलराशि'सिन्धु'सीमा, संसाध्या समरभरेण निष्कुटोर्वी ।
उल्लङ्घ्या लघु ततचर्मरत्नतोऽसौ, चारित्रादिव भवसन्ततिः सरित् तु ॥ १५१ ॥

---

१ समुद्रः । २ क-'ईशान्या०' । ३ ख-'स्माहेदं' । ४ क-'पयोऽद्य०' । ५ क-'पतिबुधस्य' । ६ ख-'ष्टाह्नी०' । ७ सेनाश्रेणि० । ८ जयप्राप्तम् ।

आदेशात् क्षितिदयितस्य दक्षिणाय, प्रस्थानं व्यधित स 'सिन्धु'निष्कुटाय ।
म्लेच्छच्छित् प्रधननृपार्द्धसैन्यधन्यः, सामन्तैः सममसमः पराक्रमेण ॥ १५२ ॥
एतस्या विलसति निष्कुटं तटिन्या, जेयं मे कियदिति वीक्षणाय मन्ये ।
आरुक्षद् द्विरदनरत्नमद्रितुङ्गं, सेनानीः सितचमरातपत्रशोभी ॥ १५३ ॥
विस्तार्य क्षतजगतीरजांसि 'सिन्धुं,' कुर्वद्भिः किल सुखलङ्घनाय योग्याम् ।
संस्पर्द्धं[1] प्रभुमहसाऽस्तभं[2] च भानुं, सैन्यौघैः स परिरुरोध 'सिन्धु'रोधः[3] ॥१५४॥
स्पष्टं द्वे दश च यदेति योजनानि, द्राग् वृद्धिं दिवसमुखे च यत्र धान्यम् ।
उप्तं सद् भवति दिनात्यये समग्रं, यद् वार्द्धिप्रमुखपयःसु तारणार्हम् ॥ १५५ ॥
प्रक्षिप्तं तदुपरि पाथसः स्रवन्त्या, विस्तारं समगमदातटद्वयान्तम् ।
आरूढः सबलचयोऽत्र चर्मरत्ने[4], प्रोत्तीर्णो लघु तटिनीं स पद्ययेव[5][6] ॥१५६॥—युग्मम्
दण्डेशे प्रसरति तत्र निष्कुटं तत्, प्रक्षोभं निखिलमलब्धपूर्वमापत् ।
उन्मीलद्भयचलितप्रभूतभूतं, मन्थोर्वीधर[7] इव तोयराशितोयम् ॥ १५७ ॥
सङ्ग्रामैरकृत स सिंहलान् शृगालान्, गर्वोग्रानपि लघु बर्बरान् वराकान् ।
स्वैर्देशैः सह पटुटङ्कणानटङ्कान्, कालस्यातुलकवलांश्च[8] कालवक्त्रान् ॥ १५८ ॥
स द्वीपं 'जवनक'सञ्ज्ञया प्रतीतं, तं रत्नाकरमिव रत्नपूरपूर्णम् ।
सामन्तैः सह हरिवत्[9] सुरासुरेन्द्रैः प्रक्षोभ्याखिलमपि सारमुज्जहार ॥ १५९ ॥
दासेरानकुरुत[10] जोनकानकाले, धूतानामथ करवालदण्डघातैः ।
'वैताढ्य'क्षितिभृदुपत्यकाश्रयाणां[11], वृक्षाणामिव स फलावलीमगृह्णात् ॥ १६० ॥
कच्छोर्वीमपि सकलां प्रकम्पमानां, कामार्त्या धृतविषमायुधप्रगल्भः ।
सर्वाङ्गं स्वभुजबलेन पीडयित्वा, स्वासक्तां परमसुखार्थदां चकार ॥ १६१ ॥
निष्पिष्टाः पटुसमितीति[12] निष्कुटेशा, हस्त्यश्वाङ्गनरथरत्नहेमराशीन् ।
स्थास्यामो वयमिह पत्तिवत् तवेत्थं, जल्पन्तो ददुरुपदां सुषेणभर्तुः ॥ १६२ ॥
आक्रामन्निखिलमपीति निष्कुटं तत्, प्रोत्तीर्णस्तदनु तरङ्गिणीं पुरेव ।
म्लेच्छेभ्यस्तमखिलमाहृतं स दण्डं, दण्डस्याधिपतिरढौकयन्नृपाय ॥ १६३ ॥
तद्यात्राजयमुदिताशयः प्रसत्त्या, तं चक्री सदकृत सैन्यपं कृतज्ञः ।

---

१ क—'संस्पर्धं'। २ अस्ततेजसम्। ३ सिन्धुनदीतीरम्। ४ चर्मरत्नम्। ५ क—'रत्नेनोत्तीर्णो'। ६ मार्गेण। ७ मन्थाचले प्रसरति सति। ८ क—'कालस्यानुकलबलांश्च'। ९ इन्द्रवत्। १० दासीपुत्रान् धीवरान् वा। ११ पर्वताधोभागाश्रयाणाम्। १२ युधि।

विद्वेषिक्षितिशतमन्युदत्तमन्युं, मन्यन्ते स्वमिव सुसेवकं नृदेवाः ॥ १६४ ॥
तत्रैवास्थित कतिचिद् दिनानि चक्री, सौख्येन स्वपुरनिवासनिर्विशेषम् ।
यत्रापि प्रथयति पुण्यवान् निवासं, तत्रापि स्फुरति सुखोत्करः पुरोऽस्य ॥१६५॥

वैताढ्यतमिस्रायां सेनानीप्रवेशः

तं सेनापतिमुपहूय भूमिनेता, जेतारं समदमिदं समादिदेश ।
'वैताढ्य'क्षितिभृतमाश्रितां 'तमिस्रां', गत्वोद्धाटय लघु तत्र तत्कपाटे ॥ १६६ ॥
स्वाम्याज्ञां स्रजमिव तां निवेश्य शीर्षे, सेनानीः समदमुपागमत् 'तमिस्राम्' ।
संस्मृत्याकृत कृतमालमष्टमं च, श्रेयो हि स्फुरति तपो विनाऽङ्गिनां किम् ॥१६७
स्नातोऽसौ [2]विसविशदांशुकोऽष्टमान्ते, पाणिस्थागुरुगुरुधूमधूपपट्टः ।
भक्त्योर्वीमिलदलिकोऽनमत्कपाटौ, प्राक् शक्ता अपि कृतिनः सृजन्ति [3]साम १६८
तत्रैतद्गिरिखचरप्रमोदमुच्चै-रष्टाहीमहमकरोन्महर्द्धिकं सः ।
अष्टाशाजयकमलाविलासदानि, द्वाराऽग्रे समलिखदष्टमङ्गलानि ॥ १६९ ॥
धृत्वा यत् प्रभवति पाणिना नरेशः, शत्रूणां रणभुवि [4]दण्डभृत् प्रचण्डः ।
तद् दण्डाधिपतिरधत्त दण्डरत्नं, हस्तेनाशनिमिव [5]पाकशासनोऽसौ ॥ १७० ॥
सेनानीस्त[6]दररियुग्ममाजिवांसुः, सप्ताष्टान्यथ स पदान्यपाससार ।
संसारं सुमुनिरपि [7]प्रहन्तुकामः, कामं तद्व्यवहरणात् प्रतीपमेति ॥ १७१ ॥
[8]प्राणेन त्वरितमुपागतः सुषेणो, दण्डेन त्रिरयमताडयत् कपाटौ ।
श्रेयोऽध्वावरणपरावधर्मधर्मौ, योगीव [9]त्रिविधवरेण संवरेण ॥ १७२ ॥
वज्राङ्गं विघटितसन्धि तेन दण्डा-घातेनोदघटत तत् कपाटयुग्मम् ।
[10]सम्पन्नाश्लथतरबन्धबन्धुनिद्रा-च्छेदेन द्वयमिव [11]पक्ष्मणोः क्षणेन ॥ १७३ ॥
दण्डोग्रप्रहतितडत्तडिद्विरावै-राक्रन्दं किल कुरुतः स्म तौ कपाटौ ।
तन्नादं प्रतिरवकैतवेन मन्ये, तद्दुःखादनु तनुते स्म सा 'तमिस्रा' ॥ १७४ ॥
तद्द्वारोद्घटनविधौ बलस्य नेत्रा, [12]विज्ञप्तो भरतनृपो द्विपेन्द्ररत्नम् ।
आरूढस्त्वरितमुपाययौ 'तमिस्रां', [13]पीयूषच्छविरिव विश्वदृक्प्रियश्रीः ॥१७५॥

---

१ इन्द्र० । २ मृणाल० । ३ सामनीतिम् । ४ यमराजवत् । ५ इन्द्रः ।
६ कपाट० । ७ ख-'प्रहर्तुकामः' । ८ बलेन । ९ कायिक-वाचिक-मानसिकेति (?) प्रकारत्रयम् ।
१० सञ्जातदृढतरबन्धयुक्त० । ११ क-'पक्ष्मयोः' । १२ क-'विज्ञप्ते' । १३ चन्द्र इव ।

जायन्ते रुज इव नैव शस्त्रघाता–स्तिर्यङ्-नृ-त्रिदशभवा इवोपसर्गाः ।
दुःखौघाः प्रलयमयन्ति यत्र मौलि–न्यस्ते यद् दशशतयक्षक्लृप्तरक्षम् ॥ १७६ ॥
उद्दामद्युतिमणिरत्नमुर्वरायाः, प्राणेशः श्रितचतुरङ्गुलप्रमाणम् ।
तद्वामेतरकरिरत्नकुम्भदेशे, [1]प्राक्पृथ्वीधरशिखरेऽर्कवद्न्यधत्त ॥ १७७ ॥–युग्मम्
चक्रं प्रागकृत गुहान्तरे प्रवेशं, पृष्ठेऽस्य क्षितिपतिरस्य सैन्यसङ्घः ।
श्रद्धावन्मनसि यथा गुरूपदेशः, सद्बोधस्तदनु गुणोच्चयस्ततश्च ॥ १७८ ॥
प्रामाण्ये [4]द्विहतचतुःसुवर्णमानं, सम्पूर्णं द्व्यधिकदशाश्रि षट्तलश्रि ।
संस्थानादधिकरणीकृतानुकारं, प्रोन्मीलत्समतलमष्टकर्णिकं यत् ॥ १७९ ॥
यावद् द्वे दश च भिनत्ति योजनानि, ध्वान्तं यद् दशशतयक्षरक्षितं तत् ।
सूर्येन्दुद्युति चतुरङ्गुलं तदादान्–मेदिन्याः पतिरथ काकिणीति रत्नम् ॥१८०॥
　　–युग्मम्
तेनोर्वीपतिरनुयोजनं गुहायां, संसर्पन्नतनुत पार्श्वयुग्मभित्त्योः ।
गोमूत्रक्रमकलनेन मण्डलानि, प्रद्योतप्रहततमिस्रमण्डलानि ॥ १८१ ॥
तान्यासन् दशगुणपञ्चसम्मितान्ये–कोनान्युद्घटितमुखा गुहा च तावत् ।
स्थायीनि प्रकलितचापपञ्चशत्या–यामानि प्रभवति यावदेव चक्री ॥ १८२ ॥
व्राहांह्रिक्षततरकर्करे द्विपानां, दानाम्भःपदपतनैः समे च मार्गे ।
सैन्यस्यास्खलिततरो गुहान्तरासीत्, सञ्चारो रुचिपटलेन मण्डलानाम् ॥ १८३ ॥
प्रापोर्वीप्रभुरथ [7]निम्नगे निम्नगो–न्मग्नाह्वे तदुरुगुहान्तरालसंस्थे ।
एकस्यां ब्रुडति शिलेव तुम्बमुच्चै–रन्यस्यां तरति तु तुम्बवच्छिलाऽपि ॥ १८४ ॥
प्राग्भित्तेर्जनितविनिर्गमे प्रतीच्या, भित्तेस्त्वन्तरपथसञ्चरे गुहायाः ।
याम्योदग्भरतनृयानरोधरेखे, ते नद्यावुदधिमुपेत्य सङ्गमाप्ते ॥ १८५ ॥
वाहिन्योः सपदि तयोर्वनाश्मपद्या–मेकाश्माकृतिमिव वर्द्धकिर्बबन्ध ।
[10]ते चक्री सपरिजनस्तयोत्ततार, स्वाम्यर्हन्नरतिरती यथा विरत्या ॥ १८६ ॥
स द्वारं नरपतिरुत्तरं गुहाया–स्तत्कालोद्घटितकपाटयुग्ममापत् ।
तौ जातौ स्वयमपसृत्य चक्रिभाग्य–व्याकृष्टामिव [12]पदवीप्रदौ कपाटौ ॥ १८७ ॥

---

१ यस्मिन् मणिरत्ने । २ मणिरत्नम् । ३ पूर्वाचलस्य शिखरे । ४ 'आठ तोला' इति भाषायाम् । ५ 'बार खुणे' इति भाषायाम् । ६ मण्डलानि । ७ नद्यौ । ८ दक्षिणोत्तर० । ९ क–'स्पद्यामेकास्माकृति०' । १० नद्यौ । ११ द्वेषरागौ । १२ मार्गप्रदौ ।

प्राक् चक्रं निचितमहामहो गुहाया, निष्क्रान्तं किल 'भरत'प्रभुप्रतापैः ।
सन्तप्ताद् धरणिधरान्मणीगणानां, सम्भूय द्युतिपटलं पृथग् बभूव ॥ १८८ ॥
उन्निद्रस्तदनु मृगेन्द्रवन्महस्वी, विश्वेन्द्रो निरगमदद्रिकन्दरायाः ।
सूते स्म क्षितिधरसुन्दरी दरी सा, निर्गच्छद्द्विरदनिभेन सूनुशैलान् ॥ १८९ ॥
[1]'वैताढ्य'क्षितिधरकन्दरात् तुरङ्गा, रङ्गन्तः [2]किल [3]बिलयोनयो निरीयुः ।
जीमूतादिव दिवसेश्वरांशुधारा, दुर्वाराः कनकमणिप्रथा रथाश्च ॥ १९० ॥
निष्पेतुः क्षितिधरकन्दरान्तराला-दुत्तालध्वनिसमदाः पदातिसङ्घाः ।
नानाऽस्त्रप्रकरकृतान्तरिक्षघाताः, पातालान्तरविवरादिवासुरौघाः ॥ १९१ ॥

दुर्दान्तम्लेच्छान् वशीकृत्य चक्रिपार्श्वे सेनापतेरागमनम्

पञ्चाशत्परिमितयोजनायतां ता-माक्रम्य क्षितिधरकन्दरां नरेन्द्रः ।
[4]कौबेरीं मकरमुखत्रयीमिवार्कः, स प्रापोत्तर'भरता'र्द्धभूतधात्रीम् ॥ १९२ ॥
आपाता इति कलिताभिधाः किराता, दुर्दान्ता [5]दितिसुतवद् वसन्ति तत्र ।
ते वित्तैर्विहितधनेश्वरोपहासा-स्ते रत्नैरनुकृत'रोहण'क्षितिध्राः ॥ १९३ ॥
ते [6]नाप्तासहनपराभवाः सुरेन्द्रो-द्यानोर्वीरुहवददावबह्निदाहाः ।
ते प्राणैस्तृणितमहाबला भुजाला, योगीन्द्रा इव विषयैः परैरजेयाः ॥ १९४ ॥

—युग्मम्

तत्रोद्गत'भरता'र्धमध्यखण्ड-क्रोडान्त[7]र्भरतनरप्रभौ प्रवृत्ते ।
एतेषामकुशलशंसिनः समन्ता-दुत्पाता इति शतशः स्फुटीबभूवुः ॥ १९५ ॥
दृप्तानां समिति पतिष्यतां किरात-व्रातानां गुरुतरभारधारणायाः ।
भीत्येव प्रचलनिकेतकाननाद्रि-स्तत्कालं क्षितिरखिलाऽपि कम्पते स्म ॥ १९६ ॥
दिग्भ्रान्तैर्भरतमहोनलैरिवोग्रै-र्दिग्दाहा भृशमभवन् दवाग्निदेश्याः ।
उद्धूतैरजनिषत क्षरद्भिराशा-दग्धेष्या जगति रजोभिरप्रकाशाः ॥ १९७ ॥
म्लेच्छौघग्रसकविकस्वरात् कृतान्त-क्रव्यादाननकुहरादिवाग्निकीलाः ।
उज्ज्वालावनिपमहोनलस्फुलिङ्ग-श्रेणीवत् [8]पवनपथान्निपेतुरुल्काः ॥ १९८ ॥
दुर्वाता वियति मिथोऽप्यथाऽऽस्फलन्तः, कल्लोला इव जलधेरुदग्रघोषाः ।
आस्फोटं सुभटघटा करिष्यतीत्थं, शंसन्तः किल विजजृम्भिरेऽतिघोराः १९९

१ इदं पद्यं न विद्यते क-प्रतौ । २ किलेत्युत्प्रेक्षायाम् । ३ सर्पाः । ४ उत्तरदिग्भवाम् । ५ दैत्या इव । ६ न प्राप्तशत्रु० । ७ ख-'नरपतौ' । ८ आकाशात् ।

प्राज्यैषङ्कटपटलीपलादनाप्ति-प्रीतानां किल पलभुग्जनव्रजानाम् ।
कान्ताभिः सह कृतहासहस्तघाता, निर्घाता दिशि दिशि जज्ञिरेऽतिरौद्राः २००

आपातकिरातानां चक्रिसैन्येन सह युद्धम्

[1]प्रेषन्तं भरतमवेक्ष्य ते किराताः, सम्भूय त्वरिततरं तरङ्गितास्त्राः ।
सङ्क्रद्धाः क्षितिविभुसैन्यमभ्यधाव-न्नग्रस्थैः सह सुभटैर्युधं व्यधुश्च ॥ २०१ ॥
म्लेच्छानां समजनि चक्रिणोऽग्रसैन्यैः, सङ्ग्रामः सममभरैरिवासुराणाम् ।
[2]यं दृष्ट्वा वियदपि सत्वरैः शरौघै-रोमाञ्चप्रचितमिवाभवद् भटानाम् ॥ २०२ ॥
अन्योन्यं द्रुतमथ साहसप्रसक्ता, दोष्मन्तः प्रधनभृतोऽभितोऽभिचेलुः ।
आक्रन्दो गुणरवकैतवेन तेने, [3]तन्मुष्टिग्रहमसहिष्णुभिर्धनुर्भिः ॥ २०३ ॥
आकृष्टे रयहठतो हयत्वराया, मानेन स्फुरितुमनीश्वरैर्लुठद्भिः ।
चीत्कारं रथचरणैः क्षणं सृजद्भि-[4]र्द्रग्वेगादतिरथिनोऽमिलन्मदान्धाः ॥ २०४ ॥
[5]संरम्भादुचितकृतप्रतिक्रियाणां, वीराणामजनि तदा स शस्त्रपातः ।
प्रक्षुब्धे जगति यथा करं न तेषु, प्रक्षेप्तुं क्षणमशकत्तमां यमोऽपि ॥ २०५ ॥
सङ्ग्रामव्यतिकरजातखेदसादि-स्वेदाम्भःप्रतिहतवर्णके तदानीम् ।
आरूढं [6]रुधिरधुनीमहोर्मिवृन्दैः, सिन्दूरीभवितुमिवेभकुम्भदेशे ॥ २०६ ॥
म्लेच्छानां कृतपरमर्मवेधरौद्रैः, शस्त्रौघैः प्रखरतरैः क्षितीश्वरस्य ।
सेनाङ्गं समजनि तन्नयन्नभिन्नं, क्षुद्राणामिव वचनैर्मनुष्यवृन्दम् ॥ २०७ ॥
दण्डास्त्रैर्निविडमकुट्टयन् किराता-स्ते नीलीदलवदिलापतेः पदातीन् ।
ते चक्रुर्युधि विमुखानरं तुरङ्गान्, वेलाऽब्ध्यूर्मय इव वाहिनीतरङ्गान् ॥ २०८ ॥
सर्वाशाप्रसरणकारिभिः किरातै-र्दुर्वातैरिव निबिडं प्रताड्यमानाः ।
[7]मेघौघा इव नवविद्युदग्र्यहेमा-लङ्कारा नृपकरिणां गणाः प्रणेशुः ॥ २०९ ॥
'आपातै'रगणितशत्रुशस्त्रपातै-र्हस्तीन्द्रैरिव गुरुहस्तशस्तदण्डैः ।
आहत्य प्रबलमदान्वितैः शताङ्गाः, कोट्यङ्गाः प्रविदधिरे रणाङ्गणान्तः ॥२१०॥
म्लेच्छानां प्रधनभृतामपि प्रकामं, सा प्रापन्नृपपृतना पराङ्मुखत्वम् ।
मालिन्यं भुवि भजते स सा तथापि, प्राक् प्रीता लघु मिलति स तैः समं यत् २११
सेनानीः समरपराङ्मुखीं [9]समीक्ष्य, स्वां सेनां पतिविमुखीमिवासतीं ताम् ।

१ प्रविशन्तम् । २ सङ्ग्रामम् । ३ सुभट० । ४ क-'द्रग्वेधादति०' । ५ वेगात् ।
६ शोणितसरित्० । ७ क-'सङ्घौघा' । ८ पृतना । ९ 'समेक्ष्य' ।

तत्कालं स्वयमुदतिष्ठत प्रपेष्टुं, तान् द्विष्टान् किल युधि मूर्तिमान् प्रकोपः २१२
पूर्वाद्रिं दिनमणिवत् तमोऽरिवृन्दं, संहर्तुं स तुरगरत्नमारुरोह ।
उद्द्योतैरिव सहसा सहस्रसङ्ख्यैः, क्षोणीशैस्त्वरिततरैरथावृतोऽसौ ॥ २१३ ॥
तैः सर्वैः सममजनिष्ट विष्टपेशै-र्म्लेच्छानां विषमतमो रणातिरेकः ।
शूरत्वं सुभटवरेष्वशोभताऽसृग्-धाराभिर्धृतनवपल्लवं किलेह ॥ २१४ ॥
विशिखैर्वरयोधचक्रवालं, दशनैरुग्रतरं करीन्द्रवृन्दम् ।
इतरेतरमङ्कुशप्रहारै-[1]र्मृध[2]माधोरणधोरणिश्चकार ॥ २१५ ॥[3]
मुखमण्डलमम्बरे भटानां, निभृतं मारय मारयेति शब्दैः ।
रिपुखड्गहतं पतत्रिनाशै-रवलोकागतदेवतुष्टयेऽभूत् ॥ २१६ ॥
[4]अहितासिभिदोत्थितं दधानो, गलरन्ध्रस्थितमैभमास्यमुच्चैः ।
युधि [5]नृत्तपरः परश्चकासे, हरनाट्ये [6]गुहबन्धुवत् कबन्धः ॥ २१७ ॥
रिपुमौलिरसिप्रहारनुन्नो, दिवि ताडङ्क[7]युतो हसद् भटेन ।
सुरभीतिकृदेककाललब्ध-द्युमणिश्वेतकरोग्रराहुरौद्रः ॥ २१८ ॥
रणसीमनि वाञ्छितस्य पत्युः, प्रथमं प्राप्तमरातिखड्गघातात् ।
द्युगतं वदनं सहासहक्कं, द्युवधूश्चुम्बितुमुच्चकैरियेष ॥ २१९ ॥
रिपुमेकमहो जघान कश्चित् , प्रथमं [8]जाङ्घिकपुङ्गवः कृपाण्या ।
सममुच्चलितं जवेन जित्वा, शरमुच्चैर्निजपक्षवीरमुक्तम् ॥ २२० ॥
मणिमौलिजटाग्रकान्तिसिन्धुः, प्रधनाम्भोधिभवार्द्ध[9]चन्द्र[10]भालः ।
असिदण्डशिखोद्धृतारिशीर्षः, किल [11]खट्वाङ्गकरः [12]परश्चकासे ॥ २२१ ॥
शरकृत्तनिरन्तरान्तरालः, [13]स्फुरकः काञ्चननिर्मितः परस्य ।
पतितो मृतवीरभेदपीडा-विधुरो भूमितले [14]किलाङ्कबिम्बः ॥ २२२ ॥
अवलोक्य पुरः श्वसन्तमन्तः-कुपितः कोऽपि कुले कल[15]ङ्कभीरुः ।
असिना प्रथमं जघान बन्धुं, रिपुं[16]मन्वेषिणमेव तस्य पश्चात् ॥ २२३ ॥

---

१ युद्धम् । २ निषादिपङ्क्तिः । ३ अतः परं २२६तमपद्यपर्यन्तं 'वैतालीय'च्छन्दसि रचना । ४ अरितरवारि० । ५ क-'वृत्तपरः' । ६ गणपतिवत् । ७ क-'युतो हसन् भटेन' । ८ शरवेगादपि जाङ्घिकोऽधिकवेगवानिति तात्पर्यम् । ९ चन्द्रः, पक्षे अस्त्रविशेषः । १० क-'मालः' । ११ महादेवः । १२ क-'परश्च कामः' । १३ 'ढाल' इति भाषायाम् । १४ किलेत्युत्प्रेक्षायाम् । १५ क-'भीमः' । १६ अन्वागच्छन्तम् ।

सुहृदा धृतमञ्चलं [1]विकर्षन्, शिरसि प्रत्तपदो मृतस्य बन्धोः ।
दयितारुदितान्यमन्यमानः, परचक्रेषु पपात कश्चिदेकः ॥ २२४ ॥
व्ययितास्त्रभरः परः समीके, रदमुन्मूल्य द्रुतं [2]रिपुद्विपस्य ।
प्रसभं प्रसरन् बलेन दृष्टो, मुशलीवाद्भुतभीतिभङ्गुरेण ॥ २२५ ॥
खरशक्तिरपूर्णमण्डलोऽपि, प्रसभं पूर्णतरेऽपि नाशहेतुः ।
सकलेन्दुसमा [3]भटाऽऽस्यकूटा, द्विषतां चिक्षिपिरेऽम्बरे[4]ऽर्द्धचन्द्रैः ॥ २२६ ॥
इति प्रवृत्ते समरे भरेण, रोषेण सेनाधिपतिः सुषेणः ।
आपात[5]सम्पातनिपातनाय, पारीन्द्रवद् दन्तिभिदेऽभ्यधावत् ॥ २२७ ॥[6]

सुषेणस्य हयस्य वर्णनम्

शतमष्टोत्तरं दैर्घ्ये, यस्याशीतिः समुच्छ्रये ।
अङ्गुलानि परीणाहे, नवतिस्तु नवोत्तरा ॥ २२८ ॥[7]
द्वात्रिंशदङ्गुलोत्सेधो, मौलिर्यस्य समुन्नतः ।
बाहू विंशत्यङ्गुलौ च, श्रवणौ चतुरङ्गुलौ ॥ २२९ ॥
जङ्घाऽङ्गुलानि षोडश, यस्य चत्वारि जानु च ।
खुरोच्चत्वे च चत्वारि, मध्यं [8]वलितवर्तुलम् ॥ २३० ॥
विशालं सन्नतं यस्य, पृष्ठं तल्पमिव श्रियः ।
[9]मरालबालकस्येव, कोमला लोममण्डली ॥ २३१ ॥
प्रशस्यद्वादशावर्तः, सर्वसल्लक्षणान्वितः ।
मित्रेणोत्कण्ठितेनेव, यौवनेन न्यषेवि यः ॥ २३२ ॥
यस्तेजोनिर्जितेनेव, रविणा चक्रिणेऽर्पितः ।
शुकनीलोऽष्टमो [10]रथ्यः, [11]सप्तसप्तिरभूत् स तत् ॥ २३३ ॥
सादिचित्तानुवृत्तिं यो, न मुञ्चति कदाचन ।
इतीर्ष्ययेव नाश्लेष-दशामस्य कशाऽश्रयत् ॥ २३४ ॥
[12]पञ्चधारा[13]प्रपञ्चार्च्यो, यः पञ्चास्य[14]पराक्रमः ।

१ क–'चिकीर्षन्'। २ क–'परद्विपस्य'। ३ क–'भटान्यकूटा'। ४ अर्द्धचन्द्रबाणैः। ५ पातनाशाय। ६ उपजातिः। ७ अतः परं २४७तमं पद्यं यावत् छन्दो'ऽनुष्टुप्'। ८ क–'चलितवर्तुलाः'। ९ क–'मृणालबालक०'। १० क–'रम्यसप्त०'। ११ सूर्यः। १२ आस्कन्दित-धौरितक-रेचित-वल्गित-प्लुतेति तुरङ्गस्य धाराख्याः पञ्च गतयः; प्रेक्ष्यताममरकोशे (श्लो० ७८२)। १३ क–'प्रपञ्चाभ्यो'। १४ क–'परिक्रमः'।

पञ्चवर्णमणिस्वर्ण–भूषणैरिति भूषितः ॥ २३५ ॥
क्षणतो योजनशतो–ल्लङ्घनोल्लाघलाघवः ।
यो जल-स्थल-गर्त्ता-ऽद्रि–दुर्गाद्युत्तारणोल्बणः ॥ २३६ ॥

प्रक्वणत्किङ्किणीजाल–व्याजात् कूजदलिव्रजाम् ।
वरमालामिव क्षिप्तां, जयल[1]क्ष्या बभार यः ॥ २३७ ॥

नाम्ना धाम्नाऽपि ते [2]ताक्ष्यौं, [3]मित्रं तं मित्रतां नय ।
मयि वक्तुमिदं [4]वल्गा–मूर्त्याऽहीन्द्रेण यः श्रितः ॥ २३८ ॥

वेगादस्यानुजग्माते, न मनः पवनश्च न ।
इत्याप यो यशोयुग्मं, श्रुतिचामरयोर्मिषात् ॥ २३९ ॥

[5]स्पृष्टास्पृष्टमहीपृष्ठं, विहरन्तं विहायसि ।
स्वतुल्यरविरथ्यानां, प्रियालापकृते किल ॥ २४० ॥

[6]वक्रीभवद्भ्यामंह्रिभ्यां, निपतद्भ्यां मुखादिव ।
द्वेषिलक्ष्मीमिवाक्रष्टु–मुन्नमन्तं मुहुर्मुहुः ॥ २४१ ॥

विदलत्कमलामोद–[7]मेदुराननमारुतम् ।
साम्राज्यकमला[8]पीडं, 'कमलापीड'माख्यया ॥ २४२ ॥

मूर्तिमन्तमिवोत्साहं, देहस्थमिव साहसम् ।
पिण्डीभूतमिवागण्यं, पुण्यं भरतचक्रिणः ॥ २४३ ॥

तमश्वरत्नं सेनानीः, [9]सांयुगीनं रणाङ्गणे ।
प्रेरयामास प्रज्ञालं, जङ्घालं द्विड्जयाय सः ॥ २४४ ॥–कुलकम्

खड्गरत्नस्य मानादि

पञ्चाशदङ्गुलायामं, षोडशाङ्गुलविस्तरम् ।
यदर्धाङ्गुलपिण्डं च, मणिस्वर्णोच्छ्रितत्स[10]रु ॥ २४५ ॥

सतीव्रततीव्रधारं, सारं सत्प्रतिपन्नवत् ।
यच्चक्रिकमलाकेलि–सरः [11]पुंष्कल[12]पुंष्करम् ॥ २४६ ॥

---

१ क–'लक्ष्म्यां' । २ गरुडः । ३ सूर्यम् । ४ 'लगाम' इति भाषायाम् । ५ क–'स्पृष्ट्वा स्पृष्ट०' । ६ क–'चक्री०' । ७ ख–'सोदरा०' । ८ क–'पीडां' । ९ युद्धकुशलम् । १० मुष्टिः । ११ उज्ज्वलकमलम् । १२ क–'दुष्करम्' ।

तत् खड्गरत्नं निर्मोकाद्, वल्मीकादिव पन्नगम् ।
स नरेन्द्रवरोऽमर्षा–चकर्षारिक्षयाशया ॥ २४७ ॥–विशेषकम्

स वाजिराजः स चमूपतिश्च, सोऽसिश्च रत्नत्रितयं युतं तत् ।
चिक्षेप विद्वेषिबलानि मङ्क्षु, ज्ञानानि दुष्कर्मकुलानि यद्वत् ॥ २४८ ॥[१]

खगाधिपे रङ्गति पन्नगा यथा, पञ्चानने चञ्चति दन्तिनो यथा ।
सुषेणसेनाधिपतौ विनिघ्नति, त्रासं किरातास्त्वरितं प्रपेदिरे ॥ २४९ ॥[२]

कृते किरातै रहिते रणाङ्गणे, क्षणात् सुषेणेन नृपोऽश्रयन्महः ।
यथाऽरुणेनोडुगणैर्विवर्जिते, विनिर्मिते व्योमनि वासरेश्वरः ॥ २५० ॥[३]

भीत्या सुषेणस्य रणात् पलायिता, म्लेच्छाश्च ते 'सिन्धु'नदीतटं श्रिताः ।
मेघाननानात्मकुलाधिदेवताः, स्मृत्वाऽष्टमं नागकुमारकान् व्यधुः ॥ २५१ ॥[४]

मेघमुखैश्चक्रिसैन्ये उपद्रवः

तत्साहाय्यकृते मेघ–मुखाश्चक्रिचमूपरि ।
कुर्वन्त इव संवर्तं, ते प्रावर्त्तन्त वर्षितुम् ॥ २५२ ॥[५]

निरीक्ष्यारिष्टवृष्टिं तां, द्रुतं मित्रमिवाहृतः ।
चर्मरत्नं चक्रवर्ती, पस्पर्श निजपाणिना ॥ २५३ ॥[६]

योजनानि द्वादशैतत्–पाणिस्पर्शेन चक्रिणः ।
प्रभुत्वं सुकृतेनेव, चर्मरत्नमवर्धत ॥ २५४ ॥[७]

स्थिते जलस्योपरि चर्मरत्ने, तत्रार्णवस्येव पयोदवृन्दे ।
आरुह्य सुस्थोऽजनि भूमिजानिः, ससैनिको ज्ञान इवाप्ततत्त्वः ॥ २५५ ॥[८]

शातकुम्भसम्भवाभिः, शलाकाभिर्विभूषितम् ।
सहस्रैर्नवनवत्या, सहस्रांशूपहासि यत् ॥ २५६ ॥[९]

शारदीनेन्दुविशदं, स्वर्णदण्डेन मण्डितम् ।
यत् कोकनदनालेन, कलितं कुमुदं किल ॥ २५७ ॥[१०]

वातातपरजस्तोय–त्राणकृत् पाणिना नृपः ।
तच्छत्ररत्नं पस्पर्श, पुनः पुनरपत्यवत् ॥ २५८ ॥[११]–विशेषकम्

---

१ उपजातिः । २ इन्द्रवंशा । ३ वंशस्थविलम् । ४ इन्द्रवंशा । ५–७ अनुष्टुप् ।
८ उपजातिः । ९–११ अनुष्टुप् ।

धर्मोऽनुमोदनेनेव, दानेनेवोज्ज्वलं यशः ।
चर्मवत् तद् दधौ वृद्धिं, करस्पर्शेन चक्रिणः ॥ २५९ ॥[१]

पूर्वाचल इव च्छत्र–दण्डे ध्वान्तविखण्डनम् ।
मणिरत्नं नभोरत्न–मिवोर्वीशो न्यवेशयत् ॥ २६० ॥[२]

तच्चर्मच्छत्रयो रेजे, सम्पुटं तरदण्डवत् ।
ब्रह्माण्डमिव तेनाभूत्, ततः प्रभृति कल्पना ॥ २६१ ॥[३]

चर्मरत्ने प्रातरुप्तां, धान्यशाकफलावलीम् ।
दिनान्ते पक्त्रिमां प्रत्या–वासं गृहपतिर्ददौ ॥ २६२ ॥[४]

ततो मेघमुखैः सप्ता–होरात्राणि प्रवर्षिभिः ।
निर्विण्णैरूचिरे म्लेच्छाः, साध्योऽस्माकं न चक्र्यसौ ॥ २६३ ॥[५]

प्रथमो भरतश्चक्री, पुत्रः श्रीवृषभप्रभोः ।
किं [६]नृभिर्जीयते नायं, सुरैरप्यसुरैरपि ॥ २६४ ॥[७]

तदेनमेव सेवध्वं, श्रयध्वं शरणार्थिनः ! ।
इत्यादिश्य तिरोभूवं–स्तेषां नागकुमारकाः ॥ २६५ ॥[८]

एतद्गिरा किरातास्ते, भरतं शरणं ययुः ।
सर्वदा भवदादेश–वशाः स इति वादिनः ॥ २६६ ॥[९]

निर्मितानिव दिवाकृतः करै–स्ते मणीननणु[१०]भाग्गुणैर्वृतान् ।
[११]काञ्चनानि किल काञ्चनाचला–दर्पितानि रुचिराणि दैवतैः ॥ २६७ ॥[१२]

लक्षशोऽपि शुभलक्षणाङ्कितान्, धिक्कृतार्कतुरगांस्तुरङ्गमान् ।
चारुचीवरचयानुपायनी–चक्रिरे भरतचक्रवर्तिनः ॥ २६८ ॥[१३]—युग्मम्

नद्याः 'सिन्धोः' साधयित्वा सुषेणः, स्वाम्यादेशादुत्तरं निष्कुटं सः ।
प्राप्तस्तत्र स्वर्णरत्नाद्ययत्नाद्, दण्डादात्तं स्वामिनेऽढौकयच्च ॥ २६९ ॥[१४]

तत्रैव प्रविमोचयन्निजरतां वीरव्रजान् वीरतां
कर्तुं चार्यजनस्य सङ्गतिवशादार्याननार्यान् किल ।

---

१–५ अनुष्टुप् । ६ ख–'नरै०' । ७–९ अनुष्टुप् । १० क–'भागणै०' । ११ सुवर्णानि । १२–१३ रथोद्धता । १४ शालिनी । १५ क–'दशादायीननार्यान्' ।

भोगान् प्राग्भवसंम्भृतोरुसुकृतप्राग्भारसम्भावितान्
भुञ्जानो गमयाम्बभूव सुबहून् भूवासवो वासरान् ॥ २७० ॥[2]

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापर-
नाम्नि श्रीजिनेन्द्रचरिताभिधाने महाकाव्ये वीराङ्के श्रीआदिनाथचरिते
भरतचक्रवर्तिदिग्विजये मागधतीर्थादिविजय-तमिस्राप्रवेश-
किरातरणकीर्तनः पञ्चदशः सर्गः ॥ १५ ॥

श्रीमान् श्रीनाभिजन्मा स भवतु भवतां शर्मणे धर्मचक्री
चञ्चन्मिथ्यात्वमन्थाऽतिशयपरपुरःप्रस्फुरद्धर्मचक्रः ।
आत्मस्थानस्थितोऽपि त्रिभुवनजनताताडनव्यक्तशक्तिं
दुष्कर्मारातिजाँतिं प्रकृतितितियुतां लीलया यो जिगाय ॥ १ ॥[4]

स्फूर्जत्तेजःप्रचयनिचितं यस्य जन्मद्वयेऽपि
श्रेयश्चक्रं स्फुरति दुरितामित्रवित्रासहेतुः ।
अग्रे भूतं भुवनवशकृद्विक्रमश्लाध्यकर्मा
श्रीमान् पद्मः स जयतु सदाचारिणां चक्रवर्ती ॥ २ ॥[6]

ग्रन्थाग्रं ४२२ ॥



---

१ ख–'सम्भवो०' । २ शार्दूल० । ३ क–'जार्निं०' । ४ स्रग्धरा । ५ क 'कर्म' ।
६ मन्दाक्रान्ता ।

जयत्यादिजिनो यस्य, निरस्तो हृदयाद् बहिः ।
शृङ्गारः शिश्रिये पृष्ठं, स्कन्धकुन्तलकैतवात् ॥ १ ॥[1]

अथ पृथ्वीपतेश्चक्रं, चक्रित्वार्पणलग्नकम् ।
प्रचचाल प्रभाजाल-जटालव्योममण्डलम् ॥ २ ॥

चक्री चक्रानुगो वाता-नुगोऽनल इवोल्लसन् ।
नितम्बे दक्षिणे 'क्षुद्र-हिमा'द्रेः शिबिरं न्यधात् ॥ ३ ॥

चक्रिणा हिमवत्कुमारस्य वशीकरणमृषभकूटे स्वनामलिखनं च

क्षोणीन्द्रः 'क्षुद्रहिमवत्'-कुमारं मानसे स्मरन् ।
तत्राष्टमं व्यधादिष्ट-सिद्धिबन्धनिबन्धनम् ॥ ४ ॥

गत्वाऽष्टमान्ते 'हिमवत्'-पर्वतं त्रिरताडयत् ।
स रथी रथशीर्षेण, करेण [2]द्रुं करेणुवत् ॥ ५ ॥

हिमाचलकुमाराय, समाकारणदूतवत् ।
निजनामाङ्कितो बाण-श्चक्रिणा मुमुचे ततः ॥ ६ ॥

द्वासप्ततिं योजनानि, स गत्वा गिरिमूर्द्धनि ।
पत्री पत्रीव हिमवत्-कुमारस्यापतत् पुरः ॥ ७ ॥

शरापातेन धिक्कार-वाग्भारेणेव शोणदृक् ।
हर्[3]यक्ष इव हिमवत्-कुमारोऽजनि रोषणः ॥ ८ ॥

बाणे नामाक्षराण्यैक्ष्य, चक्रिणः सोऽमुचत् क्रुधम् ।
न नाम जाङ्गुलीर्नाम, श्रुत्वा दृप्यति दंकुश्रुतिः ॥ ९ ॥

उपायनैरुपायज्ञः, समं राज्ञस्तमाशुगम् ।
प्रधानवत् पुरोधाय, स शिश्राय नृनायकम् ॥ १० ॥

पूर्वं जय जयेत्याह, विहायःस्थः स बन्दिवत् ।
ततस्तमर्पयामास, वासवाय भुवः शरम् ॥ ११ ॥

---

१ ५७तमपर्यन्तानां पद्यानां छन्दोऽनुष्टुप् । २ वृक्षं गज इव । ३ सिंहः । ४ क-'नामश्रुत्वा' । ५ सर्पः । ६ अग्रे समागत्य ।

दद‍ौ सारं स राज्ञे स्वं, सुरद्रुसुमनःस्रजम् ।
गोशीर्षचन्दनं सर्वौ-षधीरम्भो ह्रदोद्भवम् ॥ १२ ॥
देवदूष्यांशुके¹श्रेणीं, कटकान् बाहुरक्षकान् ।
ददौ स राज्ञे राजाऽस्मै, तदा²दानान्मुदं पुनः ॥ १३ ॥
भूपति'र्भरत'क्षेत्रो-त्तरदिक्प्रान्तवर्त्यहम् ।
तवायु³क्त इवासीति, जल्पन्तं विससर्ज तम् ॥ १४ ॥
गत्वा 'ऋषभकूटा⁴'द्रि-मीर्षभिस्त्रिर्जघान तम् ।
रथशीर्षेण वृषभः, शृङ्गेणेवाऽऽपगातटम् ॥ १५ ॥
तत्पूर्वकटके काकि-ण्येति वर्णान् लिलेख सः ।
अवसर्पिण्यां तृतीया-रान्ते भरतचक्र्यहम् ॥ १६ ॥
ततो व्यावृत्त्य गत्वाऽऽत्म-चक्रं चक्रे स पारणम् ।
अष्टाहीं 'क्षुद्रहिमवत्'-कुमारस्याथ निर्ममे ॥ १७ ॥
न्यवर्तत ततः सिन्धू, 'गङ्गा'-'सिन्धु' स ⁵सिन्धुरैः ।
स्रवन्मदोदकैः कुर्वन्, सङ्गते⁶ इव सम्मदात् ॥ १८ ॥
चक्रिणः परिचर्यायै, चलद्दन्तावलच्छलात् ।
⁷दिष्टा हिमाचलेनेव, निजगोत्रजपर्वताः ॥ १९ ॥
दन्तिदानोदकैर्नित्यो, 'गङ्गा'-'सिन्धु'समागमः ।
अभविष्यन्नास्फुरिष्यद्, यद्यश्वखुरजं रजः ॥ २० ॥
गजव्रजमयं क्वापि, वाजिराजिमयं क्वचित् ।
रथवीथीमयं क्वापि, पत्तिपङ्क्तिमयं क्वचित् ॥ २१ ॥
'गङ्गा'-'सिन्ध्व'न्तरं कुर्व-श्चक्री चक्रानुगोऽश्रयत् ।
'वैताढ्य'पर्वतं गुर्व-नुगो ज्ञेयं विनेयवत् ॥ २२ ॥-युग्मम्
चक्री तस्याचलस्योदङ्-नितम्बे शिबिरं न्यधात् ।
सुते स⁸दावनच्छाया-प्राज्ये राज्यं पिता यथा ॥ २३ ॥

चक्रिणो नमिविनमिभ्यां युद्धप्रसङ्गः

ततो नमिविनम्याह्वौ, प्रति विद्याभृतां पती ।

---

१ क-'श्रेणीकटुकान्' । २ वस्तूनां ग्रहणात् । ३ वशी । ४ श्रीवृषभपुत्रः, भरतः । ५ हस्तिभिः । ६ सह प्रासे । ७ दत्ताः । ८ क-'सदादन०' ।

प्राहिणोन्मार्गणं दण्ड-मार्गणं धरणीधवः ॥ २४ ॥
तौ मार्गणं तमालोक्य, विद्याधरबलोल्बणौ ।
क्रुद्धौ युद्धाय सन्नद्धौ, सिद्धविद्याबलोद्धतौ ॥ २५ ॥
चक्रिणा तूर्णमुत्तीर्णौ, सङ्गतौ शृङ्गतो गिरेः ।
युयुत्सू सरभेणेव, व्याघ्र-केसरिणाविमौ ॥ २६ ॥
ततः श्रेणीद्वयस्यापि, क्षोणिग्रामपुरेश्वराः ।
साकं स्वस्वपरीवारै-र्दुर्वारे रणकर्मणि ॥ २७ ॥
अस्खलद्गतयो वाता, इव व्योम्नि महाबलाः ।
तदा विद्याभृतां नाथौ, त्वरितं परिवव्रिरे ॥ २८ ॥—युग्मम्
विमानैरीयुषां तेषां, सुराणां तन्निरीक्षिणाम् ।
प्रियाभिः श्रितपार्श्वाभि-र्भेदो व्योमन्यमन्यत ॥ २९ ॥
स्वरत्नाभरणज्योति-र्जलपूर्णे नभोऽर्णवे ।
तुरङ्गैस्तरङ्गद्भिः, केऽपि रङ्गद्भिरापतन् ॥ ३० ॥
केऽप्यैयुर्वियति क्रीडद्-गुरुकेतुमदोद्कैः ।
नागैर्नगैरिवोत्पन्न-पक्षक्ष्मारुहनिर्जरैः ॥ ३१ ॥
कान्तिर्वः कियतीत्येव-माख्यद्भिर्ज्योतिषामिव ।
प्रेङ्खत्केतुकरैरीयुः, केऽपि रत्नमयै रथैः ॥ ३२ ॥
शस्त्रैरुदस्तैस्तन्वाना, दिवं पल्लवितामिव ।
गगने वल्गुवल्गन्तः, केऽप्यापेतुः पदातयः ॥ ३३ ॥
द्यौर्विमानैर्भानुमयी, स्फुरकैः शशभृन्मयी ।
कुन्तैः केतुमयी रिष्टं, व्याचष्टेव खचारिणाम् ॥ ३४ ॥
रूप्यभेरीभँरा नेदु-र्विद्याभृद्भृत्यपूरिताः ।
अँपि तत्प्रतिनादेन, 'वैताढ्य'गिरिकन्दराः ॥ ३५ ॥
मा कुरुध्वं जयाकाङ्क्षां, चक्रिणं प्रति भो मुधा ।
इति प्रतिरवव्याजाद्, 'वैताढ्य'स्तानवारयत् ॥ ३६ ॥
घनैस्तूर्यरवस्तोमै, रोमोद्गममिषात् तदा ।

---

१ ख–'विव'। २ ख–'दुर्वारै'। ३ क–'गुडाकेतु०'। ४ मनोहरणतयः। ५ फलकैः, 'ढाल' इति भाषायाम्। ६ ख–'चया'। ७ 'उत्प्रेक्षायाम्'।

तेषामङ्कुरितं [1]क्षेत्रे, वीरव्रतमिवाभितः ॥ ३७ ॥
एवं [2]तैर्नमि-विनमी, विद्याधरबलैर्वृतौ ।
युयुत्समानौ मानोग्रा–वीयतुश्चक्रवर्तिनम् ॥ ३८ ॥
स्वजनेषु विभज्योर्वी, ददे भगवता यदा ।
तस्यादेशगतावावां, त्वया न स्मारितौ तदा ॥ ३९ ॥
आवां तेनापमानेन, न जातौ तव सेवकौ ।
स्वामिनः सेवयैवाप्ता–वेतां विद्याधरेन्द्रताम् ॥ ४० ॥
ततः किमपि किं तेऽस्ति, दण्डं यदभिकाङ्क्षसि ।
बलात् चेत् तत् कथं म्लेच्छ–च्छेदे दर्पः प्रसर्पति? ॥ ४१ ॥
विजित्याल्पमनल्पस्य, कल्पयेन्नावहेलनाम् ।
हरिः करिजयी कुप्यन्, पर्जन्यायाङ्गभङ्गभाक्[3] ॥ ४२ ॥
चक्रं ते यद्यमोघास्त्रं, शत्रुसङ्घातघातकृत् ।
तत् तावदावयोस्तादृग्, विद्याचक्रं विजृम्भते ॥ ४३ ॥
तावुदित्वेति विद्याभिर्विद्याधरबलैरपि ।
अतिदृप्तावाह्वयेता–माहवाय [4]महारिपुम् ॥ ४४ ॥–कुलकम्
ततस्ताभ्यां समेताभ्यां, विदधे युद्धमुद्धतम् ।
चक्री त्वरागतिश्रान्त–कृतान्तपरि[5]चारकम् ॥ ४५ ॥
चक्री द्वादश वर्षाणि, स कृत्वा दारुणं रणम् ।
विद्याधरेश्वरौ राग–द्वेषौ यतिरिवाजयत् ॥ ४५ ॥
निर्जितौ मदनिर्मुक्तौ, प्राञ्जली प्रणिपत्य तौ ।
नृदेवमेव सेवाप्तौ, भक्त्यानल्पं जजल्पतुः ॥ ४६ ॥
यद्येकीभूय युध्यन्ते, सुरा-ऽसुर-नरेश्वराः ।
तथापि तावकं नैव, कामं रोमापि कम्पते ॥ ४७ ॥
वीरास्तृणाय मन्यन्ते, ये जगत् तेऽपि ते प्रभो! ।
सम्परायात् पलायन्ते, पलालान्यनिलादिव ॥ ४८ ॥
वृषभस्वामिनः सूनु–स्त्वमावां तस्य सेवकौ ।

---

१ शरीरे, पक्षे क्षेत्रे । २ ख–'तौ नमि०' । ३ मेघगर्जिते सति सिंहः कुप्यतीति तात्पर्यम् । ४ ख–'महीविभुम्' । ५ क–'वारकम्' ।

त्वं स्वाम्येवावयोर्मौग्ध्याद्, योधितोऽपि सहस्व तत् ॥ ४९ ॥
दक्षिणोत्तर'भरता'–र्द्वयो'र्वैताढ्य'वर्तिनौ ।
पार्श्वद्वये तवायुक्तौ, स्वास्यावो यामिकाविव ॥ ५० ॥

विनमितस्तत्सुतासुभद्राह्वस्त्रीरत्नप्राप्तिः

इति विज्ञप्तिपर्यन्ते, विनम्य विनमिर्ददौ ।
सुभद्रां भरतेशाय, स्त्रीरत्नं स्वतनूद्भवाम् ॥ ५१ ॥
महांसीन्दोर्गृहीत्वाऽन्त–[1]र्भाशून्यस्याङ्कदम्भतः ।
या निर्मिता समचतु–[2]रेस्रा सूत्रार्पणादिव ॥ ५२ ॥
तारुण्यं प्राप्य यां पुण्यां, नैवाजन्माप्यमुञ्चत ।
[3]यथाकामीनशीतोष्ण–स्पर्शसौख्यवशं खलु ॥ ५३ ॥
सर्वदिव्यौ[4]षधीद्रव्यैः, सुधया भावितैर्ध्रुवम् ।
या कृता सा ततो [5]बाल्यात्, सर्वामयविना[6]शिनी ॥ ५४ ॥
जित्वा जगत्त्रयस्त्रैणं, जयस्तम्भत्रयं किल ।
त्रिशूलच्छलतो भाल–स्थलगर्भे बभार या ॥ ५५ ॥
नव कोणान् दधौ पाणि–[7]नन्द्यावर्ते प्रदक्षिणे ।
या विश्रामासनानीव, पत्युर्नवनिधिश्रियाम् ॥ ५६ ॥
याऽन्यो[8]न्यवर्द्धितस्पर्द्धै–रिव सर्वैः सुलक्षणैः ।
जितस्वस्वोप[9]मानेषु, [10]प्रतीकेषु [11]परिष्कृता ॥ ५७ ॥

स्त्रीरत्नस्याङ्गोपाङ्गस्य वर्णनम्

नवहेमयष्टिनिभनासिका[12]स्थिति–स्मयमानभालफलकाधिरोहिणः ।
प्रवरो यदीयकबरीकलापकः, शुशुभे कलाप इव कामकेकिनः ॥ ५८ ॥[13]
प्रतिवर्षराहुचकितस्य यन्मुखं, विधुवैभवस्य गगनादुपेयुषः ।

---

१ क–'र्भास्तन्यस्याङ्क०' । २ 'रस्रास्तर्पणादिव' इति छन्दोभङ्गात्मकः क–पाठः । ३ यथेष्टशीतोष्ण० । ४ ख–'षधैर्द्रव्यैः' । ५ क–'बल्यां' । ६ क–'नाशिनीम्' । ७ नन्दी आवर्तो यस्य स नन्द्यावर्तः, "नन्द्यावर्तः–प्रतिदिग्नवकोणकः स्वस्तिकः" इति जम्बूद्वीपप्रज्ञप्तेः श्रीशान्तिचन्द्रसूरिकृतवृत्तौ १८२तमे पत्रे । ८ क–'न्यं वर्धित०' । ९ क–'मानेन' । १० सर्वावयवेषु । ११ संस्कृता । १२ ख–'स्थित–' । १३ अतः परं ७८तमपर्यन्तानां पद्यानां छन्दो 'मञ्जुभाषिणी' ।

अवतारमार्गसमतां समुज्ज्वलां, विततान यच्चिकुरमध्यपद्धतिः ॥ ५९ ॥
विजितः शशी स सरसीरुहश्रिया, श्रितया यदीयवदनं नदन्महः ।
महदाश्रयव्यसनिना हि जीयते, रिपुरु[1]ग्रमौलिमणिरप्यणीयसा ॥ ६० ॥
नवयौवनस्मरकिरातयोरयो–मयकर्तरीद्वितयमेव यद्भ्रुवौ ।
घनपत्रवल्लिमुखसीम्नि रेजतु–र्मृगयामृगीयुगलमेव यद्दृशौ ॥ ६१ ॥
किल यत्कपोलवनसीम्नि वागुरां, श्रवणच्छलान्मदनलुब्धको व्यधात् ।
समुपेत्य यत्र परितः स्थिरक्रमं, जनलोचनै[2]र्निपतितं मृगैरिव ॥ ६२ ॥
हृदयस्थकामशरपुष्पराशिवद्, दशनप्रभा विलसति स्म यन्मुखे ।
इति तन्म[3]रन्दविभवैरिवाभवन्, मधुरा गिरः [4]श्वसितमाढ्यसौरभम् ॥ ६३ ॥
विततान [5]सङ्गतमनङ्गभूभृतो, नवविद्रुमीयशयनी[6]यसौरभम् ।
मणिदीधितिर्यदधरो विधूज्ज्वल–सितविस्तृतास्तरणभूतिभासुरः ॥ ६४ ॥
[7]पितृपाणिकम्बुसदृशोऽयमीदृशो, बत रेखयाऽपि न भिदा विभाव्यते ।
सततं व्यलोकत चमत्कृतः स्मरः, स यदीयकण्ठमिति कौतुकादिव ॥ ६५ ॥
शुशुभे यदीयहृदि [8]मारमेदिनी–धवधाम्नि मङ्गलसुवर्णकुम्भवत् ।
कुचयोर्द्वयं कलितचारुचूचुक–च्छलपिप्पलद्रुदलमञ्जुलाननम् ॥ ६६ ॥
भुजनालमञ्जु ललिताङ्गुलीदलं, नखकान्तिकैतवलसद्रजोभरम् ।
अरुणश्रि तत्करयुगं स्मरप्रिया–द्वयकेलिवारिरुह[9]हारितां दधौ ॥ ६७ ॥
जगतां जयाय विरराज सा ध्रुवं, तपनीयशक्तिरिव कामभूभुजः ।
वलयो हि मुष्टिकलनीयमध्यया, दधिरेऽङ्गुलिग्रहणचिह्नवद् यया ॥ ६८ ॥
मदनानलो यदुरुनाभिकुण्डगः, समदीपि यौवनम[10]हाग्निहोत्रिणा ।
उदिता ततो भ्रमितलोकलोचना, नवधूमवल्लिरिव रोम[11]वल्लरी ॥ ६९ ॥
विललास सज्जघनगौरवाद् ध्रुवं, पृथुतन्नितम्बभुवि कामबर्हिणः ।
रसनागुणक्वणितकैतवात् ततो–ऽभ्युदितं तदीयकलकेकया किल ॥ ७० ॥
गुरुणा यदूरुयुगलेन लीलया, करिणां करो जगति येन निर्जितः ।
अधुनाऽपि तद्भ्रमवशाद् दिवानिशं, कदलीप्रकाण्डपटलं भिनत्त्यसौ ॥ ७१ ॥

---

१ महादेवमस्तकमणिः । २ क–'न्‍पतितं' । ३ पुष्परस० । ४ क–'स्वसित०' । ५ क–'सन्ततमनङ्गसम्भृतो' । ६ क–'वैभवम्' । ७ विष्णुहस्तगतशङ्ख० । ८ मदनमहीपतिगृहे । ९ सुन्दरताम् । १० क–'महाग्निहोत्रिणः' । ११ क–'मञ्जरी' ।

क्रमशः कृशं मसृणवर्तुलोज्ज्वलं, युगलं यदीयमजनिष्ट जङ्घयोः ।
रतिजानियौवननवीनमल्लयो-र्बलवृद्धये बलघनद्वयं[1] किल ॥ ७२ ॥
क्षणदापतेः[2] समुदयेऽपि सर्वदा, समदं यदंह्रिसरसीरुहद्वयम्[3] ।
इति स क्रुधेव नखदम्भतोऽन्तिके, दशधा स्थितस्तदशुभद् भृशं नु तैः[4] ॥ ७३ ॥
[5]विशदच्छदैस्त्रिदिवसिन्धुसेवनाद्[6], घनदानतोऽप्यमरवारणेश्वरः ।
विधिवासवौ ध्रुवमवापतुः प्रभू, सुकृतैस्तदीयगमनोपमां न तु ॥ ७४ ॥
यदि सेवते स्म विधिसारदाक्रमौ, न तथाऽपि यद्गतिसमत्वमासदत् ।
वरलावरस्तदरुणाननः क्रुधा-ऽसृजदेतदंह्रिसुहृदब्जभञ्जनम्[9] ॥ ७५ ॥
स्वगुणैः समग्रभुवनेषु याऽङ्गना-जनरत्नमाप खलु रत्नराजताम् ।
इति रत्नमण्डलमिमाममण्डयत्, तदसावपि[10][11] स्वविभया व्यभूषयत् ॥ ७६ ॥
श्रयति स्म यां वदननिर्जितो विधु-र्धवलातपत्रमिषतो निषेवितुम् ।
तदभीशवः प्रवरचामरद्वय-च्छलतश्च पार्श्वयुगलेऽलसन् मुदा[12] ॥ ७७ ॥
भरतेशभाग्यसहकारभूरुहो-ऽद्भुतसौरभां प्रवरमञ्जरीमिव ।
परिवव्रिरे परभृता इवाभितः, परिचारिकाः सुमधुरारवेण याम् ॥ ७८ ॥

स्वीकृत्य समभूच्चक्री, स्त्रीरत्नं तच्चतुर्दशम् ।
चतुर्दशमहास्वप्ना-ऽर्पितस्वस्वफलः किल ॥ ७९ ॥[13]
अनर्घ्याणि महार्घ्याणि, राज्ञे रत्नान्यदान्नमिः ।
स्त्रीरत्नस्य पुनस्तानी-च्छन्ति न्युञ्छनतापदम् ॥ ८० ॥
विसृष्टावथ तौ राज्ञा, राज्यन्यस्तसुतौ व्रतम् ।
वैराग्यतः प्रपेदाते, श्रीयुगादिजिनान्तिके ॥ ८१ ॥

गङ्गादेव्या वशीकरणम्

चलितस्य ततश्चक्र-रत्नस्यानुचरश्चरन् ।
तापपापहरं प्राप, नृपस्त्रिपथगातटम् ॥ ८२ ॥
'गङ्गा'निकेतनस्यासौ, नातिदूरे नरेश्वरः ।
सैन्यं निवेशयामास, वासवोपमविक्रमः ॥ ८३ ॥

१ बलरामगदायुगलम् । २ चन्द्रस्य । ३ अंह्रिद्वयम् । ४ नखरूपचन्द्रैः । ५ राजहंसः । ६ क-'त्रिदश०' । ७ हंसः । ८ एतस्याः सुभद्रायाः । ९ क-'दृष्टभञ्जनम्' । १० रत्नमण्डलम् । ११ सुभद्रा । १२ ख-'सदा' । १३ अतः परं २७९तमपर्यन्तानां पद्यानां छन्दोऽनुष्टुब्' ज्ञेयम् ।

'गङ्गां' 'सिन्धु'मिवोल्लङ्घ्य, तस्या निष्कुटमुत्तरम् ।
नृपाज्ञया सुषेणोऽपि, साधयित्वा समागमत् ॥ ८४ ॥
गङ्गादेवीमष्टमेन, धराधीशोऽप्यसाधयत् ।
सिद्धिं सुकृतिनां यान्ति, प्रारम्भाः सममीहया ॥ ८५ ॥
गङ्गा रङ्गान्महीशाय, रत्नसिंहासनद्वयम् ।
सहस्रं रत्नकुम्भानां, ददावष्टोत्तरं तथा ॥ ८६ ॥

भरतस्य रूपेण गङ्गादेव्याः सरागदशा तेन च सह तस्या रमणम्

मरीचिवीचिनिचयैः, पूर्णं लवणिमार्णवम् ।
निभाल्य भरतं भेजे, गङ्गा रागवशां दशाम् ॥ ८७ ॥
स्वेदबिन्दु[1]पुनरुक्त-मुक्तागणविभूषणा ।
मुखामृतरुचिज्योत्स्ना-रूपस्वच्छसितांशुका ॥ ८८ ॥
रोमोच्चयैः प्रियस्पर्श-वञ्चकं किल कञ्चुकम् ।
प्रस्फोटयद्भिर्बिभ्राणा, नवोच्छ्वासघनौ स्तनौ ॥ ८९ ॥
स्वान्तोद्भ्रान्ततमप्रेम-सुधोर्मिभिरिवाभितः ।
दृग्भिर्गङ्गाऽभिषिञ्चन्ती, भरतं प्रत्यभाषत ॥ ९० ॥-विशेषकम्
तवाष्टमेन तपसा, ममासनमकम्पत ।
त्वद्दर्शनेन सुभग !, शरीरमधुना पुनः ॥ ९१ ॥
त्रिजगद्युवतीचेतः-[2]प्रचलाकिबलाह[3]क ! ।
तवाभोगेन निर्वाति, कामतप्तं मनो मम ॥ ९२ ॥
एवम[4]भ्यर्थ्य पृथ्वीन्द्रं, प्रेमगद्गदया गिरा ।
अरं रिरंसमानाऽसौ, निनाय स्वनिकेतनम् ॥ ९३ ॥
भुञ्जानोऽत्यद्भुतान् भोगान्, भूमिभर्ता तया समम् ।
सहस्रं मुहूर्तवत् स, वत्सरानत्यवाहयत् ॥ ९४ ॥
गङ्गां तदङ्गसङ्गार्थ-मद्दृप्तां तां कथञ्चन ।
अनुज्ञाप्य नृपः 'खण्ड-प्रपाता'ऽभिमुखोऽचलत् ॥ ९५ ॥
षडंह्रिरंह्रिपाद् वल्ली-मिव स्थानात् ततो गतः ।

---

१ क-'पक्ष्मदरुक्त०' । २ हे मयूरमेघ ! । ३ क-'हकः' । ४ क-'मभ्यर्च्य' ।

अखण्डविक्रमः 'खण्ड-प्रपाता'ह्वां गुहां नृपः ॥ ९६ ॥

नाट्यमालस्य वशीकरणम्

नाट्यमालमष्टमेन, नृपालः कृतमालवत् ।
असाधयद् व्यधान्नाट्यं, नृपाग्रे नटवच्च सः ॥ ९७ ॥
सत्कृत्य कृत्यविद् राजा, निर्जरं विससर्ज तम् ।
चकार पारणं चास्य, चक्रे चाष्टाहिकामहम् ॥ ९८ ॥
'तमिस्रा'या द्वारमिव, सुषेणः क्षोणिपाज्ञया ।
द्वारं 'खण्डप्रपाता'या, दण्डहत्योदघाटयत् ॥ ९९ ॥
तामविक्षल्लिखन् क्ष्मापः, काकिण्या मण्डलावलीम् ।
तत्प्रकाशं[1] [2]निष्क्रयवत्, [3]तस्या विश्राणयन्नगात्[4] ॥ १०० ॥
विनिर्गत्य गुहाप्रत्यग्-भित्तेः प्राग्[5]भित्तिमध्यतः ।
भूत्वा ये भेजतुर्गङ्गां, जननीं तनये इव ॥ १०१ ॥
ते 'उन्मग्ना'-'निमग्ना'ऽऽह्वे, निम्नगे पद्यया नृपः ।
ललङ्घे [6]बोधिना साधु-रिव तिर्यगधोगती ॥ १०२ ॥-युग्मम्
गुहाया दक्षिणं द्वारं, स्वयमुज्जघटे लघु ।
'भरता'र्द्धस्य याम्यस्य, [7]राज्ञोत्कस्येव याज्ञया ॥ १०३ ॥
निर्जगाम गुहा[8]मध्या-दभ्रादिव दिवाकरः ।
महीपतिर्महोभारै-स्तारैरुद्भासयन् भुवम् ॥ १०४ ॥

गङ्गातटे नवनिधिप्राप्तिः

गाङ्गे न्यधान्नृपः स्कन्धा-वारं रोधसि पश्चिमे ।
ध्यात्वा निधींश्च विदधे, सिद्धिद्वारमिवा[9]ष्टमम् ॥ १०५ ॥
भरतस्य ततोऽभ्येयुः, सन्निधिं निधयो नव ।
अधिष्ठितास्ते प्रत्येकं, यक्षाणां दशभिः शतैः ॥ १०६ ॥
नैसर्पः पाण्डुकश्चाथ, पिङ्गलः सर्वरत्नकः ।
महापद्मः काल-महा-कालौ माणव-शङ्खकौ ॥ १०७ ॥

---

१ मण्डलावलीतेजः । २ प्रतिदानवस्तुवत् । ३ गुहायाः । ४ अगच्छत् । ५ क-'मध्यभित्तितः' । ६ सम्यक्त्वेन । ७ ख-'राजोत्कस्येव' । ८ ख-'गर्भा-' । ९ क-मिहाष्टमम् ।

चक्राष्टके प्रतिष्ठाना, दैर्घ्ये द्वादशयोजनाः ।
एतेऽष्टयोजनोत्सेधा, विस्तारे नवयोजनाः ॥ १०८ ॥

काञ्चना वैडूर्यमणि–कपाटस्थगिताननाः ।
समा रत्नसमापूर्णा–श्चक्रचन्द्रार्कचिह्निताः ॥ १०९ ॥–कुलकम्

तदधिष्ठायका देवा–स्तेषामेवाह्वयैः श्रुताः ।
पल्योपमायुषो नाग–कुमारास्तन्निकेतनाः ॥ ११० ॥

इति ते जगतीजानिं, जगदुर्जगदुत्तम ! ।
भवद्भाग्यैर्वशीभूता–स्त्वदभ्याशं श्रिता वयम् ॥ १११ ॥

उपभुङ्क्ष्व यथाकाङ्क्षं, यथावाञ्छं प्रयच्छ च ।
वयं स्वयम्भूरमणा–ऽम्भोधेरम्भोवदक्षयाः ॥ ११२ ॥

सदा वयं स्वयं 'गङ्गा'–मुख'मागध'वासिनः ।
साम्प्रतं सञ्चरिष्यामः, क्ष्मामध्ये सन्निधौ तव ॥ ११३ ॥

सम्पन्नसन्निधानेषु, निधानेषु धराधवः ।
चकार पारणं तेषां, प्रैष्ठामष्टाहिकामपि ॥ ११४ ॥

सुषेणो दक्षिणं 'गङ्गा'–निष्कुटं निष्कुटुम्बताम् ।
नयन् म्लेच्छान् नृपादेशाद्, वशीकृत्य समागमत् ॥ ११५ ॥

पूर्वापरार्णवोपान्त–वनविश्रान्तविक्रमः ।
स तस्थौ तत्र षट्खण्ड–'भरता'खण्डलश्चिरम् ॥ ११६ ॥

---

१ उत्सेधाङ्गुलनिष्पन्नदैर्घ्यविस्ताराभ्यां प्रत्येकं योजनप्रमाण उच्चत्वेनापि योजनमानोऽवटः 'पल्य' उच्यते । स मुण्डितैकादिसप्तदिनप्ररूढकुरुक्षेत्रनरकेशैः पूर्यते यथा सोऽनिलजलाग्नीनामविषयो भवेत् । प्रतिसमयमेकैकस्मिन् वालाग्रेऽपह्रियमाणे यावान् कालो लगति तद् बादरोद्धारपल्योपमम् । एकैकस्य पूर्वोक्तवालाग्रस्य मनीषयाऽसङ्ख्येयानि खण्डानि कल्पनीयानि धीधनैः । ततः सूक्ष्मखण्डीकृतवालाग्रभृतपल्यात् प्रतिसमयमेकैकस्मिन् सूक्ष्मवालाग्रखण्डेऽपह्रियमाणे यावान् कालो व्यपैति तत्प्रमाणं सूक्ष्मोद्धारपल्योपमम् । सहजबादरवालाग्रपूरिते पल्ये यदा प्रतिवर्षशतमेकैकं वालाग्रमपह्रियते तदा सर्वस्मिन्नपि तदपहारे यावान् कालो भवति तद् बादरमद्धापल्योपमं ज्ञेयम् । पूर्वोक्तासङ्ख्येयखण्डीकृतसूक्ष्मवालाग्रपरिपूर्णपल्यात् प्रतिवर्षशतमेकैकस्मिन् सूक्ष्मे वालाग्रखण्डेऽपह्रियमाणे यावान् कालः सम्पाद्यते तत् सूक्ष्ममद्धापल्योपमं बोद्धव्यम् । इदमेव प्रासङ्गिकमत्र ।　२ सान्निध्यम् ।　३ ख–'सुख०' ।　४ अग्रेसराम् ।　५ निर्वंशताम् ।

षष्टिवर्षसहस्रेण षट् खण्डानि जित्वा भरतस्य स्वपुरीं प्रति गमनम्

'भरते' 'भरत'[1]क्षेत्र-त्रिनेत्रत्वैककारणम् ।
'विनीता'ऽभिमुखं चक्र-मथो[2]ऽचालीत् पथा दिवः ॥ ११७ ॥
षष्टिवर्षसहस्रैः प्राक्-प्रयाणदिवसादिति ।
जित्वा षट्खण्ड'भरतं', चक्री चक्रानुगोऽचलत् ॥ ११८ ॥
'अयोध्या'याः सन्निधाने, स्कन्धावारं निवेश्य सः ।
व्यधत्त तां पुरीं ध्यात्वा, [3]विधिप्रष्ठोऽष्टमं तपः ॥ ११९ ॥
पूरयित्वा नृपारीन्द्रो, निष्पिष्टारिष्टमष्टमम् ।
महामहीधवैः सार्द्धं, विदधाति स पारणम् ॥ १२० ॥

भरतस्य प्रवेशमहोत्सवः

'विनीता'यां [4]त्वतन्यन्त, मञ्चा मणिचयाञ्चिताः ।
नानादेशागतश्रीभ्यो, [5]विलासनिलया इव ॥ १२१ ॥
मञ्चोल्लोचावचूलान्ता-ऽऽमुक्ता मुक्ता विरेजिरे ।
प्रवेशकौतुकावेश-स्फारास्तारा इवागताः ॥ १२२ ॥
प्रतिमञ्चं व्यरचयन्, नागरा रत्नतोरणान् ।
इव [6]नीवृद्गणाभ्येत-श्रीभ्यो भूषणकण्ठिकाः ॥ १२३ ॥
[7]स्तम्भेषु शातकुम्भीया-ऽऽदर्शैरर्कैरिवाबभे ।
महःसुहृदमुर्वीशं, द्रष्टुं द्वीपगणागतैः ॥ १२४ ॥
तरङ्गितानि बद्धानि, स्तम्भेषु वसनान्यभान् ।
सज्जितान्यट्टलक्ष्मीभि-र्न्युञ्छनानीव [8]भूभृते ॥ १२५ ॥
सा क्वणत्किङ्किणीनादा, स्फूर्जद्ध्वजकरा पुरी ।
देवानिवाह्वयद् द्रष्टुं, तं प्रवेशोत्सवं नवम् ॥ १२६ ॥
राजमार्गाट्टमालान्त-स्तता वसनमालिकाः ।
कमलाजलधौ पुर्यां, लहर्य इव रेजिरे ॥ १२७ ॥
पुरीरथ्यापथाः पौरैः, सिक्ताः काश्मीरवारिभिः ।
हृदयान्तःसमुद्भ्रान्त-नृपरागरसैरिव ॥ १२८ ॥

---

१ 'भरत'क्षेत्रकल्याणकारि । २ ख-'मथाचालीत्' । ३ ख-'निधि०' । ४ क-'त्वमन्यन्त' । ५ क-'निवास०' । ६ देशसमूहागतश्रीभ्यः । ७ क-'स्पर्शेषु' । ८ क-'भूभृतः' ।

प्रतिहट्टं प्रतिगृहं, मौक्तिकैः स्वस्तिकस्थितैः ।
रेजे पत्यागमात् पुर्याः, प्रमदाश्रुकणैरिव ॥ १२९ ॥
प्रतिरथ्यापथं कीर्णाः, कुसुमप्रकरा बभुः ।
पत्युः समागमे पुर्या, इव प्रस्वेदबिन्दवः ॥ १३० ॥
न्यस्तागुरुधूपघटी–घटाधूपेन धूपिता ।
पुरी वासकसज्जेव, तस्थौ स्वामिसमुत्सुका ॥ १३१ ॥
प्रवेष्टुकामः कल्याणे, मुहूर्ते नगरीं नृपः ।
गजमुद्दर्जमारोहद्, घनवाहनवद् घनम् ॥ १३२ ॥
उच्चकैरातपत्रेण, केतकीपत्रकान्तिना ।
चन्दनस्यन्दतिलकं, तन्वानो गगनश्रियः ॥ १३३ ॥
स्वयशःप्रसरन्नीर–भरेऽम्बरसरोवरे ।
मरालपटलीलीलां, चामरद्वितयं नयन् ॥ १३४ ॥
रत्नाकरेण गाम्भीर्य–निर्जितेनार्पितैरिव ।
रत्नालङ्करणगणैः, सर्वाङ्गीणविभूषणः ॥ १३५ ॥
अलङ्कृतः शरत्काल–ज्योत्स्नाजालसमुज्ज्वलैः ।
वासोभिर्वपुषो गर्भा–दुद्भ्रान्तैः सुकृतैरिव ॥ १३६ ॥
द्वात्रिंशता क्षितीशानां, सहस्रैराश्रितोऽभितः ।
पादैरिव सुपर्वाद्रि–माणिक्यमुकुटोत्कटैः ॥ १३७ ॥
बन्दिवृन्दैर्मृदूर्जस्वि–स्फूर्जज्जयजयारवैः ।
स्तूयमानगुणग्रामः, सुत्रामसमविक्रमः ॥ १३८ ॥
गजेन्द्रं यातयाताभ्यां, यापयन् स शनैः शनैः ।
चतुरङ्गचमूचार–भारैर्लोलाचलोऽचलत् ॥ १३९ ॥–सप्तभिः कुलकम्
वाद्यानां वाद्यमानानां, निनादप्रतिनादतः ।
अनुकारं चकारेव, देववर्त्म तदा मदात् ॥ १४० ॥
लोकेशोत्कण्ठितैर्लोकै–र्देशेभ्योऽभ्यागतैरभूत् ।

---

१ ख–'प्रमोदाश्रु०' । २ नायिकाविशेषः ; एतल्लक्षणं तु यथा— "कुरुते मण्डनं या तु, सज्जिते वासवेश्मनि । सा तु 'वासकसज्जा' स्यात्" । ३ इन्द्रवत् । ४ क–'सुपर्वाद्रे–' । ५ इन्द्रतुल्य० । ६ क–'यतयाता०' । ७ लोलाऽचलायस्येति । ८ ख–'नादितः' ।

पूर्जनैश्चाखिलो मर्त्य–लोको न्वेकत्र पिण्डितः ॥ १४१ ॥
महीरुहमहीशाल–गृहा-ऽट्टा-ऽट्टालकाद्यभूत् ।
संसक्तैर्मानवैः सर्वं, मानवैकमयं तदा ॥ १४२ ॥
पूर्वद्वारेण पूर्मध्यं, प्रविवेश [1]विशांपतिः ।
चक्षुःपथेन प्रणयी, यथा प्रणयिणीमनः ॥ १४३ ॥
परिणेदुर्मृदङ्गादि–वादित्राणि समं तदा ।
मञ्चेषु स्वर्विमानेषु, घण्टा [2]जैनजनाविव ॥ १४४ ॥
लाजा लोकपतौ प्राप्ते, पुरः पुरपुरन्ध्रिभिः ।
[3]शुभ्राः शुशुभिरे क्षिप्ताः–स्तत्कटाक्षच्छटा इव ॥ १४५ ॥
अकवीनामपि तदा, मुदाऽतिशयतोऽभवन् ।
नृपतिस्तुतिकाव्यानि, [4]सिद्धसारस्वतादिव ॥ १४६ ॥
चलैश्चेलाञ्चलैर्नार्यो, राजराजमवीजयन् ।
षट्खण्ड'भरत'क्षेत्र–श्रान्तिश्रान्तिभिदे किल ॥ १४७ ॥
पृष्ठस्थैरपि पूर्लोक–क्षिप्तैः कुसुमदामभिः ।
नृपेभो दामित इव, मन्दं मन्दं तदाऽगमत् ॥ १४८ ॥
सदाऽपि नृपतौ तस्मिन्, न जनो भयमन्वभूत् ।
[5]सोऽभीरिभान्ते भूत्वाऽस्या–ऽ[6]पैयत् पुष्पफलानि यत् ॥ १४९ ॥
मञ्चयोर्मञ्चयोरन्त–र्दन्तीन्द्रमकृत स्थिरम् ।
[7]तयोर्[8]स्तस्य किलौन्नत्य–समत्वावगमस्पृहः ॥ १५० ॥
चक्रुर्[9]मञ्चोभयाग्रस्था, भूपस्यारात्रिकं स्त्रियः ।
एतद्यशोमहःस्पर्द्धि, घनसारशिखित्विषि ॥ १५१ ॥
जगौ मञ्चेषु पञ्चेषु–जीवितं युवतीजनः ।
राज्ञो मङ्गलगीतानि, नृत्तं तदनुगं व्यधात् ॥ १५२ ॥
नृपं नराः शिरःस्थाज्ञा–भारतः कन्धरां किल ।
नमन्तीं धर्तुमाबद्ध–[10]भालस्थाञ्जलयोऽनमन् ॥ १५३ ॥

---

१ नृपः । २ तीर्थकरसम्बन्धिनि जन्मनि । ३ ख–'क्षिप्ताः शुशुभिरे शुभ्रा–' । ४ मन्त्र-विशेषात् । ५ जनः । ६ क–'प्यायत्' । ७ मञ्चयोः । ८ हस्तिनः । ९ क–'मञ्चा-भया०' । १० क–'तालस्था०' ।

वाणिजान्[1] पाणिनोत्क्षिप्त-मुक्तास्थालान् पुरःस्थितान् ।
प्रत्यापणं नृपोऽप्रीणात्, सुधावेणिस्पृशा दृशा ॥ १५४ ॥
चिरं जीव चिरं नन्द, चिरं जय [2]जयन्निति ।
पौराशीर्वचनैरासी-न्नृपस्य श्रवणामृतम् ॥ १५५ ॥
आलोकायाकुलान्[3] लोका-नुत्क्षिप्ताभयपाणिना ।
रक्षन् वेत्रिगणात् [4]पैत्र्यं, प्रासादं प्राप भूपतिः ॥ १५६ ॥
ततस्तस्याङ्गणे वेद्यां, मृगेन्द्रोऽद्रेरिवावनौ ।
उत्ततार प्रतीहार-प्रत्तपाणिर्द्विपान्नृपः ॥ १५७ ॥
तत्र सर्वं परीवारं, विसृज्य नरनिर्जरः ।
विवेशात्तमनःसादं, प्रासादं स्वर्गमिन्द्रवत् ॥ १५८ ॥

भरतस्य चक्रित्वाभिषेकः

चक्रिणश्चक्रवर्तित्वा-भिषेकाय पुरीबहिः ।
मण्डपं मण्डनीचक्रुः, पूर्वोदग्दिश्यथो सुराः ॥ १५९ ॥
रेजे रत्नमयं स्नान-पीठं मण्डपमध्यगम् ।
पृथ्वीन्द्रोपास्तये प्राप्तो, रत्नाद्रिरिव तद्वपुः[5] ॥ १६० ॥
नदीनदनदीनाथ-तीर्थपाथस्तथौषधीः ।
मृदोऽप्यभ्याहरन् देवाः, सर्वतः पर्वतादिकात् ॥ १६१ ॥
स्थितः पौषधशालाऽन्त-र्नृपोऽष्टमतपोऽग्रहीत् ।
यत्प्रसादादभूद् राज्यं, तदाराध्यं सदा तपः ॥ १६२ ॥
तमखण्डाष्टमः[6] क्षोण्या-खण्डलो मण्डपं ययौ ।
सान्तःपुरपरीवार-वारः संश्रित्य वारणम् ॥ १६३ ॥
ततः[7] प्रदक्षिणीचक्रे, सह दारैर्नरेश्वरः ।
रत्नोद्द्योतं स्नानपीठं, परिणीत इवानलम् ॥ १६४ ॥
पूर्वसोपानतः स्नान-पीठं पृथ्वीन्दुरुन्नतम् ।
सह दारैः समारोहत्, पूर्वाद्रिं [8]द्युतिकान्तवत्[9] ॥ १६५ ॥

---

१ क-'वाणिजात्' । २ क-'विभोविति' । ३ क-'कुलाल्लोका-' । ४ क-'पित्र्यं' । ५ स्नानपीठवपुः । ६ क-'तपःखण्डा०' । ७ ख-'तत्र' । ८ सूर्यवत् । ९ क-'कान्तिवत्' ।

पूर्वाशाभिमुखस्तत्र, नृसिंहः सिंहविष्टरे ।
उपविष्टो मणिप्रष्ठे, 'मेरु'[1]शृङ्गे मृगेन्द्रवत् ॥ १६६ ॥
ते द्वात्रिंशत्सहस्राणि, माणिक्यमुकुटोल्बणाः ।
उदक्सोपानमार्गेण, पीठमारुरुहुर्नृपाः ॥ १६७ ॥
नातिदूरेऽस्थुरासीना, राज्ञो भद्रासनेषु ते ।
निबद्धाञ्जलयः शक्रा, इव श्रीवृषभान्तिके ॥ १६८ ॥
पुरोहितो गृहपतिः, पृतनापतिवर्द्धकी ।
श्रेष्ठ्याद्याः [2]पीठमारोहन्, याम्यसोपानवर्त्मना ॥ १६९ ॥
आसनेषु निषण्णास्ते, तस्थुर्भृङ्गीवद[3]स्थिराः ।
इन्दिरां रोद्धुमाबद्ध-पाण्यब्जाञ्जलयः किल ॥ १७० ॥
ततोऽभिषिषिचुर्भूप-माभियोगिकदेवताः ।
तीर्थाम्भोभिर्भृतैः[4] कुम्भै-स्तीर्थेशं वासवा इव ॥ १७१ ॥
घनकुम्भोदकैर्वृष्टि-र्विस्फूर्जत्तूर्यगर्जिता ।
भूभृन्मूर्द्धन्यभूद् राज-हंसा मुमुदिरे द्रुतम्[5] ॥ १७२ ॥
ते द्वात्रिंशत् सहस्राणि, क्षोणीशाः कलशोदकैः ।
तमभ्यषिञ्चन्[6]चला, निर्झरैरिव काननम् ॥ १७३ ॥
तेनुः सेनापतिश्रेष्ठि-मुख्यास्तस्योज्ज्वलैर्जलैः ।
जातरूपाद्भुतस्याभि-षेकं मेरोरिवाम्बुदाः ॥ १७४ ॥
तस्याङ्गं गन्धकाषाय्या[7]-मृष्टं गोशीर्षचन्दनैः ।
विलिप्तं व्यरुचद् वक्र-चन्द्रं चन्द्रातपैरिव ॥ १७५ ॥
किरीटं पुरुहूतेनो-पनीतमृषभप्रभोः ।
आद्य[8]मूर्द्धाभिषिक्तस्य, तस्य मूर्ध्नि न्यधुः सुराः ॥ १७६ ॥
दीप्रैरौर्वानलज्वालाः, संस्तम्भ्येवाब्धिना कृतैः ।
रत्नैर्बद्धे न्यधुस्तस्य, कर्णयोः कुण्डले सुराः ॥ १७७ ॥
हारार्द्धहारयोर्मुक्ता, राज्ञो रेजुरुरःस्थले ।
क्रीडाविलासतो लक्ष्म्याः, किल स्वेदोदबिन्दवः ॥ १७८ ॥

---

१ ख-'प्रष्ठे' । २ ख-'पृष्ठ०' । ३ ख-'स्थिराम्' । ४ ख-'ऽम्भसा भृतैः' । ५ ख-'द्रुतम्' । ६ पर्वताः । ७ क-'काषाढ्या मृष्टं' । ८ आद्यनृपस्य । ९ क-'नोत्कृत्ते' ।

उज्ज्वलैर्मृदुलैरिन्दोः, किरणैः कल्पिते किल ।
देवदूष्यांशुके राज्ञो[1], विबुधाः पर्यधापयन् ॥ १७९ ॥
पुष्पमाला सुरैर्याऽस्य, मङ्गलायाहितोरसि ।
तसस्य तपसः सैव, फलमालोज्ज्वलाऽजनि ॥ १८० ॥
अविशत्सुभटां शुल्क-करदण्डोज्झितां नृपः ।
यावद् द्वादश वर्षाणि, 'विनीता'मकरोत् पुरीम् ॥ १८१ ॥
सिंहासनादथोत्थाय, पृथ्वीशः सपरिच्छदः ।
जगाम धाम व्योमेव, प्राग्गिरेरंशुमानिव[2] ॥ १८२ ॥
तत्र स्नानगृहे स्नात्वा, भूमिविन्यस्तभाजनैः ।
नृपचक्रैः समं चक्री, चकाराष्टमपारणम् ॥ १८३ ॥
अभिषेकोत्सवे तस्मिन्, वृत्ते द्वादशवार्षिके ।
बुभुजे भूपतिर्भोगान्, प्राग्भाग्याभ्यागतान् भृशम् ॥ १८४ ॥

भरतचक्रिणः समृद्धिवर्णनम्

चक्र-दण्डा-ऽसि-च्छत्राणि, चत्वार्येतानि जज्ञिरे ।
एकेन्द्रियाणि रत्नानि, नरेन्द्रोरस्त्रमन्दिरे ॥ १८५ ॥
काकिणी-मणि-चर्माणि, निधयश्च नवाभवन् ।
तस्य रत्नाकरे रत्ना-नीव पद्मानिकेतने ॥ १८६ ॥
पुरोहितो गृहपतिः, पृतनापति-वर्द्धकी ।
स्वपुर्यां तस्य चत्वारि, नररत्नानि जज्ञिरे ॥ १८७ ॥
गजा-ऽश्वरत्ने जज्ञाते, तले 'वैताढ्य'भूभृतः ।
विद्याधरोत्तरश्रेण्यां, स्त्रीरत्नं समजायत ॥ १८८ ॥
स चतुर्दशभिः शोभां, लेभे रत्नैर्महत्तमैः ।
पुण्यनैपुण्यतः प्राप्यैः, पूर्वैर्[3]जैनागमो यथा ॥ १८९ ॥
श्रितः षोडशभिर्देव-सहस्रैः पारिपार्श्वकैः ।
अङ्गरक्षाकरैः[4] पूर्व-तपोराशिवशीकृतैः ॥ १९० ॥
स राज्ञां राजकन्याना-मिव द्वात्रिंशता श्रितः ।

---

१ ख-'राज्ञा' । २ ख-'रंशुरंशुमान्' । ३ चतुर्दशपूर्वैर्युक्तो यथा जैनसिद्धान्तः, पूर्वाणां नामाद्युल्लेखार्थं तु प्रेक्ष्यतां प्रवचनसारोद्धार( गा. ७११-७१८ )वृत्तिः श्रीवीरभक्तामरस्य मदीयं स्पष्टीकरणं ( पृ. ५९-६१ ) वा । ४ ख-'परैः' ।

सहस्रैर्नृसहस्राक्षः, [1]सहस्राक्षमहा बभौ ॥ १९१ ॥
कन्यानां [2]जानपदीनां, नाटकानामिवान्वहम् ।
द्वात्रिंशता सहस्रैः स, महीशः समुपास्यत ॥ १९२ ॥
स भूपः [3]सूपकाराणां, त्रिषष्ट्यग्रैस्त्रिभिः शतैः ।
तथाऽष्टदशभिः [4]श्रेणि–प्रश्रेणिभिरशोभत ॥ १९३ ॥
लक्षैश्चतुरशीत्येभैः[5]–रश्वैरिव रथैरिव ।
स पत्तिभिर्ग्रामैरिवा–भात् षण्णवतिकोटिभिः ॥ १९४ ॥
स [6]द्वात्रिंशज्जनपद–सहस्राणामभूत् प्रभुः ।
द्वासप्ततिपुँरवर–सहस्राणामपीशिता ॥ १९९ ॥
स सहस्रेणोर्नद्रोण–मुखलक्षस्य रक्षकः ।
पत्तनाष्टाचत्वारिंशत्–सहस्राणां च शासिता ॥ १९६ ॥
कर्बटानां [11]मडम्बाना–मिवा[12]डम्बरभाक्श्रियाम् ।
चतुर्विंशतिसहस्र–सङ्ख्यातानां स रक्षिता ॥ १९७ ॥
[13]आकराणां स विंशति–सहस्राणामधीश्वरः ।
षोडशानां तथा [14]खेट–सहस्राणां प्रपालकः ॥ १९८ ॥
चतुर्दशसहस्राणां, [15]सम्बाधानामधीशिता ।

---

१ इन्द्रवत् तेजस्वी । २ नानादेशोद्भवानाम् । ३ क–'तप०' । ४ शिल्पिसङ्घादिभिः, "कारुस्तु कारी, प्रकृतिः शिल्पी श्रेणिस्तु तद्गणः" इत्यभिधानचिन्तामणि( का. ३, श्लो. ५६३ )वचनात्; एतेषामष्टादश नामानि उपलभ्यन्ते 'हिंदुशास्त्रांतील संख्यावाचक दुर्बोधशब्दार्थ-कोश'नाम्नि पुस्तके, किन्तु तान्येव प्रस्तुतानि न वेति प्रश्नः । ५ गजैः । ६ क–'विंत्रिंश०' । ७ महानगर० । ८ "सिन्धुवेलावलयितानि द्रोणमुखानि" इति **प्रमेयरत्नमञ्जूषायां** १२१तमे पत्रे । ९ जलस्थलपथयुक्तानि रत्नयोनिभूतानि वा पत्तनानि । १० क्षुल्लकप्राकार-वेष्टितानि अभितः पर्वतावृतानि वा कर्बटानि । **वाचस्पतिकोशे** त्वेवम्—
"स्यात् स्थानीयं त्वतिलम्बो, ग्रामो ग्रामशताष्टके । तदर्धं तु द्रोणमुखं, तच्च कर्वटमस्त्रियाम् ॥
कर्वटार्धे कर्वुटिकं स्यात्, तदर्धे तु कार्वटम् । तदर्धे पत्तनं तच्च, पत्तनं पुटभेदनम् ॥
निगमस्तु पत्तनार्धे, तदर्धे तु निवेशनम् । कर्वटादधमो द्रङ्गः, पत्तनादुत्तमश्च सः ॥
उद्रङ्गश्च निवेशश्च, स एव द्रङ्ग इत्यपि ।" श्रीकेशवकृते **कल्पद्रुकोषे**ऽपि कर्बटादिस्वरूपं समस्ति । ११ अर्धतृतीयगव्यूतान्तर्ग्रामरहितानि ग्रामपञ्चशत्युपजीव्यानि वा मडम्बानि । १२ क–'मिव डम्बरभाक्श्रिया' । १३ हिरण्याकराद्य आकराः । १४ प्रांशुप्राकारनिबद्धानि क्वचिन्नद्यद्रि-वेष्टितानि वा खेटानि; "खेटः पुरार्धविस्तरः" इति **अभिधानचिन्तामणौ** (का. ४, श्लो. ३८) । १५ शैलशृङ्गस्थायिनो निवासा यात्रासमागतप्रभूतजननिवेशा वा सम्बाधाः ।

स षट्पञ्चाशतो[1]ऽन्तरो-दकानामपि नायकः ॥ १९९ ॥
एकोनायाः पञ्चाशतः, कुराज्यानां प्रशासकः ।
'भरत'क्षेत्रभूतानां, परेषामपि सोऽधिपः ॥ २०० ॥
दुर्विनीतान् विनीतान् स, 'विनीता'यां स्थितः सृजन् ।
अभिषेकोत्सवान्ते स्वान्[2], स्मर्तुं चक्री प्रचक्रमे ॥ २०१ ॥
षष्टिं वर्षसहस्राणि, विरहोत्कण्ठिताशयान् ।
राजा [3]निजान् निरैक्षिष्ट, [4]नियुक्तनरयोजितान् ॥ २०२ ॥

सुन्दरीशरीरस्थितेरवलोकनाद् भरतस्य वचनानि

दुर्बलां बाहुबलिनः, सोदरां सुन्दरीं ततः ।
भूपो न्यभालयन्म्लानां, हेमन्तनलिनीमिव ॥ २०३ ॥
परावर्त्तितरूपां तां, प्रेक्ष्य ग्रीष्मलतामिव ।
रोषाध्मातो धराभर्त्ता-ऽधिकृतानित्यभाषत ॥ २०४ ॥
सन्ति रे किं [5]मदीयेऽपि, न [6]सूदा नोदनान्यपि ? ।
सत्स्वप्यश्नात्यसौ चेन्न, तदस्त्यस्याः किमामयः ? ॥ २०५ ॥
गदो यद्यगदङ्काराः, [7]कथाधाराः कथं ततः ? ।
आसीद् वसुन्धरा वन्ध्या, नौषधीर्वा प्रसौति किम् ? ॥ २०६ ॥
दृष्ट्वा दरिद्रपुत्रीवत्, कामं क्षामतमामिमाम् ।
दूनोऽहं तदहो यूयं, वञ्चका मम वैरिणः ॥ २०७ ॥
नियुक्तास्तेऽपि नत्वेति, प्रोचुः प्राञ्जलयो नृपम् ।
तन्नास्ति वस्तु किमपि, देववेश्मनि नास्ति यत् ॥ २०८ ॥
सर्वदिग्जैत्रयात्रायै, किन्तु देवो यदाद्यगात् ।
तदादीयं विरचय-त्या[8]चामाम्लानि नित्यशः ॥ २०९ ॥
[9]तदा देवो यदैवेमां, प्रव्रजन्तीं न्यवारयत् ।

१ जलान्तर्वर्तिसन्निवेशानामर्थाद् द्वीपानाम्; न तु जैनसिद्धान्तप्रसिद्धयुग्मिमनुजाश्रयभूतानां षट्पञ्चाशदन्तरद्वीपानां, तेषु कस्याप्याधिपत्यस्यासम्भवात् । २ स्वबन्धून् । ३ ख-'नरान्' । ४ प्रेषितनरानीतान् । ५ मम गृहे, 'मारे त्यां' इति भाषायाम् । ६ क-'भूदानोदना०' । ७ मृताः । ८ विकृतिषट्कत्यागपूर्वकमेकाशनम्; "आचामोऽवश्रावणम्, अम्लं चतुर्थो रसः, त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदाचामाम्लम्, समयभाषयौदनकुल्माषसक्तुप्रभृतिके ध. अ. २" इति अभिधानराजेन्द्रे (पृ. २९६) । ९ क-'तथा' ।

तदाप्रभृत्यभूद् भाव-संयतेयं भवच्छिदे ॥ २१० ॥
किं प्रव्रजितुकामाऽसि, भरतेनेति भाषिता ।
अवादीदेवमेवेति, सुन्दरी शीलसुन्दरी ॥ २११ ॥
बभाषे भरतोऽप्येवं, प्रमादोऽजनि मे तदा ।
प्रपद्यमाना प्रव्रज्यां, यन्मया त्वं निवारिता ॥ २१२ ॥
साधु साधु महासत्त्वे!, तत्त्वे ते रमते मतिः ।
अत्यन्तं तातपादाना-मपत्यस्योचितं ह्यदः ॥ २१३ ॥
के वयं हन्त ये राज्य-लुब्धा विषयगृध्नवः ।
न प्रपद्यामहे तात-पादानां पदवीं मनाक् ॥ २१४ ॥
कृत्यं किञ्चित् करे कार्यं, तिष्ठत्यायुषि गत्वरे ।
तमिस्राविद्युदुद्द्योते, च्युतं द्रव्यमिव द्रुतम् ॥ २१५ ॥
अकस्मादेव कुत्रापि, कदापि गमनेच्छया ।
विश्वं विश्वासयन्तीव, श्वासाः शश्वद् गतागतैः ॥ २१६ ॥
शरीरस्याशुचेरस्य, नश्यतोऽवश्यमन्वहम् ।
व्रतमेव गुणो मोक्ष-फलं गृह्णन्ति केऽपि तत् ॥ २१७ ॥
मुदिता मेदिनीभर्तु-र्व्रतरक्षाकराग्रहात्[1] ।
सा धन्याऽमन्यतात्मानं, मुक्तं कारागृहादिव ॥ २१८ ॥
समयेऽत्र समभ्यायाद्, भगवान् वृषभध्वजः ।
'अष्टापदा'ऽद्रौ विहरन्, भव्याम्भोरुहभास्करः ॥ २१९ ॥[2]
किरीटमिव तस्याद्रे, रूप्यस्वर्णमणीमयम् ।
उच्चैः शिरस्थं समव-सरणं चक्रिरे सुराः ॥ २२० ॥[3]
जिनेशं देशनां तत्र, तन्वानं शैलपालकाः ।
एत्य विज्ञपयन्ति स्म, भरताय त्वराभृतः ॥ २२१ ॥[4]
भृत्येभ्यः क्षितिभुक् तेभ्यः, संतोषपारितोषिकम्[5] ।
स्वर्णस्य तत्क्षणं कोटीः, सार्द्धा द्वादश दत्तवान् ॥ २२२ ॥
कल्याणि ! तव पुण्याना-मियत्ता[6] नैव विद्यते ।

१ निषेधाग्रहात् । २-४ एषां त्रयाणां पद्यानामभावः क-प्रतौ । ५ क -'सतोषः पारि०' । ६ सीमा ।

स्वामी यदा जगामेह, जगादेति च सुन्दरीम् ॥ २२३ ॥

सुन्दर्या निष्क्रमणोपक्रमः

ततो निष्क्रमणस्नान-मस्या मानववासवः ।
स्वान्तःपुरपुरन्ध्रीभिः, श्रद्धया निरधारयत् ॥ २२४ ॥
स्नाता विलिप्ता विविधा-ऽलङ्कारा पर्यधादसौ ।
वाससी सदृशे स्वान्त-वासनाविशदद्युती[1] ॥ २२५ ॥
तस्यास्तथास्वरूपायाः, पुरतो रूपसम्पदा ।
स्त्रीरत्नं जात्यरत्नस्या-जनि कृत्रिमरत्नवत् ॥ २२६ ॥
जनतायै यथाकामं, कामं कामगवीव सा ।
ददाना दानमारूढा, शिबिकां स्वर्विमानवत् ॥ २२७ ॥
सा राज्ञाऽनुगता साक-मन्तःपुरपुरीजनैः ।
प्रपेदे'ऽष्टापदं' शैलं, परितः स्फुरितोत्सवा ॥ २२८ ॥
ततो भरत-सुन्दर्यौ, तमारुरुहतुर्गिरिम् ।
प्रथमं सोपानमिव, तौ निःश्रेयसवेश्मनः ॥ २२९ ॥
मुदा समवसरणं, प्रविश्य परमेश्वरम् ।
प्रदक्षिणीचक्रतुस्तौ, 'मेरुं' रात्रि(शि?)रवी इव ॥ २३० ॥
जगतीसङ्क्षिपश्चाङ्गः, सम्प्राप्तुं पश्चमीं गतिम् ।
समुत्कण्ठितचित्तौ तौ, नेमतुस्त्रिजगत्पतिम् ॥ २३१ ॥

श्रीवृषभसमवसरणे भरतस्य स्तुतिः

अथ प्रथमचक्री स, प्रथमं धर्मचक्रिणम् ।
प्रचक्रमे प्रमोदेन, स्तोतुं गद्गदया गिरा ॥ २३२ ॥
ममेश ! 'भरत'क्षेत्र-जयः प्रीतिमयः कुतः ? ।
षष्टिवर्षसहस्राणि, त्वद्दर्शनविनाकृतः ॥ २३३ ॥
जगद्भर्त्तर्भवन्मूर्त्तिः, सुधावर्त्तिरियं[2] दृशोः ।
सतां गोचरतां याता, दत्ते सद्दर्शनोदयम्[3] ॥ २३४ ॥
तवालोकेन लोकानां, जन्मलक्षार्जितान्यपि ।

१ क-'वासना०' । २ अमृतलेपः । ३ सम्यक्दर्शनस्य प्रादुर्भावम् ।

यान्त्याशु नाशमेनांसि, तमांसि रविणा यथा ॥ २३५ ॥
सतां प्रणमतां येषां, युष्मदंह्रिनखत्विषः ।
चूडारत्नन्ति [1]ते चूडा-[2]रत्नन्ति त्रिजगज्जने ॥ २३६ ॥
मुखपीयूषकु[3]ण्डान्तः, पीयूषलहरीर्गिरः ।
पायं पायं प्रयान्त्येव, [4]परामरपदं नराः ॥ २३७ ॥
अमनोज्ञे मनोज्ञे वा, रङ्के राजनि वा विभो ! ।
सर्वत्र सदृशाः श्रेयो-वृष्टयस्तव दृष्टयः ॥ २३८ ॥
सदा त्वद्ध्यानसुधया, तृप्यतीश ! मनो न मे ।
दृक् तृप्यतु चिरप्राप्तैः, कुतस्त्वद्दर्शनामृतैः ? ॥ २३९ ॥
इति तीर्थपतिं स्तुत्वा, नत्वा च नरनायकः ।
दिशि पूर्वोत्तरस्यां स, निषसाद [5]प्रमादमुक् ॥ २४० ॥
दन्ताशु[6]दम्भादुद्भ्रान्त-स्वान्तभक्तिभरां गिरम् ।
सुन्दर्यपि प्रणम्येश-मजल्पत् [7]कल्पिताञ्जलिः ॥ २४१ ॥

सुन्दर्या प्रभोः स्तुतिर्दीक्षायाश्च कक्षीकरणम्

चेतश्चेतति चेन्नेत-र्नेतरत् त्वां विनाऽन्वहम् ।
त्वन्मुखेन्दुमदृष्ट्वा तु, नैति दृक्कुमुदं मुदम् ॥ २४२ ॥
ज्ञानेन निर्ममेश ! त्वं, पश्यसि स्वान् परानपि ।
पश्यन्ति त्वां किमज्ञानाः, प्रत्यक्षं त्वं गतो न चेत् ? ॥ २४३ ॥
ब्राह्मी सुकृतभाग् भ्रातृ-पुत्रा भ्रातृव्यजाश्च ते ।
पुण्यात्मानो यैः प्रव्रज्य-त्वमर्यः पर्युपास्यसे ॥ २४४ ॥
विहरन् वसुधां स्वामि-न्नुद्धाराय शरीरिणाम् ।
निर्ममोऽपि ममागण्यैः, पुण्यैः प्राप्तोऽसि सम्प्रति ॥ २४५ ॥
व्रतं ब्राह्म्या सहाग्राहि, भरताग्रहतो न हि ।
यन्मया तदियत्काल-विलम्बेनास्मि वञ्चिता ॥ २४६ ॥
कृपाकूपार ! संसारा-ऽकूपारात् परमेश्वर ! ।
प्रव्रज्यायानपात्रेण, जगत्तारक ! तारय ॥ २४७ ॥

---

१ ते जनाः । २ मुकुटमिवाचरन्ति । ३ क-'कुण्डात् ते' । ४ उत्कृष्टं मोक्षस्थानम् । ५ प्रमादत्यागी । ६ क-'दन्तादु०' । ७ रचितहस्तसम्पुटा । ८ क-'तसि' । ९ स्वामी ।

साधु त्वद्गीः स्तुवन्नेवं, तस्यै दीक्षां ददौ विभुः ।
ततो महाव्रताब्जार्क-दीधितिं देशनां व्यधात् ॥ २४८ ॥

हस्तान्तर[1]विहस्तान्त-र्न्यस्तां[2] मुक्तिममन्यत ।
मध्येसाध्वीसमं साऽनु-ज्येष्ठं सन्तिष्ठते स च ॥ २४९ ॥

देशनाऽन्ते प्रणम्येश-'मयोध्यां' प्रययौ नृपः ।
विस्मितो हृदि सुन्दर्या, दीक्षाग्रहणसाहसात् ॥ २५० ॥

भरतेन भ्रातृन् प्रति दूतप्रेषणम्

स्वामिषेकोत्सवे भ्रातृन्, विज्ञायानागतानथ ।
तेषां दूतान् हृदाकूत-ग्राहिणः प्राहिणोन्नृपः ॥ २५१ ॥

यदि राज्याभिलाषोऽस्ति, भजध्वं भरतं ततः ।
[3]तैरित्युक्ता मिलित्वा ते-ऽप्यालोच्येत्यालपन्नृपाः ॥ २५२ ॥

दत्तं विभज्य तातेन, राज्यं प्रव्रजता पृथक् ।
[4]तस्यास्माकमकस्मात् त-[5]दस्मद्राज्यस्पृहा[6]ऽस्य किम् ? ॥ २५३ ॥

राज्यैस्तातार्पितैस्तुष्टा, न समीहामहेऽधिकम् ।
निःस्पृहाः स्मृतदेवाधि-देवाः सेवामहे न [7]तम् ॥ २५४ ॥

सेव्यते यदि [8]सोऽस्माकं, व्याधिवार्धक्यमृत्युहृत् ।
नेदृक् चेत् तर्हि मर्त्यत्वे, समे कः सेवकीभवेत् ? ॥ २५५ ॥

[9]ओजसैवं स यद्यस्मद्-राज्यानां ग्रहणाग्रहः ।
ततस्तस्यैव तातस्य, सुता वयमपि श्रुतां[10]ः ॥ २५६ ॥

ताते जीवति तस्याज्ञा-मगृहीत्वाऽग्रजन्मना ।
सोदरेण न सङ्ग्राम-महाय प्रोत्सहामहे ॥ २५७ ॥

भरतभ्रातॄणां पितृचरणशरणम्

इति दूतानुदित्वा ते, तदैवा'ऽष्टापदे' गिरौ ।
श्रितं समवसरणे, भेजुः श्रीवृषभध्वजम् ॥ २५८ ॥

---

१ अव्याकुल० । २ क-'मुक्तां' । ३ दूतैः । ४ भरतस्य । ५ भ्रातॄणाम् ।
६ भरतस्य । ७ भरतम् । ८ भरतः । ९ ख-'ओजसैव' । १० क-'श्रुतेः' ।

तैर्नत्वा भरतादिष्टे, निजानिष्टे निवेदिते ।
तानभ्यधात् कृपाऽम्भोधि-र्भगवान् नाभिभूपभूः ॥ २५९ ॥

का रतिर्भूरिभोग्यायां, गणिकायामिव क्षितौ ? ।
भाग्यहीनं पतिं त्यक्त्वा, रज्यते भाग्यभाजि या ॥ २६० ॥

धूलिस्थामस्थिरां भूमि-मिच्छन् बन्धुवधोद्यतः ।
सुधांशुशुद्धया कीर्त्या, को न मुच्येत नित्यया ? ॥ २६१ ॥

सुकृतामृतकल्लोल-सन्तानस्नानमालिनः ।
नेच्छन्ति दूषितां रक्तैः[1], शुचयो विजयश्रियम् ॥ २६२ ॥

सन्तो भजन्ति सन्तोष-सुलभं विश्ववैभवम् ।
वाञ्छन्ति भूलवैश्वर्यं, जडास्तु प्राणसंशयात् ॥ २६३ ॥

जीवितं हन्त जन्तूनां, नयनोन्मेषचञ्चलम् ।
सुख[2]श्रीयौवनादीनां, का तदंशस्पृशां कथा ? ॥ २६४ ॥

उपान्तदीप्तदावेषु, विलासोपवनेष्विव ।
अवश्योद्यद्वियोगेषु, सङ्गमेषु रमेत कः ? ॥ २६५ ॥

तृ[3]ष्णातिरस्करिण्यैव, पिहितोऽस्ति सुखोदयः ।
यावत्युत्सार्यते सेयं, तावा[4]न्नयमवेक्ष्यते ॥ २६६ ॥

तापकृद् वर्धमानैव, लब्धे लब्धे धनेन्धने ।
तृष्णाग्निकीला सन्तोष-पीयूषेणैव शाम्यति ॥ २६७ ॥

स्वर्भोगैरपि तृष्णा [5]वो, या प्राग् जन्मसु नात्रुटत् ।
सा मर्त्यभोगैरङ्गार-कारकस्येव किं त्रुटेत् ? ॥ २६८ ॥

अङ्गारकारकस्य दृष्टान्तः

गृहीत्वाऽम्बुदृतिं कश्चि-[6]द्गादङ्गारकारकः ।
कान्तारे कर्त्तुमङ्गारान्, ग्रीष्मप्रक्षीणवारिणि ॥ २६९ ॥

---

१ रुधिरैः । २ क-'सुख०' । ३ लालसारूपजवनिकया । ४ सुखोदयः । ५ क-'या' ।
६ अगच्छत् ।

मध्याह्नातपसम्पर्क–स्फाराङ्गाराग्नितापतः ।
अखर्वया तृषा सर्वं, इत्यम्बु पिबति स सः ॥ २७० ॥
सोऽक्षीणया तृषा [1]रीणः, सुप्तः स्वप्ने गतो गृहम् ।
[2]कलशा-ऽलिञ्जरा-ऽल्लूनां[3], जलानि सकलान्यपात् ॥ २७१ ॥
तज्जलेन [4]विलिल्ये न, तत्तृष्णा वज्रवह्निवत् ।
ततः सरः-सरिद्-वापी–कूपानां स पयांस्यपात् ॥ २७२ ॥
नीरैस्तैरपि तृड् नास्य, शान्ता दिव्यास्त्रवह्निवत् ।
ततो नद-नदीनाथ–पाथः पेपीयते स सः ॥ २७३ ॥
तेनाप्यनुपशान्तायां, तृष्णायां मरुकूपके ।
गत्वाऽक्षिपद् रज्जुबद्धं, पयसे कुशपूलकम् ॥ २७४ ॥
दूरनीरतया कूप–क्रोडेऽपि गलिताम्बुकम् ।
[5]निश्च्योत्य पूलं स पपौ, तृष्णार्त्ते क्व विवेकिता ? ॥ २७५ ॥
या क्षीर्णा नार्णवैस्तृष्णा, त्रुट्येत् पूलाम्भसा क्व सा ? ।
तद्वद् वः स्वःसुखाक्षीणा, क्ष्मापलक्ष्म्यैति किं क्षयम् ? ॥ २७६ ॥
वत्सास्तच्छाश्वतानन्द–सन्दर्भ[6]पदसुन्दरम् ।
युक्तं संयमराज्यं वो–ऽखिलदुःखनिषूदनम् ॥ २७७ ॥

प्रभोर्देशनया प्रबुद्धानां भरतभ्रातॄणां दीक्षा

ततो विरक्तिसंसक्ता–स्त्यक्ता विषयकाङ्क्षया ।
जगृहुर्भगवत्पार्श्वे, तेऽप्यष्टानवतिर्व्रतम् ॥ २७८ ॥
स्वरूपं विनिरूप्यैतत्, तेषां रेखां हृदि क्षिपत् ।
दूता न्यवेदयन्नेत्य, द्रुतं भरतभूभृते ॥ २७९ ॥
धर्मप्रवीरेषु सहोदरेषु, दीक्षां प्रपन्नेषु नयं नृपस्य ।
सञ्चिन्तयंश्चेतसि चक्रवर्ती, राज्यानि तेषां निखिलान्यगृह्णात् ॥ २८० ॥[7]

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते श्रीपद्मानन्दापर-
नाम्नि श्रीजिनेन्द्रचरिताभिधाने महाकाव्ये वीराङ्के श्रीआदिनाथचरिते

---

१ पीडितः । २ क–'कश्शालिञ्जलाभूताम्' । ३ कलशानां बृहत्कलशानां लघुकलशानां च ।
४ नाशं प्राप । ५ 'निचोवीने' इति भाषायाम् । ६ ख–'पर०' । ७ इन्द्रवज्रा ।

क्षुद्रहिमवत्कुमारविजयादिदिग्विजय-विनीतापुरीप्रवेश-चक्रवर्त्ति-
पदाभिषेक-सुन्दरीसहोदरव्रतग्रहणकीर्तनः षोडशः
सर्गः ॥ १६ ॥

वातौघैः परिपक्वपत्रविततिः क्षोणीरुहाणामिव
प्रालेयांशुकरैः[1] प्रसूनपटली [2]शेफालिकानामिव ।
पाप्माली गलति द्रुतं तनुभृतां यन्नाममन्त्राक्षरैः
श्रीनाभेयजिनप्रभुः स [3]भवतां भूयाद् विभूतिप्रदः ॥ १ ॥[4]
चिन्तारत्नं मनस्ते विमलतममिदं कामधेनुश्च वाणी
कल्याणी ते तथाऽयं विबुधरतिकरस्ते करः कल्पशाखी ।
धात्रा चक्रेऽर्थिकाङ्क्षाऽधिकमपि यदमून्यर्पयन्त्येव तेऽसौ
श्रीमत् पद्म ! प्रभावो गुरुरहह महत् सङ्गमः सद्गुणास्यै ॥ २ ॥[5]
ग्रन्थाग्रं० ३०२ ॥



१ चन्द्रकिरणैः । २ निर्गुण्डीवृक्षविशेषाणाम् । ३ ख–'भविनां' । ४ शार्दूल-विक्रीडितम् । ५ स्रग्धरा ।

## सप्तदशः सर्गः १७

जगद्विचारोत्तरगोचरान्त–[1]गौः सञ्चरन्ती [2]त्रिपदी यदीया ।
सद्धर्मदुग्धैः सुधियो धिनोति, सोऽस्तु श्रिये श्रीवृषभध्वजो वः ॥१॥[3]

आयुधशालायां चक्ररत्नाप्रवेशे सेनापतेर्वचनानि

अथ स्थितं श्रीभरतं सभाऽन्तः, प्रभां हरन्तं द्युपतेः प्रतापैः ।
काले प्रकल्प्य [4]प्रणतिं [5]सुषेणः, सेनापतिः प्राञ्जलिरित्यजल्पत् ॥ २ ॥
[6]स्वाख्याऽङ्कितं वर्षमिदं विजित्य, षट्खण्डमप्यात्मपुरीं प्रपन्ने ।
त्वयि प्रभो! चक्रमिदं तु पुर्यां, नोत्तिष्ठते रुष्टमिव प्रवेष्टुम् ॥ ३ ॥
पुर्या बहिर्दिग्विजये जितेऽपि, प्रभो! जयारम्भ इव प्रवृत्तम् ।
अद्याप्यदो [7]वैद्युतवल्गितानां, वितानमुच्चैः प्रचिनोति चक्रम् ॥ ४ ॥

भरतस्य प्रत्युत्तरं मन्त्रिणा सह मन्त्रणं च

मत्वा तदुक्तिं भरतोऽभ्यधत्त, को नाम [8]वीरो 'भरता'ऽन्तराले ।
[9]चक्रानलान्तः शलभो भविष्णु–रवज्ञयाऽऽज्ञां मम मन्यते न ॥ ५ ॥
[10]सदःसदां [11]श्रोत्रसुधासगोत्र–मथोज्जगौ मन्त्रिसहस्रनेत्रः ।
जानाम्यदो दिग्विजयप्रवृत्ते, देवेऽनुमेयः खलु नैव जेयः ॥ ६ ॥
प्रतापदग्धाखिलकण्टकायां, यशोजलैः शान्तिमुपागतायाम् ।
लघूभवद्भूभृति सैन्यनागैः, क्षितौ त्वदाज्ञा सुखिनी चचार ॥ ७ ॥[12†]
देव! त्वदाज्ञा भुवि सर्पिणीति, चिरं नरेन्द्रैरपि लङ्घ्यते न ।
[13]कश्चित् [14]तदुल्लङ्घनतस्तु मत्तं, चक्रं 'विनीता'मविशद् व्यनक्ति ॥ ८ ॥
मर्त्येष्वमर्त्येष्वपि ते न जेयं, न दुर्जयं वा कमपि प्रपद्ये ।
आ ज्ञातमेकोऽस्त्वथवा विजेयः, सुरासुरेन्द्रैरपि दुर्विजेयः ॥ ९ ॥
तनूद्भवः श्रीवृषभस्य भर्तु–र्भुवि प्रतीतो भवतोऽनुजन्मा ।

---

१ ख–'चारोच्चय०' । २ उत्पाद-व्यय-ध्रौव्येतिपदत्रितयरूपा । ३ अस्मिन् सर्गे ‡ † एतच्चिह्नद्वयरहितानां पद्यानां २०२तमं पद्यं यावत् छन्द 'उपजातिः' । ४ क–'प्रणतैः' । ५ ख–'सुषेणसेना०' । ६ भरतमिति सञ्ज्ञितम् । ७ विद्युतश्रेष्ठानाम् । ८ क–'धीरो' । ९ क–'चक्रान्तरालः' । १० सभ्यानाम् । ११ कर्णामृतसदृशम् । १२ † एतच्चिह्नलक्षितानां पद्यानां छन्द उपेन्द्रवज्रा ज्ञेयम् । १३ पुरुषम् । १४ त्वदाज्ञोल्लङ्घनतः ।

बलीयसां बाहुबलिर्बलीयान्, महाबलः[1] सोऽप्यबलो यदग्रे ॥ १० ॥†
बलीयसो बाहुबलेः शरीरात्, खेलूरिका[2]खेलनखेदजातान् ।
स्वेदोदबिन्दूननिशं ग्रसित्वा, मन्येऽनिलोऽप्याप महाबलत्वम् ॥ ११ ॥
भ्रष्टप्रभं भास्वति भासमाने, नभश्चरे तारकचक्रवालम् ।
यथा तथा बाहुबलौ[3] बलिष्ठे, रणं प्रविष्टे पटलं नृपाणाम् ॥ १२ ॥
श्रीमद्युगादिप्रभुनन्दनस्त्वं, लोकोत्तरो नाथ! यथा तथा सः[3] ।
ततस्त्वयाऽस्मिन्नजिते जितं किं, भास्वानभास्वान् न हते तमिस्रे ॥ १३ ॥
सविक्रमः स्वामिसमः समग्रे, षट्खण्डरूपे 'भरते'ऽभवन्न ।
तत्तज्जये कोऽस्तु जयस्तवस्ते, यथा करेणोर्मशकावमर्दे ॥ १४ ॥
पञ्चाननस्येभघटामभित्त्वा, पराक्रमः को मृगमर्दनेन ? ।
प्रचण्डवायोरचलानकृत्वा, चलान् बलं किं तृणकर्षणेन ? ॥ १५ ॥
अरं नरस्यानभिभूय लोभं, किमद्भुतं दोषविमोषणेन ? ।
देवस्य किं दिग्विजयेन बाहु–बलं न चेद् बाहुबलिर्जितोऽसौ ! ॥ १६ ॥

–युग्मम्

न मन्यते देव-नृदेवमान्या–माज्ञामयं ते स्वबलावलेपात् ।
त्वयि स्थिते त्वेनमसाधयित्वा, चक्रं धृतक्रोधमिवैति नात्र ॥ १७ ॥
अलं विलम्बेन बलानि सज्जी–कुरुध्वमेतद्विजये यतध्वम् ।
अपालिताज्ञस्तनुरप्यराति–रुपेक्षणीयो न जिगीषुणा यत् ॥ १८ ॥†
ततः प्रकोपं प्रशमं च बिभ्रत्, तापं च शीतं च यथा तपस्यः[4] ।
चक्राप्रवेशाल्लघुबन्धुयुद्धा–वेशाद् विहस्तो[5] नृविभुर्बभाषे[6] ॥ १९ ॥
मेने ममाज्ञामनुजो निषादि[7]–सञ्ज्ञां शिशुत्वे कलभो[8] यथाऽसौ ।
स एव सम्प्रत्यवमन्यते तां, धिङ् मत्ततां यौवनसम्प्रदत्ताम् ॥ २० ॥
जनेषु राज्ञां जनयत्यवज्ञा–माज्ञां प्रतीच्छत्यनुजोऽपि नो यत् ।
कनीयसा तेन तु सम्पराय–परायणत्वं मम नैति[9] तत्त्वम् ॥ २१ ॥
भ्रात्रा कनिष्ठेन समं समीकात्[10], कलङ्कपङ्कप्रसराभिलिप्तम् ।
भजन् प्रभुत्वं विशदैर्यशोभिः, कालुष्यभीतैरिव नाभिषेव्यः ॥ २२ ॥

---

१ पवनः । २ शस्त्राभ्यासशाला० । ३ बाहुबलिः । ४ फाल्गुनमासः । ५ व्याकुलः । ६ ख–'नृपति०' । ७ हस्तिपालक० । ८ बालगजः । ९ क–'नेति' । १० युद्धात् ।

एकोऽपि नाज्ञां मनुतेऽत्र यावत्, तावन्न चक्रस्य पुरीप्रवेशः ।
कनीयसो दुर्विनयासहत्व-मेषा तु लोकेष्वपवादरेखा ॥ २३ ॥
राज्ञां नयो ह्येष निजः परो वा-ऽवहीलिताज्ञो न हि पालनीयः ।
सौभ्रात्रमस्मिन्नसहस्तु[1] हन्तुं, ही सङ्कटं सङ्घटितं महन्मे ॥ २४ ॥
ततोऽब्रवीन्मन्त्रिवरो नरेशं, विशङ्कसे सङ्कटमात्मनो यत् ।
महत्त्वतो देव ! स एव तत्[2] ते-ऽपनेष्यते दुर्विनयः कनीयान् ॥ २५ ॥†
लोकक्रमस्तावदयं यदाज्ञां, ज्यायान् प्रदत्ते कुरुते कनीयान् ।
देवस्तदाज्ञापयितुं तमाशु, प्रज्ञाप्रभूतं प्रहिणोतु दूतम् ॥ २६ ॥[3]‡
नाज्ञामनन्तापुरुहूत[4] ! दूत-वाक्योपनीतां स तवानुजन्मा ।
सहिष्यते दुर्विषहो महोर्मिः, कदापि पर्याणसहो न सिंहः ॥ २७ ॥
देवे ततो दुर्विनयस्य तस्य, सृजत्युपायप्रसरं शमाय ।
लोकेषु नैवेषदपि प्रवादो, [5]लोकक्रमातिक्रमभूः स भूपे ॥ २८ ॥
तथेति पृथ्वीपतिरेतदीयं, वाक्यं विवेकैकपदं प्रपेदे ।
कः शास्त्रलोकव्यवहारहृद्यां, वाणीं प्रमाणीकुरुते कृती न ? ॥ २९ ॥

तक्षशिलायां दूतस्य प्रेषणम्

स्वयं नयोल्लाससमयप्रयोगै-र्दूतं ततः शिष्यमिवानुशिष्य ।
स प्राहिणोद् बाहुबलिं प्रतीला-पतिः[6] सुवेगाह्वयमात्तवेगम् ॥ ३० ॥
शिक्षामशेषामुपगृह्य [7]शेषा-मिवैष शीर्षेण नृदैवतस्य ।
ससार सेनापरिवारवार-सारः पुरीं 'तक्षशिलां' [8]परीप्सुः ॥ ३१ ॥
लब्धुं लसं'स्तक्षशिलां' सुवेगो, मार्गे पुराणां पटलं ललङ्घे ।
मुनीश्वरो मुक्तिमवाप्तुचेता, यथा गुणस्थानकचक्रवालम् ॥ ३२ ॥
ऋषिः कषायानिव बह्वपायान्, विलङ्घ्य घोरान् गहनप्रभागान् ।
शर्मोत्तरं शान्तरसं 'बहु(ह)ल्या'-ह्वयं क्रमाद् देशमयं विवेश ॥ ३३ ॥
किं संश्रयोऽसौ भुवनेश्वराणां, सुपर्वणां वा सुभगो भुवो वा ।
इत्यूहबाहुल्यमुवाह बाहु-बलेः स देशं 'बहुलीं' प्रविश्य ॥ ३४ ॥

---

१ अहमस्मीति शेषः । २ सङ्कटम् । ३ ‡ 'इन्द्रवज्रा'च्छन्दसश्चिह्नमिदम् । ४ हे पृथ्वीन्द्र ! । ५ क-'लोके क्रमा०' । ६ पृथ्वीनाथः । ७ देवनिर्माल्यम् । ८ प्राप्तुमिच्छुः ।

तत्रात्मसु[1]भ्रूमणिभूषणानां, प्रभाभरध्वस्ततरा(ता)न्धकारे ।
भृशं निशीथेऽपि महापथेऽपि, पान्थानसौ सञ्चरतो ददर्श ॥ ३५ ॥
निषेदुषां क्षोणिरुहां तलेषु, गोपीकुलानां प्रतिगोकुलं सः ।
श्रीमद्वृषाङ्कप्रभुकीर्तिमिश्राः, शुश्राव गीतीः श्रवणामृतानि ॥ ३६ ॥
भृङ्गारवैर्बाहुबलेर्गुणानां, ग्रामं प्रतिग्राममिवोद्गिरद्भिः ।
द्रुमैः सदा पुष्पफलाभिरामै–रारामवृन्दं स ददर्श दृश्यम् ॥ ३७ ॥
ग्रामान्तरेषु प्रतिपादपान्तं, सज्जोपभोक्तव्यपदार्थसार्थैः ।
इभ्यप्रयुक्तैरुपरुध्य पुंभिः, सम्भोज्यमानान् पथिकानपश्यत् ॥ ३८ ॥
धनै[2]रधोन्यस्तधनाधिनाथा–नमाधिबाधानकुतोभयान् सः ।
नृपान्तरं बाहुबलिं विनाऽन्य–मजानतो जा[3]नपदानपश्यत् ॥ ३९ ॥
देशस्य सौष्ठ्यादधिकर्द्धिकत्वात्, पराक्रमं बाहुबलेर्नयं च ।
प्रबुध्यमानो भरतादपीर्द्ध[4]–मध्याश्रयत् 'तक्षशिलां' पुरीं सः ॥ ४० ॥
वणिग्जनानापणगान् परर्द्धीन्, प[5]श्यन् [6]निधीशानिव भूरिभू[7]पान् ।
नानाऽश्वभृद्वीरविराजि राज–द्वारं ययौ [8]राजकयानराजि ॥ ४१ ॥
[9]स्राग् वेत्रिणा बाहुबलेर्निवेद्य, तदाज्ञयाऽनीयत संसदं सः ।
यथा विनेयो विनयेन विद्यां, शस्यां कलापात्रपरम्पराभिः ॥ ४२ ॥
प्रणम्य [10]भूमीतलचुम्बिभालं, श्रितासनं बाहुबलिस्तमाह ।

बाहुबलेः सुवेगेन सह भरतकुशलादिविषयकं सम्भाषणम्

सुवेग ! [11]कच्चित् कुशलं करस्थ–षट्खण्डभूमेर्भरतेश्वरस्य ? ॥ ४३ ॥
श्रीतातपादैः परिपालितानां, कलाकलापार्पणलालितानाम् ।
कच्चिद् 'विनीतानगरीप्रजाना–मार्यस्य राज्ये जयवान् प्रमोदः ? ॥४४॥
क्रूरान्तरारिष्विव दुस्तरेषु, खण्डेषु कच्चिद् भरतस्य षट्सु ।
अजस्रमार्यस्य [12]युतेष्वनार्यै–र्निरन्तरायो विजयो बभूव ॥ ४५ ॥
षष्ठ्या सहस्रैः शरदां समन्ता–दिमां महीमा[13]तुहिनावनीध्रम् ।
सम्यक् समाक्रम्य समागतानां, सुवेग ! कच्चित् कुशलं बलानाम् ? ४६

१ क–'सुभ्रूर्मणि०' । २ अधःकृतकुबेरान् । ३ नागरान् । ४ दीप्तम् । ५ क–'पश्य-न्नधीशान्' । ६ कुबेरान् । ७ ख–'रूपान्' । ८ राजसमूहवाहनैः शोभितम् । ९ क–'स्राग्' । १० क्रियाविशेषणम् । ११ प्रश्ने । १२ क–'सुते०' । १३ हिमालयपर्यन्तम् ।

अखण्डिताज्ञैः क्षितिमण्डलेऽस्मि-न्नाखण्डलस्येव[1] निषेवितस्य ।
आर्यस्य चक्रैर्जगतीपतीनां, कच्चित् सुखेनैव दिनानि यान्ति ? ॥ ४७ ॥
अनामयं[2] देश-पुरी-नरेश-हस्त्य-ऽश्व-सेनापति-सैनिकानाम् ।
एवं समापृच्छय नृपे निवृत्ते,-ऽब्रवीदनावेगमिदं सुवेगः ॥ ४८ ॥

दूतस्य सुवेगस्य प्रतिवचनानि

यस्मिन् प्रवृत्ते कुशलं प्रदातुं, भीत्यैव नैवाकुशलं जनेऽपि ।
स्वतोऽपि सिद्धे कुशले ततोऽस्य, तवाग्रजस्याकुशलं कुतोऽस्तु[3] ? ॥ ४९ ॥
यस्मिन् वशीभूतनृदेवदेवे, दैवोऽपि नैवापकृतौ कृती[4] स्यात् ।
तत्[5] तत्परीवारपुरीतुरङ्ग-गजादिकस्याकुशलं सृजेत् कः ? ॥ ५० ॥
किं क्वापि [6]कोऽप्यस्ति समोऽधिको वा, प्रतापभानोर्भरतेश्वरस्य ।
खण्डेषु यः स्याद् भरतस्य षट्सु, जयाय सज्जीभवतोऽन्तरायः ? ॥ ५१ ॥
धराधिनाथैः स्वशिरोधृताज्ञा-भँराdivानम्रशिरोधराग्रैः ।
निषेव्यते श्रीवृषभात्मजोऽयं, प्रमोदतेऽन्तःकरणं तु नास्य ॥ ५२ ॥†
जयं विधायास्य दिशां शरद्भिः, षष्ट्या सहस्रैः स्वपुरीं श्रितस्य ।
एकोऽपि यद् द्वादशवार्षिकेऽपि, राज्याभिषेकेऽवरजेषु नायात् ॥ ५३ ॥-युग्मम्
जायेत या श्रीर्निजजातिजातै-र्नोपान्तयातैरपरैर्नरैः[7] सा ।
जलाशयानां जलजाकरैर्या, लक्ष्मीः क्व सा कूलगतैः[8] पतद्भिः[9] ? ॥ ५४ ॥
अनागतानां स निजानुजानां, निर्मातुमाह्वानमयुङ्क्त दूतान् ।
कश्चिद् विकल्पं परिकल्प्य[11] चित्ते, श्रीतातपार्श्वे व्रतमाश्रितं तैः ॥ ५५ ॥
नीरागतासङ्गसुखेन [12]तेषां, न साम्प्रतं स्वो न परोऽपि कोपि ।
तद्भ्रातृवात्सल्यकुतूहलेन, स मां त्वदाह्वानकृते न्ययुङ्क्त ॥ ५६ ॥
स्वभ्रातृसौभ्रात्रमुदा तदेहि, देहि प्रमोदं हृदयस्य तस्य ।
भ्राता कनीयान् विनयी सुखं यत्, सूते न तत् सर्वदिगीश्वरत्वम् ॥ ५७ ॥
दिगन्तरात् षष्टिसमासहस्रैः[13], समागते ज्यायसि विश्वजैत्रे ।
न दर्शनेनाप्यनुकूल्यतेऽसौ, कठोरता वः पवितोऽपि तीव्रा ॥ ५८ ॥†

---

१ इन्द्रस्येव । २ कुशलम् । ३ क-'यतोऽस्तु' । ४ समर्थः । ५ तस्मात् ।
६ क-'काप्यस्ति' । ७ क-'नरा०' । ८ लघुभ्रातृषु । ९ क-'जातै०' । १० पक्षिभिः ।
११ क-'जल्प्य' । १२ भ्रातृणाम् । १३ वर्ष० ।

भ्राताऽग्रजन्मा गुरुवत् कुलीनै-र्मान्यस्तदाज्ञा क्रियतेऽन्वहं तत् ।
तां येऽवजानन्ति बलातिरेकात्, ते स्युर्विवेकाध्वनि नाध्वनीनाः ॥ ५९ ॥[‡]
सर्वंसहत्वेन मंहीमहेन[1]!, सहिष्यते सोऽविनयं तवैनम् ।
[3]कर्णेजपाः किन्तु गतत्रपास्तं, विस्तारयिष्यन्त्युदितावकाशाः ॥ ६० ॥
अलं खलानां खलु स स्वभाव-श्चर्वन्ति यत् ते परदूषणानि ।
किं क्वापि विड्-शूकर-कुक्कुराणां, विष्ठां विनेष्टं किमपीह दृष्टम् ? ॥ ६१ ॥[‡]
[4]द्विजिह्ववाग्घालहलावलीढा, महीपतीनां[5] हृदयप्रवृत्तिः ।
माधुर्यधुर्याऽपि भवत्यवश्यं, सम्बन्धिनां जीवितनाशनाय ॥ ६२ ॥
अत्यल्पमप्यात्मनि गोपनीयं, छिद्रं सदा क्षुद्रमदापहृत्यै ।
सूक्ष्मेऽपि तस्मिन् पिशुनाः प्रवेशं, सृजन्ति सिद्धा इव सर्वदैव ॥ ६३ ॥
गोपायितुं तत् पिशुनप्रवेशं, तत्रोपगन्तुं तव युक्तमेव ।
भ्राताऽग्रजश्चक्रिपदं प्रपन्न-स्ततस्त्रपा किं तदुपासने स्यात् ? ॥ ६४ ॥
भ्रातेत्यभीतो यदि नाभ्युपेत-स्तत्रैतदप्यञ्चति नौचितीं ते ।
आज्ञाप्रधाना हि महो दधाना, ज्ञातेयबन्धैर्न नृपा ध्रियन्ते ॥ ६५ ॥[‡]
प्रभोः प्रतापै[6]र्भरतस्य तप्ता, भृशं द्युसद्-दानव-मानवेशाः ।
छायां भुजस्योपगता विधृत्य, मूर्ध्नाऽङ्घ्रिपद्मे धृतिमाप्नुवन्ति ॥ ६६ ॥
सुधीः 'सुधर्मा'ऽधिपतिर्यमर्धा-सनप्रदानाद्[7] द्युसदां सदोऽन्तः ।
सदैव मित्रीयति तस्य तत्र, स्वीयागमेनैव सृज प्रमोदम् ॥ ६७ ॥
प्रवीरमानी बलतोऽभिमानी, नरेश्वरं यद्यवमन्यसे त्वम् ।
तत्तद्बलाम्भोनिधिमध्यमग्ना, वहत्यभावं तव वाहिनीयम् ॥ ६८ ॥[8]
[9]स्तम्बेरमास्तस्य विभोरशीति-लक्षाश्चतुर्लक्षयुता भटैः कैः ।
स्खल्या गलद्दानजलाश्चलन्तः, शैला इवोदित्वरनिर्झराढ्याः ॥ ६९ ॥[‡]
तस्येभसङ्ख्यैस्तुरगैः शताङ्गै-स्तुङ्गैस्तरङ्गैरिव दुर्विगाहम् ।
को नाम सङ्ग्राममहार्णवं स्या-दलं समुल्लङ्घयितुं भुजालः ? ॥ ७० ॥

---

१ हे पृथ्वीन्द्र ! । २ भरतः । ३ पिशुनाः । ४ पिशुनवाणीविषसंयुक्ता । ५ क-'महापतीनां' । ६ क-'प्रलपै०' । ७ ख-'प्रदानद्यु०' । ८ इन्द्रवंशा । ९ गजाः । १० प्रबल० (?) ।

कोट्योऽद्भुताः षण्णवतिस्तदीयाः, पदातयः केन रणे निवार्याः ? ।
तावत्प्रमेभ्यः किल तेन [1]ते स्व-ग्रामेभ्य एकैक इवोपनीतः ॥ ७१ ॥
एकोऽपि सेनाधिपतिः सुषेणो, निघ्नन् रणे दण्डकरः प्रचण्डः ।
द्वैराज्यकारी किमु कोऽपि सेऽस्य-मेवं यमेनापि विशङ्क्यते [2]सः ॥ ७२ ॥‡
खेरांशुचक्रं समरेषु चक्रं, सम्बिभ्रतः श्रीभरतेश्वरस्य ।
त्रैलोक्यपि स्तोकतरा नराणां, जये ततस्तस्य जिगीषुता किम् ? ॥ ७३ ॥
ज्येष्ठोऽग्रजत्वेन पराक्रमेण, स चक्रवर्त्ती तव सेव्य एव ।
त्वं चेच्चिरं जीवितराज्यकाम-स्तन्मुच्यतां [3]बाहुबलेऽवलेपः ॥ ७४ ॥

दूतं प्रति बाहुबलेरुत्तरवचनानि

अथो महाबाहुबलावलुप्त-जगद्बलो बाहुबलिर्बभाषे ।
प्रावृट्पयोवाहगभीरधीर-ध्वानप्रतानध्वनितान्तरिक्षः ॥ ७५ ॥
दूत ! त्वया युक्तमिदं यदुक्तं, वाग्मी त्वमेकोऽसि समो न तेऽस्ति ।
एवं वदेद् यः पुरतो ममापि, स्वाम्यर्थकृत् प्राणभयं न धत्ते ॥ ७६ ॥‡
सदा तदाज्ञां स्वशिरःकिरीटं, कुर्वन्तु किं नाम न ते नरेन्द्राः ? ।
यस्यानुजः स्फूर्जति वर्यशौर्यो, महामहा बाहुबलिर्बलिष्ठः ॥ ७७ ॥
भ्राताऽग्रजो नः खलु ताततुल्यः, स्वयं व्रजन् दिग्विजये पुनः सः ।
नाकारयामास कनीयसो यत्, तत् किं वयं तातनूद्भवा न ? ॥ ७८ ॥
किं चानुचर्याविनयाद् विहीनाः, किं क्वापि वीरव्रततश्च्युता वा ? ।
तन्मानसे गुर्वपमान[4]पूर्णा-[5]स्तत्रागते नो वयमागमाम ? ॥ ७९ ॥-‡युग्मम्
सुभ्रातृता चेतसि चेत् ततः किं, स स्वानुजानां प्रजिघाय दूतान् ? ।
चेज्जीवितं राज्यमपि प्रियं व-स्तदाऽग्रजं द्राग् भजतेत्युदित्वा ॥ ८० ॥
न रोचते नः समरोऽग्रजेन, समं स राज्यग्रहणाग्रहश्चेत् ।
इदं हृदन्तर्विशदं विमृश्य, श्रीतातपादान्तिकमाश्रितास्ते ॥ ८१ ॥
जग्राह राज्यान्यखिलानि तेषां, द्वेषात् परेषामिव [6]गृध्नुरेषः ।
न्ययुङ्क्त दूतं मयि तादृशेच्छो, वचःप्रपञ्चेषु विचक्षणं त्वाम् ॥ ८२ ॥
प्रव्रज्य तैर्भ्रातृभिरात्मराज्या-न्यस्यार्पयित्वा प्रमदो ददे यः ।

---

१ पदातयः । २ क-'सः' । ३ सम्बोधनात्मकमिदं पदम् । ४ समूह० । ५ क-'वाऽनु०' । ६ क-'पूर्वा तत्रा०' । ७ भरते । ८ लोभी ।

[1]मया [2]समेतेन मदीयराज्य-मादातुकामस्य न दास्यते [3]सः ॥ ८३ ॥
वर्तामहे तस्य वयं [4]मनोऽन्त-स्तद्विस्मृतिर्नैव सदाऽपि मेऽस्ति ।
नैसर्गिकी प्रीतिरियं स्थिता [5]नौ, दूरस्थयोः [6]शूरसरोजवत् तत् ॥ ८४ ॥‡
जग्राह राज्यानि कनीयसां यः, कठोरतां [7]स्फोरयसे न तस्य ।
ज्यायानसावित्यहमस्य राज्यं, शक्तोऽप्यगृह्णन् किमहो कठोरः ? ॥ ८५ ॥
गुरौ गुरुत्वे सति यो [8]विनीतः, स गौरवं पौरजने भजेत ।
गुरौ गुणैर्हीनतरे तु तस्मिन्, [9]सेवास्पृशः सङ्घटते लघुत्वम् ॥ ८६ ॥
तस्मिन् मया दिग्विजयाय याते, किं नाम पूर्ग्रामपरिच्छदादि ।
[10]दुंतं यदेषोऽविनयं त्वदीशः, सर्वंसहो हन्त सहिष्यते मे ? ॥ ८७ ॥
कर्णेजपानां वचनप्रपञ्चा, महत्तमान् क्वापि न दूषयन्ति ।
भुजङ्गमानां गरलप्रसङ्गा-न्नापेयतां यान्ति महासरांसि ॥ ८८ ॥
कृत्यान्यकृत्यान्यविचारयन्तो, ये क्षुद्रवाक्यं हृदये धरन्ति ।
श्रयन्त्यवश्यं लघु ते विनाश-मपक्वकुम्भा इव वारिगर्भाः ॥ ८९ ॥
[11]असत्प्रमादेन समुज्झिते य-श्छिद्रं मयि द्रक्ष्यति [12]भास्वतीव ।
प्राणप्रहाणप्रवणप्रयत्न-स्तस्य ध्रुवं सन्निहितः कृतान्तः ॥ ९० ॥
स्वामिन्यसेवाप्रबलं बलं हि, स्वाम्येव तावन्मम न त्वदीशः ।
स्वाम्यावयोः श्रीवृषभो द्वयोर्यत्, तस्मिन् सति स्वाम्ययमस्तु मे किम् ? ॥ ९१ ॥‡
सदा ददातीश्वरसेवकत्व-मीहा नृणां मानवतामपीह ।
देशादि तस्याहमनीहमान-स्तमानये स्वामिपदं कथं तत् ? ॥ ९२ ॥
चक्री स चक्रभ्रमतो बभूव, तन्निग्रहाद् बिभ्यति ये वराकाः ।
ते तस्य सेवां रचयन्तु तं तु, न कुम्भकारादधिकं करोमि ॥ ९३ ॥
[13]सौभ्रात्रतो यद्यपि तं भजेयं, सेवां सृजेद् बाहुबलिर्भियेति ।
तथापि सम्भावयते जनोऽयं, दूत ! त्रपेयं महती न किं मे ? ॥ ९४ ॥
कुतोऽपि यद्यस्य न विद्यते भी-स्तद् भ्रातुरु[14]द्भातु ततः कुतो मे ? ।

---

१ क-'मायासमेतेन' । २ सन्मुखमागतेन । ३ प्रमदः । ४ क-'मनौवतद्वि०' । ५ आवयोः । ६ सूर्य-कमलयोरिव । ७ प्रकाशयसे । ८ ख-'विनेयः' । ९ जनस्येति शेषः । १० उपद्रवः कृतः । ११ क-'असत्प्रसादेन' । १२ यः सूर्ये छिद्रं पश्यति स शीघ्रं म्रियते । १३ सुबन्धुत्वात् । १४ उद्भवतु ।

आज्ञेश्वरत्वं यदि तस्य तन्मा-माज्ञापयत्वस्ति समर्थता चेत् ॥ ९५ ॥
काङ्क्षन् ममोपास्तिमयं निषेध्यो, निषेव्यमाणो नृ-सुरा-ऽसुरौघैः ।
मृगाधिपत्यं विदधन्मृगेन्द्रो, भजेत भङ्गं श[1]रभाजिभाजी ॥ ९६ ॥
यत् तातभक्तो [2]हरिरासनार्द्धे, तमासयेत् तातसुतेषु मुख्यम् ।
स देवभक्तैः शिरसा धृतस्य, [3]शेषासुमस्येव न त[4]त्प्रभावः ॥ ९७ ॥
दूरेऽस्तु तावत् पृ[5]तना ममेयं, कल्पान्तकालोल्बणतां प्रपन्नः ।
महाबलस्तद्बलतोयराशि-मेकोऽप्यहं क्षोभयितुं क्षमोऽस्मि ॥ ९८ ॥
पदातयोऽश्वाः क[6]रिणः शताङ्गाः, सैन्यस्य भर्त्ता भरतोऽपि सर्वे ।
मयि प्रयान्तु प्रलयं मनोऽन्त-र्भवस्य भावा इव तत्त्वभाजः ॥ ९९ ॥
ज्यायानसौ नास्य महीं ग्रहिष्ये, मयेत्युपैक्षि प्रणयाश्रयेण ।
त्वं याहि दूत! त्वरितं समेतु, स्वयं स एवार्पयितुं ममैता[7]म् ॥ १०० ॥
उत्थापितो वेत्रभृ[8]ताऽथ सभ्यै-र्भूपैरिताज्ञोद्धुरपाशब[9]द्धैः ।
निरीक्ष्यमाणोऽतिरुषाऽरुणाक्षैः, स पर्षदन्तार्निरगात् सुवेगः ॥ १०१ ॥

बाहुबलिना सह सङ्ग्रामार्थं भरतस्य प्रयाणम्

दूतेन तेन त्वरितं समेत्य, तस्मिन् स्वरूपे कथिते यथार्थे ।
चकार चक्री चतुरङ्गरङ्ग-द्दै[10]न्यसैन्योऽनुमतिं प्रयाणे ॥ १०२ ॥
प्रवाद्यमाना प्रसभं प्रयाणा-रम्भाय भम्भाऽद्भुतनाददम्भात् ।
सामन्तसेनापतिभूपतीना-माह्वानस[11]न्तानमिवाततान ॥ १०३ ॥
तदैककालं त्वरया प्रयाण-तूर्याण्यवाद्यन्त सहस्रशोऽथ ।
तेषां निनादाः परमां समृद्धिं, शब्दैकजात्या मिलिताः समीयुः ॥१०४॥
प्रयाणतूर्यध्वनिरूर्जितश्री-र्ममैक एवैष गुणो जयीति ।
पित्रेव पुत्रो दिविषत्पथेन, स[12]र्वाङ्गमालिङ्ग्यत सङ्गतेन ॥ १०५ ॥
तन्नादसञ्ज्ञामिलितैः शताङ्ग-तुरङ्ग-मातङ्ग-पदातिवीरैः ।
पराक्रमांशैरिव मूर्त्तिमद्भिः, समं नरेशो निरगान्नगर्याः ॥ १०६ ॥

---

१ अष्टापदयुद्धकारी । २ इन्द्रः, सौधर्माधिपतिः । ३ निर्माल्यपुष्पस्येव । ४ भरतस्य महत्त्वम् । ५ सैन्यस्यैको विभागो यत्र २४३ शताङ्गाः, २४३ मतङ्गाः, ७२९ तुरङ्गाः, १२१५ पदातयश्च । ६ ख-'करिणस्तु रङ्गाः' । ७ महीम् । ८ क-'भृतावसभ्यै-' । ९ क-'रुद्धैः' । १० ख-'सेनो' । ११ परम्परामिव । १२ शब्दाद्वैतमयमाकाशं जातम् ।

जयो नु मूर्त्तो जगतीश्वरस्य, ससार सेनापतिरत्नमुर्व्याम् ।
पुरःसरं व्योमचरं तु चक्र-रत्नं प्रतापस्तनुमाश्रितो नु ॥ १०७ ॥
घण्टारवापूर्णनभोऽन्तरालः, प्रचण्डशुण्डालहरीकरालः[1] ।
गजव्रजोऽब्धिर्ध्वजफेनशाली, कल्पान्तकालोल्लटि(लि ?)तोऽन्वचालीत् ॥
दन्तावलाम्भोदमदाम्बुवर्षे-र्ज्वलद्विपक्षावनिभृन्महोऽग्निः[2] ।
[3]निर्वापितस्तद्बलधूलिभारै-र्धूमप्रचारैरिव पूरिता द्यौः ॥ १०९ ॥
स्वरेण वर्णेन च नश्चिनोति, स्पर्द्धां घनो यः खलु तस्य पोष्याः ।
अमी द्रुमास्तेन मतङ्गजास्तान्, व्यमूलयन्मार्गरुधः क्रुधोग्राः ॥ ११० ॥
असिं [4]विकोशं त्रसता रयेण, नरेण पश्चाद् विधृतं करेण ।
करी करे केशकलापकस्य, भ्रमाद् गृहीत्वाऽत्यजदाशु दीर्णः ॥ १११ ॥
किमर्णवेनोत्तरलास्तरङ्गा-स्तुरङ्गमीकृत्य नृपाय दत्ताः ? ।
किं किन्नरा वाऽश्वमुखा-ऽश्वदेहाः, पूर्णाश्वरूपा नृपसेवयाऽऽसन् ? ॥ ११२ ॥
ज्योतिःसुरैर्वा स्वविमानवृन्दा-देतेऽर्पिताः किं नृपपर्युपास्त्यै ? ।
किं वा नवभ्यो नृपतेर्निधिभ्यो, वशंवदेभ्यः स्वयमाविरासन् ? ॥ ११३ ॥
अस्यैव किं वैक्रियशक्तितो वा, बभूवुरेते बहुरूपभाजः ? ।
इत्यूहिता विश्वजनैर्बहुत्वा-न्महीतलं तैस्तरिरे तुरङ्गाः ॥ ११४ ॥-विशेषकम्
न सन्निभोऽस्मां भरतस्य भूमौ, [6]स्वःश्वभ्रयोस्तं विनिभालयामः ।
इतीव दिव्युल्ललनं व्यतन्वन्, क्षितिं च चख्नुस्तुरगाः खुराग्रैः ॥ ११५ ॥
कश्चित् पुरस्तात् पतितं भयेन, बालं समालोक्य रयाश्रयोऽश्वः ।
उदञ्चिताग्रक्रम एव पश्चात्-स्थिरांहिरस्थाल्लिखितो नु [7]बिम्बे ॥ ११६ ॥
हयांह्रिखातस्थपुटस्थलोत्थ-रेणुप्रपूर्णासु तरङ्गिणीषु ।
समीकृतासु द्विपपादपातैः, पथा सुखेनैव रथाः प्रचेलुः ॥ ११७ ॥
स्वस्वामिनोऽस्मद्रथिनोऽनृणीत्वं, यास्यन्ति [10]युद्धैर्विजयं प्रदाय ।
इतीव नृत्यं दधतो ध्वजाग्र-हस्तै रथौघाः प्रचलैः प्रचेलुः ॥ ११८ ॥
शनैः स्थलाग्राणि समारुरोह, वेगात् तु तेभ्योऽवततार लोकः ।

---

१ क-'मुण्डालहरीतकालः' । २ क-'ऽग्नेः' । ३ क-'निर्वासितस्तद्बल०' । ४ विगतः कोशो यस्य स तम्, नग्नम् । ५ आच्छादयामासुः । ६ स्वर्गे पाताले च । ७ ख-'चित्रे' । ८ क-'घात०' । ९ क-'नृणत्वं' । १० क-'शुद्धै०' ।

आरोहणं तेष्ववरोहणं वा, रथास्तु तेनुर्विपरीतवृत्त्या ॥ ११९ ॥
आनिन्यिरे किं भरतेश्वरेण, द्वीपान्तरेभ्योऽपि गणा नराणाम्? ।
इति त्वरातारपदा पदाति-परम्पराऽशङ्कि विलोकिलोकैः ॥ १२० ॥
वृताावृताद्धोरुभिरुग्रकच्छैः, प्रलम्बसङ्कीर्णपदैर्भटौघाः ।
नृत्येन चेलुः स्फुरघर्घरा[1]ली-घनस्वनाः [2]शून्यभिदोऽभिघातैः ॥ १२१ ॥
अश्वेन कामप्रसराभिराम-रयस्पृशा स्फूर्जितकूजितेन ।
क्षता नखाग्रैर[3]चलां चकम्पे, स्वेदार्द्रदेहेव मदैर्द्विपानाम् ॥ १२२ ॥
ललङ्घिरे याः पथि दीर्घकष्टा-न्मदोदकैः पूरमि[4]ताः करीन्द्रैः ।
तुरङ्गमैस्ताः सरितः सुखेन, खुरोत्थरेणुप्रकरेण पूर्णाः ॥ १२३ ॥†
वाहाङ्घ्रिखातक्षितिरेणुभारैः, स्फारेऽन्धकारे नृभिरित्यशङ्कि ।
जवादिवास्तं किमवापदर्को, भेरीरवत्रस्तरथाश्ववेगात्? ॥ १२४ ॥
जाते रजोमण्डलधू[5]मयोनौ, विद्युद्विलासायितभल्लभासि ।
चलत्पताकापटलीबलाका-कुले किलानृत्यत केकिपङ्क्त्या ॥ १२५ ॥
रजश्चये चुम्बति चञ्चलेऽभ्र-न्मालिन्यमुच्चैः ककुभां दिवोऽपि ।
सुनिर्मला एव बभुः पताका-[7]स्तं दूरयन्त्यः क्रुधयेव कम्प्राः ॥ १२६ ॥
उल्लङ्घितग्राम-पुरा-ऽद्रि-ऽरण्यः, क्रमेण देशं 'बहलीं' नरेशः ।
निरस्तसंसारविकारभारः, शमी सुखास्वादमिवाससाद ॥ १२७ ॥
एतस्य देशस्य [8]ततः प्रवेशे, निवेशयामास नृपो निवासान् ।
तृणत्रिमार्गातरुरामणीये, मणीन् [9]सरस्वानिव तीरसीम्नि ॥ १२८ ॥
अनु स्वभूमीशनिवासमाशु, सेनाचरैः स्वे ददिरे [10]निवासाः ।
स्वयं कषायेन्द्रियजैर्यथाऽनु-मोहप्ररोहं [11]विविधैः प्रकारैः ॥ १२९ ॥
अलक्षितोत्पाटनरोपकाला, [12]अलोकि पश्चादिव ताडितैव ।
यथाक्रमं चीरमयाऽऽलयाऽऽलि-र्द्रुतं दिवोड्डीय [13]किलागताऽग्रे ॥ १३० ॥†
सेनाजनः काञ्चनकेतुचिह्नं, निकेतनं पूर्वमुपेत्य राज्ञः ।
जनानपृष्ट्वैव ततः क्रमेण, ययौ निवासं निजमेव धीमान् ॥ १३१ ॥

---

१ क-'रावली-' । २ आकाशभिदः । ३ पृथ्वीम् । ४ क-'न्मनोरथैः' । ५ प्रासाः ।
६ मेघे । ७ रजश्चयम् । ८ क-'नृपः प्रदेशे' । ९ समुद्रः । १० क-'प्रवासाः' ।
११ क-'विविधैर्विकारैः । १२ ख-'व्यलोकि' । १३ क-'कलागता' ।

पुरा क्रमेणैव लसन्निवेशे, सैन्ये गुरौ [1]स्वस्वमगारमश्वाः ।
विनैव वल्गां रुचिवल्गनेन, निन्युः स्वयं विस्मयिनोऽश्ववारान् ॥ १३२ ॥
भरे यथाऽऽरोहति भूरिरावाः, निरस्यमाने [2]रवणास्तथाऽऽसन् ।
सदैव सर्वाङ्गबहिर्मुखानां, हिताहितज्ञानपराङ्मुखत्वम् ॥ १३३ ॥†
अभीक्ष्णमु[3]क्ष्णां त्रसतां बलेन, [4]गोण्योऽध्यरोप्यन्त घनैर्जनैर्याः ।
अपातयत् ताः सुखमेक एवा–धिरोपकः पातयितुः क्व तुल्यः ? ॥ १३४ ॥
यथा सपर्याणतुरङ्गिसङ्ग–स्तुरङ्गमो विस्फुरितानि तेने ।
तथा न पर्यस्तसमस्तवस्तु–स्तेजस्विनोऽन्याक्रमणे हि तेजः ॥ १३५ ॥
कुचद्वयीमूलमिलत्कराग्रैः, प्रियैः प्रियाः कण्ठनिलीनहस्ताः ।
जवादवातारिषत क्ष[5]णाप्त–परस्पराश्लेषसुखं ह[6]रिभ्यः ॥ १३६ ॥†
पुरा यथाऽऽरोपिषत क्रमस्था–र्पणादवातारिषतैव तद्वत् ।
निषादिनो दन्तिभिरर्दिनोऽपि, क्रमोऽयमुच्चैः शिरसां स्वकेषु ॥ १३७ ॥†
रथ्यान् स्थिरीकृत्य वटेऽवतीर्य, स्थिते प्रभौ यात्रिकवे[7]षभाजि ।
[8]पूर्वं प्रयाणाय नियोजितं स्वं, [9]ते मेनिरेऽध्वागमनैरखिन्नाः ॥ १३८ ॥
घनाध्वखिन्नैरपि कौतुकेनो–त्थितैरखिन्नैरिव सैनिकौघैः ।
वृतोऽपि तन्नेत्रकुतूह[10]लिन्या, पत्न्या गिराऽरक्षि मृगः प्रियेण ॥ १३९ ॥
यावज्जनो नैव समेति तावद्, वणिग्जनः प्राग् विपणिं वितत्य ।
गुर्वादरं बालगिराऽभ्युपेता–नाजूहवत् पण्यमृगेक्षणेव ॥ १४० ॥
क्वचिज्जलाय क्वचिदिन्धनाय, क्वचित् कणाय क्वचिदग्नयेऽपि ।
गते समग्रेऽपि जने गृहेशा, मुदं वहन्ति स्म वधूसहायाः ॥ १४१ ॥†
कोऽप्यग्निदुर्भिक्षमवेक्ष्य चक्रे, [11]शमीद्रुमाद् वह्निकणप्रकाशम् ।
रयेण रङ्का इव तद्ग्रहाय, जनाः समीयुः शतशस्तदन्ते ॥ १४२ ॥
मार्गप्रसक्तान् श्रमतोयबिन्दून्, समूलमुन्मूल्य समं समन्तात् ।
रामातनूभूमिषु सार्वभौमा, बभुर्नदीमारुतशीकरौघाः ॥ १४३ ॥
अतीव तीव्रं तरणेरवाप्य, [12]क्लान्ताः करालिङ्गनमुत्पलाक्ष्यः ।

---

१ ख–'स्वं स्व०' । २ संराविणः । ३ बलीवर्दानाम् । ४ 'गुणीओ' इति भाषायाम् । ५ क–'क्षणान्त–' । ६ अश्वेभ्यः । ७ क–'देवभाजि' । ८ क–'पूर्वप्रयाणाय' । ९ रथ्याः । १० क–'हलिन्याः पत्न्यामिरा०' । ११ क–'समीभ्रमाद्' । १२ खिन्नाः ।

अमूमुदन्मन्दमम्[1]ूश्चमूषु, धुताब्जनीरा द्युधुनीसमीराः[2] ॥ १४४ ॥
स्नानाय पानाय घनाध्वयानाद्, रजोऽतिरुग्ला(ग्णा ?)श्च तृषाजुषश्च ।
नागा नगेन्द्राङ्गभवा नगा नु, समीपमीयुर्द्युधुनीभगिन्याः ॥ १४५ ॥
स्मेरस्फुरत्पुष्करसौरभाढ्यं[3], स्वपुष्करेण[4] द्विरदा गृहीत्वा ।
पपुर्नदीपुष्करपूरमुच्चै[5]-स्ततोऽक्षिपन् वर्ष्मसु[6] पुष्करेण ॥ १४६ ॥
भ्रान्त्वा मदान्धो विषयान्तराले, लुब्धैर्विलोलैर्मधुपैः[7] परीतः ।
प्रकामतप्तो न्यपतद् ह्रदान्तः, करी शरीरीव भवार्णवान्तः ॥ १४७ ॥
स्रोतस्विनीस्रोतसि[8] पुष्कराणि, निर्मूल्य सर्वाङ्गमिभा न्यमज्जन् ।
तेषाममग्नानि करोरुनाला-ग्रगान्यभूवन् नवपुष्कराणि ॥ १४८ ॥
आपो ह्रदन्तः स्थितमेतदीय-सिन्दूरपूरैररुणाः करीन्द्रम् ।
धृतानुरागा इव जातकम्पाः, समालिलिङ्गुर्लहरीकराग्रैः ॥ १४९ ॥
शुण्डाभिरामग्रमतङ्गजानां, श्यामप्रभाभिः सरलीकृताभिः ।
कलिन्दकन्यालहरीपरीता[9], इव व्यराजन् द्युधुनीतरङ्गाः ॥ १५० ॥
निपीय पानीयचयं तदीय-सङ्गाद[10]तिश्यामतमाऽङ्गकान्तिः ।
अभ्रावलीवेभघटारदाली-स्फुरद्बलाका निरगाद् द्युनद्याः ॥ १५१ ॥
महत्तमा एव महत्तमानां, सदैव सम्मर्दसहा भवन्ति ।
इति प्रकाण्डेषु महातरूणां, बबन्धिरे हस्तिपकैर्द्विपेन्द्राः ॥ १५२ ॥†
मुहुः समग्राहिषत द्विपेन्द्रा, निषादिभिश्चाङ्कुभरेण भोगम् ।
ध्रुवं भवन्ति स्वहितेऽपि हीना-ग्रहा महान्तो महनीयवृत्ताः ॥ १५३ ॥†
पुरा पदाग्रैर्धुतया[11] नतास्या, विनिःश्वसन्त्यङ्कविवर्त्तवृत्तिः ।
जवाज्जनन्येव निवृत्तखेदा, व्यधायि सर्वसहया हयालिः ॥ १५४ ॥†
आपोऽभिलग्नाः सरितः प्रसङ्गाद्, विनिर्गतैः स्नानसमुज्ज्वलाङ्गैः ।
बाढं विमुक्ताः परिधूय वाहै[12]-र्महस्विनो हि व्यसनेन सक्ताः ॥ १५५ ॥
नरप्रमाणैर्ग्रथितासु कीलै-स्तृणालिगुप्ताजिनवल्लिकासु[13] ।
तुरङ्गमान् हस्तयुगान्तरालान्, गुणैरबध्नन्त तुरङ्गपालाः ॥ १५६ ॥†

---

१ उत्पलाक्षीः । २ स्वर्गीयगङ्गापवनाः । ३ कमल० । ४ शुण्डया । ५ जल० । ६ देहेषु । ७ भ्रमरैः, पक्षे मद्यपैः । ८ प्रवाहे । ९ 'यमुना'तरङ्ग० । १० क-'मङ्क्षा-दति०' । ११ क-'द्रुतया' । १२ अश्वैः । १३ अश्वानां मण्डपविशेषेषु ।

खरैः खुराग्रैः खनतां धरित्रीं, सहर्षहेषारवकारकाणाम् ।
इतस्ततः सञ्चरतामबन्धि, तुरङ्गमाणां वदनेषु भोगः ॥ १५७ ॥†

यन्नीरपानेन यदीयतीर-दूर्वाऽदनेनास्ततृषाक्षुधार्त्तिः ।
तटानि तस्याः सरितो व्यभिन्दन्, शृङ्गैर्वृषा धिक् तरुणप्रमादम् ॥१५८॥

विहाय वृक्षान् सहकारमुख्यान्, क्रमेलकाः कण्टकिषु द्रुमेषु ।
अरं चरन्ति स्म [1]चिरं प्रमोदा-दसद्रतिः साधुरतिं क्व धत्ताम् ? ॥१५९॥†

संस्पर्धतेऽसज्जनिकर्तुरेष, नाम्ना च धाम्ना च किल क्रुधेति ।
महानसोत्थैः प्रतिधाम [2]धूमै-र्व्यधीयत व्योमनि चित्रभानुः ॥ १६० ॥

स्वस्मै मुहुः सज्जितमोदनादि, प्रदाय पश्चात् पतितागतेभ्यः ।
स्वेभ्यः परेभ्योऽपि पुराऽभ्युपेतैः, स्वयं ततोऽ[3]भुञ्जत वासरान्ते ॥१६१॥

भरतेन सह युद्धाय बाहुबलेः प्रयाणम्

तत्रागतं चक्रिणमुग्रचक्रं, मत्त्वा [4]सुनन्दाऽऽत्मभवोऽपि भम्भाम् ।
अवादयद् यत्प्रतिनाददम्भाद्, भूपं दिशन्ति स्म दिशोऽपि गन्तुम् १६२

अथ प्रयाणाय शुभे मुहूर्त्ते, मूर्तं निजं मानमिवातितुङ्गम् ।
सदेहमुत्साहमिवारुरोह, रोहन्महा बाहुबलिर्द्विपेन्द्रम् ॥ १६३ ॥

स्वाङ्गोद्भवैर्भीष्मतरप्रताप-तारैः कुमारैः परितः परीतः ।
मध्याह्नमार्तण्ड इवांशुदण्डै-श्चण्डैर्नरेन्द्रोऽजनि दुर्निरीक्ष्यः ॥ १६४ ॥‡

बलान्वितो बाहुबलिर्विलोल-रथा-ऽश्व-पत्ति-द्विप-नक्रचक्रः ।
कल्पान्तपाथोधिरिवाथ तूर्यै-श्चचाल वाचालदिगन्तरालः ॥ १६५ ॥

परैरजेयान् स्वबलैरमेया-नुत्कण्ठितान्तःकरणान् रणाय ।
अभ्यागतान् भूमिभुजो भुजालान्, मेने तदा बाहुबलिः स्वतुल्यान् ॥

चलत्यलं बाहुबलेर्बलेऽस्मिन्, पृथ्वीमपृथ्वीं प्रथयत्यपारे ।
[5]भूमीभृतां कम्पभृतां भियेव, शीर्षाणि पीठे लुलुठुः पृथिव्याः ॥१६७॥

बलाधिपे बाहुबलौ बलिष्ठे, जेष्यामि शत्रूनहमेक एव ।
प्रत्येकमूष्मेत्यभवद् भटानां, तीव्रे रवौ [6]व्युपला ज्वलन्ति ॥ १६८ ॥

---

१ ख-'चिरप्रमोदा' । २ क-'धूपै-' । ३ क-'भुज्यत' । ४ बाहुबलिः ।
५ पर्वतानां, पक्षे राज्ञाम् । ६ सूर्यकान्तमणयः ।

शौर्योल्बणे बाहुबलावधीशे, सर्वेऽपि शौर्यैकरसा बलेऽस्मिन् ।
[1]आकाहलावादकमप्यभूवन्, पूर्णे सरस्युत्पयसोऽन्तकूपाः ॥ १६९ ॥
दूरेऽपि शीघ्रं निजदेशसीम्नि, महाबलो बाहुबलिर्जगाम ।
स्वभूमिमाक्रामति शत्रुभूपे, स्याद् वीरमानी किमु मन्दगामी ? ॥१७०॥
निवेशयामास स नातिदूरे, न वाऽतिपार्श्वे भरतस्य सैन्यात् ।
'गङ्गा'तटे बाहुबलिः स्वसेनां, पराशये च स्वबलाभिशङ्काम् ॥ १७१ ॥
अथो मिथोऽपि प्रधनोत्सवाय, प्रेक्षासमेष्यद्दिविपद्गणाय ।
उभौ प्रभातोपरि 'मागधे'न्द्रै-[2]र्निमन्त्रितौ श्रीवृषभात्मजौ तौ ॥१७२॥

सैन्यद्वये स्वाम्यनुशास्तिः

नक्तं ततो बाहुबलिर्बलान्त-[3]र्भूकान्तवृन्दानुमतेन स्वतुम् ।
[4]महौजसा सिंहमिवाप्रधृष्यं, सेनापतिं सिंहरथं चकार ॥ १७३ ॥
स मूर्द्धबद्धेन हिरण्मयेन, बभौ भटेन्द्रो रणपट्टकेन ।
द्विड्वारसंहारकृतेऽङ्गगर्भा-[5]दूर्ध्वङ्गतेनैव ततेन धाम्ना ॥ १७४ ॥
स्वयं समीकाय समुत्सुकानां, शिक्षां परेषामपि भूपतीनाम् ।
सत्कारसारां नृपतिः प्रतेने, मेने पुनः सत्करणं रणं तैः ॥ १७५ ॥
समग्रभूमीपतिसम्मतेन, सङ्ग्रामदीक्षां भरतेश्वरोऽपि ।
दत्त्वा सुषेणस्य सुखेन मेने, विनिर्जितानेव हृदा[6]ऽभिजातीन् ॥ १७६ ॥
ततः कुमारान् रिपुमारसारान्, धराधिनाथान् मुकुटेद्धमूर्ध्नः ।
आहूय वीरानपरानपीति, तेभ्यो ददौ श्रीभरतोऽनुशास्तिम् ॥ १७७ ॥
महौजसो ! हे महनीयवृत्ता !, रणे प्रवृत्तेऽत्र ममा[7]ऽनुजस्य ।
सुषेणसेनापतिरग्रमत्तै-र्युष्माभिरेकोऽहमिवानुगम्यः ॥ १७८ ॥
भो भो भवद्भिर्भुजदुर्मदास्ते, भूयस्तरा भूमिभुजोऽभिभूताः ।
न तेष्वभूत् 'तक्षशिला'क्षितीश-पदातिमात्रस्य समोऽपि कोऽपि ॥१७९॥
सोमो गजश्रेणिमिवार्णनाथो, घनाघनालीमिव मारुतौघः ।
ज्येष्ठः सुतो बाहुबलेः श्रुतोऽलं, प्रक्षेप्तुमेकोऽपि विपक्षसेनाम् ॥१८०॥

---

१ काहलावादिवादकमभिव्याप्य । २ क-'निमन्त्रयामास पुराऽऽर्षभौ तौ' । ३ नृपसमूहसम्मतेन । ४ क-'महौजसां' । ५ क-'दूर्ध्वागते०' । ६ शत्रून् । ७ बाहुबलेः । ८ सिंहः ।

महारथः सिंहरथः कनीयान्, तस्याकनीयांस्तु पराक्रमेण ।
क्षणेन विद्वेषिगणं क्षिणोति, दुष्कर्मसम्मर्दमिवात्मबोधः ॥ १८१ ॥
[1]बलोच्चये बाहुबलेर्महीन्द्राः!, पुत्रेषु पौत्रेष्वपरेष्वपीह ।
एकैक एव त्रिजगत्समक्ष–[2]मक्षौहिणीं क्षोभयितुं क्षमोऽस्ति ॥ १८२ ॥
विश्वत्रयस्वामिसुतोऽस्ति यस्तु, ममानुजो बाहुबलिर्महीन्द्राः! ।
सदाऽनुभूतं प्रवदामि तुल्यो, नास्य द्युसद्-दानव-मानवेषु ॥ १८३ ॥
बाहोर्बलात् कर्करकानुकार–क्ष्माभृद्गणे बाहुबलौ रणेषु ।
हन्तुं प्रवृत्ते पुरतः क्रुधा न, धत्ते ध्रुवं [3]वज्रधरोऽपि वज्रम् ॥ १८४ ॥
'वैताढ्य'माक्रम्य कृतः क्षितीशाः!, 'किरात'वीरेषु पराक्रमो यः ।
विद्याधरेषूग्ररणेषु यो वा, ततोऽधिकं सम्प्रति सन्तनुध्वम् ॥ १८५ ॥
इति प्रभोः प्रौढतरप्रसाद–पीयूषवर्षस्य गिरोऽभिषेकात् ।
वीरव्रतस्याङ्कुरमालिके[4]र्वं, [5]क्षेत्रेषु तेषां पुलकालिरासीत् ॥ १८६ ॥
सैन्यद्वये स्वाम्यनुशास्तिमेवं, लब्ध्वा ययुर्धाम निजं निजं ते ।
स्वस्वायुधानि स्वय[6]मर्चयित्वा, तूर्यारवैर्जागरणं च चक्रुः ॥ १८७ ॥
प्रातःस्पृहा हन्त दिवा प्रहारै–मैते प्रवीराः प्रलयं प्रयान्तु ।
इतीव तेषां कृपया प्रकामं, सहस्रयामाऽजनि सा [7]त्रियामा ॥ १८८ ॥
जगत्त्रयीशाङ्गजयोस्तयोर्नु, सैन्यद्वये वीरपरम्पराणाम् ।
समीक्षितुं शौर्यविजृम्भितानि, प्राक्शैलमौलिं रवि[8]रारुरोह ॥ १८९ ॥
क्षुब्धोत्तरङ्गाऽऽतुरनक्रवार्द्धि–र्भूचुम्बिचूलोपललोलशैलः ।
त्रस्ताश्वधृत्याकुलसूतसूर्य–स्तूर्यप्रणादोऽजनि सैन्ययुग्मे ॥ १९० ॥
प्रभुप्रसाद[9]र्णमहार्णवस्य, यियासवः पारमपारशौर्याः ।
सरोमहर्षा रणतूर्यरावै–र्वीरा रणोर्वीं प्रति चेलुरुत्काः ॥ १९१ ॥
युद्धे यियासोर्जननी सुतस्य, भालस्थले यं तिलकं चकार ।
[10]तस्य प्रभावेण रणेषु जिष्णो–रमुष्य रेखा सुभटेषु [11]सोऽभूत् ॥ १९२ ॥

---

१ सेनासमूहे । २ २१८७० गजैः, २१८७० रथैः, ६५६१० तुरङ्गैः, १०९३५० पत्तिमिश्र समेतां सेनाम् । ३ इन्द्रः । ४ क–'केषु' । ५ शरीरेषु । ६ क–'मर्थयित्वा' । ७ रात्रिः । ८ ख–'रासंसाद' । ९ ऋणरूपमहासागरस्य । १० तिलकस्य । ११ तिलकः ।

सङ्ग्रामदीक्षा

काऽप्याह पुत्रं तव तात[1] ! तात-मातामहौ वीरपती प्रतीतौ ।
ततस्तथा विक्रममादधीथा, यथा मम स्यान्न कलङ्कपङ्कः ॥ १९३ ॥
रणोत्सुकं वीररसं नु मूर्त्तं, काऽपि प्रयान्तं तनयं निरीक्ष्य ।
प्रीतेति मेनेऽस्य पराक्रमेण, प्राप्स्ये सतीपङ्क्तिशिरोमणित्वम् ॥ १९४ ॥
ज्येष्ठस्य पुत्रस्य च तत्पितुश्च, पुरः परा प्राह सुतं कनिष्ठम् ।
तथाऽद्य युध्यस्व यथाऽनयोः स्याद्, भ्राता ममेत्यात्मभवो ममेति १९५
आश्लिष्य मां यासि रणाय जित्वा, प्राप्तः पुनः श्लिष्यसि धूलिलिप्तः ।
आलिङ्ग्य तद् याहि पुनः समेतु-मिति प्रियं यान्तमुवाच काचित् ॥१९६॥
काऽपि प्रियं प्राह सदाऽवदस्त्वं, त्वं प्राणतुल्याऽसि ममेति सत्यम् ।
सन्त्यज्य यन्मां चलितोऽसि धीर !, प्राणानपि त्यक्तुमना रणोत्कः १९७
त्वं प्राणतः किन्त्वधिको ममासि, त्यक्त्वा यदेतांस्तृणवत् क्षणेन ।
त्वामेव संसेवितुमाश्रयिष्ये, स्वर्गाङ्गनामानसशल्यतुल्या ॥१९८॥—युग्मम्
प्रियापरप्रेममयोरुपाशं, विकृत्य कृष्टा रणवाद्यनादैः ।
मात्राऽऽशिषा सत्कवचेन धीरा, वीरा रणोर्व्याभरणीबभूवुः[2] ॥ १९९ ॥
श्रीमद्युगादिप्रभुनन्दनौ तौ, सान्नाह्य हस्तीन्द्रधृताधिरोहौ ।
सञ्चेरतुः स्वस्वचमूसमूहे, सुरासुरेन्द्राविव दुर्निरीक्ष्यौ ॥ २०० ॥
अथात्मनाथानुमतौ मिथोऽभि-सञ्चेलतुः सैन्यसमुच्चयौ तौ ।
पक्षद्वयोद्यत्पवमाननुन्नौ, पयोधिवीचीनिचयाविवोच्चैः ॥ २०१ ॥
विस्फुट्य वीरा बहिरापतन्तः, सञ्चारितास्ते पुनरन्तरेव ।
नृपस्य वेत्रिप्रकरैस्तरङ्गा, वेलाप्रदेशैरिव वारिराशेः ॥ २०२ ॥
द्रष्टव्यमेव मृधमद्य[3] सुरा-नित्याह्वयन्त इव केतुकरैः ।
धुर्याश्वशब्दमदहासभृतो-ऽन्योन्यं रथा रथजुषां मिलिताः ॥ २०३ ॥[5]
अश्वै रणद्विगुणवेगलयं, चित्तं विदद्भिरिव पृष्ठजुषाम्[6] ।

---

१ हे वत्स ! । २ क–'भरणाबभूवुः' । ३ युद्धम् । ४ फेन० । ५ 'उत्थापनी–' च्छन्दः, 'तभजलगा उत्थापनी' इत्येतल्लक्षणं छन्दोऽनुशासने (१४८) । ६ अश्ववाराणाम् ।

सद्यो निमेषचलचंञ्चलदृक्–पक्ष्मत्वरैरुभयतो मिलितम् ॥ २०४ ॥[२]
असदृद्दढक्रमभरेण भवत्, मा स्म व्यथा जगति नागततेः ।
इत्यस्पृशन्त इव भूमितलं, नागाः पदैर्मदभृतोऽभियुः ॥ २०५ ॥[३]
गीते गजेन्द्रमदभृङ्गकृते, वाद्ये तु हृष्टहयनादमये ।
सभ्याऽमरोच्चयमचालि भटै–रभ्यासिभिर्युधि नटद्भिरिव ॥ २०६ ॥[४]
आकृष्टमेव सुभटस्य परे–ऽपश्यन् धनुः पतत एव शरान् ।
प्रद्योतनस्य परिवेषमिव, [५]क्षीवानिव[६] प्रतिदिशं च करान् ॥ २०७ ॥[७]

आश्चर्यं किमिव तदा यदाऽऽशु पेतु–र्दन्तीन्द्रा रणभुवि वीरसिंहनादैः ।
उत्पश्याः सुरकरिणोऽपि यत् तदाऽऽसन्, किं व्योम त्रुटितमिति प्रकम्पमानाः ॥[८]
कस्मिंश्चिद् गदति जगत्त्रयैकरौद्रं, शत्रूणां न गलितमायुधं करेभ्यः ।
यत् तेषां भयभरनष्टजीवितानां–मत्यर्थं व्यदधत मुष्टयो दृढत्वम् ॥ २०९ ॥
उन्मुक्ता युधि सुरमार्गमुल्लिखन्त–श्छिन्दाना भटपटलानि वीरबाणाः ।
पातालेऽप्यवनिभिदस्तदा विशन्तः, क्षोभाय ध्रुवमभवन् जगत्त्रयेऽपि ॥ २१० ॥
केऽप्युच्चैरसिफलकेन केऽपि [१०]दोष्णा, केऽप्यक्ष्णा भ्रुकुटिकलाकरालितेन ।
केऽप्यङ्गप्रचलनवायुनैव विष्वक्, केनापि द्रुतमिति जघ्निरे विपक्षाः ॥ २११ ॥
तद्व्यूहद्वयसुभटाः कटुप्रणादं, द्वन्द्वेन व्यदधत युद्धमु[११]द्धताङ्गाः ।
शस्त्रौघस्खलनभुवस्तदा स्फुलिङ्गाः, खद्योतश्रियमसृजन् रजोऽन्धकारे ॥ २१२ ॥
वीराणां शिततरकाण्डचण्डपातैः, [१२]पोगण्डं सकलमवेक्ष्य शत्रुसैन्यम् ।
यद् देवा दिवि हसितं व्यधुस्तदानीं, त[१३]त्तेजः स्तबक इवाधुनाऽपि चन्द्रः ॥ २१३ ॥
कोऽप्येकः सह सहसा जयश्रियोच्चैः, प्रक्रीडां व्यधित विरोधिवाहिनीषु ।
सम्पातप्रमदगदाहतेभराजी–कुम्भोद्यन्मणिकपटोत्थितताम्बुबिन्दुः ॥ २१४ ॥
वर्षन्तो युधि रुधिरच्छटास्तदानी–मुत्क्षिप्ता झगिति मतङ्गजा भुजालैः ।
विद्वेषिक्षितिपचमूषु किञ्चिदुच्चै–रुत्पातं दिवि जलदा इवाचचक्षुः ॥ २१५ ॥
बद्धस्य प्रसृमरसैन्ययुग्मबाणैः, किं ब्रूमो दिवि नवमण्डपस्य दार्ढ्यम् ? ।
येनासौ दिशि दिशि वीरदोर्विलासा–दुत्क्षिप्तैरपि करिभिर्व्यभेदि कष्टात् ॥ २१६ ॥

१ स्त्री० । २–४ 'उत्थापनी' । ५ तीव्रान् । ६ क–'क्षीणानिव' । ७ उत्थापनी ।
८ अतःपरं २२०तमपर्यन्तानां पद्यानां 'प्रहर्षिणी'च्छन्दः । ९ क–'गजति' । १० भुजेन ।
११ क–'मुद्धतांशाः' । १२ विकलाङ्गम् । १३ हसिततेजः ।

आदत्स्व त्वरितममुं जवादमुं वा, प्रक्रीड प्रतिदिनमष्टभिस्तुरङ्गैः ।
इत्युच्चैर्दिवि तुरगानुदास[1] दोष्मान्, सप्ताश्वं[2] प्रति नु निजप्रतापमित्रम् ॥ २१७ ॥
उत्क्षिप्य स्वभुजबलेन कश्चिदेको, वीरोऽश्व-द्विरद-रथान् पतिष्यतः ।
खे भूमौ भूद् युधि विधुरा दृढैर्निर्घातै-रेतेषामिति समचूर्णयद् गदाभिः ॥ २१८ ॥
केऽप्युद्यत्पटुभटसज्जकार्मुकज्या-निर्घोषैरिह मुमुहुर्मुहुश्च्युतास्त्राः ।
तन्मुक्तैर्विशिखशतैः क्षताक्तापै-स्तेऽजीवन् पुनरुरुपक्षजातवातैः ॥ २१९ ॥
ग्रासोद्यद्रसनकरालकालवक्त्र-क्रूरश्रि व्यवसितचण्डभल्लि चापम् ।
वीराणां रणभुवि कृष्टमेव तस्था-वस्थैर्यस्पृशि पुरतोऽरिवीरवारे ॥ २२० ॥

लोकक्षयकारियुद्धात् सैन्यद्वयस्य देवैर्निवारणम्

इति प्रवृत्ते समरे समग्र-मनुष्यलोकक्षयशोकशङ्काः ।
सक्रोधयोरार्षभयोः प्रबोध-विधानबुद्ध्या विबुधा दिवीयुः ॥ २२१ ॥[3]
बालांश्च वृद्धांश्च विनाऽत्र वर्षे, सत्पौरुषाः केचन पूरुषा ये ।
सर्वेऽत्र ते सङ्गरपर्वरङ्गे, [4]रङ्गन्त्यमी वीररस[5]प्रसक्ताः ॥ २२२ ॥‡
अकाल एव क्षयकाल एष, विशेषितो विश्वपतेः सुताभ्याम् ।
इत्यामृशद्भिस्त्रिदशैः स्फुरद्भि-र्नभस्यभाष्यन्त घटा भटानाम् ॥ २२३ ॥
—युग्मम्

[6]वीरर्षभाः ! श्रीवृषभाङ्कभर्तु-राज्ञाऽस्ति वस्तावदहो न योध्यम् ।
यावद् वयं [7]वाक्यचयं प्रपञ्च्य, प्रबोधयामो भवतामधीशौ ॥ २२४ ॥
तयाऽऽज्ञया विश्वपतेर्निरुद्धाः, सेनाद्वये शूरवरास्तथैव ।
व्यापारवन्ध्यायुधरुद्धहस्ता-स्तस्थुर्दृषद्रूपसुरस्वरूपाः ॥ २२५ ॥
व्यनश्यदद्यापि न किञ्चिदेव, भद्रं प्रभूयाद् भुवनत्रयाय ।
इति ब्रुवाणा दिविषद्गणास्ते, गत्वाऽऽदितश्चक्रिणमित्यवोचन् ॥ २२६ ॥

भरताय युद्धनिवारणार्थं देवानां विज्ञप्तिः

जय त्रिलोकप्रभुपुत्र ! लोक-त्राणाय भारं त्वयि विश्वभर्ता ।
नियोजयामास ततः किमर्थ-मुपक्रमोऽयं जनहिंसनस्ते ? ॥ २२७ ॥
षट्खण्डवर्षे विजिताः क्षितीन्द्रा, न तेषु ते कोऽपि पुनः क्षमोऽभूत् ।

---

१ उच्चिक्षेप । २ सूर्यम् । ३ अतः परं ‡ एतच्चिह्नरहितानां २२९तमपर्यन्तानां पद्यानां छन्द 'उपजातिः' । ४ चेष्टन्ते । ५ क-'प्रभक्ताः' । ६ हे वीरवर्याः ! । ७ क-'प्राक् प्रचयं' ।

दोर्दण्डकण्डूशमनाय नूनं, अत्रा समं तत् समरोद्यमो[1]ऽद्य ? ॥ २२८ ॥
विनोदमात्रं युवयो रणोऽयं, हृष्यत्कृतान्तस्तु जने युगान्तः[2] ।
तस्मात् त्वमस्माद् विरमावनीं वा, यदीहसे भ्रातुरिदं न युक्तम् ॥२२९॥
के न पूर्वमभवन् भुवो धवा, मेदिनी कमपि नेयमन्वगात् ।
व्रीडमप्यधूत[3] नाग्रभर्तरि, भ्रंशभाजि दधती नवं नवम् ॥ २३० ॥[4]
नैतया कति पतित्वधारिणो, मारिता बत परेषु लुब्धया ।
रागिणो गुणनिधीन् यदृच्छया, जीवतोऽपि कति नेयमत्यजत् ॥२३१॥[5]
[6]एतदर्थमपि यः कदर्थय–त्यर्थवादकणधी रिपूनपि ।
श्लाघ्यते न खलु सोऽपि यः पुनः, कुल्यमँस्यति नमस्य एव सः ॥२३२॥[8]

—विशेषकम्

वैभवेऽपि भुवनस्य भोग्यता–मेति तल्पमितमेव भूतलम् ।
श्रीभरेऽपि सति भोज्यतोऽधिकं, स्वस्य किञ्चिदपि नोपकारकम् ॥२३३॥[9]
वैभवैर्भवति भोगतोऽधिकैः, सम्मदो यदि ममत्वमात्रतः ।
क्ष्मा ममेयमखिलाऽप्यदो वदन्, प्रीयते न तदकिञ्चनोऽपि किम् ? २३४[10]
तद् [11]धुनी-वन-बिला-ऽग-सागरै, रुद्धमस्ति न कियद् धरातलम् ।
भूलवोऽयमपि तद्वदुच्यतां, मुच्यतां सह कुलेन विग्रहः ॥ २३५ ॥[12]
विग्रहः सह कुलेन नौचितीं, यात्यरातिकुलकल्पपादपः ।
प्रीतिमेति न वने वनेचरः, कश्चिरं रणभरेण सिंहयोः ॥ २३६ ॥[13]
तद् रणं त्यज निजं निकेतनं, याहि पाहि जनमाहिमाचलम् ।
आगते त्वयि समागतो यत–स्त्वद्गते स्वयमयं गमिष्यति ॥ २३७ ॥[14]
भद्रमस्तु भवतोर्भुवो[15] भयं, शान्तिमेतु रणहेतुवारणात् ।
सैन्ययोरुभययोरभीतये, भालतोऽवतरतां तव भ्रुवौ ॥ २३८ ॥[16]

भरतस्य देवानुद्दिश्य प्रतिवचनानि

अथेत्युदित्वा विरतेषु तेषु, [17]गम्भीरघोषं भरतो बभाषे ।
दोष्मानहं नेति रणस्पृहा मे, नेहा महीं बाहुबलेर्ग्रहीतुम् ॥ २३९ ॥[18]

---

१ क–'द्यमोव्व'(?) । २ प्रलयकालः । ३ क–'मृत' । ४–५ रथोद्धता । ६ मेदिन्यर्थम् । ७ हन्ति । ८–१० रथोद्धता । ११ नदीवनबिलपर्वतसागरैः । १२–१४ रथोद्धता । १५ ख–'भुंवं भयं' । १६ रथोद्धता । १७ ख–'गभीर०' । १८ अतः परं ‡ † एतच्चिह्नद्वययुक्तानि पद्यानि विहाय ३७९तमपर्यन्तानां पद्यानां छन्द 'उपजातिः' ।

किन्त्वेष मां तातमिवातिभक्तः, पुरा [1]विविक्तः श्रयति स नम्रः ।
मय्यागते दिग्विजयं विधाय, न त्वाययौ ज्येष्ठधियाऽपि नन्तुम् ॥२४०॥
षष्ठ्या सहस्रैः शरदां [2]समर्प्य दिग्जैत्रयात्रां स्वपुरीं श्रितस्य ।
दूते [3]ममाह्वानकृते गतेऽपि, नैवागतोऽन्यादृगिवाधुनाऽसौ ॥ २४१ ॥
आकारयाम्येनमहं न कोपा–ल्लोभान्न वा किन्तु विशेन्न चक्रम् ।
अन्त'र्विनीता'मनते यदेक–स्मिन्नप्यऽदो न श्रयति प्रवेशम् ॥ २४२ ॥
न चक्ररत्नं प्रविशेद् 'विनीतां', भवेद् विनीतो न ममाऽनुजोऽयम् ।
स्पर्द्धा द्वयोरप्यनयोः प्रवृद्धा, दिवौकसः सङ्कटमुत्कटं मे ॥ २४३ ॥
अप्येकवेलं स समेतु मान–वतामपीशोऽत्र ममानुजन्मा ।
गृह्णातु पृथ्वीमपरां मदीयं, सर्वं [4]मदीयं त्रिदशा! न साद: ॥ २४४ ॥
अथावदन् नाकसदो [5]'नरेन्द्रं, निष्कारणोऽयं न रणोद्यमस्ते ।
गत्वाऽधुना बाहुबलिः प्रबोध्यो, जनक्षयोऽयं खलु रक्षणीयः ॥२४५॥
यथा भवान् सोऽपि तथा समर्थं, प्रवक्ति किञ्चिद् रणकारणं चेत् ।
तथापि दृग्-वाग्-भुज-दण्डयुद्धै–र्योध्यं यथा स्यान्न गजादिबाधा २४६

देवानां बाहुबलिना सह सम्भाषणम्

तथेत्यथोक्ते 'भरता'धिपेन, [6]सुधाभुजो बाहुबलिं ययुस्ते ।
मूर्त्याऽप्यधृष्योऽयमहो महोग्रा–वष्टम्भयेत्युक्तिभृतोऽभ्यधुस्तम् ॥ २४७ ॥
नन्द त्रिलोकीपतिनन्दनोर्व्या–मानन्दनः सज्जनमानसानाम् ।
त्वं दुर्विनीतद्विषतां विनेता, गुरौ विनीतस्त्रिजगत्प्रतीतः ॥ २४८ ॥
विश्वत्रयस्याभयदः पिता ते, तवोद्यम[7]स्तस्य भयङ्करः किम्? ।
भानोस्तमिस्राऽभ्युदयः कथं स्यात्, पीयूषरश्मेर्विषवर्षणं वा? ॥२४९॥
प्राप्तः स्वपुर्यां कृतदिग्जयस्त्वा–माह्वाययामास समुत्कचेताः ।
पितेव यः पूज्यतमः सदा ते, तस्मिन् गुरौ भ्रातरि को विरोधः? ॥२५०॥
रणक्षणोत्साहजुषि त्वयीह, क्षोभाभिषङ्गस्त्रिजगज्जनानाम् ।
स्वेच्छाप्रचारिण्यपि पञ्चवक्त्रे, किं भीप्रपञ्चो न वनेचराणाम्? ॥२५१॥

---

१ विवेकी ।　२ ख–'समर्ध्य' ।　३ क–'तमाह्वान०' ।　४ ख–'तदीयं' ।
५ क–'नरेन्द्र!' ।　६ देवाः ।　७ विश्वत्रयस्य ।

[1]तत् सङ्गरोत्साहममुं विमुञ्च, गुरौ भज भ्रातरि सङ्गमङ्ग[2] ।
लग्नेऽपि राजन्! गुरुयोगभाजि, नान्यग्रहोत्थाः प्रभवन्ति दोषाः ॥२५२॥
उक्त्वेति गर्जारवमञ्जु तेषु, स्थितेषु चाब्देष्विव[3] दैवतेषु ।
गिरं जगौ बाहुबलिर्विवेकी, केकीव लोकश्रुतिशर्मकारी ॥ २५३ ॥

बाहुबलेः प्रत्युक्तिः

तातांह्रिभक्ता! ऋभवो! भवन्त–स्तातस्य चावां तनयावितीत्थम् ।
शुभामभाषन्त गिरं महान्तो, ह्युदासते न व्यसने निजानाम् ॥ २५४ ॥
तत्त्वादमत्वा रणकारणं नौ, वृन्दारका! हे वदथार्जवेन ।
कार्यस्य मूले कलितेऽनुशास्तिः, सुस्थानके वह्लिरिवोत्फला स्यात् ॥२५५॥
पुरा हि दीक्षासमये विभज्य, श्रीतातपादा ददति स्म देशान् ।
अस्मभ्यमस्मै च तथाऽऽश्रितेभ्यो, यथा सुवर्णादि वनीपकेभ्यः[6] ॥२५६॥
सर्वे वयं स्वस्वमवाप्य देशं, सन्तोषपीयूषरसाश्रयाः स्मः ।
ताते कथं जीवति तातदत्तं, विविक्तचित्ताः परतो हरन्ति? ॥ २५७ ॥
षट्खण्डवर्षे निखिलानि लात्वा, राज्यान्यतृप्तो दववद् वनानि ।
निजानुजानामपि जग्रसेऽसौ, देशानशेषान् भरतोऽपि भीष्मः ॥२५८॥
जग्राह राज्यान्यनुजन्मनां य–स्तस्मिन् गुरुत्वं किमु किञ्चिदस्ति? ।
लोभातुरं भ्रातुरवेत्य वृत्तं, वैराग्यतस्ते व्रतिनो बभूवुः ॥ २५९ ॥
अयं मयेयत्समयं समैक्षि, प्रतीक्ष्यरूपो[7] गुरुगौरवेण ।
भ्रान्त्यैव चिन्तामणिविभ्रमेण, कृतानि शैलोपललालनानि ॥ २६० ॥
सङ्गृह्य राज्यान्यनुजव्रजस्य, राज्यं जिघृक्षुर्मम निर्घृणात्मा ।
मामुन्मदन्नाह्वयते मदान्ध्य–धारी स पारीन्द्रमिव द्विपेन्द्रः ॥ २६१ ॥
क्रव्यादवत्[8] क्रूरतरं निरीक्ष्य, नैतं भजन्ति स्म ममानुजास्ते ।
ततः कथं तस्य रणोद्यतस्य, वशंवदोऽहं द्युभवा! भवामि? ॥ २६२ ॥
सेवापरं स्वस्य पराक्रमेण, करोति चेन्मां तदयं करोतु ।
पन्था ह्ययं क्षत्रियपुङ्गवानां, कीर्तिप्रदो वा विजयप्रदो वा ॥ २६३ ॥

---

१ तस्मात् । २ सम्बोधनात्मकं पदम् । ३ क–'बादेष्विव' । ४–५ हे देवाः । ६ याचकेभ्यः । ७ पूज्यरूपः । ८ राक्षसवत् ।

विमृश्य वा यद्यपसृत्य याति, यथाऽऽगतं तत् कुशलेन यातु ।
भ्रातेत्यहं दुर्ललितं सहिष्ये, तस्यैव[1] नान्यस्वहतौ[2] ममेहा ॥ २६४ ॥
मया विजिग्ये 'भरतं' समग्र-मित्युद्यतो यद्ययमद्य माद्यन् ।
तीर्णार्णवं पोतमिवाद्रिदन्ते, मयि प्रतिस्खल्य स भज्यतां तत् ॥ २६५ ॥
यद्यस्ति तस्मिन् हितमीहितं वो, रणाग्रहादेष निषेध्यतां तत् ।
अयुध्यमानेन समं न युध्ये, सुधाभुजो! बुद्धिरियं ध्रुवा मे ॥ २६६ ॥
बैलाहके[3] बाहुबलौ प्रवृष्य, पीयूषवद् वाङ्निवहं निवृत्ते ।
गिरं सुरा विस्मयवल्लिफुल्ल-मालां ततां[4] कण्ठगतां वितेनुः ॥ २६७ ॥
चक्राप्रवेशाद् भरतोऽभिसर्प-न्ननुत्तरीकर्तुमशक्य एव ।
अयुध्यमानेन युधं न कुर्वे, वदन्निदं केन निवार्यसे त्वम्? ॥ २६८ ॥
द्वयोरपि श्रीवृषभस्य सून्वो-र्द्वयोरपि त्राणकृतोः प्रजानाम् ।
जगत्रयीभाग्यविपर्ययेण, महाहवोत्पात उपस्थितोऽयम् ॥ २६९ ॥†
त्वं प्रार्थ्यसे वीर! तथापि बाढं, त्वयोत्तमेनैव रणेन योध्यम् ।
तत्राधमे[5] यद् भवतोर्भवित्री, भूयिष्ठलोकप्रलयोपपत्तिः ॥ २७० ॥
यद् द्वन्द्वयुद्धं युवयोर्विना न, युद्धोपशान्तिः किल तर्क्यतेऽसौ ।
दृग्-वाग्-भुजाद्यैर्जनिते तदस्मिन्, स्यान्मानसिद्धिर्न च जीवहिंसा २७१‡
ओमित्यमुष्मिन् प्रवदत्यमर्त्या-स्तेनातिदूरेऽस्थुरथापसृत्य ।
सभ्या इव व्योम्नि तयो रणोत्थ-जयाऽजयोच्छ्रायविनिर्णयाय ॥ २७२ ॥
स्वाम्याज्ञया सैन्ययुगेऽथ वेत्रि-प्रदत्तया युद्धविधेर्निरुद्धाः ।
स्वं मेनिरे वीरवरा वराट[6]-मात्रर्णमुक्तं न विभोर्विषण्णाः ॥ २७३ ॥

चक्रिणं प्रति तत्सेवकजनोक्तिः

युद्धावरोधेन विचार्य चक्रि-चमूनृपाश्चक्रिणमूचुरेवम् ।
मन्त्रेण कस्य प्रभुणाऽद्य मन्त्रि-रूपाद् रिपोर्द्वन्द्वरणं प्रपन्नम्? ॥ २७४ ॥
भृत्येषु नष्टेषु हतेषु युक्तं, युद्धं प्रभोर्युद्धगतिर्हि चित्रा ।
शङ्कामहे स्वामिनि संशयं न, न चेद् भवेद् बाहुबलिर्विपक्षः ॥२७५॥

---

१ क-'तस्येव'। २ क-'ततो भनक्तु'। ३ मेघे। ४ क-'मालाततां'। ५ 'रणे' इत्यध्याहार्यं पदम्। ६ कपर्दिका०।

बाहोर्बलं बाहुबलेर्बिडौजा, न सोऽपि सोढुं समरे समर्थः ।
पूर्वं प्रभोस्तस्य मुखे न युक्तं, स्थातुं महर्षेरिव रोषितस्य ॥ २७६ ॥
भूपान् बभाषे भरतो नरेन्द्राः !, पुरःस्फुरत्सु प्रधने भवत्सु ।
न कोऽपि मां प्राप गुणेषु मूलो–त्तरेषु नात्मानमिवाभिमानः ॥ २७७ ॥
रणो न मे क्वापि भवद्भिरैक्षि, तद् वोऽभिशङ्का[1] मयि भक्तिरीदृक् ।
महोर्बलं पश्यत तत् क्षितीशा !, भीत्येव सा याति यथा प्रणश्य ॥२७८॥

भरतेन स्वभुजबलदर्शनम्

उक्त्वेति चक्री लघु[2] गर्त्तमेक–मखानयत् तस्य[3] तटे निविश्य ।
स शृङ्खलालीः प्रतिशृङ्खलालीः, सव्ये न्यधाद् दोष्णि वटे जटावत् २७९
स भूपतीनित्थमथाह भूपाः !, समं समग्रैर्बलवाहनैः स्वैः ।
मां पातयन्त्वत्र विकृष्य गर्त्ते, न स्वाम्यवज्ञाप्रभवं छलं वः ॥ २८० ॥
स्वप्नो मयाऽप्यैक्ष्यत दुष्ट एष, युष्माभिरेवं प्रतिहन्यतां तत् ।
मोघीभवत्येव यतः कृतार्थी–कृतो यथार्थानुभवात् स्वयं सः[4] ॥ २८१ ॥
पुनः पुनश्चक्रिनिदेशतस्ते, तद्दोःस्थितं शृङ्खलचक्रवालम् ।
सर्वेऽपि यत्नाच्चकृषुः स चक्री, न सूत्रमप्यासनतस्त्वचालीत् ॥ २८२ ॥
हस्तेन तेनैव स चक्रवर्त्ती, चक्रेऽङ्गरागं[5] हृदि लीलया च ।
सर्वेऽपि तेऽन्योन्यमथास्फलन्तो, विसंस्थुलीभूय ललम्बिरे च ॥२८३॥
तथाविधं स्थाम विभोर्निभाल्य, भूमीभृतः सम्भृतभूरिहर्षाः ।
ते तत्यजुस्तद्भुजशृङ्खलालीं, करान्तरन्तःकरणाच्च शङ्काम् ॥ २८४ ॥
भूयो महेभं भरतोऽभिरुह्य, पूर्वं रणप्राङ्गणमाजगाम ।
वक्रान्निवृत्तो[6] वरमार्गमेत्य, ग्रहो यथा प्राक्तनमेव राशिम् ॥ २८५ ॥
अथो नियुक्तैरिव देववृन्दैः, प्रक्लृप्तगन्धोदकपुष्पवर्षा ।
सैन्यद्वयाभ्यन्तरभूमिराभाद्, विलासशय्या किल युद्धलक्ष्म्याः ॥ २८६ ॥
तौ चक्रभृद्-बाहुबली गजेन्द्रा–दुत्तीर्य वीर्यावमतत्रिलोकौ ।
स्थितौ रणप्राङ्गणभूमिगर्भे, रसौ श्रिताङ्गाविव वीर-रौद्रौ ॥ २८७ ॥

---

१ अभिशङ्का । २ शीघ्रम् । ३ गर्तस्य । ४ स्वप्नः । ५ कुङ्कुमादिलेपम् ।
६ क–'चक्रा०' ।

दृष्टियुद्धम्

स्वीकृत्य दृग्युद्धमथो मिथोऽपि, तौ सम्मुखीनावनिमेषनेत्रौ ।
स्थितौ तदन्तर्विजयं ग्रहीतुं, प्रवेष्टुकामाविव देहगर्भे ॥ २८८ ॥

विलोकयन्तौ वदनं मिथस्तौ, दृग्भ्यां स्थितौ [1]कोपविपाटलाभ्याम् ।
तत्कान्तिदण्डैः परिताडयन्तौ, तप्तोरुनाराचगणैरिवोग्रैः ॥ २८९ ॥

प्राभातिकार्कप्रतिमं प्रकोप-ताम्रं मुखं बाहुबलेर्विलोक्य ।
अमुञ्चतां कैरववद् विकासं, दृशौ युगादिप्रभुपूर्व[3]सूनोः ॥ २९० ॥

[4]गीर्वाणवारै'र्भरते'श्वरस्य, नेत्रोदकस्नानसमुज्ज्वलाङ्गी ।
दृग्युद्धजा बाहुबलेर्जयश्रीः, प्रसूनवर्षैः सुरभीकृताऽऽशु ॥ २९१ ॥

[6]घुणाक्षरन्यायवशेन दृष्टि-युद्धं जितं चेतसि चेदिदं ते ।
वाग्युद्धतो योध्यमिदं गदित्वा, तत्क्षमये बाहुबलिः स्थितोऽग्रे ॥२९२॥

वाग्युद्धम्

एवं भवत्वेवमथ प्रभाष्य, [7]क्ष्वेडाऽऽशु [8]श्वेडा क्रमतो विशाला ।
अमर्षभाजा भरतेन तेने, घना[9]घनेनेव नवेन गर्जा ॥ २९३ ॥

तत्सिंहनादेन निनादितोरु-ब्रह्माण्डभाण्डेन किमत्र चित्रम् ? ।
[11]शुशोष शक्रेभ[12]मदप्रतान-स्तातान [13]नैशानवृषोऽपि रोषम् ॥ २९४ ॥

दन्तावलानां किल कर्णतालात्, तुरङ्गमाणां किल पुच्छदण्डात् ।
महारथानां किल चिह्नकेतो-र्महाभटाणां किल खड्गदण्डात् ॥ २९५ ॥

मृगेश्वराणां किल केसरेभ्यः, पक्षीश्वराणां किल पक्षपङ्क्तेः ।
प्रसर्पता तेन महारवेण, वपुः समग्रं समवाप कम्पम् ॥ २९६ ॥–युग्मम्

अथोच्चकै[14]र्न्यक्कृतचक्रिरावं, सिंहारवं बाहुबलिर्बभार ।
कल्पान्तसम्भ्रान्त[15]घनौघशम्पा-सम्पातसङ्घातरवातिरौद्रम् ॥ २९७ ॥

---

१ क्रोधेन रक्ताभ्याम् ।　२ बाण० ।　३ प्रथमपुत्रस्य भरतस्य ।　४ देवसमूहैः ।
५ क–'दके' ।　६ घुणः काष्ठकीटः, अनेन काष्ठकीटेन काष्ठे छिद्रं कुर्वाणेन यथाऽनायासेनाकस्मात् काष्ठे कादीन्यक्षराणि क्रियन्ते तथा इदमप्याकस्मिकमिति न्यायेन ।　७ वाक्युद्ध० ।
८ सिंहनादः ।　९ नौः ।　१० क–'घनेनेदमदेन गर्जाः' ।　११ क–'शुशोक' ।　१२ मदविस्तारः ।　१३ शिवस्य बलीवर्दः ।　१४ अधःकृत० ।　१५ मेघमण्डलविद्युत्सम्पात० ।

अभ्यन्तरद्वीपतटाभिषङ्गात्, [1]प्रतीपयन् द्वीपनदीपवीचीः ।
द्वीपावलीलोलदिलाध्ररन्ध्र–सन्धानबन्धानभितो विभिन्दन् ॥ २९८ ॥
भूभ्रंशबिभ्यद्भुवनाधिपानां, सङ्कोचयन् लोचनचक्रवालम् ।
स्फुटप्रपातिस्फुटितान्तरिक्ष–क्षोभादुडूनां नमयन् शिरांसि ॥ २९९ ॥
ही पाहि पाहीति गिरः पुरन्ध्रीः, प्रवेशयन् स्वर्गसदामुरस्सु ।
ययावधोऽप्यूर्ध्वमपि प्रवृद्धिं, स लोकनालिप्रमितः प्रणादः ॥ ३०० ॥

–विशेषकम्

सैन्यद्वये सैनिकचक्रवाल–मालिङ्गयन् भूमिमतुच्छमू[2]र्च्छम् ।
उच्चैः पुनश्चक्रभृता धृ[3]तेर्ष्यं, प्रपञ्चितः पञ्चमुखप्रणादः ॥ ३०१ ॥
आरोपयन्तावमरामरीणां, पाणी पिधानं श्रुतिरन्ध्रयुग्मे ।
मुहुर्धृतस्पर्द्धमिमौ मिथोऽपि, प्रचक्रतुश्[4]चक्रि-नृपौ प्रणादम् ॥ ३०२ ॥
क्रमेण कार्श्यं भरतेश्वरस्य, क्ष्वेडा खलस्येव जगाम मैत्री ।
बलोदधेर्बाहुबलेः पुनः सा, सन्मित्रमैत्रीव परां प्रवृद्धिम् ॥ ३०३ ॥
शास्त्रीयवाग्वादकृ[5]तप्रतिज्ञा–प्रज्ञालताताण्डवितोक्तिजाले ।
[6]जिष्णौ स्थिते वादिनि [7]मेदिनीन्द्रौ, जयं न चक्री प्रतिवाद्यवाप ॥३०४॥

भुजयुद्धम्

स्थितावथोभौ भुजयुद्धबुद्ध्या, नृपौ पटाबद्धकटीतटान्तौ ।
तौ [8]धातकीखण्डसुवर्णशैला–विवागतौ साम्बुदमेखलाऽऽढ्यौ ॥ ३०५ ॥
[9]दोःस्फालनस्फाररवैस्तदैव, तयोः स्फुटं स्फोटितमन्तरिक्षम् ।
खर्दण्डवेषादखिले किलेह, प्रस्फोटरेखा स्फुरति स्फुटा तत् ॥ ३०६ ॥
रणक्षणेक्षागतवज्रपाणि–पाणिस्पृशा पर्वतपातजातः ।
मिथस्तयोस्तालमहाप्रहारा–नुत्प्रेक्ष्य मुक्तः पविनाऽपि दर्पः ॥ ३०७ ॥

---

१ विपरीताः कुर्वन् । २ क–'मूर्च्छं' । ३ क–'चितेर्ष्यं । ४ **भरत-बाहुबली** । ५ क–'कृति०' । ६ जयनशीले । ७ **बाहुबलौ** । ८ जम्बूद्वीपो लवणजलसमुद्रेण परिक्षिप्तः, लवणजलसमुद्रो धातकीखण्डेन परिक्षिप्तः, धातकीखण्डद्वीपः कालोदसमुद्रेण परिक्षिप्तः, एवमा स्वयम्भूरमणसमुद्रादिति । सर्वे चैते द्वीपसमुद्रा यथाक्रममादितो द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः प्रत्येतव्याः, तद्यथा–योजनशतसहस्रविष्कम्भो जम्बूद्वीपस्य, तद्द्विगुणो लवणजलसमुद्रस्य, तस्माद् द्विगुणो धातकीखण्डद्वीपस्य, इत्येवमा स्वयम्भूरमणसमुद्रादिति । प्रेक्ष्यतां **तत्त्वार्थ**( अ. ३, सू. ८ )स्य स्वोपज्ञं भाष्यं ( पृ० २५० ) । ९ क–'आस्फालन०' ।

क्षणेन युक्तौ वियुतौ क्षणेन, बभूवतुस्तौ मुहुरेव[1] मल्लौ ।
चलाचलौ वल्लभयोर्द्वगन्ता-विवाशु संसञ्जनसम्प्रदाये ॥ ३०८ ॥†
क्षणेन तावुच्छलितौ नितान्तं, क्षणेन सम्पातमुपेयतुश्च ।
मुहुर्जयश्रीजनितस्पृहौ प्राग्-जन्मन्यपूर्णीकृतपुण्यवत् तौ ॥ ३०९ ॥
अथ ग्रैथीयस्त्वरया[3] प्रसर्पत्-प्रकोपतस्तौ परिषस्वजाते ।
मिथोऽङ्गमङ्गेन निपीडयन्तौ, महाभुजौ प्रीतियुजौ यथा प्राक् ॥३१०॥
मल्लौ कदाप्यूर्ध्वमधः कदाचि-ज्जातौ विचित्रोदितदेहबन्धौ ।
उद्यद्रजःसत्त्वमसौ ससत्त्वा-वप्राप्तमोक्षौ भवि[4]जीववत् तौ ॥ ३११ ॥‡
स्वभ्यस्त[5]विज्ञानवशादथैतौ, दूरं निरस्याद्भुतकर्मबन्धम् ।
त्यक्ताङ्गसङ्गौ लघु लब्धमोक्षा-वूर्ध्वं स्थितौ विश्वकृतप्रशंसौ ॥ ३१२ ॥‡
परस्परोच्चाटकरेण धूम्र-ध्यानेन हृद्ग् व्याप्य बहिर्गतेन ।
वृताविवोर्वीलुठनेन धूल्या, तौ धूसरौ रेजतुरुग्रबाहू ॥ ३१३ ॥
मत्पालकावेव युवां ततः किं, दत्तव्यथौ सम्भवथोऽधुनेति ।
पृथ्वी तयोरुद्धतपादघात-निर्घोषदम्भेन जुघोष भूरि ॥ ३१४ ॥‡
वल्गन्तमग्रे 'भरता'ऽधिनाथं, क्रुधाऽऽकुलो बाहुबलिर्बलेन ।
हस्तेन हस्तीव[6] हठाद् गृहीत्वो-दलालयत् कन्दुकवद् दिवोऽन्तः ॥ ३१५ ॥
पुरा[7] जनो यत्युपचाररूढ-महो बलं बाहुबलेर्बलीयः ।
तादृग्बलोऽप्येककरेण चक्री, यल्लीलयोल्लाल्य पराम्बरेऽस्तः[8] ॥ ३१६ ॥
इदं न भूतं न भविष्यतीति, यत् क्षिप्यते केनचनापि चक्री ।
इदं गदद्भिस्त्रिदशैः प्रणष्टं, दिव्यापतन्तं भरतं निभाल्य ॥ ३१७ ॥
अहर्निशं श्रीवृषभांह्रिभक्त्या, पुण्यैरगण्यैः किमयं सकायः ।
स्वर्गं समेतीति सुरैरतर्कि, सविस्मितैर्व्योम[9] परं प्रसर्पन् ॥ ३१८ ॥
षट्खण्डजेता खलु खण्डरूपः, क्ष्मामण्डलेऽस्मिन् पतितो नभस्तः ।
भावीति सैन्यद्वयसैनिकानां, हा हेति नादः सुमहान् बभूव ॥ ३१९ ॥*
धिङ् मे बलं राभसिकं च धिङ् मां, राज्यद्वये धिग् धिगिमानमात्यान् ।

---

१ क-'पुनरेव' । २ पतिपत्न्योः । ३ अधिकतरेण वेगेन । ४ क-'भुवि जीववन्तौ' । ५ ख-'अभ्यस्त०' । ६ ख-'हस्तीव हस्तेन' । ७ पूर्वजन्मनि । ८ दूराकाशे क्षिप्तः । ९ ख-'सविस्मयै०' ।

न यैर्निषिद्धः समरोद्यमोऽयं, सम्प्रत्यमीभिः किमु गर्हितैर्वा ? ॥ ३२० ॥
यावत् पतित्वा न विशीर्यतेऽसौ, तावत् प्रतीच्छामि पतन्तमेनम्[1] ।
इदं तदा बाहुबलिर्विमृश्य, हस्तौ [2]विहस्तस्तदधो दधौ सः ॥ ३२१ ॥
—युग्मम्

दिवः पतन्तं लघु धर्तुमेतन्-मूर्ध्वोल्लसत्पाणियुगच्छलेन[3] ।
सद्भ्रातृवात्सल्यमलं 'बहुल्याः', पत्युस्तदा पल्लवितं बभासे ॥ ३२२ ॥
ममानुतापः प्रबलो[4] नु तापः, खरद्युतेर्वेति परीक्षणाय ।
ऊर्ध्वाननो बाहुबलिः पदाग्र-प्राणेन[5] तस्थौ स्थिरनेत्रपत्रः ॥ ३२३ ॥
व्योम्नः पतन्तं नृपतिं 'बहुल्या,' बलात् कराभ्यां भरतं बभार ।
जीवं यथा सद्गतितश्च्यवन्तं, बोधः सुचारित्र-सुदर्शनाभ्याम् ॥ ३२४ ॥
उत्क्षेपणाद् यो भरतस्य सैन्य-द्वये विषादोऽजनि निर्ययौ सः ।
संत्पालनेनास्तमनाद्[6] द्युनेतु[7]-स्तमो भवेद् याति तदुद्गमेन ॥ ३२५ ॥
नयान्वितोऽयं विनयान्वितोऽयं, महाबलोऽयं विलसद्दयोऽयम् ।
इति स्तुवन्तस्त्रिदशाः प्रसून-वृष्टिं व्यधुर्बाहुबलौ प्रहृष्टाः ॥ ३२६ ॥
मुष्टिप्रहारेण पराजयस्य, स्रजाम्यमुष्यान्तमिदं विमृश्य ।
लज्जाविलक्षत्वसरोषपोष-श्चक्री नृपं वक्षसि मुष्टिनाऽहन् ॥ ३२७ ॥
लंघ्वार्षभेर्वक्षसि[8] रुष्टचक्रि-मुष्टिप्रहारः स मुधात्वमाधात् ।
किं दन्तिदन्तप्रहतेर्हिरण्य[9]-क्षोणीधरस्य[10] प्रसरेत् प्रकम्पः ? ॥ ३२८ ॥‡
सुमङ्गलायास्तनयं[11] सुनन्दा[12]-सूनुर्जवानोरसि मुष्टिनोच्चैः ।
घातात् ततो दन्तिहतेरिव द्रुः, पपात मूर्च्छाविधुरः स धात्र्याम् ॥३२९॥
मूर्च्छाविरामे भरतः प्रजह्रे, दण्डेन मौलौ 'बहुली' महीन्द्रम् ।
आजानुमग्नः स ततः प्रहारा-ज्जज्ञे यथाऽर्धास्तमितो विवस्वान् ॥३३०॥‡
तेन प्रहारेण जडात्मवृत्ति[13]-र्जज्ञे निमीलन्नयनो नरेन्द्रः ।
सायं सरोदेश इवोष्णरोचि-रस्तेन सङ्कोचिसहस्रपत्रः[14] ॥ ३३१ ॥‡
उत्पत्य पृथ्व्यन्तरतः प्रकोपा-दताडयत् 'तक्षशिला'विलासी ।

---

१ क–'मेवम्' । २ व्याकुलः । ३ क–'मूर्ध्नोल्लस०' । ४ ख–'प्रततो' । ५ बलेन । ६ क–'उत्पाल०' । ७ सूर्यस्य । ८ क–'लघ्वा०' । ९ बाहुबलेः । १० मेरोः । ११ भरतम् । १२ बाहुबलिः । १३ ख–'जडत्ववृत्तिः' । १४ क–'पत्रम्' ।

दण्डेन षट्खण्डमहीमहेन्द्रं, मौलौ तडित्वांस्तडितेव शैलम् ॥ ३३२ ॥
घातेन तेन क्षितिमण्डलान्त–राकण्ठभागं भरतो ममज्ज ।
त्रासाय [1]नोऽत्रास्य पदप्रवेशो, भीत्येति भाव्यो भवनावनीशैः ॥३३३॥
मूर्च्छोच्छ्रये प्राप्य सचेतनत्वं, मज्जन् यथा नौफलकं पयोधौ ।
चक्री रसाया लघु निःससार, संसारवृत्तेरिव योगयुक्तः ॥ ३३४ ॥
युद्धैः समग्रैरमुना जितोऽहं, किं नास्मि चक्रीति वितर्कभाजः ।
[2]न्ययोजि यक्षैर्भरतस्य हस्ते, चक्रं विभाचक्रविडम्बितार्कम् ॥ ३३५ ॥
तत्प्रत्ययाच्चेतसि चक्रिमानी, चक्रं स चञ्चद्रुचिचक्रवालम् ।
नभोविभागे भ्रमयन् गभस्ति–बिम्बं बभौ काल इवाप्रधर्ष्यः ॥ ३३६ ॥
चक्रोद्यदर्कद्युतिजाललुप्त–पराजयोत्तालतमःसमूहः ।
स्फुटस्फुरत्तारपदप्रचार–चक्री जगौ बाहुबलिं बलोग्रम् ॥ ३३७ ॥
शरीरसंस्थानविशेषतः स्यात्, कस्यापि काये प्रबलं बलं यत् ।
तत् [3]तेन किं बाहुबले! प्रमत्त–स्त्वयेयता किं जितकाशिताऽऽसीत्? ३३८
हस्ती बलिष्ठोऽस्ति चतुष्पदेषु, ततोऽपि सिंहः शरभस्ततोऽपि ।
एवं मनुष्येषु बलोत्तराः स्यु–र्न चक्रवर्ती किमुपास्यते तैः[4] ॥ ३३९ ॥
अद्यापि किञ्चिन्न विनष्टमास्ते, मा चक्रपातात् प्रलयं प्रयाहि ।
मन्यस्व मन्यस्व ममानुवृत्तिं, दत्से कथं भ्रातृवधात् कलङ्कम्? ॥३४०॥

चक्रप्रहारोद्यताय भरताय बाहुबलेः प्रतिवचनानि

इत्युन्नदन्तं प्रसरन्मदं तं, ज्येष्ठाऽऽर्षभिं बाहुबलिर्बभाषे ।
किं लोहखण्डेन करस्थितेन, विगर्हसे बाहुबलेर्बलौघम्? ॥ ३४१ ॥
[5]क्षतोऽसि युद्धैर्निखिलैर्न किञ्चि–च्चक्रस्य ते सर्पति यस्य दर्पः ।
तद् ब्रूहि दण्डेन निहत्य चूर्णी–करोमि नीलीद[6]लवद् बलेन ॥ ३४२ ॥
प्रोल्लासयाम्यभ्रपथेऽथ वाता–[7]क्रान्तार्कतूलावलिलीलया किम्? ।
घनेन [8]लोहाधिकरण्युरोऽन्तः, किं वज्रवत् क्षोणितले क्षिपामि? ॥३४३॥
अरान् सहस्रं [9]विशरारुभावं, नयेऽस्य किं वा लवशो विदार्य ।
करोम्यधिष्ठायकतां प्रपन्नान्, यक्षान् विलक्षान् कणशो विकीर्य? ३४४

१ अस्माकम् ।　२ क–'न्ययोधि' ।　३ बलेन ।　४ बलोत्तरैः ।　५ क–'क्षितोऽसि' ।
६ क–'वदलद्' ।　७ पवनाक्रान्त० ।　८ 'एरण' इति भाषायाम् ।　९ नाशम् ।

अन्यानिव क्षोणिधवाननेन, मामप्यमुं भापयसे किमु त्वम्? ।
लब्धं त्वया स्वस्य बलप्रमाणं, चक्रस्य सम्प्रत्यवलोकय स्राक् ॥ ३४५ ॥‡
तेनेति चक्रोदितगर्हणाभि–र्भालस्थलस्थभ्रकुटीकरालः ।
चक्री क्रुधा बाहुबलेर्वधार्थं, सर्वौजसा प्रेर्य मुमोच चक्रम् ॥ ३४६ ॥‡
समीपमापत्य चकार चक्रं, प्रदक्षिणां 'तक्षशिला'ऽधिपस्य ।
गीर्वाणभर्त्तेव युगादिभर्त्तु–र्भास्वानिव स्वर्णशिलोच्चयस्य ॥ ३४७ ॥
स्वगोत्रजे चक्रभृतो न चक्रं, सामान्यरूपेऽपि विरूपकारि ।
तस्मिन् विशेषाच्चरमं शरीरं, समाश्रिते मौलिमणौ नराणाम् ॥ ३४८ ॥
चक्रं ययौ चक्रिणमेव भूयो, यथा प्रभुत्वं कृतपुण्यमेव ।
यथा परब्रह्म जिताक्षमेव, यथा महाशर्म शमाढ्यमेव ॥ ३४९ ॥
मृगैर्मृगेन्द्रः शरभो मृगेन्द्रैः, सुरैः सुरेन्द्रस्तरणिस्तमोभिः ।
यज्जीयते चक्रधरो नरेन्द्रैः, श्रुतं न दृष्टं न कदाचिदेतत् ॥ ३५० ॥
एकत्र नोभौ भुवने भवेतां, तीर्थङ्करौ चक्रधरौ हरी[1] च ।
किमेककालं तिमिरस्य जालं, विलुम्पतोऽर्कौ मिलितौ कदाचित्? ३५१
चक्री कथं बाहुबलिः किमग्र–जन्माऽस्य मुक्त्यै 'भरतं' जिगाय ।
उपार्जिताया जनकेन लक्ष्म्या, भोक्ता न किं सूनुरनूनपुण्यः? ॥ ३५२ ॥
विश्वैरजेयो भरतो जितोऽयं, युद्धेऽमुना तेन किमेष चक्री? ।
एवं यदि स्यात् तदमुं विमुच्य, चक्रेण भेजे भरतः पुनः किम्? ॥ ३५३ ॥‡
अहो असम्भाव्यमिदं चरित्रं, प्रभुः स जानात्यनयोः पितैव ।
इत्युद्यदूहे[2] द्युसदां समूहे, स्वीयाग्रजं बाहुबलिर्जगाद ॥ ३५४ ॥
—पञ्चभिः कुलकम्

कान्ता त्रिलोकीपतिपुत्रता ते, क्षत्रव्रतं चित्रकरं च चक्रिन्! ।
दण्डायुधे यन्मयि युध्यमाने, विमुञ्चसे सर्वबलेन चक्रम् ॥ ३५५ ॥
तथा प्रतिश्रुत्य सुपर्वलक्ष–समक्षमेवोत्तमसम्परायम् ।
विमुञ्चता चक्रमिदं त्वयाऽद्य, श्यामीकृतानि स्वजनाननानि ॥ ३५६ ॥
समुज्ज्वलं तन्वति तावकीने, यशःसुधांशौ वसुधान्तरालम् ।
सनातनोऽभून्नययुद्ध[3]सन्धा–सन्धानभङ्गेन कलङ्कपङ्कः ॥ ३५७ ॥

१ वासुदेवौ । २ समुपजायमानतर्के । ३ क–'शुद्ध०' ।

एकेन्द्रियस्यापि तवापि चक्रिन्!, चक्रस्य मद्रक्षणदक्षिणस्य ।
योऽभूद् विवेकः स न ते कृतोरु-लोभक्रुधो मद्वधबद्धबुद्धेः ॥ ३५८ ॥

त्वया मयि भ्रातरि चक्रपाता-दुपार्जितं पातकमूर्जितं यत् ।
तस्य च्छिदे चक्रयुतं भवन्तं, मुष्टिप्रहारेण करोमि चूर्णम् ॥ ३५९ ॥

इत्युक्तिपारे स्वकरं करीव, प्रोत्पाट्य मुष्टिं भरतस्य पार्श्वे ।
गत्वा स्थितस्तीर इवाम्बुराशि[1]-रदः स दध्यौ सुकृतैस्तदीयैः ॥ ३६० ॥

बाहुबलिना दीक्षाऽङ्गीकरणम्

राज्यस्य लोभादमुनेव धिग् धिङ्, मयाऽप्यहो भ्रातृवधो विधेयः ।
न तेन राज्येन ममास्ति कार्य-मकार्यमित्थं क्रियते यदर्थम् ॥ ३६१ ॥

लोभेन कोपेन विनिर्जितेऽस्मिन्, जितेऽपि को मे प्रमदो मदो वा ? ।
याभ्यां[2] जितोऽसावहमप्यहो चेत्, ताभ्यां जितोऽस्मात् किमु गौरवं तत् ? ॥

राज्येऽपि लोभं भरतेऽपि कोपं, त्यक्त्वा ततस्तातपथं प्रपद्ये ।
[3]चेद् राज्यलक्ष्मीः परिणामरम्या, तत्याज तातोऽपि कुतस्तदेताम् ? ३६३ ॥

त्याज्यैव तस्मान्नरकप्रदेयं[4], ग्राह्यैव दीक्षा शिवदानदक्षा ।
इदं हृदन्तर्विशदं विमृश्य, स्वीयाग्रजं बाहुबलिर्जजल्प ॥ ३६४ ॥

चक्रिन्! मयाऽत्यज्यत राज्यतृष्णा, भ्रात्रोर्ययेदृग् जनितो विभेदः ।
एतत्कृते[5] भ्रातृवधं न कुर्वे, तातप्रपन्नां पदवीं प्रपत्स्ये ॥ ३६५ ॥

ज्येष्ठे त्वयि भ्रातरि राज्यमात्र-कृते यदज्ञानकृताभिमानः[6] ।
मेदस्विनं खेदमहं महात्मन्!, चकार कामं मम तत् क्षमस्व ॥ ३६६ ॥

इदं गदित्वा शिरसः स केशान्, क्लेशानिवान्तःकरणप्रदेशात् ।
समूलमुन्मूलयति स्म कोपा-टोपात् पुरोत्पाटितमुष्टिनैव ॥ ३६७ ॥

जित्वाऽग्रजं बाहुबलिर्बलेन, तद्द्रोहकं[7] मोहमपि व्यपोहत् ।
इति स्तुवन्तस्त्रिदशाः प्रतेनु-स्तस्योपरिष्टात् सुरपुष्पवृष्टिम् ॥ ३६८ ॥

स्वयं महात्माऽऽत्तमहाव्रतोऽय-मदीर्घसूत्री मनसेति दध्यौ ।

---

१ क-'राशे' । २ लोभकोपाभ्याम् । ३ क-'तद्राज्य०' । ४ नरकगतिदायिनी राज्यलक्ष्मीरियम् । ५ राज्यतृष्णाकृते । ६ क-'कृतेभि०' । ७ भ्रात्रोर्द्रोहकम् ।

किं तातपादान्तमुपैमि नो वा, यास्याम्यनुत्पादितकेवलोऽहम्[१] ? ॥३६९॥
यात्वाऽनुजानां प्रथमव्रतानां, ज्ञानान्वितानां किमिव प्रणामम् ।
अहं करोमीति विचिन्त्य चित्ते, तत्रैव सोऽस्थात् प्रतिमां प्रपन्नः ॥३७०॥
तथास्थितं तं भरतो निभाल्य, सम्भाव्य तादृक् स्वकृतं कुकर्म ।
वैलक्ष्यलज्जानमदाननाब्जो, जज्ञे जगत्यन्तरिव प्रवेष्टुम् ॥ ३७१ ॥
चक्री ततस्तं प्रणनाम कायो–त्सर्गस्थमाजानुविलम्बिबाहुम् ।
नेत्राश्रुनीरै रणरेणुपूर्णौ, प्रक्षालयन् तस्य पदौ कदुष्णैः ॥ ३७२ ॥[‡]
चक्री ततः स्वप्र[२]स्तापवाद–तमिस्रपूरक्षतिसूरकान्तिम् ।
नत्वा सुनन्दातनयं स्वनिन्दा–मेवं जगाद प्रसरद्विषादः ॥ ३७३ ॥

चक्रिणा आत्मनिन्दागर्भिता बाहुबलेः स्तुतिः

कृतिन् ! बलाढ्याश्च कृपालवश्च, ये तेषु सर्वेषु शिरोमणिस्त्वम् ।
निर्जित्य मां वध्यदशां च नीत्वा, तत्याज यो मत्कृपयैव राज्यम् ॥३७४॥
असज्जलज्जः समदो यदर्थे, कोपेन पापोऽहमुपाद्रवं त्वाम् ।
कृत्वाऽनुकम्पां मयि तत्यजे तद्, राज्यं त्वया सत्यवतां वतंस ! ॥३७५॥
कषायवात्याप्रसरैः स्व[३]शक्ति–ज्ञानप्रदीपोऽस्तमवाप येषाम् ।
अद्यादि ते केवलिनोऽपि तेषां, ही दर्शयिष्यन्ति निदर्शनं माम् ॥ ३७६ ॥
तातस्य तस्यासि सुतस्त्वमेव, जातस्तदीयाध्वनि योऽध्वनीनः ।
त्वत्तो [४]जितस्तातपथाऽप्रवृत्तो, बलेन सत्त्वेन ततोऽस्मि हीनः ॥ ३७७ ॥
इति स्वनिन्दासलिलोर्मिवृन्दात्, प्रक्षाल्य जम्बालमिव स्वदोषम् ।
तदङ्गजं सोमयशोऽभिधानं, निवेशयामास तदीयराज्ये ॥ ३७८ ॥
तदादि विश्वेऽजनि 'सोम'वंशः, सहस्रसङ्ख्याप्रसृतोरुशाखः ।
चक्री ततो बाहुबलिं प्रणम्य, पुरी'मयोध्यां' सपरिच्छदोऽगात् ॥ ३७९ ॥
जानुलम्बितभुजो भववार्द्धि–र्जानुदघ्न इव मेऽभव[५]देवम् ।
ख्यातु[६]मेव स ननन्द सुनन्दा–नन्दनो मुनिपतिः प्रतिमास्थः ॥ ३८० ॥[७]
नासाऽन्तविश्रान्तविलोचनद्वयो, निष्कम्पमूर्त्तिर्लयलीनमानसः ।
उच्छ्वासनिःश्वासविशेषवर्जितो, यतिः सुवर्णप्रतिमेव सोऽशुभत् ॥ ३८१ ॥[८]

१ क–'यम्' । २ क–'प्रकृता०' । ३ क–'सुशक्ति–' । ४ क–'यतस्तात०' ।
५ क–'मेवम्' । ६ क–'मेष स' । ७ स्वागता । ८ इन्द्रवंशा ।

दुष्कर्मकान्तारमपारमप्यलं, ध्यानानलैर्ज्वालयताऽधिकोज्ज्वलैः ।
महर्षिणा ग्रीष्मदिवाकरांशवो, दवानलार्चिर्विषमा विषेहिरे ॥ ३८२ ॥[1]

तपर्तुवात्याप्रकरेण[2] रेणुभि-स्तस्मिन् विकीर्णैर्घनघर्मवारिणा ।
पङ्कीभवद्भिर्वपुषो बहिःस्थितै-र्निष्पङ्कतान्तर्यतिपुङ्गवे कृता ॥ ३८३ ॥[3]

धारासारैः प्रावृषेण्याम्बुदानां, स्फूर्जज्झञ्झावातजातद्रुकम्पैः[4] ।
कायः कायोत्सर्गतस्तस्य साधो-र्ध्यानाच्चेतश्चालिलिङ्गाचलत्वम् ॥ ३८४ ॥[5]

साधोस्तस्याधोवहद् वारिस्रुतेः, शेवालस्य च्छद्मना पादयुग्मे ।
स्वान्तात् क्षिप्ते तत्प्रवेशासमर्थे, व्यर्थं [6]लेश्ये कृष्ण-नीले विलग्ने ॥ ३८५ ॥[7]

कायोत्सर्गस्थिरतनुरसौ निर्ममेऽस्मद्धिमाद्रि-
स्थैर्यस्पर्द्धां ध्रुवमिति रुषा वाततारैस्तुषारैः ।
एत्याक्रान्तः[8] स्फुरति सुतरामन्तरा ध्यानवह्नौ
हेमन्तर्तावपि मुनिपतिर्नाप कम्पं मनाक् सः ॥ ३८६ ॥[9]

हैमनीषु रजनीषु हि मान्या, तस्य बाहुबलिनो मुनिभर्तुः ।
ध्यानमुज्ज्वलमराजत यंव्य-[10]क्षेत्रवत् कलितपुष्टिविशिष्टम् ॥ ३८७ ॥[11]

साधूत्तंसे गुरुतरतरुस्कन्धवत् तत्र कृत्वा
शृङ्गाच्छोटं विपिनमहिषाः स्कन्धकण्डूयनानि ।
दन्ताघातान् क्षितिधरशिरोदेशवद् दन्तिसङ्घा-
स्तेनुस्तस्याप्यभजत पुनः कम्पमात्रं न गात्रम् ॥ ३८८ ॥[12]

त्यक्तयाऽपि परिरब्धुमुत्कया-[13]ऽनन्तया स निहितैर्भुजैरिव ।
भूरिवल्लरिगणैः सकङ्कणैः, प्रावृषि द्रुरिव पर्यवेष्ट्यत ॥ ३८९ ॥[14]

---

१ इन्द्रवंशा । २ ग्रीष्मर्तुपवनसमूहप्रकरेण । ३ इन्द्रवंशा । ४ क-'जातवातप्रकम्पैः' । ५ शालिनी । ६ "द्विविधा लेश्या द्रव्यभावभेदतः । तत्र द्रव्यलेश्याः कृष्णादिवर्णमात्रम्, भावलेश्यास्तु कृष्णादिवर्णद्रव्यावष्टम्भजनिताः परिणामकर्मबन्धनस्थितेर्विधातारः, श्लेषद्रव्यवद् वर्णकस्य चित्राद्यर्पितस्येति, तत्राविशुद्धोत्पन्नमेव कृष्णवर्णस्तत्सम्बद्धद्रव्यावष्टम्भादविशुद्धपरिणाम उपजायमानः कृष्णलेश्येति व्यपदिश्यते ।...... तथा नीलवर्णद्रव्यावष्टम्भान्नीललेश्या" इति **तत्त्वार्थ**( अ. २, सू. ७ )वृत्तौ ( पृ. १४७ ) । ७ शालिनी । ८ क-'क्रान्त स्फुरति' । ९ मन्दाक्रान्ता । १० यवक्षेत्रवत् । ११ स्वागता । १२ मन्दाक्रान्ता । १३ पृथ्व्या । १४ रथोद्धता ।

राजर्षिराजः स रराज विष्वग्, लताभिरावेष्टितगात्रयष्टिः ।
नीलारविन्दद्युतिभिः कटाक्ष–च्छटाघटाभिः किल मुक्तिवध्वाः ॥३९०॥[1]

प्रावृट्पङ्कशरण्ययोश्चरणयोस्तस्यर्षिचूडामणे–
र्विभ्राणैरभितः परोद्गमभरं दर्भैरदभ्रैर्बभे ।
जात्योद्यन्नखपद्मरागकिरणप्रेम्णा प्रणद्धैः स्थिरैः
[2]म्रेह्वेन्द्रप्रकरेन्द्रनीलमुकुटज्योतिःप्ररोहैरिव ॥ ३९१ ॥[3]

पावित्र्यं परमर्द्धिबाहुबलिनः साधोः समाराधये
यस्यांह्रिद्वयसेवया ध्रुवमभूद् दर्भेऽद्भुता पूतता ।
किं ब्रूमो जगतोऽपि हि व्यवहृतौ तेनार्हतामप्यसौ[4]
प्राक्पीठे स्नपनेऽथ पावनकृतिप्रष्ठः प्रतिष्ठास्वभूत् ॥ ३९२ ॥[5]

तस्य वल्लिकुलकुं[6]ञ्जनिकाये–ऽभूत् खगैः कृतकुलायनिकाये ।
वैरिणोर्विहगयोरविरोध–श्छायया दलतते रविरोधः ॥ ३९३ ॥[7]

तत्र वल्लिवलयेन सङ्कुले, खेलनं खगकुलस्य रक्षया ।
बिभ्रतां फणभृतां फणव्रजैः, पल्लवद्विगुणता व्यतन्यत ॥ ३९४ ॥[8]

कायोत्सर्गस्थस्य तस्येत्ययासी–देकं वर्षं ध्यानधन्याशयस्य ।
सर्वाहारत्यागभाजो विहार–व्यासक्तस्येवादितीर्थङ्करस्य ॥ ३९५ ॥[9]

वर्षान्ते वृषभध्वजप्रभुरिदं ब्राह्मीं तथा सुन्दरीं
प्रोचे बाहुबलिः स हायनतपःप्रम्लानकर्मा मुनिः ।
मेघाच्छादितमर्कमण्डलमिवा[10]मुष्यास्ति मानावृतं
ज्ञानं सम्प्रति तत्प्रबोधसमयो यातां भवत्यौ ततः ॥ ३९६ ॥[11]

मानं तथा तस्य विदन्नुपेक्षां, चक्रे त्रिलोकीप्रभुरब्दमेकम् ।
अमूढलक्ष्या हि जिनाधिनाथा, निजोपदेशं समये सृजन्ति ॥ ३९७ ॥[12]

तयाऽऽज्ञया विभोर्ब्राह्मी–सुन्दर्यौ तत्र जग्मतुः ।
[13]भ्रान्त्वा द्रुवल्लतालीढं, चिरान्मत्वा तमूचतुः ॥ ३९८ ॥[14]

---

१ उपजातिः । २ नम्रेन्द्रौघ० । ३ शार्दूल० । ४ दर्भः । ५ शार्दूल० । ६ ख–'कुञ्जिनिकाये' । ७ स्वागता । ८ रथोद्धता । ९ शालिनी । १० क–'मुख्या०' । ११ शार्दूल० । १२ उपजातिः । १३ क–'भ्रात्वा' । १४ अनुष्टुप् ।

यतिन्! समाज्ञापयति त्रिलोकी–प्रभुः स तातो भगवानिदं त्वाम् ।
दन्तावलस्कन्धकृताधिरोहा, न केवलज्ञानमवाप्नुवन्ति ॥ ३९९ ॥[१]

उदित्वेदं यथाऽऽयातं, जग्मतुस्ते तपोधने ।
विस्मेरविस्मयः सोऽपि, चेतस्येतदचिन्तयत् ॥ ४०० ॥[२]

विमुक्तावद्यवर्गस्य, कायोत्सर्गकृतस्थितेः ।
कान्तारेऽत्र कुतस्त्यं मे, हस्तिस्कन्धाधिरोहणम्? ॥ ४०१ ॥[३]

यदि प्रक्षीणकर्माणो, मुक्ताः संसारिणः पुनः ।
तदा त्रिजगदाराध्य–भाषितं सम्भवेन्मृषा ॥ ४०२ ॥[४]

किमिदं तदहो ज्ञात–मथवा मान एव मे ।
गजस्तत्राधिरूढोऽहं, धिङ् मोहं द्रोहकारिणम् ॥ ४०३ ॥[६]

कथं लघीयसो भ्रातॄं–स्तपोभिरलघीयसः ।
वन्दे धिगिति चिन्तां मे, मिथ्यादुष्कृतमस्तु तत् ॥ ४०४ ॥[७]

कनीयसोऽपि पूर्वात्त–प्रव्रज्याज्ज्यायसो यतीन् ।
तान् गत्वा तातपादान्ते, वन्दिष्ये शिष्यशिष्यवत् ॥ ४०५ ॥[८]

एवं मानसतोऽभिमानमभितो मुक्त्वा मुनिग्रामणी–
यावत् पादमुदक्षिपत् क्षितितलादेकं विवेकं दधत् ।
तावद्धि त्रुटिते लतापटलवत् तद्घातिकर्मोत्करे
तस्य ज्ञानमहः सहस्रकरवन्नाशे [१०]निशो[११]ऽद्योतत ॥ ४०६ ॥[१२]

मानं मोहनरेन्द्रवीरपृतनोत्तंसं तदीयास्पदं
चेतश्च प्रविमूल्य बोधबलतो ज्ञाने समुन्मीलिते ।
तातं प्राप्य कृतप्रदक्षिणविधिस्तीर्थाय कृत्वा नमो
भेजे बाहुबलिः स केवलिसभां पूर्णप्रतिज्ञो मुनिः ॥ ४०७ ॥[१३]

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रविरचिते पद्मानन्दापरनाम्नि श्रीजिनेन्द्र-
चरिते महाकाव्ये वीराङ्के श्रीआदिनाथचरिते बाहुबलिसङ्ग्राम-दीक्षा-
केवलज्ञानसङ्कीर्तनः सप्तदशः सर्गः समाप्तः ॥ १७ ॥

---

१ उपजातिः । २–३–४ अनुष्टुप् । ५ क–'जात–' । ६–८ अनुष्टुप् । ९ क–'तावद् वित्रुटिते' । १० निशायाः । ११ क–'ऽद्योत्यत' । १२–१३ शार्दूल० ।

यद्गीर्गुरुस्त्रिपथगा त्रिजगज्जनानां, पावित्र्यकृन्मधुरबन्धुरवर्णवर्ण्या ।
चित्रं तु जाड्यनिचिता न न नीचवृत्ति–श्चेतोरतिं सृजतु वः स युगादिनाथः १[1]

याचन्ते कृतिनः कदाचन जनं नैव स्वयं मे सुता–[2]
स्तेभ्यः सम्प्रति नैव कश्चन पुनर्दातुं प्रतिज्ञापरः ।
धातस्तात! विधेहि पद्मसचिवं दीर्घायुषं यः श्रिया
यत् तान् जीवयतीति वाङ्गिगदितो[3] ब्रह्माऽस्त्वजिह्माग्रहः ॥ १ ॥[4]

ग्रन्थाग्रम् ॥ [5]५६४ ॥



१ वसन्ततिलका । २ मे सुताः पण्डिताः । ३ सरस्वत्या निगदितः । ४ शार्दूल० ।
५ ख–'५७४'; ५०५ इति ख–टि–पाठः ।

## अष्टादशः सर्गः १८

जयत्यादिजिनो येन, निर्ममेनापि निन्यिरे ।
पुत्रपौत्रादयः साक-मात्मना मुक्तिमन्दिरम्[1] ॥ १ ॥[2]

मरीचेर्दीक्षाग्रहणानन्तरं चिन्ता

इतश्च चक्रिणः सूनु-र्मरीचिर्योऽचरद् व्रतम् ।
रविणेव बुधः सार्द्धं, स्वामिना विजहार सः ॥ २ ॥
सोऽधीत्यैकादशाङ्गेषु[3], सुसाधुत्वधरोऽचरत् ।
स्वामिशिष्यान्वितो राशि[4]-धिष्ण्ययुक्तो यथा ग्रहः ॥ ३ ॥
ग्रीष्मे भीष्मेण तापेन, पीडितः पथि सोऽन्यदा ।
निसर्गसुकुमाराङ्गो, विममर्शेति मानसे ॥ ४ ॥
तपर्त्तुतपनोत्तप्ते, वालुकास्थलवर्त्मनि ।
आगुल्फमग्नचरणै-श्चैर्यं[5] चारित्रचारुभिः ॥ ५ ॥
साधर्म्याद् गुष्मेमेवैत्य[6], दावज्वालाभिराश्रिताः ।
उष्णांशोरंशवोऽत्युष्णाः, सह्या मध्यन्दिनेऽध्वनि ॥ ६ ॥
देहदाहं हर्तुमिवो-द्यतेन स्वेदवारिणा ।
क्लिन्नस्याङ्गमलस्योग्रो, ग्रास्यो दुर्गन्धडम्बरः[7] ॥ ७ ॥
गम्यं नरकशीतोष्ण-क्षेत्रानुभवभीरुणा ।
शीतेऽप्युष्णेऽप्यचरण-त्राणं चारित्रिणा पथि ॥ ८ ॥
लुब्धको[8]त्पाट्यमानत्वक्-पक्ष्मपक्षित्वलुप्तये ।
केशप्रोन्मूलनक्लेशः, सोढव्यः सुदृढाशयैः ॥ ९ ॥
क्षुधापिपासाशीतोष्ण-दंशमुख्याः परीषहाः ।
दुःसहा हन्तुं तानेव, सहनीया महर्षिभिः ॥ १० ॥
श्रामण्यमंनणीयोभि[10]-र्मूलोत्तरगुणैरिति ।
दुर्वहं वहनीयं यत्, तन्मूर्ध्ना[11] मेरुधारणम् ॥ ११ ॥

---

१ क-'पु(मु ?) त्रमन्दिरम्' । २ ७०तमपर्यन्तानां पद्यानां छन्दो'ऽनुष्टुप्' । ३ प्रेक्ष्यतां ११४तमं पृष्ठम् । ४ राशिर्मेषादिः; धिष्ण्यमश्विन्यादि नक्षत्रम् । ५ क-'श्चर्यं' । ६ क-'मित्येव' । ७ ख-'दुर्गन्धि०' । ८ ख-'मृगयूत्पाट्य०' । ९ व्याध० । १० क-'मनणीयोति०' । ११ श्रामण्यम् ।

श्रामण्यं स्वामिनो ज्ञात-तत्त्वाः सत्त्वाढ्यवृत्तयः ।
दुष्पालं पालयन्त्येते, मुक्तिकामा महर्षयः ॥ १२ ॥
अहं तु वोढुमसहो, व्रतभारममुं हहा ।
पङ्गुना किमरण्यानी[1], पद्भ्यामुल्लङ्घ्यते क्वचित् ? ॥ १३ ॥
श्रीमद्युगादिदेवस्य, पौत्रोऽहं त्रिजगद्गुरोः ।
पुत्रः षट्खण्ड'भरता'-धिपतेर्भरतेशितुः ॥ १४ ॥
चतुर्विधस्य सङ्घस्य, समक्षं स्वामिनोऽन्तिके ।
प्रव्रज्यामग्रहीषं च, प्रोक्तपञ्चमहाव्रतः ॥ १५ ॥
सत्येवं यामि चेद् राज्ये, लज्जा मुक्ता मया ततः ।
किल दातुमुपालम्भं, यास्यति स्वजनानियम्[2] ॥ १६ ॥
मुक्तव्रतस्य मे लोका, मुखालोकात् किलाकुलाः ।
जातपातकभारेण, भविष्यन्ति नताननाः ॥ १७ ॥
ममान्ववायो विमलो, नास्म्यलं[3] व्रतपालने ।
किं करोमि ? क्व गच्छामि ? दिङ्मूढ इव सम्प्रति ॥ १८ ॥

मरीचिना सकारणं वेषान्तरकरणम्

आ ज्ञातमस्त्युपायोऽय-मत्रस्तोऽत्रस्थ एव हि ।
वेषान्तरं करिष्येऽहं, हरिष्ये कष्टमात्मनः ॥ १९ ॥
मनो-वाक्-कायदण्डानां, खण्डने चण्डपण्डिताः ।
यतयोऽमी जितोऽहं तै[4]-स्तत् स्थास्यामि त्रिदण्डिकः[5] ॥ २० ॥
अमी हि मुनयो मुण्डा, मूर्द्धजव्रजलुञ्चनैः ।
क्षुरमुण्डः शिखाधारी, विहरिष्याम्यहं पुनः ॥ २१ ॥
मुनयोऽमी गलन्मोहा, मोहच्छन्नोऽहमस्मि यत् ।
तच्चिह्नं छत्रकं तस्माद्, धारयिष्यामि मूर्द्धनि ॥ २२ ॥
ऋषयोऽमी निष्कषायाः, कषायकलुषोऽस्म्यहम् ।
यतस्तत् परिधास्यामि, कषायाण्यंशुकान्यपि ॥ २३ ॥

---

१ महारण्यम् । २ लज्जा । ३ क-' नास्म्यहं' । ४ मनो-वाक्-कायदण्डैः ।
५ क-'त्रिदण्डकः' ।

विरता यतयः स्थूल–सूक्ष्मप्राणिवधादितः ।
विरतिः स्थूलप्राणाति–पातादिभ्योऽस्तु मे पुनः ॥ २४ ॥
भूरिजीवजलारम्भं, न भजन्तेऽघभीरवः ।
यतयोऽमी जलेनास्तु, स्नानं पानं मितेन मे ॥ २५ ॥
एते स्वाचरणत्राणा, विहरन्त्यनुपानहः ।
उपानद्भ्यां करिष्येऽहं, पुनश्चरणरक्षणम् ॥ २६ ॥
मरीचिर्विरचय्येति, स्वमत्या लिङ्गमात्मनः ।
दधौ तथाविधः सार्द्धं, विभुना विजहार सः ॥ २७ ॥
गार्हस्थ्यव्रतयोगे स, द्वयांशोऽभूद् तादृशः ।
अन्योन्यवर्णमिश्रत्वे[1], वर्णः स्यान्मेचको[2] यथा ॥ २८ ॥
तं निरूप्य तथारूप–मसदृक्षं महर्षिषु ।
स्मेराननो जनो धर्मं, पप्रच्छातुच्छकौतुकः ॥ २९ ॥
स्वामी धर्मं यथाऽऽदिक्षत्, तथा शुद्धं दिदेश सः ।
अयं तदकृतौ पृष्टो, न मे शक्तिरदोऽवदत् ॥ ३० ॥
भव्यान् प्रबोध्य प्रव्रज्यां, जिघृक्षून् प्रजिघाय सः ।
प्रभोः पार्श्वे प्रभुश्चैषां, ददौ दीक्षां दयानिधिः[3] ॥ ३१ ॥

मरीचे रोगपीडा

एवं विचरतस्तस्य, मरीचेः स्वामिना समम् ।
अङ्गेऽद्भुतार्तिभोगोऽभूद्, रोगो दुष्कर्मणः फलम् ॥ ३२ ॥
पङ्क्तिबाह्यो व्रतभ्रष्ट, इति कष्टयुतोऽपि सः ।
स्वयूथ्यैरपि निर्ग्रन्थै–र्न मरीचिरपाल्यत ॥ ३३ ॥
प्रतिचारं विना रङ्क–स्येवास्य व्याधिराधितः ।
विध्वमिश्रतमिस्रावत्, तमिस्रेणाप[4] पीवताम् ॥ ३४ ॥
रुजार्तश्चिन्तयामास, मरीचिरिति चेतसि ।
रोगे मग्नोऽसहायोऽहं, कूपे निरवलम्बवत् ॥ ३५ ॥

---

१ ख–'अन्यान्य०' । २ मयूरपिच्छचन्द्रवर्णः । ३ ख–'दयोदधिः' । ४ क–'तमिश्रात् प्राप' ।

निजमन्यमिवैते मा-मुपेक्षन्ते महर्षयः ।
अथवैषां न दोषोऽस्ति, न[1] यन्मय्युपचारिणः ॥ ३६ ॥
निरवद्यचरित्रास्ते, सावद्यचरितस्य मे ।
वैयावृत्त्ये न ताद्रूप्यं, सकुष्टस्येव बिभ्रति ॥ ३७ ॥
वैयावृत्त्यमहं चेत् तान्, कारयामि यतींस्ततः ।
व्रतभ्रंशोद्भवं मे स्यात्, पातकं जातकन्दलम् ॥ ३८ ॥
ततः स्वस्य करिष्यामि, कञ्चन प्रतिचारकम् ।
स्वकल्पमल्पधर्माणां, युज्यते सदृशा सदृक् ॥ ३९ ॥
इति चिन्ताकरं काला-न्मरीचिममुचद् गदः ।
रोगा भोगाश्च गच्छन्ति, स्वकर्मापगमेऽङ्गिनाम् ॥ ४० ॥

कपिलस्य मरीचिशिष्यरूपेण परिव्राजकतास्वीकारः

राजपुत्रो दूरभव्यः, सभायां स्वामिनोऽन्यदा ।
समाजगाम कपिलो, नाम कोऽपि कुतोऽपि हि ॥ ४१ ॥
स्वामिना कथितो धर्मः, कपिलायारुचन्न हि ।
उलूकाय सुखाय स्याद्, द्योतः प्रद्योतनस्य किम् ? ॥ ४२ ॥
मरीचिं स्वामिशिष्येभ्यो, लक्षयित्वा विलक्षणम् ।
स धर्मान्तरशुश्रूषा-स्पृहयालुस्तमाश्रयत् ॥ ४३ ॥
धर्मं पृष्टो मरीचिस्तु, तेन स्पष्टमदोऽवदत् ।
धर्मो नास्तीह धर्मेच्छु-श्चेत् तद् गच्छ जगत्पतिम् ॥ ४४ ॥
स्वाम्युपान्तमुपेतेन, तेन धर्मस्तथैव सः ।
श्रुतः स त्वरुचन्नासौ, चक्रायेवामृतद्युतिः[2] ॥ ४५ ॥
भूयो मरीचिमभ्येत्य, सोऽभ्यधादिति ते किमु ।
कीदृशोऽपि न धर्मोऽस्ति ? किं स्याद् धर्मोज्झितं व्रतम् ? ॥ ४६ ॥
श्रुत्वेत्यचिन्तयच्चित्ते, मरीचिर्मदवीचिमान् ।
कोऽप्यहो मेऽनुरूपोऽयं, सदृग् योगश्चिराद्भूत् ॥ ४७ ॥
मम निष्प्रतिचारस्य, प्रतिचारोऽस्त्वसाविति ।
अत्रापि धर्मोऽस्त्यत्रापि[3], धर्मोऽस्तीत्यभ्यधत्त सः ॥ ४८ ॥

---

१ क-'ये न मय्युप०' । २ चक्रवाकाय चन्द्र इव । ३ सम्भ्रमे द्विः ।

मरीचिर्मिथ्यावचसा, तेनैकेनाप्युपार्जयत् ।
स सागरकोटीकोटि-मानं संसारमात्मनः ॥ ४९ ॥
कपिलो दीक्षितस्तस्य, समुवाह सहायताम् ।
ततः प्रभृति भेजे च, परिव्राजकतां जनः ॥ ५० ॥

अष्टापदे प्रभोः समवसरणे इन्द्रचक्रिणोरागमनम्

अथ त्रिजगतीनाथः, पावयन् पृथिवीं क्रमात् ।
'अष्टापदा'ऽचलोत्सङ्गे, भगवान् समवासरत् ॥ ५१ ॥
वासवः समवसृतं, विज्ञाय स्वामिनं तदा ।
तत्राजगाम स्वर्धाम-स्वर्वामनयनाशतैः ॥ ५२ ॥
स प्रविश्योत्तरद्वारा, त्रिः प्रदत्तप्रदक्षिणः ।
नत्वा नुत्वा प्रभुं पूर्वो-त्तरस्यां न्यविशद् दिशि ॥ ५३ ॥
तथा च नाथं समव-सृतं पर्वतपालकाः ।
चक्रिणे कथयन्ति स्म, तदर्थं तत्र ते कृताः ॥ ५४ ॥
पारितोषिकदानेन, तेभ्यो भरतचक्रिणा ।
ददिरे द्वादश स्वर्ण-कोट्यः सार्द्धाः क्रमो ह्ययम् ॥ ५५ ॥
औयल्लक-प्रमोदाभ्यां, सुहृद्भ्यामिव नोदितः ।
सोऽगा'दष्टापदं' वेगात्, कृत्स्नसेनापरिच्छदः ॥ ५६ ॥
चक्री प्रविश्य समव-सरणं त्रिः प्रदक्षिणाम् ।
कृत्वेशं नत्वा स्तुत्वा च, निविष्टो हरिपृष्ठतः ॥ ५७ ॥
गिरा योजनगामिन्या, सर्वभाषाविशेषया ।
विश्वातिशयया स्वामी, विदधे धर्मदेशनाम् ॥ ५८ ॥
ग्रीष्मे तृष्णातुरैः प्राप्ता-ऽमृतपानोत्सवैरिव ।
दारिद्र्यविद्रुतैर्वेश्मा-ऽऽकल्पकल्पद्रुमैरिव ॥ ५९ ॥
नदीपूराप्तैर्लब्धद्रु-प्रालम्बालम्बनैरिव ।
तीव्रांशुतप्तैर्लब्धाध्व-पादपानातपैरिव ॥ ६० ॥

---

१ देवदेवाङ्गनाशतैः । २ भगवदागमनकथनार्थम् । ३ उत्कण्ठा० । ४ ख-'दरिद्र-विद्रुतै०' । ५ गेहस्थित० । ६ पूरप्राप्तैः । ७ दीर्घालम्बनैः । ८ क-'र्लब्धाध्व-' ।

शृण्वद्भिः स्वामिनो ध्यान-धारिभिर्धर्मदेशनाम् ।
सद्यः समुद्यदानन्दै-स्तस्थे तिर्यङ्-नरा-ऽमरैः ॥ ६१ ॥-त्रिभिर्विशेषकम्

भ्रातृनिभालनाद् भरतस्य आत्मनिन्दा भोगार्थं च तेभ्यो निमन्त्रणम्

देशनाविरतौ भ्रातॄन्, निभाल्य भरतप्रभुः ।
महाव्रतधरान् दध्या-विदं सानुशयाशयः ॥ ६२ ॥
अगृह्यन्त मया राज्या-न्यमीषामनुजन्मनाम् ।
षट्खण्ड'भरतै'श्वर्ये, [1]तैः किमासीन्ममाधिकम् ? ॥ ६३ ॥
अग्रजेनानुजन्मानः, पालनीया हि पुत्रवत् ।
राज्यान्येषां पुनस्तात-दत्तान्याददिरे मया ॥ ६४ ॥
ज्येष्ठोऽप्यज्येष्ठ एवैषां, लक्ष्मीं लुब्धो हरन्नहम् ।
तां त्वेते मम दत्त्वाऽऽत्त-व्रता मत्तो महत्तमाः ॥ ६५ ॥
भ्रातरोऽद्भुतलोभेन, पराभूता मयैव हि ।
श्रित्वाऽमी तातपादान्तं, तप्यन्ते दुस्तपं तपः ॥ ६६ ॥
भुञ्जेऽहं वर्यभोज्यानि, भिक्षाशान्नभुजस्त्वमी ।
शयेऽहं तूलिकातल्पे, पृथ्वीतलशयास्त्वमी ॥ ६७ ॥
अहं मृगमदक्लिन्नो, मलस्वेदाकुलास्त्वमी ।
नानायानाधिरोहोऽहं, क्रमचङ्क्रमणास्त्वमी ॥ ६८ ॥
कीदृशं मम सौभ्रात्रं, कीदृङ् मम पराक्रमः ? ।
सेवेऽहं चक्रिसौख्यानि, दुःखिनो हि सहोदराः ॥ ६९ ॥
अहो मम महन्मौग्ध्यं, सोदरा दूरतः कृताः ।
स्वीकृता लक्षशोऽप्यन्ये, मल्लक्ष्मीमुपभुञ्जते ॥ ७० ॥
यो [2]धुनाति निजबन्धुतां निज-स्तस्य कोऽस्तु पर एव यः परः ।
क्वापि यान्त्यमलपक्षिणो जलैः, शैवलं [3]शिति सहैव शुष्यति ॥ ७१ ॥[4]
येऽस्तबन्धुपरिरम्भसम्भव-प्रीतयो धनलवात्तसम्मदाः ।
ते हतेन्दुरवयो [5]व्योमणि-द्योतिनोऽतिमलिना [6]घना इव ॥ ७२ ॥[7]

---

१ भ्रातृराज्यैः । २ ख-'धुनोति' । ३ कृष्णम् । ४ रथोद्धता । ५ खद्योताः । ६ मेघाः । ७ रथोद्धता ।

बन्धुनाऽतिकटुनाऽपि सङ्गमः, सम्मदं[1] सृजति यं न तं सुधा ।
यत् सुधाकरकरेषु सत्सु न, प्रीयतेऽस्तभृति भास्करेऽम्बुजम् ॥ ७३ ॥[2]
यो बलिं[3] गिलति भूतलेऽन्धधी–र्बन्धुवर्गमवधूय निष्ठुरः ।
नित्यमुद्धरशिरोधरैर्मदा–देकदृग्भिरपि[4] स प्रहस्यते[5] ॥ ७४ ॥[6]
तदेतानर्थयेऽत्यर्थं, दीयमानानमी यदि ।
आददीरन् पुनर्भोगान्, भाग्याभोगैर्ममाद्भुतैः ॥ ७५ ॥[7]
इति निश्चित्य चित्तान्तः, पादान्ते त्रिजगद्गुरोः ।
भोगाय भरतो भ्रातॄन्, न्यमन्त्रयत भक्तिभाक् ॥ ७६ ॥
स्वामी स्माहेति तं चक्रि–न्नृजुचित्त! तवानुजाः ।
भोगान् भूयो न गृह्णन्ति, मुखश्लेष्मवदुज्झितान् ॥ ७७ ॥
क्षिप्त्वा कषायान् विषया–नाद्रियन्ते पुनर्न ये ।
प्रयान्त्यपुनरावृत्ति–पदं ते यतिपुङ्गवाः ॥ ७८ ॥
एवं श्रीवृषभाङ्केन, भोगेषु 'भरते'श्वरः ।
निषिद्धः सविषादेन, स्वान्तेन विममर्श सः ॥ ७९ ॥
भृशं भग्ना भवाभोगाद्, भोगान् यदि न भुञ्जते ।
भोक्ष्यन्ते तावदाहारं, प्राणाधारं तथाऽप्यमी ॥ ८० ॥
विमृश्येति शताङ्गानां, शतैश्चक्री स पञ्चभिः ।
नानाऽऽहारं समानाय्या–मन्त्रयामास तान् पुनः ॥ ८१ ॥
विभुर्भूयोऽभ्यधत्तेति, भरतं 'भरते'श्वर! ।
कल्पतेऽन्नादि साधूनां, नाधाकर्माहृतं[8] क्वचित् ॥ ८२ ॥
निषिद्धः पुनरित्यन्ने–नाकृताकारितेन सः ।
मुनीन् निमन्त्रयामास, वासना ह्यार्जवासनाः[9] ॥ ८३ ॥
यतीनां जातु राजेन्द्र! राजपिण्डो न कल्पते ।
इति चक्री निराचक्रे, त्रिजगत्पतिना पुनः ॥ ८४ ॥

---

१ क–'सम्पदं' । २ रथोद्धता । ३ भोज्यपदार्थम् । ४ काकैः । ५ क–'प्रहन्यते' । ६ रथोद्धता । ७ अतः परं पुनरपि ३२०तमं पद्यं यावत् छन्दो'ऽनुष्टुप्' । ८ आधानमाधा–साधुनिमित्तं चेतसः प्रणिधानं यथा अमुकस्य साधोर्हेतोर्मया भक्तादि पक्तव्यमिति आधया–कर्मणा पाकादिक्रियया आधाकर्म, तद्योगाद् भक्ताद्यपि आधाकर्म । ९ सरलताऽऽधाराः ।

सर्वथा प्रतिषिद्धोऽस्मि, विश्वभर्त्रेति तत्क्षणम् ।
भरतो मूर्च्छित इव, सविषादविषादभृत् ॥ ८५ ॥
पविलक्ष्मा विलक्षत्वं, प्रतिक्षेप्तुममुष्य तत् ।
भवत्यवग्रहो भर्त्तः!, कतिधेत्यभ्यधात् प्रभुम् ॥ ८६ ॥

अवग्रहाणां पञ्चविधत्वम्

व्याजहार प्रभुः पञ्च-प्रकारः स्यादवग्रहः ।
इन्द्र-चक्रि-नृपा-ऽगारि-साधुसम्बन्धिभेदतः ॥ ८७ ॥
पञ्चस्ववग्रहेष्वेषु, क्रमशः पाकशासन! ।
परोक्तेन परोक्तेन, पूर्वः पूर्वः प्रबाध्यते ॥ ८८ ॥
हरिराहावग्रहे मे, मुनयो विहरन्ति ये ।
मयाऽमीषामनुज्ञातः, स्वीयः शश्वदवग्रहः ॥ ८९ ॥
इत्युक्त्वा स्वामिनं नत्वा, सहस्रनयने स्थिते ।
भूयोऽपि 'भरत'स्वामी, चेतसैवमचिन्तयत् ॥ ९० ॥
अमीभिर्यतिभिर्यद्य-प्यन्नादि मम नादृतम् ।
तथापि स्यां कृतार्थोऽद्या-वग्रहानुज्ञयाऽप्यहम् ॥ ९१ ॥
इति निर्धार्य कार्यज्ञो, जगत्पतिपदाग्रतः ।
शचीश इव सोऽप्यन्व-ज्ञासीन्निजमवग्रहम् ॥ ९२ ॥
स्वच्छः पप्रच्छ पृथिवी-नाथः स्वर्नाथमित्यथ ।
भक्तपानप्रभृतिना, किं कार्यममुनाऽधुना? ॥ ९३ ॥
गुणोत्तरेभ्यः श्राद्धेभ्यो, देयमेतदितीरिते ।
शक्रेण चक्रिचित्तान्त-र्निश्चिकाय तथैव तत् ॥ ९४ ॥

इन्द्रस्य रूपम्

भास्वदाकृतिकं रूपं, निरूप्यानुपमं हरेः ।
पप्रच्छ विस्मयस्मेरो, वासवं भूमिवासवः ॥ ९५ ॥
ईदृक्स्वरूपं रूपं वः, किं स्वर्गेऽपि निसर्गतः? ।
अन्यादृशं वा स्युर्नाम, कामरूपधराः सुराः ॥९६ ॥

---

१ विषादरूपहालाहलात् । २ इन्द्रः ।

भूप ! यद् रूपमाद्यं मे, द्रष्टुमीष्टे नरो न तत् ।
इत्युक्ते हरिणा प्राह, भूयो विश्वम्भराप्रभुः ॥ ९७ ॥
रूपं वोऽप्रतिरूपं यद्, दिव्याकृति दिवस्पते ! ।
तेन प्रीणय मन्नेत्रं, शतपत्रं यथाऽर्यमा ॥ ९८ ॥
त्वमुत्तमः पुमांस्तेन, व्यर्था ते प्रार्थनाऽस्तु मा ।
अङ्गावयवमेकं तन्-नयिष्ये दृश्यतां तव ॥ ९९ ॥
इत्युक्त्वा स्वाङ्गुलीं शक्रो, लसत्कान्तिमदीदृशत् ।
दिवाकरकरश्रेणीं, सम्पिण्ड्येव विनिर्मिताम् ॥ १०० ॥–युग्मम्
किं मेघवाहनत्वात् स्वी–कृतामैरम्मदद्युतिम् ? ।
किं वा दम्भोलिपाणित्वात्, तत्प्रभां स्तम्भितामिमाम् ? ॥ १०१ ॥
बभारेन्द्रोऽङ्गुलीदम्भा–दिति भूपो निभाल्य ताम् ।
प्रभाभरैर्भासमानां, मानसाऽन्तरमानयत् ॥ १०२ ॥–युग्मम्
जगन्नाथं प्रणम्याथ, क्ष्मानाथमनुमान्य च ।
दिवं दिवस्पतिः प्राप, दृङ्मनोगतिजित्वरः ॥ १०३ ॥
ततः स्वामिनमानम्य, शक्रवच्चक्रवर्त्यपि ।
चित्ते निश्चित्य कृत्यानि, "विनीता"नगरीमगात् ॥ १०४ ॥
इन्द्राङ्गुलीं रत्नमयीं, किलेन्द्रप्रीतिकन्दलीम् ।
विन्यस्यारचयच्चक्री, प्रहृष्टोऽष्टाहिकामहम् ॥ १०५ ॥
ततः प्रभृति प्रोत्तम्भे–न्द्रस्तम्भमभितो भुवि ।
इन्द्रोत्सवः समारेभे, मर्त्यैः सोऽद्यापि वर्तते ॥ १०६ ॥ ?

प्रभोर्विहरणं भरतेन माहनतास्थापनम्

'अष्टापदा'द्रेरन्यत्र, व्यहरत् प्रभुरप्यथ ।
विश्वप्रबोधको भास्वा–नप्येकत्र स्थितोऽस्ति किम् ? ॥ १०७ ॥
ततः स्माह समाहूय, भरतः श्रावकानिति ।
इच्छाभोज्येन भोक्तव्यं, भवद्भिर्भवने मम ॥ १०८ ॥
कृष्याद्यारम्भसंरम्भं, धृत्वा स्वाध्यायधीधनैः ।

---

१ क–'प्रष्टु०' । २ भरतः । ३ ख–'वृथा' । ४ क–'ततः' । ५ इरम्मदस्य–मेघवह्नेरयं ऐरम्मदस्तस्य प्रभाम् । ६ ख–'विनीतां' ।

कर्तव्यः शश्वदव्यग्रै–रपूर्वज्ञानसङ्ग्रहः ॥ १०९ ॥
[1]भुक्त्वाऽभ्येतैर्ममाभ्याशे, भृशमभ्यस्यतामिति ।
"जितो भवान् भयं भूरि, ततो मा हन मा हन" ॥ ११० ॥
तथेत्युक्त्वा सार्वभौम–भवने भुञ्जते स्म ते ।
तद्वचोऽप्यशठाः पेठु–श्चक्री श्रुत्वैतदस्मरत् ॥ १११ ॥
जितः कैरहमा ज्ञातं, कषायैर्मे कुतो भयम् ।
[2]एतेभ्य एव तदहं, मा हन्यां देहधारिणः ॥ ११२ ॥
[3]मेदिनीदयिते तस्मिन्, प्रमादतमसाऽऽवृते ।
श्राद्धा जितो भवानेवं, स्मारयन्ति यदा तदा ॥ ११३ ॥
धिग् धिङ् मे धर्मवैमुख्यं, हा हा संसारसक्तता ।
ही ही प्रमादमित्रत्वं, हहहा विषयाग्रहः ॥ ११४ ॥
[4]अस्मादनुशयादासीद्, धर्मध्यानावधानता ।
क्षणिका प्रावृषेण्यायां, क्षणदायामिव क्षणम् ॥ ११५ ॥–त्रिभिर्विशेषकम्
प्रागर्जितोर्जिताभोग–भोगकर्मफलाद्भुताम् ।
भेजे भूमिविभुर्भूयो, विषयेष्वभिषङ्गताम् ॥ ११६ ॥
अथान्येद्युरिदं सूदा–ध्यक्षाः क्ष्मापं व्यजिज्ञपन् ।
बहुत्वाद् बुध्यते नैव, श्रावकोऽश्रावकोऽपि वा ॥ ११७ ॥
ततोऽदिशद् विशामीशः, सूदानद्यादि भोजनम् ।
[5]देयं परीक्षया यूय–मपि सुश्रावकाः स्थ यत् ॥ ११८ ॥

श्राद्धानामुपनयनं तत्पठनार्थं वेदचतुष्टयस्य प्रणयनम्

परीक्षितानां श्राद्धानां, रत्नत्रितयलक्षणम् ।
रेखात्रितयं[6]वैकक्षं, काकिण्या क्षोणिपो व्यधात् ॥ ११९ ॥
परीक्षिताः षण्मासान्ते, षण्मासान्ते नवा नवाः ।
तथैव चक्रिरे श्राद्धाः, काकिणीरत्नलाञ्छिताः ॥ १२० ॥

---

१ क–'मुक्त्वा' । २ कषायेभ्यः । ३ ख–'यदा ते स्मारयन्त्येवं, श्रावका भावकारिणः । मेदिनीन्दौ तदा तस्मिन्, प्रमादतमसाऽऽवृते ॥' ४ ख–'आसीदनुशयादस्माद्' । ५ ख–'कृत्वा परीक्षां दातव्यं भवन्तः श्रावकाः' । ६ उपवीतम् ।

लेभिरे भोजनं तेन, लाञ्छनेनाथ तेऽपठन् ।
जितो भवानित्याद्येतां–स्तज्जना माहनान् जगुः ॥ १२१ ॥
अर्हत्स्तुतियतिश्राद्ध–धर्मकर्मसमुज्ज्वलान् ।
[1]आर्यान् वेदांस्तत्स्वाध्याय–विधानाय व्यधान्नृपः ॥ १२२ ॥
भरतादादित्यवंशा[2]–स्ततोऽजनि महायशाः ।
अतिबलो बलभद्रो, बलवीर्याह्वयस्ततः ॥ १२३ ॥
कार्तवीर्यो जलवीर्यो, दण्डवीर्योऽष्टमस्त्विति ।
[3]अष्टोर्वीशान् यावदसा–वाचारः प्रचचार च ॥ १२४ ॥–युग्मम्
एतेऽष्टौ भरतार्धस्य, भोक्तारो भूभृतोऽभवन् ।
मुकुटं स्वामिनः शक्रो–पनीतं मूर्द्धगं व्यधुः ॥ १२५ ॥
परैर्महाप्रमाणोऽयं, नेति वोढुमशक्यत ।
जायन्ते ह्यवसर्पिण्यां, हीनहीनतरा नराः ॥ १२६ ॥
[4]ईतश्च वाहयामास, वासरान् 'भरते'श्वरः ।
दानैरमानैः श्राद्धानां, [5]विभ्रमैः सुभ्रुवामपि ॥ १२७ ॥

प्रभोरष्टापदे पुनरागमनं धर्मदेशनाप्रदानं च

भुवनं बोधयन् गोभि–र्भगवान् भानुमानिव ।
'अष्टापदा'द्रावारुक्ष–द्दषिदेवगणैर्वृतः ॥ १२८ ॥
त्रिदशैस्तत्र समव–सरणे तत्क्षणं कृते ।
निविष्टो विष्टपस्वामी, निर्ममे धर्मदेशनाम् ॥ १२९ ॥
तत्रस्थं त्रिजगन्नाथं, तत्रत्या [6]मारुतत्वराः ।
'विनीता'मेत्य कथया–ञ्चक्रिरे चक्र[7]वर्तिनम् ॥ १३० ॥
भरतो[8]ऽभिददौ तेभ्यः, पुरावत् पारितोषिकम् ।
स्वर्धेनुद्रुमरत्नानां, दाने दैन्यं कदापि किम् ? ॥ १३१ ॥
भरतो'ऽष्टापदं' प्राप्य, त्रिः प्रदाय प्रदक्षिणाम् ।
प्रभुं नत्वा च नुत्वा च, यथास्थानं निषण्णवान् ॥ १३२ ॥

---

१ संसारादर्शन-संस्थापनपरामर्शन-तत्त्वावबोध-विद्याप्रबोधेति वेदचतुष्टयम् । २ क–'यशाः सुतो' । ३ क–नृपानेतान्' । ४ क–'शूलश्च' । ५ ख–'सुभ्रुवां विभ्रमैरपि' । ६ पवन-वेगाः । ७ क–'वर्तिनः' । ८ ख–'ऽतिददौ' ।

**सर्वभाषानुवादिन्या, गामिन्याऽऽयोजनं गिरा ।**
**जगतां क्लेशनाशाय, देशनामसृजत् प्रभुः ॥ १३३ ॥**
**प्रणम्य देशनाप्रान्ते, भरतस्त्रिजगत्प्रभुम् ।**
**व्यजिज्ञपदिदं रोमा-ञ्चिताङ्गो रचिताञ्जलिः ॥ १३४ ॥**

---

१ अथ श्री**हेमचन्द्रसूरिवरविरचितत्रिषष्टिशलाकापुरुषचरित्र**( प. १, स. ६ )गताः प्रस्तावायाताः केऽपि श्लोका लिख्यन्ते—

"देशनाविरतौ नत्वा, स्वामिनं भरतेश्वरः । रोमाञ्चितवपुर्बद्धा-ञ्जलिरेवं व्यजिज्ञपत् ॥ २७३ ॥
नाथेह 'भरते' यूयं, यथा विश्वाहितास्तथा । कत्यन्ये भाविनो धर्म-चक्रिणश्चक्रिणः कति ? ॥२७४॥
तेषां च नगरं गोत्रं, पितरावभिधा-ऽऽयुषी । वर्णं मानान्तरे दीक्षा-गती विज्ञापय प्रभो ! ॥२७५॥
अथाचचक्षे भगवान्, 'भरते' भाविनोऽपरे । त्रयोविंशतिरर्हन्त, एकादश च चक्रिणः ॥ २७६ ॥
जिनौ च विंशद्वाविंशौ, तत्र 'गोतम'वंशजौ । 'कश्यपा'न्वयजास्त्वन्ये, सर्वे निर्वाणगामिनः ॥२७७॥
'अयोध्या'यां **जितशत्रु-विजयातनयोऽजितः** । द्वासप्ततिपूर्वलक्षा-युष्को निष्कसमद्युतिः २७८
अर्द्धपञ्चमकोदण्ड-शतान्युत्तुङ्गविग्रहः । पूर्वाङ्गोनपूर्वलक्ष-पर्यायोऽसौ भविष्यति ॥ २७९ ॥
तथा मदीयनिर्वाणा-**ऽजित**निर्वाणकालयोः । सागरोपमकोटीनां, लक्षाः पञ्चाशदन्तरम् ॥ २८० ॥
'श्रावस्त्यां' **जितारिसेना**-भूः स्वर्णाभश्च **सम्भवः** । षष्टिपूर्वलक्षायुष्क-श्चतुर्धन्वशतोच्छ्रयः २८१
चतुःपूर्वाङ्गहीना च, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, लक्षाणि त्रिंशदन्तरम् ॥ २८२ ॥
'विनिता'पुर्यां **संवर-सिद्धार्थाजोऽभिनन्दनः** । पञ्चाशत्पूर्वलक्षायुः, सार्द्धधन्वशतत्रयः॥२८३॥
स्वर्णाभः पूर्वलक्षाष्ट-पूर्वाङ्गोनास्य तु व्रते । सागरोपमकोटीनां, दश लक्षाणि चान्तरम् ॥ २८४ ॥
तत्पुर्यां **सुमतिर्मेघ-मङ्गलाभूः** सुवर्णरुक् । चत्वारिंशत्पूर्वलक्षा-युर्धनुस्त्रिशतीमितः ॥ २८५ ॥
द्वादशपूर्वाङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, नव लक्षाणि चान्तरम् ॥ २८६ ॥
'कौशाम्ब्यां' **धरसुसीमा-सूनुः पद्मप्रभोऽ**रुणः। त्रिंशत्पूर्वलक्षायुष्कः, सार्द्धधन्वशतद्वयः॥२८७॥
षोडशपूर्वाङ्गन्यूनः, पूर्वलक्षाऽस्य तु व्रते । अब्धिकोटीसहस्राणां, नवतिः पुनरन्तरम् ॥ २८८ ॥
'वाराणस्यां' तु **प्रतिष्ठ-पृथ्वीसूनुः** सुवर्णरुक् । **सुपार्श्वो** विंशतिपूर्व-लक्षायुर्द्विधनुःशतः २८९
विंशत्यङ्गविहीनाऽस्य, पूर्वलक्षा व्रते पुनः । सागरोपमकोटीनां, सहस्राणि नवान्तरम् ॥ २९० ॥
**चन्द्रानने महासेन-लक्ष्मणाभूः** शशिप्रभः । दशपूर्वलक्षायुष्कः, शुभ्रः सार्द्धधनुःशतः ॥२९१॥
चतुर्विंशत्यङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, शतानि नव चान्तरम् ॥ २९२ ॥
'काकन्द्यां' **सुग्रीव-रामा-तनयः सुविधिः** सितः । पूर्वलक्षद्वयायुष्क, एकधन्वशतोच्छ्रयः॥२९३॥
अष्टाविंशत्यङ्गहीना, पूर्वलक्षाऽस्य तु व्रते । सागरोपमकोटीनां, नवतिः पुनरन्तरम् ॥ २९४ ॥
**शीतलो** 'भद्रिलपुरे', **नन्दादृढरथात्मजः** । स्वर्णाभः पूर्वलक्षायु-र्धनुर्नवतिमुच्छ्रितः ॥२९५॥
अमुष्य तु व्रते पूर्व-सहस्राः पञ्चविंशतिः । अन्तरं तु सरिन्नाथो-पमानां कोटयो नव ॥ २९६ ॥
**'सिंहपुरे' विष्णुराज-विष्णोः**सूनुः सुवर्णरुक् ।**श्रेयांस**स्तु जिनोऽशीति-शरासनसमुन्नतिः २९७
वर्षाणां चतुरशीत्या, लक्षैः प्रमितजीवितः । अमुष्य तु व्रते वर्ष-लक्षाणामेकविंशतिः ॥ २९८ ॥
षड्त्रिंशत्याऽब्दसहस्रैः, षट्षष्ट्या वर्षलक्षकैः । तथाऽर्णवशतेनोनो-ऽर्णवकोटिर्जिनान्तरम् ॥२९९॥
'चम्पा'पुर्यां **वासुपूज्यो, वसुपूज्य-जयात्मजः** । द्वासप्तत्यब्दलक्षायु-र्धनुःसप्ततिमुन्नतः ॥३००॥

रक्तोऽस्य चतुष्पञ्चाशद्, वर्षलक्षाणि तु व्रते । तथा सागरोपमाणां, चतुःपञ्चाशदन्तरे ॥ ३०१ ॥
'काम्पिल्ये' च **कृतवर्म-श्यामाभूर्विमलो** जिनः । षष्टिवत्सरलक्षायुः, षष्टिधन्वा सुवर्णरुक्॥३०२॥
अमुष्य च पञ्चदश, वर्षलक्षाणि तु व्रतम् । **वासुपूज्यान्त**तन्मोक्षा-ऽन्तरे च त्रिंशदर्णवाः ३०३
'अयोध्या'यां **सिंहसेन-सुयशोभूः** सुवर्णरुक् । **अनन्त**स्त्रिंशल्लक्षाब्दा-युः पञ्चाशद्धनून्नतिः ॥३०४॥
सार्द्धानि वर्षलक्षाणि, सप्त तस्य पुनर्व्रतम् । विमलमोक्षतन्मोक्षा-ऽन्तरे च नव सागराः ॥ ३०५ ॥
धर्मो 'रत्न'पुरे **भानु-सुव्रताभूः** सुवर्णरुक् । दशाब्दलक्षायुः पञ्च-चत्वारिंशद्धनून्नतिः ॥ ३०६ ॥
पर्यायस्तस्य वर्षाणां, सार्द्धलक्षद्वयं खलु । अनन्तमोक्षतन्मोक्षा-ऽन्तरेऽर्णवचतुष्टयम् ॥ ३०७ ॥
पुरे 'गजपुरे' **शान्ति-र्विश्वसेना-ऽचिरासुतः** । स्वर्णवर्णोऽष्टलक्षायु-श्चत्वारिंशद्धनून्नतिः ३०८
पञ्चविंशतिरब्दानां, सहस्राण्यस्य तु व्रते । अब्धित्रयं पल्यचतु-र्भागे त्रिकोणमन्तरम् ॥ ३०९ ॥
**कुन्थु**'गजपुरे' स्वर्ण-वर्णः-**शूर-श्रियोः** सुतः । पञ्चनवत्यब्दसह-स्रायुः पल्यार्द्धकान्तरः॥३१०॥
पञ्चत्रिंशद्धनुस्तुङ्गः, पर्यायेऽस्य तु वत्सराः । त्रयोविंशतिसहस्राः, सार्द्धसप्तशतानि च ॥ ३११ ॥
स्वर्णाभोऽ**रो** 'गजपुरे', **देवी-सुदर्शना**त्मजः । चतुरशीत्यब्दसह-स्रायुस्त्रिंशद्धनून्नतिः ॥३१२॥
पर्याये तस्य वर्षाणां, सहस्राण्येकविंशतिः । पल्यतुर्यांशोऽब्दकोटी-सहस्रोनो जिनान्तरम् ॥३१३॥
**मल्लिनाथो** 'मिथिला'यां, **कुम्भ-प्रभावती**प्रसूः । पञ्चविंशतिधन्वाऽब्द-कोटीसहस्रकान्तरः ३१४
नीलोऽस्याब्दसहस्राणि, पञ्चपञ्चाशदायुषि । एकवर्षशतोनानि, पूर्वोक्ताब्दानि तु व्रते ॥ ३१५ ॥
**पद्मा-सुमित्रसू** 'राज-गृहे' कृष्णस्तु **सुव्रतः** । त्रिंशद्वर्षसहस्रायु-र्धनुर्विंशतिमुन्नतः ॥ ३१६ ॥
सप्तवर्षसहस्राणि, सार्द्धान्येतस्य तु व्रतम् । चतुःपञ्चाशदब्दानां, लक्षाणि तु जिनान्तरम् ॥३१७॥
'मिथिला'यां स्वर्णवर्णो, **वप्रा-विजयभूर्नमिः** । दशवर्षसहस्रायुः, पञ्चदशधनून्नतिः ॥ ३१८ ॥
समासहस्रद्वितयं, सार्द्धमेतस्य तु व्रतम् । मोक्षान्तरं **नमि-नेम्यो**-र्वर्षलक्षाः षडेव हि ॥ ३१९ ॥
**शिवा-समुद्रविजया**-त्मजः 'शौर्यपुरे' शितिः । **नेमि**र्दशधनुस्तुङ्गः, समासहस्रजीवितः ३२०
शतानि सप्तवर्षाणां, प्रव्रज्यायाममुष्य तु । मुक्त्यन्तरे **नमिनेम्यो**-र्वर्षलक्षाणि पञ्च तु ॥ ३२१ ॥
**वामा-ऽश्वसेनभूः पार्श्वो**, 'वाराणस्यां' विनीलरुक् । नवहस्तप्रमाणाङ्गः, शतवत्सरजीवितः३२२
वर्षाणां सप्ततिस्तस्य, दीक्षायामन्तरे पुनः । सहस्राणि त्र्यशीतिः सा-र्द्धानि सप्त शतानि च ॥३२३॥
'कुण्डग्रामे' **महावीरः,सिद्धार्थ-त्रिशलासुतः** । स्वर्णाभः सप्तहस्ताङ्गो, द्वासप्तत्यब्दजीवितः३२४
द्वाचत्वारिंशदब्दानि, प्रव्रज्यायाममुष्य तु । **पार्श्व-वीरान्तराले** तु, सार्द्धं वर्षशतद्वयम् ॥३२५॥
'काश्यपा'श्चक्रिणो हेम-वर्णा अष्टैषु मोक्षगाः । त्वं मयीवा**जिते** तत्रा-'ऽयोध्या'यां **सगरः** खलु ॥
तुक् **सुमित्र-यशोमत्योः**, सार्द्धधन्वचतुःशतः । द्वासप्तत्या पूर्वलक्षैः, स तु प्रमितजीवितः ॥३२७॥
'श्रावस्त्यां' **मघवा भद्रा-समुद्रविजया**त्मजः । पञ्चाब्दलक्षायुः सार्द्ध-द्विचत्वारिंशद्धन्वकः ३२८
**सनत्कुमारो**ऽष्टलक्ष-त्र्यायु'र्हस्तिना'पुरे । प्राङ्मानादेकधन्वोनः, **सहदेव्यश्वसेन**भूः ॥३२९॥
**धर्म-शान्त्यन्तरे** चैतौ, तृतीयस्वर्गगामिनौ । **शान्तिः कुन्थुररश्चै**ते-ऽर्हन्तश्चक्रभृतोऽपि च ३३०
**तारा-कृतवीर्यसुतः, सुभूमो** 'हस्तिना'पुरे । षष्टिवर्षसहस्रायु-रष्टाविंशद्धनून्नतिः ॥ ३३१ ॥
**अरमल्ल्यन्तरे** भावी, सप्तमं नरकं गमी । 'वाराणस्यां' पुनः **पद्मो, ज्वाला-पद्मोत्तरा**त्मजः ३३२
त्रिंशद्वर्षसहस्रायु-र्धनुर्विंशतिमुच्छ्रितः । 'काम्पिल्ये' **हरिषेणस्तु, मेरा-महाहरि**प्रसूः ॥ ३३३ ॥
दशवर्षसहस्रायुः, पञ्चदशधनून्नतिः । **मुनि-नम्यो**र्विहरतो, द्वावप्येतौ भविष्यतः ॥ ३३४ ॥

१पुत्रः ।

**वप्रा-विजयभू** 'राज-गृहे' द्वादशकार्मुकः। **जय**स्त्र्यब्दसहस्रायु-**र्नमिनेमि**जिनान्तरे ॥ ३३५ ॥
'काम्पिल्ये' **ब्रह्मदत्त**स्तु, **चूलिनी-ब्रह्म**नन्दनः। सप्तवर्षशतायुष्कः, सप्तधन्वसमुन्नतिः ॥३३६॥
**श्रीनेमिनाथश्रीपार्श्व**-नाथतीर्थान्तरे त्वसौ। रौद्रध्यानपरो गामी, सप्तमीं नरकावनीम् ॥३३७॥
तत्र प्रभुरपृष्ठोऽपी-त्याख्यचक्र्यर्द्धविक्रमाः। त्रिखण्डावनिभोक्तारो, वासुदेवा नवाऽसिताः ॥३३८॥
अष्टमः 'काश्यप' कुल-स्तेषु शेषास्तु 'गौतमाः'। सापत्ना भ्रातरस्तेषां, बलदेवाः सिता नव ॥३३९॥
**त्रिपृष्ठः** केशवस्तत्र, नगरे 'पोतना'ह्वये। **प्रजापति-मृगावत्योः**, सुतोऽशीतिधनून्नतिः ॥३४०॥
महीं विहरमाणे तु, **श्रेयांस**जिनपुङ्गवे। चतुरशीत्यब्दलक्षा-युरन्त्यनरकं गमी ॥ ३४१ ॥
'द्वारावत्यां' **द्विपृष्ठ**स्तु, धनुःसप्ततिमुन्नतः। भुवं विहरमाणे तु, **वासुपूज्य**जिनेश्वरे ॥ ३४२ ॥
द्वासप्ततिवर्षलक्षा-युः **पद्मा-ब्रह्म**नन्दनः। गमिष्यति च सोऽवश्यं, षष्ठीं नरकमेदिनीम् ॥३४३॥
'द्वारावत्यां' **स्वयम्भू**स्तु, धनुष्षष्टिसमुन्नतिः। षष्टिवत्सरलक्षायु-**र्विमल**स्वामिवन्दकः ॥३४४॥
**भद्रराज**स्य **पृथिवी**-**दे**व्याश्चैष तनूरुहः। गमिष्यति च पूर्णायुः, षष्ठिकां नरकावनीम् ॥ ३४५ ॥
तस्यामेव नगर्यां तु, **पुरुषोत्तम** आख्यया। पञ्चाशत्कार्मुकोत्तुङ्गः, **सोम-सीता**तनूरुहः ॥३४६॥
वर्तमाने जिने**ऽनन्ते**, त्रिंशल्लक्षाब्दजीवितः। समाप्तायुरसौ षष्ठीं, नरकोर्वीं गमिष्यति ॥ ३४७ ॥
'अश्वपुरे' तु **पुरुष-सिंहो** नाम्ना भविष्यति। **धर्मनाथ**जिने पञ्च-चत्वारिंशद्धनून्नतिः ॥३४८॥
**शिवराजा-ऽमृता**सूनु-र्वर्षलक्षाण्यसौ दश। आयुरनुपाल्य षष्ठीं, नरकोर्वीं गमिष्यति ॥३४९॥
'चक्रपुर्यां' तु **पुरुष-पुण्डरीको**ऽभिधानतः। **अरमल्ल्यन्तरे लक्ष्मी-वतीमहाशिरः**सुतः ३५०
एकोनत्रिंशतं चापा-नयमुन्नतविग्रहः। पञ्चषष्टिसहस्राब्दा-युः षष्ठं नरकं गमी ॥ ३५१ ॥
**दत्तो** 'वाराणसी'पुर्यां, षड्विंशतिधनून्नतिः। जिनान्तरे तु तत्रैव, **शेषवत्यग्निसिंह**भूः ॥३५२॥
षट्पञ्चाशत् सहस्राणि, वर्षाणामस्य जीवितम्। गमिष्यति च पूर्णायुः, पञ्चमीं नरकावनीम् ॥३५३॥
**नारायण** इति ख्यातः, पुरे 'राजगृहा'ह्वये। द्वादशाब्दसहस्रायु-**र्मुनिनम्य**न्तरे त्वसौ ॥३५४॥
**कैकेयी-दशरथभू**-र्धनुःषोडशकोन्नतिः। गमिष्यति च पूर्णायु-स्तुरीयां नरकावनीम् ॥ ३५५ ॥
**कृष्ण**स्तु 'मथुरा'पुर्यां, **देवकी-वसुदेव**भूः। वन्दिता **नेमिनाथ**स्य, दशधन्वसमुच्छ्रयः ॥३५६॥
सहस्रमेकं वर्षाणा-मायुरस्य भविष्यति। ततो नरकमेदिन्यां, तृतीयायां गमिष्यति ॥ ३५७ ॥
प्रथमो बलदेवस्तु, तत्र **भद्रा**सुतोऽ**चलः**। पञ्चाशीतिर्वर्षलक्षा-ण्यायुरस्य भविष्यति ॥ ३५८ ॥
द्वितीयस्तु बलदेवो, भावी **विजय** आख्यया। **सुभद्रा**भूः पञ्चसप्त-त्यब्दलक्षाणि जीविता ३५९
तृतीयस्तु बलदेवो, **भद्र** इत्यभिधानतः। **सुप्रभा**भूः पञ्चषष्टि-र्वर्षलक्षाणि जीविता ॥ ३६० ॥
चतुर्थस्तु बलदेवः, **सुप्रभो** नामधेयतः। **सौदर्शनेयो**ऽष्टपञ्च-पञ्चाशल्लक्षजीवितः ॥ ३६१ ॥
पञ्चमो बलदेवस्तु, भावी नाम्ना **सुदर्शनः**। सप्तदशवर्षलक्ष-जीवितो **विजया**सुतः ॥ ३६२ ॥
षष्ठो बलो **वैजयन्त्याः**, सूनु**रानन्द** आख्यया। पञ्चाशीतिसहस्राणि, वर्षाणामस्य जीवितम् ३६३
सप्तमो बलदेवस्तु, **नन्दनो** नामधेयतः। पञ्चषष्टिसहस्राब्दा-यु**र्जयन्ती**समुद्भवः ॥ ३६४ ॥
अष्टमस्तु बलदेवः, **पद्मो**ऽ**पराजिता**सुतः। पञ्चदश सहस्राणि, वर्षाणामस्य जीवितम् ॥ ३६५ ॥
नवमस्तु बलदेवो, **राम** इत्यभिधानतः। द्वादशाब्दशतायुष्को, **रोहिणी**तनुसम्भवः ॥ ३६६ ॥
तत्राष्टौ मोक्षगा रामो, 'ब्रह्म'कल्पं गमिष्यति। उत्सर्पिण्यां 'भरते', कृष्णतीर्थे तु सेत्स्यति ३६७
**अश्वग्रीवस्तारकश्च, मेरुको मधुरेव** च। **निशुम्भ-बलि-प्रल्हाद-लङ्केश-मगधेश्वराः** ३६८
वासुदेवप्रतिमल्लाः, सर्वे चक्रप्रहारिणः। हनिष्यन्ति निजैश्चक्रै-र्वासुदेवकरं गतैः ॥ ३६९ ॥

विश्वोपकारनिरता, नाथ! यूयं यथा तथा।
'भरते' भाविनो धर्म-चक्रिणश्चक्रिणः कति? ॥ १३५ ॥
भाविनां त्रयोविंशत्य-र्हदेकादश चक्रिणाम्।
प्रत्येकं नवसङ्ख्यानां, विष्णूनां सीरिणामपि ॥ १३६ ॥
प्रतिविष्णूनां च ततः, पितृमातृपुराभिधाः।
वर्णा-ऽऽयु-र्मान-गत्यादीं-श्चक्रिणेऽकथयत् प्रभुः ॥ १३७ ॥-युग्मम्
किं कोऽप्यस्ति सदस्यत्र, नाथ! तीर्थं प्रवर्त्त्य यः।
पवित्रयिष्यति क्षेत्रं, 'भरतं' भगवानिव ॥ १३८ ॥
इत्युक्ते चक्रिणा धर्म-चक्रीत्यूचे पुनर्नृप!।
मरीचिरिति पुत्रस्ते, परिव्राट् प्रथमोऽस्ति यः ॥ १३९ ॥
स क्षेत्रे 'भरते'ऽत्रैव, पुरे 'पोतन'नामनि।
त्रिपृष्ठनामा प्रथमः, पद्मनाभो भविष्यति ॥ १४० ॥
भावी प्रत्यग् 'विदेहे'षु, चक्री 'मूका'पुरि श्रुतः।
धनञ्जयस्य धारिण्याः, प्रियमित्राह्वयोऽङ्गजः ॥ १४१ ॥
भवं भूरितरं भ्रान्त्वा, 'भारते'ऽत्र भविष्यति।
तीर्थङ्करश्चतुर्विंशो, महावीराह्वयस्त्वसौ ॥ १४२ ॥
निशम्येति समादाय, स्वाम्यनुज्ञां नरेश्वरः।
तं मरीचिं नमस्कर्तुं, भक्तिनुन्नोऽभिजग्मिवान् ॥ १४३ ॥
प्रथमस्त्वं त्रिपृष्ठाख्यो, [6]विष्वक्सेनो भविष्यसि।
यच्च चक्री 'विदेहे'षु, प्रियमित्र इति श्रुतः ॥ १४४ ॥
तन्न वन्दे तवेदं न, पारिव्राज्यं न वा जनुः।
[7]तत् तु वन्दे यदर्हंस्त्वं, चतुर्विंशो भविष्यसि ॥ १४५ ॥
'भरते'शोऽभिधायेति, दत्त्वा तिस्रः प्रदक्षिणाः।
नियोजिताञ्जलिर्मौलौ, तस्य तेने नमस्कृतिम् ॥ १४६ ॥-विशेषकम्
ततः स्वामिनमानम्या-'ऽयोध्यां' राजा ययौ पुरीम्।
कृत्वाऽथ त्रिः करास्फोटं, मरीचिरिदमूचिवान् ॥ १४७ ॥

---

१ तीर्थङ्कराः। २ बलदेवानाम्। ३ ख-'नामगोत्रा०'। ४ वासुदेवः
५ क-'मूकापरि'। ६ वासुदेवः। ७ ख-'तन्नु'।

आद्यः पितामहोऽर्हन्मे, पिता चक्रभृतामपि ।
अहं च वासुदेवानां, ममाहो कुलमुत्तमम् ॥ १४८ ॥
यद्यहं प्रथमो विष्णु–'र्मूका'यां चक्रवर्त्यहम् ।
अन्त्योऽहं तीर्थकृद् भावी–त्यलमेतावता मम ॥ १४९ ॥

मरीचेः कुलाभिमानः

द्रुमेभ्य इव कल्पद्रु–र्देवेभ्य इव वासवः[1] ।
निखिलेभ्यः कुलेभ्योऽपि, ममाहो कुलमुत्तमम् ॥ १५० ॥
अभ्रकुम्भीव कुम्भिभ्यो, धातुभ्यः शातकुम्भवत् ।
सकलेभ्यः कुलेभ्योऽपि, ममाहो कुलमुत्तमम् ॥ १५१ ॥
कृत्वा[2] परिकरं दृप्य–न्नृ-सुरा-ऽसुरसंसदि ।
श्लोकं श्लोकं पठित्वोच्चैः, करास्फोटं चकार सः ॥ १५२ ॥
करास्फोटेन तेनैव, प्रध्वनन्मरुदध्वना ।
स्वस्योच्चैर्गोत्रकर्मोच्चै–स्तूर्णं चूर्णीचकार सः ॥ १५३ ॥
तेनात्मकुलगर्वेणा–ऽगुणेनापि[3] गरीयसा ।
मरीचिर्नीचगोत्रं च, गुरुबन्धं बबन्ध सः ॥ १५४ ॥

प्रभोः शत्रुञ्जये गमनं पुण्डरीकादीनां मोक्षप्राप्तिमुद्दिश्य तत्र स्थापनम्

पुण्डरीकादिभिः सार्द्धं, गणभृद्भिरथ प्रभुः ।
अवनीं पावनीकुर्वन्, पादै रविरिवाचलत् ॥ १५५ ॥
देशानदवथुक्लेशा[4]–नुपदेशामृतैः सृजन् ।
अमृताब्द इव स्वामी, शैलं 'शत्रुञ्जयं' ययौ ॥ १५६ ॥
पञ्चाशद् योजनं मूले, मौलौ दश तु योजनम् ।
तमष्टयोजनोन्नत्य–मारुक्षत् क्ष्माभृतं प्रभुः ॥ १५७ ॥
गणैः सुराणां समव–सरणे तत्र सूत्रिते ।
निषसाद विषादघ्नीं, देशनां चासृजत् प्रभुः ॥ १५८ ॥
दिनानि कतिचित् तत्र, स्थित्वा लोकानुकम्पया ।
स्वाम्यन्यत्र प्रतिष्ठासुः[5], पुण्डरीकमदोऽवदत् ॥ १५९ ॥

---

१ ऐरावण इव । २ कटिं बद्ध्वा । ३ दुर्गुणेन, पक्षे अरज्जुना । ४ दावानलक्लेशरहितान् । ५ प्रयातुमिच्छुः ।

वयमन्यत्र यास्यामो, विहाराय महायते ! ।
त्वं युतो यतिकोटीभि–स्तिष्ठात्रैव तु पर्वते ॥ १६० ॥
अत्रैव भवतः क्षेत्रा–नुभावेन भविष्यति ।
केवलज्ञानं सपरी–वारस्याचिरकालतः ॥ १६१ ॥
तवात्रैव तथा शैले, शैलेशीध्यानशालिनः ।
साधो ! सुसाधुसङ्घस्य, मङ्क्षु मोक्षो भविष्यति ॥ १६२ ॥
तथेति प्रतिपद्यासौ, स्वामिवाणीं प्रणम्य च ।
गणभृद् गणकोटीभिः, साकं तत्रैव तस्थिवान् ॥ १६३ ॥
जगत्पतौ गतेऽन्यत्र, विहर्तुं सपरिच्छदे ।
श्रीपुण्डरीको गणभृ–न्महर्षीनित्यभाषत ॥ १६४ ॥
अयं महर्षयः ! 'शत्रु–ञ्जयः' सिद्धिनिबन्धनम् ।
अत्र क्षेत्रप्रभावेण, मङ्क्षु कर्मक्षयो भवेत् ॥ १६५ ॥
मुक्तेः संलेखना हेत्व–न्तरमप्यृषिपुङ्गवैः ।
विधेया द्विविधा सा तु, द्रव्य-भावविभेदतः ॥ १६६ ॥
सर्वोन्मादनिदानानां, सर्वामयविधायिनाम् ।
द्रव्यसंलेखना सर्व–धातूनां शोषणं भवेत् ॥ १६७ ॥
भावसंलेखना सा तु, या स्वभावविरोधिनाम् ।
स्याद् राग-द्वेष-मोहानां, कषायाणां च विच्युतिः ॥ १६८ ॥
इत्युक्त्वा यतिकोटीभिः, पुण्डरीको गणाग्रणीः ।
सममालोचयामासा–तिचारानणुबादरान् ॥ १६९ ॥
पुनर्महाव्रतारोप–मृषीणां गणभृद् व्यधात् ।
मुहुर्मुहुर्मृज्यमानो, मुकुरो ह्यतिनिर्मलः ॥ १७० ॥
क्षमयाम्यखिलान् जन्तून्, सर्वे क्षाम्यन्तु ते मयि ।
मैत्री मे तेषु सर्वेषु, वैरं केनापि नो मम ॥ १७१ ॥
इत्युदित्वा पुण्डरीकः, साकं श्रमणकोटिभिः ।
दुष्करं भवचरमं, चकारानशनं च सः ॥ १७२ ॥

१ क–'ससाधु०' । २ क–'निधानानां' ।

मासि चैत्रे पौर्णमास्यां, मासान्ते केवलं ततः ।
प्रथमं पुण्डरीकस्य, श्रमणानां ततोऽभवत् ॥ १७३ ॥
शुक्लध्यानाधिरोहेण, क्षीणेष्वखिलकर्मसु ।
प्रापत् तपस्विकोटीभिः, पुण्डरीकः परं पदम् ॥ १७४ ॥
स्वर्गादागत्य गीर्वाणा, निर्वाणाप्तिमहोत्सवम् ।
क्षणात् तेषां महर्षीणां, मरुदेव्या इव व्यधुः ॥ १७५ ॥
तीर्थकृत् प्रथमः स्वामी, यथा श्रीवृषभस्तथा ।
तदानीं प्रथमं तीर्थं, जज्ञे 'शत्रुञ्जयो' गिरिः ॥ १७६ ॥
सिद्धो महर्षिरेकोऽपि, तीर्थतां स्थानमानयेत् ।
महर्षिकोटयो यत्र, किं पुनः सिद्धिमव्रजन् ? ॥ १७७ ॥
'शत्रुञ्जयो'ऽद्रिषु [2]सिद्धि-क्षेत्रत्वान्मुकुटं स्फुटम् ।
नानारत्नमयं चक्र-वर्त्ती चैत्यमकारयत् ॥ १७८ ॥
प्रभुबिम्बं पुण्डरीक-युक्तं ( कृतं ) [3]तदन्तरा ।
आत्मानमिव विश्रान्त-रात्मानं च स्थिरं व्यधात् ॥ १७९ ॥
विहरन् भविनो भास्वद्-भवतापोज्झितान् विभुः ।
चन्द्रश्चन्द्रातपेनैव, बोधिदानेन निर्ममे ॥ १८० ॥

श्रीऋषभदेवस्य परिवारः

प्रभोः सर्वपरीवारः, समभूदिति साधवः ।
सहस्राश्चतुरशीतिः, साध्वी लक्षत्रयं पुनः ॥ १८१ ॥
चतुःसहस्री पञ्चाशद्-युक्ता सप्तशती तथा ।
चतुर्दश पूर्वधरा-स्त्ववधिज्ञानिनो नव ॥ १८२ ॥
सहस्राणि केवलिनः, सहस्रा विंशतिः पुनः ।
विंशतिः सहस्राः षट्-शती सद्वैक्रियलब्धयः ॥ १८३ ॥
सार्द्धा षट्शती द्वादश-सहस्राणि तु वादिनः ।
एतावन्त एव तथा, मनःपर्ययशालिनः ॥ १८४ ॥
द्वाविंशतिसहस्राणि, त्वनुत्तरोपपातिनः ।
त्रीणि लक्षाणि पञ्चाशत्, सहस्राः श्रावकास्तथा ॥ १८५ ॥

१ ख-'चैत्रे मासि पूर्णिमायाम्' । २ क-'सिद्ध-' । ३ ख-'तदनन्तरा' ।

पञ्चाशत्सहस्रैश्चतुः–सहस्राभ्यधिकैः पुनः ।
अन्वितान्यभवन् पञ्च, लक्षाणि श्राविकास्तथा ॥ १८६ ॥

निर्वाणसमयेऽष्टापदं प्रति प्रभोर्गमनं भरतस्य च सखेदं तत्रागमनम्

दीक्षाकालात् पूर्वलक्षे, गते त्रिजगतीपतिः ।
मोक्षकालं निजं मत्वा, ययाऽष्टापदाऽचलम् ॥ १८७ ॥

आरोहद् विष्टपाधीशो–'ऽष्टापदं' सपरिच्छदः ।
उच्चैस्तपस्तरोर्मोक्ष–फलग्राहस्पृहः किल ॥ १८८ ॥

तत्र शिश्राय साधूनां, सहस्रैर्दशभिः सह ।
पादपोपगमं स्वामी, चतुर्दशतपःपरः ॥ १८९ ॥

ततो 'भरत'नाथाय, जगन्नाथं तथा स्थितम् ।
गत्वा 'विनीतां' कथया–मासुराशु गिरिस्थिताः ॥ १९० ॥

आकर्ण्य तद्वचः कर्ण–वज्रसूचीसहोदरम् ।
अप्राप्तपूर्विकामर्तिं, चक्रवर्ती तदाऽन्वभूत् ॥ १९१ ॥

चक्री चतुर्विधाहार–परिहारपरे प्रभौ ।
चतुर्गतिप्रकारेऽपि, संसारे विरसोऽभवत् ॥ १९२ ॥

मुमोचाजस्रमश्रूणि, भरतोऽर्त्तिभरैर्भृतः ।
दीप्तशोकानलक्लिन्न–कपालस्यन्दबिन्दुवत् ॥ १९३ ॥

ततः प्रतस्थे भरतः, प्रत्य'ऽष्टापद'पर्वतम् ।
रयेण पादचारेण, सान्तःपुरपरिच्छदः ॥ १९४ ॥

कर्करैः कर्कशे मार्गे, राज्ञा नाज्ञायि वेदना ।
हृदा धृतेन शोकेन, कृतज्ञेनेव संहृता ॥ १९५ ॥

खरकर्करदूनांह्रि–क्षरद्रक्तच्छटाच्छलात् ।
संसाररागस्तस्यान्तः, शोकनुन्नः किलागलत् ॥ १९६ ॥

स[1] जनैरुपनीतेषु, वाहनेष्वारुरोह न ।
मद्यानमानतो नैषां[2], नैयनं[3]मिति[4] मानसात् ॥ १९७ ॥

---

१ भरतः ।　२ वाहनानाम् ।　३ क–'न यान०' ।　४ गमनम् ।

भरतस्य रयोद्भिन्न-भालस्वेदोदबिन्दुभिः ।
प्रभुभक्तेष्वभून्मुक्ता-पट्टबन्ध इवाध्वनि ॥ १९८ ॥

छत्रे मूर्ध्नि धृतेऽप्याप, न तापः क्ष्मापतेः शमम् ।
नान्तस्तापो विना याति, स्वामिनो दर्शनामृतम् ॥ १९९ ॥

अलं स्खलन्तीश्चरण-चारे चामरधारिणीः ।
पश्चाच्चक्रे चक्रवर्त्ती, स मरुज्जित्वरत्वरः ॥ २०० ॥

त्वरया परया क्ष्मापः, प्राप'दष्टापदं' क्षणात् ।
तस्यानुकूलनं कर्त्तु-मल्पीभूत इवाध्वनि ॥ २०१ ॥

ततः स 'भरत'स्वामी, पदगामी पदातिवत् ।
'अष्टापदा'द्रिमारोहद्, वायुनुन्न इवाम्बुदः ॥ २०२ ॥

स्तोकहर्षं दधौ शोकं, तत्र प्रेक्ष्य प्रभुं नृपः ।
सन्ध्याज्योतिर्युतं ध्वान्तं, शितिपक्षप्रदोषवत् ॥ २०३ ॥

चक्री प्रदक्षिणीकृत्य, स पर्यङ्कासनं प्रभुम् ।
नत्वा तदास्यदृक् पार्श्वे, निषसाद विषादवान् ॥ २०४ ॥

इत्थं स्थिते प्रभौ सुस्थाः, कथमेवं स्थिता इति ।
किलेन्द्राणां चतुःषष्टे-र्विष्टराणि चकम्पिरे ॥ २०५ ॥

तेऽवबुध्यावधिज्ञानान्-निर्वाणसमयं तदा ।
प्रभोरभ्यासमभ्येयु-रिन्द्राः सर्वे मनस्त्वराः ॥ २०६ ॥

दत्त्वा प्रदक्षिणां नत्वा, प्रभुं मौनपरायणाः ।
निषेदुः सविषादास्ते, दृषद्रूपधरा इव ॥ २०७ ॥

माघकृष्णत्रयोदश्यां प्रभोर्निर्वाणम्

एतस्यामवसर्पिण्यां, तृतीयारे गते सति ।
ऊने वर्षैस्त्रिभिर्मासै-रष्टभिः पक्षसंयुतैः ॥ २०८ ॥

माघमासस्य कृष्णायां, त्रयोदश्यां तिथावथ ।
पूर्वाह्णेऽभीचिगे चन्द्रे, पर्यङ्कासनगः प्रभुः ॥ २०९ ॥

---

१ प्रभुभक्तेषु भरतस्य मुक्तापट्टबन्धः सञ्जातः । २ भरतस्य । ३ ख-'अल्पीभूय' ।
४ कृष्णपक्षसायंकालवत् । ५ प्रभुमुखदृष्टिः ।

शुक्लध्यानं तृतीयं प्राक्, सूक्ष्मक्रियमसाधयत् ।
ततस्तुरीयमुच्छिन्न-क्रियं नाम समाश्रयत् ॥ २१० ॥–विशेषकम्
एरण्डबीजवद् बन्धा-भावादूर्ध्वगतिः प्रभुः ।
ऋजुनैवाध्वना सिद्धिं, भेजेऽनन्तचतुष्टयः ॥ २११ ॥
आरुह्य क्षपक[2]श्रेणिं, निःश्रेणिं श्रितकेवलाः ।
पदं प्रापुः परं तेऽपि, सहस्राः साधवो दश ॥ २१२ ॥
त्रैलोक्यप्रभुनिर्वाण-कल्याणान्नरकस्पृशाम् ।
सदा दुःखनिमग्नाना-मपि सौख्यमभूत् क्षणम् ॥ २१३ ॥
अस्तोकशोकसञ्छन्नो, भरतो मूर्च्छयाऽपतत् ।
दुःखच्छेदि तदाऽज्ञासीन्-न कोऽपि रुदितं यतः ॥ २१४ ॥
चक्रिणं ज्ञापयन् दुःख-खेदभेदनकारि तत् ।
शक्रः सङ्क्रन्दनं चक्रे, समग्रैस्त्रिदशैः सह ॥ २१५ ॥
रुदितैरुदितैस्तेषां, विमूर्च्छश्चक्रवर्त्यपि ।
रुरोद [3]रोदसीक्रोडं, पूत्कारैः परिपूरयन् ॥ २१६ ॥
रुदितेन क्षणात् तेन, शोकोऽन्तश्चक्रवर्तिनः ।
कुठारस्फारघातेन, दारुवत् प्राप दीर्णताम् ॥ २१७ ॥
दुःखशल्याकुलस्वान्त-विशल्यीकारकारणम् ।
तदादि किल लोकेऽपि, शोकेऽभूद् रुदितक्रमः ॥ २१८ ॥
विललाप ततः क्ष्मापः, सन्त्यज्येत्यात्मधीरताम् ।
हा तात! हा जगत्त्रात-स्त्यक्त्वा मां गतवानसि ॥ २१९ ॥
बाहुबल्यादयस्तेऽपि, भ्रातरो मम निर्ममाः ।
स्वसारौ ब्राह्मी-सुन्दर्यौ, पुण्डरीकादयोऽङ्गजाः ॥ २२० ॥
श्रेयांसप्रमुखाः पौत्रा, मां मुक्त्वैकाकिनं हहा ।
प्रक्षीणाखिलकर्माणो, निर्वाणपदमाश्रयन् ॥ २२१ ॥
जीवाम्यद्यापि पापोऽहं, राज्यमोहं त्यजामि न ।
त्वद्धर्मदेशनाशर्म, त्वां विना नाथ! कुत्र मे? ॥ २२२ ॥

---

१ एतत्स्वरूपार्थं प्रेक्ष्यतां तत्त्वार्थ( अ० ९, सू० ३८ )वृत्तिः ( पृ० २६९–२७३ ), विशेषावश्यकं ( गा० ५२८–५३३ ), विचारसारः ( पृ० ८३ ), लोकप्रकाशः ( स० ३ ) वा। २ क–'श्रेणी०'। ३ पृथ्व्याऽऽकाशमध्यम्।

मोहप्ररोहणादेव-मुद्विलापमिलापतिम् ।
प्रबोधमधुरैर्वाक्यै-र्बोधयामास वासवः ॥ २२३ ॥
आभियोगिकगीर्वाणान्, गीर्वाणाधिपतिस्ततः ।
'नन्दना'च्चन्दनैधांसि, समाहर्तुं समादिशत् ॥ २२४ ॥
अनिमेषा निमेषात् ते, घनं गोशीर्षचन्दनम् ।
आनिन्युः शतमन्युस्तै-श्चितात्रयमकारयत् ॥ २२५ ॥
प्राग-ऽपाक्-प्रत्यक्षु वृत्तां, ते त्र्यस्रां चतुरस्रकाम् ।
प्रभो'रिक्ष्वाकु'वंश्याना-मन्यर्षीणां चितां व्यधुः ॥ २२६ ॥
क्षीरनीरधिनीरेण, देवानीतेन देवराट् ।
स्वामिनः स्नपयामास, वपुर्विपुलभक्तितः ॥ २२७ ॥
गोशीर्षचन्दनैर्लिप्त्वा, वासवो दिव्यवाससा ।
रत्नालङ्करणैश्चापि, जगद्विभुमभूषयत् ॥ २२८ ॥
अन्ये त्वन्यमहर्षीणां, त्रिदशास्त्रिदशेन्द्रवत् ।
स्नपनप्रमुखं सर्वं, भक्तियुक्ता वितेनिरे ॥ २२९ ॥
सहस्रवाह्याः शिबिका-स्तिस्रो रत्नैः सुरा व्यधुः ।
प्रणम्यांह्री विभोर्देहं, शिबिकायां हरिर्न्यधात् ॥ २३० ॥
शिबिकायां द्वितीयायां, मुनी'निक्ष्वाकु'वंशजान् ।
यतीनन्यांस्तृतीयायां, मूर्ध्न्यारोप्य न्यधुः सुराः ॥ २३१ ॥
वाद्येषु वाद्यमानेषु, शक्रस्तां शिबिकां प्रभोः ।
चितोपान्ते निनायान्ये, निन्युश्च शिबिके सुराः ॥ २३२ ॥
चितासु तासु देवेन्द्रो, देवाश्चापि यथाक्रमम् ।
प्रभु'मिक्ष्वाकु'वंश्यांश्च, मुनीनन्यांश्च चिक्षिपुः ॥ २३३ ॥
शक्राज्ञयाऽग्निकुमारा-श्चितास्वाश्वग्निकायकान् ।
वायून् वायुकुमाराश्च, ज्वालनाय विचक्रिरे ॥ २३४ ॥
मुक्त्वाऽस्थीनि प्रदग्धेषु, धातुष्वर्ब्दकुमारकाः ।
व्यध्मापयन् क्षीरनिधेः, क्षीरनीरैश्चिताऽनलम् ॥ २३५ ॥

१ इन्द्रः । २ पूर्वदक्षिणपश्चिमासु । ३ आशु–शीघ्रम् । ४ मेघकुमाराः ।

शक्रादिभिः प्रभोर्दंष्ट्रादिग्रहणम्

जग्राहोपरिगां शक्रो, दंष्ट्रां वामेतरां[1] विभोः ।
ऐशानोऽप्यूर्ध्वगां दंष्ट्रां, स्वीचक्रे दक्षिणेतराम्[2] ॥ २३६ ॥
चमरेन्द्रोऽग्रहीद् दंष्ट्रां, दक्षिणस्थामधस्तनीम् ।
बलिस्त्वधस्तनीं वामां, दन्तानन्ये तु वासवाः ॥ २३७ ॥
[3]कीकसान्युररीचक्रु-स्ततोऽन्ये त्रिदिवौकसः ।
चितात्रयानलं श्राद्धा, लब्ध्वाऽर्चन्ति स्म वेश्मसु ॥ २३८ ॥
केचिद् ववन्दिरे भस्म, नीत्वा वेश्मसु नित्यशः ।
चक्रुश्चितात्रयस्थाने, त्रीन् स्तूपांस्त्रिदिवौकसः ॥ २३९ ॥
'नन्दीश्वरे' ततो द्वीपे, [4]नित्यार्हन्महिमोत्सवम् ।
कुर्वन्तस्ते सुपर्वेन्द्राः, स्थानं जग्मुर्निजं निजम् ॥ २४० ॥
स्वेषु स्वेषु विमानेषु, स्तम्भे 'माणवका'ऽभिधे ।
न्यधुरिन्द्राः स्वामिदंष्ट्रां, वृत्ते वज्रसमुद्गके ॥ २४१ ॥
तास्तत्र स्थापिता भक्त्या, पूजयन्ति स्म नित्यशः ।
[5]ते [6]तेषां तत्प्रभावेण[7], शश्वद्विजयमङ्गले ॥ २४२ ॥

भरतेन प्रासादनिर्मापणम्

तत्र 'सिंहनिषद्या'ख्यं, प्रासादं 'भरते'श्वरः ।
प्रभुसंस्कारभूपार्श्वे, मणीमयमकारयत् । २४३ ॥
स एकयोजनायाम-स्त्रिगव्यूतसमुन्नतः[8] ।
चक्रे वर्द्धकिरत्नेन, नानारत्नैर्नृपाज्ञया ॥ २४४ ॥
द्वाराणि तत्र चत्वारि, जज्ञिरे स्फटिकाश्मभिः ।
प्रतिद्वारं तोरणानि, रत्नरूपाणि षोडश ॥ २४५ ॥
द्वारेषु मण्डपप्रेक्षा-मण्डपाद्यखिलं पुरः ।
नानारत्नमयं जज्ञे, प्रासादे तत्र [9]चित्रकृत् ॥ २४६ ॥
तत्र श्रीवृषभादीनां, चतुर्विंशतिरर्हताम् ।
निर्मिताः प्रतिमा रत्नै-र्यथावर्णप्रमाः क्रमात् ॥ २४७ ॥

---

१ दक्षिणाम् । २ वामाम् । ३ अस्थीनि । ४ शाश्वतीजिनप्रतिमा० । ५ इन्द्राः । ६ इन्द्राणाम् । ७ दंष्ट्राप्रभावेण । ८ षट्क्रोश० । ९ क–'चित्रभृत्' ।

तत्रैव सूत्रयामास, चित्ररत्नाश्मराशिभिः ।
प्रतिमा नवनवते-र्भ्रातृणां 'भरते'श्वरः ॥ २४८ ॥
शुश्रूषमाणां तत्रात्म-प्रतिमामवनीपतेः ।
अभूत् कारयतो व्यक्ता-भक्तिरप्रतिमा पुनः ॥ २४९ ॥
चैत्याद् बहिर्विभोरेकं, भ्रातृणामेकवर्जितम् ।
शतं यशोराशिरूपान्, स्तूपान् भूपालको व्यधात् ॥ २५० ॥
मा कार्षुर्मानवा याता-यातैराशातनामिह ।
लौहान् यन्त्रमयानित्य-कार्षीदारक्षकानि[1]ह ॥ २५१ ॥
तैरारक्षकनरैः स्थानं, तदगम्यं नृणामभूत् ।
जैनतत्त्वैरिवोद्युक्तै-र्भयानां भव्यमानसम् ॥ २५२ ॥
राज्ञाऽद्रिर्दण्डरत्नेन, स निर्दन्तः कृतोऽजनि ।
नृणामगम्यो नारीणां, वार्द्धकेन पुमानिव ॥ २५३ ॥
तैर्दन्तैर्मूलतै[2]श्छिन्नै-र्ऋजुरुच्चतमो गिरिः ।
सो[3]ऽनारुह्यो नृणां जज्ञे, शाखी [4]शाखाऽङ्कुरैरिव ॥ २५४ ॥
योजनान्तरितान्यष्टौ, तमद्रिं परितो नृपः ।
पदानि विदधे तेन, स ख्यातो'ऽष्टापदा'ख्यया ॥ २५५ ॥
मर्त्यानामष्टभिः सोऽद्रि-स्तैः पदैर्दुरतिक्रमैः ।
[5]अनारुह्योऽभवन्मोक्षः, कर्मभिर्भविनामिव ॥ २५६ ॥
इति प्रासादं निर्माप्य, प्रतिष्ठाप्य जिनाधिपान् ।
विधिना भूधवोऽभ्यर्च्य, प्रणम्य क्रमतोऽस्तवीत् ॥ २५७ ॥
ततः 'सिंहनिषद्या'या, निरवद्याखिलक्रियः ।
नृसिंहो धर्मधीधुर्यः, स दर्या इव निर्ययौ ॥ २५८ ॥
प्रासादं स्वयशोराशि-मिव पल्लवितं ध्वजैः ।
पश्यन् विवलितग्रीव-मुत्ततार गिरेर्नृपः ॥ २५९ ॥
स स्वामिस्मरणैकाग्र-मानसो मानवेश्वरः ।
ययावयोध्यां नगरीं, कष्टा'दष्टापदा'द्रितः ॥ २६० ॥

---

१ क-'निव' । २ क-'श्छन्ने०' । ३ क-'ऽनारोह्यो' । ४ छिन्नैरित्यन्वयः ।
५ क-'अनारोह्यो' ।

स विवेश नृपः क्लेश-निवेशश्रवदश्रुभिः ।
पुरीं पौरजनैर्दृश्य-मानम्लानतमाननः ॥ २६१ ॥
स सौधमध्यमाप्तोऽपि, महारण्येऽशरण्यवत् ।[1]
रतिं कुत्रापि न प्राप, संस्मरन् परमेश्वरम् ॥ २६२ ॥
वारं वारं विभुं स्मारं-स्मारं नारंस्त केषुचित् ।
हृद्येष्वपि विनोदेषु, हृतसर्वस्ववन्नृपः ॥ २६३ ॥
त्रिलोकेशस्मृतेः शोक-व्याकुलः कुलमन्त्रिभिः ।
इत्यजल्प्यत राजन्यः[2], स्वाजन्यविशदं वचः ॥ २६४ ॥

शोकग्रस्तं भरतं प्रति मन्त्रिवचनानि

पूर्वं राज्यस्थितेनापि, येनायं निखिलो जनः ।
लक्ष्म्याः शश्वदलङ्कारे, व्यवहारे प्रवर्तितः ॥ २६५ ॥
ततः कलितदीक्षेण, येन केवलशालिना ।
धर्मेऽधिरोपितं विश्वं, भवाब्धेरुद्दिधीर्षुणा ॥ २६६ ॥
कृत्वा कृतार्थानात्मान-मिव योऽन्यान् जनानपि ।
अध्यास्ते स परां सिद्धिं, स सिद्धः शोच्यते कथम्? ॥ २६७ ॥
शुश्राव स्वामिनो धर्म-देशनामेकशोऽपि यः ।
शोकप्रकारैः संसार-विकारैः स न जीयते ॥ २६८ ॥
गरलेनेव पीयूषं, तिमिरेणेव तीव्ररुक् ।
कार्पण्येनेव कल्पद्रु-दौर्जन्येनेव सज्जनः ॥ २६९ ॥
अधर्मेणेव सद्धर्मो, मरणेनेव मोक्षगः ।
क्लिष्टलोकेन शोकेन, तत्त्वज्ञः क्वापि नाप्यते ॥ २७० ॥-युग्मम्
प्रजाशास्तिं त्वयि न्यस्य, स्वामी स्वार्थपरोऽजनि ।
बाहुबल्यादयस्तेऽपि, सर्वे स्वामिनमन्वगुः ॥ २७१ ॥
अद्यापि नाऽऽदित्ययशाः, कुमारो धूःसहः शिशुः ।
त्वयैकेन प्रजाः पाल्या-श्चेत् त्वं शोकेन जीयसे ॥ २७२ ॥
निर्नाथा इव तन्नाथ!, कः प्रजाः पालयिष्यति ।
तत् त्रिलोकैकधीरस्या-ङ्गजस्त्वं भज धीरताम् ॥ २७३ ॥-युग्मम्

---

1 ख-'रण्यशरण्य०' । 2 भरतः ।

सचिवैः शुचिवैदग्ध्य-प्रबोधैरिति बोधितः ।
राजकार्येषु राजन्यः, प्रावर्त्तत शनैः शनैः ॥ २७४ ॥
शोकमुक्तः क्रमाद् राजा, प्रोज्ज्वलेन नयेन सः ।
मेघोज्झितः शशीवांशु-वृन्देनानन्दयत् प्रजाः ॥ २७५ ॥
तदाऽस्मिन् वसुधां पाति, धर्मेणाप्यर्थ[1]चिकित्सितम् ।
अभूदर्थिकराप्राप्ति-रेव दुःखं जगज्जुषाम् ॥ २७६ ॥
कर्मभिः स भृशं भोग-फलदैरुपदीकृतान् ।
भोगान्[2] भूरितराभोग्यान्, भूविभुर्बुभुजेतराम् ॥ २७७ ॥
इति वैषयिकं सौख्यं, भुञ्जाने 'भरत'प्रभौ ।
पूर्वलक्षा ययुः पञ्च, स्वामिनिर्वाणवासरात् ॥ २७८ ॥
आ[3]कल्पकल्पनायागा-दन्येद्युर्मेदिनीपतिः ।
अन्तरन्तःपुरस्त्रीणां, स्वःस्त्रीणामिव वासवः ॥ २७९ ॥
त[4]त्रैकत्राविशन् सर्वा-ङ्गीणरत्नविभूषणे ।
वर्णिन्यो बिम्बितैस्तासां, मनःस्वेकस्तु सो[5]ऽविशत् ॥ २८० ॥

आदर्शभवने चक्रिणः प्रवेशः केवलज्ञानप्राप्तिश्च

यथाप्रमाणमात्मीयं, रूपं यत्र निरूप्यते ।
विशामीशोऽविशत् तत्र, रत्नादर्शनिकेतने ॥ २८१ ॥
स तत्र ज[6]गतीजानिः, सर्वाङ्गं प्रतिबिम्बितः ।
लोकः केवलिनो ज्ञाने, यथोर्ध्वपुरुषाकृतिः ॥ २८२ ॥
रत्नैर्वृद्धाऽपि वृद्धस्य, व[7]र्द्धितारुण्यधारिणी ।
कान्तेव भर्तुरज्ञातं, मुद्रिका करतश्च्युता ॥ २८३ ॥
रूपं निरूपयन् भूप-स्तत्रादर्शे ददर्श सः ।
अ[8]स्ताङ्गुलीयकामेकां, गतश्रीकां कराङ्गुलीम् ॥ २८४ ॥
मध्येऽङ्गुलीनां सा साऽल-ङ्काराणां निरलङ्कृतिः ।
राज्ञैक्षि निष्कला स्त्रीणां, सधवानामिवाधवा[9] ॥ २८५ ॥

---

१ निःसन्देहम् । २ क-'भोगान्' । ३ नेपथ्यकरणाय । ४ भरते । ५ भरतः । ६ क-'जगतां जानिः' । ७ वर्द्धितरक्तताधारिणी, पक्षे प्रवर्द्धियौवनधारिणी । ८ क-'अस्ता०' । ९ अविद्यमानो धवो यस्याः सा अधवा-मृतभर्तृका ।

अथेत्यचिन्तयच्चक्री, मत्कायोऽलङ्कृतिं विना ।
विच्छायः किं गतज्योत्स्नो, यथाऽह्नि मृगलाञ्छनः ? ॥ २८६ ॥
विमृश्येति स मूर्ध्नः प्राक्, किरीटमुदतारयत् ।
त्रिजगद्विभुना न्यस्त-मिव विश्वम्भराभरम् ॥ २८७ ॥
नृपः शिखरिणस्तस्य, किरीटस्य समुज्झनात् ।
अभूद् वप्र इव भ्रष्ट-कपिशीर्षपरम्परः ॥ २८८ ॥
स्मर-यौवनयोः सज्जे, युवतीमदजैत्रयोः ।
[1]स्फुरे इव नृपः प्रौज्झत्, कर्णयोर्मणिकुण्डले ॥ २८९ ॥
स त्यक्तकुण्डलद्वन्द्वो, निःश्रीकास्याम्बुजोऽजनि ।
अस्तानुदितसूर्येन्दुः, प्रदोषसमयो यथा ॥ २९० ॥
तारमुत्तारयामास, हारं [2]सर्वंसहाहरिः ।
कण्ठात् पाशमिव क्षिप्तं, महामोहमही[3]भुजा ॥ २९१ ॥
महीप[4]ातुरुरोहार-तद्धाप्राग्भारवर्जितम् ।
प्रातर्निस्तारकज्योत्स्ना-विस्तारं खमिवाभवत् ॥ २९२ ॥
बाह्वोर्महाबलाटोप-रोपयोः स्फोटशङ्कया ।
स बहिर्बन्धवलया-विवौज्झद् बाहुरक्षकौ ॥ २९३ ॥
तौ केयूरपरित्यक्तौ, भूभृद्बाहू बभूवतुः ।
क्षीण[5]ालवालवलय-परिवेषाविवांह्रिपौ ॥ २९४ ॥
चक्री प्रकोष्ठतश्चक्रा-णीव मन्मथचक्रिणः ।
भिन्नरामाभिमानानि, कङ्कणान्युदतारयत् ॥ २९५ ॥
नृपोऽपश्यत् प्रकोष्ठौ तौ, निर्मुक्तौ मणिकङ्कणैः ।
इन्द्रस्तम्भाविवोत्तीर्ण-सुमनो माल्यवेष्टनौ ॥ २९६ ॥
क्षोणिपः पाणिपद्मस्यो-ल्लासायेव रवित्विषः ।
प्रसक्ता मुद्रिकाः प्रौज्झ-दङ्गुलीपल्लवालितः ॥ २९७ ॥
अङ्गुल्यो गलितज्योति-र्ज्योतिरत्नाङ्गुलीयकाः ।
शाखिशाखा इवाभूवन्, [6]लूनप्रसवपल्लवाः ॥ २९८ ॥

---

१ 'ढाल' इति भाषायां । २ महीन्द्रः । ३ क-'भुजः' । ४ ख-'पतेरुरो०' ।
५ 'क्यारा' इति भाषायाम् । ६ छिन्ननूतनाङ्कुराः ।

इति पृथ्वीपतिस्त्यक्त-सर्वाङ्गीणविभूषणः ।
ददर्शात्मानमश्रीकं, पुमांसमिव निर्गुणम् ॥ २९९ ॥

इति दध्यौ च धिग् देहं स्वभावेनाप्यशोभनम् ।
उपचारैरिदं किञ्चिद्, वर्यं दुर्जनवद् बहिः ॥ ३०० ॥

द्रव्याणि सङ्गतान्यङ्गं, शुचीन्यशुचितां नयेत् ।
नद्यम्बूनीव पेयान्य-पेयत्वं लवणार्णवः ॥ ३०१ ॥

दक्षा मे भ्रातृमुख्या यै-रमुष्य वपुषोऽशुचेः ।
'मोक्षा'[1]ऽभिख्यं तपस्तप्त्वा-ऽग्राहि साहसिकैः फलम् ॥ ३०२ ॥

मुक्तीभूय[2] न के मुक्तिं, प्रययुर्मम गोत्रजाः ? ।
कामतप्तोऽहमेकोऽस्मि, पङ्के मग्नो लुलायवत्[3] ॥ ३०३ ॥

इत्ययं चिन्तयन्नुच्चै-रपूर्वकरणक्रमात् ।
क्षपकश्रेणिनिश्रेण्याः, शुक्लध्यानमुपेयिवान् ॥ ३०४ ॥

शुक्लध्यानबलेनाशु, प्रौढेन प्रबलान्यपि ।
मृणालतन्तुवत् तस्य, घातिकर्माणि तुत्रुटुः ॥ ३०५ ॥

चतुर्णां[4] विलयाद् घाति-कर्मणां तस्य केवलम् ।
उदगाद् रात्रियामाना-मिव चण्डांशुमण्डलम् ॥ ३०६ ॥

तदैवासनकम्पेन, प्रापत् तं तत्र वृत्रहा[5] ।
स्वामीव स्वामिभूर्मान्यो, विशेषात् प्राप्तकेवलः ॥ ३०७ ॥

द्रव्यलिङ्गं गृहाणेन्द्रे-णेत्युक्ते स लसद्गुणम् ।
केवलश्रीगृहे स्वस्मिन्, लोचमुल्लोचवद्[6] व्यधात् ॥ ३०८ ॥

रजोहरणमुख्योप-करणं व्रतलक्षणम् ।
आसन्नदेवतादत्त-मथादत्त स केवली ॥ ३०९ ॥

आत्तदीक्षो नमश्चक्रे, शक्रेण भरतस्ततः ।
सम्प्राप्तकेवलोऽपि स्यान्-न नमस्यो ह्यदीक्षितः ॥ ३१० ॥

तमनु प्राव्रजन् भूपाः, सहस्राणि दश श्रिताः ।

---

१ क-'भिक्षातप०' । २ निःसङ्गीभूय । ३ महिषवत् । ४ ज्ञानावरण-दर्शनावरण-मोहनीया-ऽन्तरायेति कर्मचतुष्टयम् । ५ इन्द्रः । ६ 'चंदरवो' इति भाषायाम् ।

भक्तिः श्रितानां स्याद् व्यक्ता, स्वाम्यवस्थाऽनुवर्त्तनात् ॥ ३११ ॥
भूभारधारणे धुर्यं, तनूजं 'भरते'[1]शितुः ।
आदित्ययशसं राज्ये-ऽभिषिषेच शचीविभुः ॥ ३१२ ॥
दीक्षाकालात् पूर्वलक्षं, भुवि भव्यान् प्रबोधयन् ।
विजहार परीवार-सहितो भरतो यतिः ॥ ३१३ ॥

अष्टापदे श्रीभरतमुनेर्निर्वाणम्

'अष्टापदा'द्रौ गत्वाऽथ, भरतो यतिपुङ्गवः ।
चक्रे चतुःप्रकारस्या-प्याहारस्य विवर्जनम् ॥ ३१४ ॥
ततोऽसावेकमासान्ते, विधौ श्रवणधिष्ण्यगे ।
भरतर्षिर्ययौ सिद्धिं, सिद्धानन्तचतुष्टयः ॥ ३१५ ॥
कौमारे पूर्वलक्षाणां, भरतः सप्तसप्ततिम् ।
अतिवाहितवान् शास-त्युर्वीं श्रीवृषभध्वजे ॥ ३१६ ॥
ततो माण्डलिकत्वेऽय-मत्यवाहयदार्षभिः ।
सहस्रमेकं वर्षाणां, छद्मस्थत्वे प्रभुर्यथा ॥ ३१७ ॥
शरदेकसहस्रोन-पूर्वलक्षाणि षट् पुनः ।
व्यतिचक्राम चक्रित्वे, स श्रीमद्वृषभाङ्गभूः ॥ ३१८ ॥
पूर्वाणां लक्षमेकं तु, विजह्रे जातकेवलः ।
प्रबोधसुधया सिञ्चन्, वसुधां स सुधांशुवत् ॥ ३१९ ॥
इत्यायुश्चतुरशीति-पूर्वलक्षाः प्रपाल्य सः ।
सिद्धिं ययौ सुरास्तस्य, निर्वाणमहिमां व्यधुः ॥ ३२० ॥
राज्ये श्रीवृषभध्वजप्रभुपदध्यानैकतानत्वतः
सङ्ग्रामास्तरिपुत्वतोऽर्थिपटलीकल्पद्रुकल्पत्वतः ।
ज्ञाने धर्मसमुद्धृतेर्मदजयाद्, बोधप्रदानात् त्रिधा
वीरत्वं भरतोऽनुभूय परमं प्रापत् पदं शाश्वतम् ॥ ३२१ ॥[2]

इति [3]श्रीमद्वायटगच्छीयजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचिते
श्रीपद्मानन्दापरनाम्नि [4]श्रीजिनेन्द्रचरिताभिधाने महाकाव्ये वीराङ्के

---

१ क-'भरणे' । २ शार्दूल० । ३ क-'श्रीजिनदत्तसूरि०' । ४ क-'जिनेन्द्रचरिते' ।

श्रीआदिनाथचरिते मरीचिस्वरूप–भगवन्निर्वाण–श्रीभरतकेव-
लोत्पत्तिमोक्षवर्णनो नामाऽष्टादशः सर्गः समाप्तः ॥ १८ ॥

[१]एतत्समाप्तौ समाप्तोऽयं श्रीमद् वृषभदेवचरिताभिधानो ग्रन्थः ॥ छ ॥

सोऽव्याद् वो वृषभप्रभुर्भवततौ सेवां बभारैव यां[२]
तां सन्त्यज्य चिराद् विरागललितो लोकस्थितिं यद्यपि ।
[३]एकं शाश्वतमुक्तिशर्म किमपि प्रापत् [४]परं यः पदं
साऽन्तर्भावभृता तथापि किल [५]यं ज्ञाने निलीनान्वगात् ॥ १ ॥

देवा यान्त्यमृताशनैरमरतां श्रीपद्म! वेद्मि ध्रुवं
श्रीदेवी समदा कदापि न ततस्त्वां मोक्तुमुत्कण्ठते ।
येनासौ सुकृतामृतैः प्रतिपदं सन्तर्प्यमाणा त्वया
सम्प्राप्तेत्यजरामरत्वमतुलं तत् त्वां कुतो मोक्ष्यति? ॥ २ ॥

[६]ग्रन्थाग्रं ॥ ३३६ ॥ सर्वाग्रं ॥ ६२६६ ॥

[७]सं० १५०७ वर्षे चैत्रशुद्ध(क्ल?)षष्ठ्यां रवौ ।



१ पाठोऽयं नास्ति क–प्रतौ । २ लोकस्थितिः । ३ क–'एकः' । ४ ख–'पदं यः परं' । ५ प्रभुम् । ६ ख–'ग्रन्थाग्रन्थसङ्ख्या ३३६ जाता' । ७ अयं क–पाठः ।

## एकोनविंशः प्रशस्तिसर्गः १९

श्रीमद्[1]'वायट'नाम्नि सारसुकृतश्रीधाम्नि पुण्ये महा-

स्थाने मा[2]निनि दा[3]नमानसं[4]रसाः श्रीवायटीया द्विजाः ।

[5]सोमस्तो[6]मसमुत्थधूमनिवहैर्मालिन्यमालम्बया-

मासुर्यां वणिजो जिनार्चनघनोद्यद्धूपधूमोत्करैः ॥ १ ॥[7]

[8]ध्वजमिषभुजमूलस्थूलकुम्भैकवक्षो-

रुहमहह महीयोऽधःकृतस्फाटि[9]काद्रि ।

विलसति वणिजां सत्कीर्त्तिधर्मा[10]र्द्धनारी-

श्वरवपुरिव तत्र 'श्रीमहावीर'चैत्यम् ॥ २ ॥[11]

श्री'श्वेताम्बर'मौलिमौक्तिकमणिस्तस्मिञ्जिनेन्द्रालये-

ऽधिष्ठाता जिनदत्तसूरिरजनि ज्ञा[12]नैक[13]वैज्ञानिकः ।

श्रेयस्तुङ्गयदङ्गसङ्गमसमुद्भूतप्रभूतस्फुरत्-

[14]पुण्यैर्यस्य गुणैर्गतं दिवि [15]सितच्छायैरुडुच्छद्मना ॥ ३ ॥[16]

[17]तत्पट्टोर्वीधरवरमणिर्व्योममणिद्योतजैत्रै-

स्तेजःपुञ्जैः किमपि ककुभोऽपूरि रा[18]सिल्लसूरिः ।

यस्य व्योमच्छलकलशभृत्कीर्त्तिधारापयोभि-

[19]र्गोभिर्मुक्ताः कं न जनमनःकानने मोहवल्ल्यः ? ॥ ४ ॥[20]

सुरगज-रजनी-भुजङ्ग-गङ्गा-भुजगपतिप्र[21]तिशूरकीर्त्तिपूरः ।

तदनु मुनिपतिर्मतिप्र[22]तिष्ठाजनितरसोऽजनि जीवदेवसूरिः ॥ ५ ॥[23]

[24]वयस्यद्विद्याभिः खलु सह कलाभिर्गुणगणाः

सहेलं खेलन्तो बहुमतिलते य[25]त्तनुभवे ।

---

१ 'तस्मिन्' इति बालभारते (पृ० ४८५) २ क-'माननिदान०' । ३ दानमानाभ्यां संयुक्ताः । ४ ख-'सरसास्ते वाय०' । ५ क-'स्तोमस्तोम०' । ६ सोमयज्ञ-समूह० । ७ शार्दूल० । ८ ध्वजमूले कुम्भरूपैकस्तनम् । ९ क-'काद्रिः' । १० पार्वती-महादेवदेहः । ११ मालिनी । १२ क-'श्रीज्ञानवैज्ञानिनः' । १३ एक एव कलाकुशलः । १४ क-'पुण्यैः पश्य' । १५ समुज्ज्वलैः । १६ शार्दूल० । १७ जिनदत्तपट्टपर्वत० । १८ ख-'राशिल्ल०' । १९ वाणीभिः, पक्षे धेनुभिः । २० बाल०-'घनजन०' । २१ मन्दाक्रान्ता । २२ सदृश० । २३ मतेः प्रतिष्ठया जनितो रसो येन । २४ पुष्पिताग्रा । २५ सखिवदाचरन्त्यो विद्या यासां कलानाम् । २६ क-'यत्तनुवने' ।

यशःश्रीपुष्पस्रक्चयसुरभयः[1] संशयमयीं
महादोलां मुक्त्वा सुकृतरसवापीषु विहृताः ॥ ६ ॥[2]

महायोगी भोगिप्रभुनिभभुजस्तस्य[3] शमिनः
सभायामायातः क्वचिदहनि कश्चिद् दहनदृक्[4] ।
असावुद्यद्विद्याचयजयपताकामिव सुखं
मुखाज्जिह्वां कृष्ट्वा कृतपरिकरोऽग्रे न्यविशत[5] ॥ ७ ॥[6]

श्रीतिव्यालोलमौलिच्छलचलकमलामुच्छलन्न्युञ्छनालि-[7]
व्याजभ्राजिष्णुवीचिं[8] स्तिमिततिमिसदृग्दृकलाकेलिकम्राम्[9][10] ।
अक्षुभ्यस्तत्प्रभावादपि[11][12] सुकृतसुधासिन्धुधाराधरो यो[13]
दूरं सूरिः पुपूरे सर इव वरवाग्वृष्टिभिः संसदं सः ॥ ८ ॥[14]

अथ सुकृतकथान्ते गन्तुमिच्छन् रसज्ञां
न स परिकरबन्धात् क्रष्टुमिष्टे स योगी ।
भषण इव तदस्मिन्नुल्लसद्दीनशब्दे
किमिदमिति जनेनापृष्टमाचष्ट सूरिः ॥ ९ ॥[15]

शक्तः पातयितुं नभस्तरुफलं[16] हुङ्कारतोऽर्कं क्षमो
मूलस्तम्भमपि त्रिलोकभुवने[17] भङ्क्तुं भुजङ्गेश्वरम् ।
योगीन्द्रोऽद्भुतभूरिसिद्धिरसिकोऽसौ मत्कपालाप्तये
प्राप्तः स्तम्भनमाचरन् मयि मया द्राक् प्रत्युत स्तम्भितः ॥ १० ॥[18]

वक्त्राग्रलम्बितलसद्रसनावबद्ध-
पर्यस्तिकोऽत्र मदमर्षदवानलेन ।
कुञ्जार्धनिःसृतमहोरगवेष्टिताङ्गः[19]
शाखीव शुष्यतुतरामयमित्थमेव ॥ ११ ॥[20]

---

१ सुगन्धयुक्ताः । २ शिखरिणी । ३ बाल०–'भोगी प्रभु०' । ४ बाल०–'वहनदृक्' । ५ जिह्वयाऽऽत्मानं परिवेष्टयित्वा बद्धासनोऽभूत् । ६ शिखरिणी । ७ बाल०–'व्यालोकमौलि०' । ८ बाल०–'भ्राज०' । ९ आर्द्रमत्स्य० । १० क–'कभ्रम्' । ११ क–'अक्षुभ्यंस्तत्प्र०' । १२ योगिप्रभावात् । १३ क–बाल०–'धरोऽयं' । १४ स्रग्धरा । १५ मालिनी । १६ क–'नभस्तलफलं' । १७ क–'भष(व)ने' । १८ शार्दूल० । १९ लतागृह० । २० वसन्ततिलका ।

जिनेश्वरमतामृतार्णववितन्द्रचन्द्रोदय-
　प्रमोदय दयां हृदि क्रुधममूं च मुञ्च प्रभो ! ।
[1]सदःसदि वदत्यदस्तदनु साधुवर्गे गुरुं
　क्षितौ खटिकयाऽक्षराण्यलिखदेष योगी तदा ॥ १२ ॥[2]

उपकृतिमुपकर्तुः सर्वतः कुर्वते ये
　कति [3]धरति न धात्री तानसौ मानशौण्डान् ।
अपकृतिर्[4]कृति यस्तामेव कुर्वीत गुर्वीं
　वहति सततमुर्वीमुद्विवेकः स एकः ॥ १३ ॥[6]

आमृश्यैवं स यतिपतिना कृष्णभोगीव योगी
　बन्धान्मुक्तः क्रुधमधिवहन्निःश्वसन्निःससार ।
यातो यस्यां दिशि रिपुरसौ गम्यतां नाथ तस्या-
　मँसद्र्यैरिति च वचनं स्पष्टमाचष्ट सूरिः ॥ १४ ॥[8]

[9]रतिरिव पतिनाशे श्रीरिवास्थैर्यदोषे
　स्ववशगकविदौस्थ्ये वागिवाप व्रतं या ।
नगरबहिरगच्छद् गच्छसाध्वी न्यवेशि
　स्वतनुमनु च तेन द्रोहिणा मोहिता सा ॥ १५ ॥[10]

मत्त्वेत्यथो कुशमयं [11]तमयं मुनीशः
　कृत्वा ततान वितते तपनस्य तापे ।[12]
स प्रस्फुरज्ज्वरभरोऽथ विहाय साध्वीं
　लूनाङ्गुलिर्गलितगर्वगणो जगाम ॥ १६ ॥[13]

अयमुदयदमन्दव्यक्तशक्तिर्व्यनक्ति
　क्वचन वचनसङ्गी नास्य सादृश्यभङ्गी ।
सततमिति यतीन्दोस्तस्य नर्नर्ति कीर्ति-
　र्जगति जगति गङ्गार्णस्तरङ्गाङ्गहारैः ॥ १७ ॥[14]

---

१ क–'संसदि' । २ पृथ्वी । ३ वाल०–'न धरति' । ४ वाल०–'कृतिनस्तामेव' । ५ उपकृतिम् । ६ मालिनी । ७ क–'मस्सद्र्यैं०' । ८ मन्दाक्रान्ता । ९ साध्वीव्रतमाप रूपेण रतिश्रीसरस्वतीसदृशी योगिना स्वपृष्ठे स्थापितेति तात्पर्यम् । १० मालिनी । ११ क–'तनयं' । १२ दर्भमयं पुत्तलकं कृत्वा तापे मुमोचेति तात्पर्यम् । १३ वसन्त० । १४ मालिनी ।

पूर्वोर्वीधरगन्धसिन्धुरशिरःसिन्दूरपूरप्रभां
विभ्राणे तरणौ कदाचन कृतप्राभातिकप्रक्रियः ।
सूरिर्भूरिभिरेत्य तत्पुरवरैः[1] सम्मान्य मान्यः सतां
प्रीतिश्रीरसभावितैर्निजसभावर्ती बभाषे[2] द्विजैः ॥ १८ ॥[3]

गौरेका पतिता कथञ्चन मृता श्रीब्रह्मशालान्तरे
न म्लेच्छाः प्रविशन्ति तत्र न मृतं कर्षन्ति विप्राः पशुम् ।
धर्माधार ! कृपाधुरीण ! तरसा तस्मान्महाकश्मला-
दस्मानन्यपुरप्रवेशकलयैवोत्कर्षतः कर्ष तत् ॥ १९ ॥[4]

मन्त्राकृष्टविशिष्ट[5]चेटकचय[6]त्रातोऽङ्गयष्टिर्यति-
स्वामी सोऽन्य[7]पुरप्रवेशन[8]मथ ध्यानं दधौ शुद्धधीः ।
सा गौरुच्छ्वसिता ततो जिनमतस्यापि [9]प्रभावप्रभा
सा श्रीब्रह्मगृहाद् बहिर्निरगमद् दुःखं द्विजानां हृदः ॥ २० ॥[10]

स्वस्थानस्थापितात्मा [11]तदनु मुनिरसा[12]वुत्सवेन द्विजेन्द्रै-
रानिन्ये ब्रह्मशालामथ च पृथुमदैर्वायटादि[13]त्यदेवः ।
हैमं यज्ञोपवीतं तदिह सह [14]महास्थान[15]वृन्दे[16]न दत्त्वा
जैनोऽपि ब्रह्ममुख्यस्त्वमसि शमनिधेऽस्माकमेवं जगे च ॥ २१ ॥[17]

जलद इव तडित्वान् मेरुशृङ्गाप्तसेतु-
र्जलधिरिव करी वाऽऽबद्धकल्याणकक्षः ।
ध्वनिभरभृतदिक्को ल[18]ब्धनिष्कोपवीत-
स्तदनु मुनिरकार्षीद् धर्मकर्मोपदेशम् ॥ २२ ॥[19]

पदपदमदगायद्गायनस्तोमनृत्य-
न्नटपटलकजल्पद्वन्दिवृ[20]न्दाद्भुतेन ।

---

१ ख–'चरैः' । २ ख–'बभासे' । ३–४ शार्दूल० । '५ व्यन्तरविशेष० । ६ बाल०–'त्रातापदेहं त्यज' । ७ क–'स्व पुर०' । ८ बाल०–'शकमथ' । ९ बाल०–'प्रदर्श्योन्नतिं तस्माद् ब्रह्म०' । १० शार्दूल० । ११ बाल०–'तदिह' । १२ क–'दुत्सवेन' । १३ ख–'देवम्' । १४ तत्क्षेत्रविभागेन सह । १५ बाल०–'वृन्देन' । १६ स्थान-विभागदानेन । १७ स्रग्धरा । १८ सुवर्णयज्ञोपवीतः । १९ मालिनी । २० बाल०–'वृन्दोद्भवेन' ।

मुदितजनमुदश्रुस्निग्धसान्द्रेण सूरिः
स्वमठमथ पथाऽगाजग्मुरन्येऽप्यथौकः ॥ २३ ॥[2]
[3]यतीन्दोस्तस्याथोल्लसदसमशक्तेः [4]परपुर-
प्रवेशावेशर्द्धिः परमतममुत्कर्षमगमत् ।
[5]अमुक्तस्वाङ्गोऽपि श्वसनसुभगस्यापि यदसा-
वनेकस्याप्येकः समसमयमेवान्तरविशत् ॥ २४ ॥[6]
यन्मार्गाग्रतृणालिरिक्षुलतिका यद् वालुकामण्डलं
खण्डो यत् तटग[7]र्तनीरममृतं यत् कर्करा: शर्कराः ।
यत् फेनप्रचयः सुधारुचिरयं यत् संरवोऽनाहत-
ध्यानस्ताः शतशोऽस्फुरन् क्व न यतेस्तस्य प्रबन्धापगाः[8] ॥ २५ ॥[9]
तेनाकारि [10]पुरारिपर्वतशिरोधिक्कारि धात्रीत[11]ला-
ऽलङ्कारि स्फुटपापहारि भुवने [12]वृन्दं जिनेन्द्रौकसाम् ।
आरोपोन्नमितेन यस्य नियतं दण्डोच्चयेनोच्चकै-
र्विद्धं व्योम दधाति किं न परितश्छिद्राण्युडुच्छद्मना ? ॥ २६ ॥[13]
गाम्भीर्ये च गुरुत्वे च, माधुर्ये च ध्वनौ च कः ।
[14]पर्यन्ताब्धेर्जलाधार, इव त[15]स्यैतु तुल्यताम् ? ॥ २७ ॥[16]
श्राद्धान् श्रद्धाभाजन-मुदितसभाजनविराजिनो विप्रान् ।
पौरांश्च भक्तिगौरान्, कदाचिदाचष्ट स मुनीन्द्रः ॥ २८ ॥[17]
ग्रहीतुमतु[18]लाग्रहः [19]परपुरप्रवेशव्यसोः
कपालम[20]पपालनाद् वपुष एकखण्डं मम ।
स योगिपुरुषोऽकृत प्रमृतगोप्रयोगं मया
स्वरक्षणविचक्षणा त्वघटि चेटकानां घटा ॥ २९ ॥[21]

---

१ बाल०–'स्वमत०' । २ मालिनी । ३ बाल०–'यतीन्द्रस्तस्याथो०' । ४ परशरीरप्रवेशशक्तिः परमां प्रसिद्धिं प्राप । ५ स्वशरीरमत्यक्त्वा जीवतामन्येषां शरीरेऽविशदिति तात्पर्यम् । ६ शिखरिणी । ७ बाल०–'गर्भनीर०' । ८ जीवदेवकृतप्रबन्धात्मकनदीनामेवेक्षुलतिकादि ज्ञायते इति तात्पर्यम् । ९ शार्दूल० । १० महादेव० । ११ बाल०–'लता–' । १२ बाल०–'वृन्दे' । १३ शार्दूल० । १४ 'स्वयम्भूरमण'समुद्रस्य । १५ बाल०–'तस्यैव तुल्यताम्' । १६ अनुष्टुप् । १७ आर्या । १८ क–'तुकाग्रहः' । १९ परशरीरप्रवेशमृतस्य मम । २० बाल०–'मथ पालनाद्' । २१ पृथ्वी ।

भुवनविजय[1]विद्यां सिद्धिकर्मण्यवद्या-
मसुमदसुविनाशैः साधयिष्यन् स योगी ।
चिरविरचितयत्नो मत्कपालग्रहार्थं
विहर तिपरितो मन्मृत्युकालप्रतीक्षः ॥ ३० ॥[2]

व्यसोर्नगरनिर्गमे [3]डमरकध्वनिर्व्योमनि
स्फुटः स्फुरति तद् यदा मम शिरोऽस्थि चूर्ण्यं तदा ।
[4]इतीद्धमतिलीलया स मुदमुद्वहन् मच्चितां
चिराय [5]परिपूरयत्यगुरुचन्दनौघैः [6]पुरा ॥ ३१ ॥[7]

इति विरचित[8]शिक्षः स क्षमी ध्यानशुद्धि-
त्रुटितविकटकर्मा निर्मलीभूतचित्तः ।
[9]अमृगयत [10]तटन्तीरष्ट सिद्धीः कदाचिद्
दिशि विदिशि कदाचिद् गीःश्रियौ युक्तपाणी ॥ ३२ ॥[11]

नेत्रे निमीलयति चेद् भववृद्धिहेतु-
[12]र्भूलोकदर्शनभिया स पतिर्यतीनाम् ।
तद्भूरिभावभरभासुरभूतिमाला-
मालोकते त्रिजगतीमपि किं [13]करोतु[14] ॥ ३३ ॥[15]

इति सुकृतनिधानध्याननिर्धारितायु-
र्भुवमिव दिव[16]मात्मा[17]ऽध्यासपूतां स चक्रे ।
जनमनसि स जीवन्नेव रेजे तु तच्च-
न्मतिविफलितताद्दग्दुष्टयोगिप्रयोगः ॥ ३४ ॥[18]

अमीभिस्त्रिभिरेव श्री-जिनदत्तादिनामभिः ।
सूरयो भूरयोऽभूवं-स्तत्प्रभावास्तदन्वये ॥ ३५ ॥[19]

---

१ क-'विद्याशुद्धकर्म०' । २ मालिनी । ३ बाल०-'डमरुक०' । ४ ख-'हृतीद्ध०' । ५ रचयिष्यतीत्यर्थः । ६ क-'पुरः' । ७ पृथ्वी । ८ बाल०-'शिष्यः' । ९ अन्तसमये चक्षुर्भ्रमणमुत्प्रेक्षते कविः । १० ख-'रटन्ती०' । ११ मालिनी । १२ बाल०-'भूलोक०' । १३ बाल०-'मुनीन्द्रः' । १४ निधनसमये नेत्रे उद्घटिते एव श्रेष्ठतमे इति कवेराशयः । १५ वसन्त० । १६ बाल०-'मातमध्यानपूतां' । १७ क-'ध्यान०' । १८ मालिनी । १९ अनुष्टुप् ।

एकः प्रौढविवे[1]कैकविभ्रमलतापुष्पेषु पुष्पेषुजित्
　तेषु श्रीजिनदत्तसूरिरुदयद्भूरिप्रभावोऽभवत् ।
तादृग्विस्तृतहृन्निपीतनभसो यस्योचितं दिद्युते
　धीरां[2]म्भोधरसिन्धुसिन्धुरजयी व्याख्यासु शब्दो गुणः ॥ ३६ ॥[3]
श्रीविवेकविलासाद्यै–र्यत्प्रबन्धैः सहस्रशः ।
हतमोहतमोऽकारि, करैरिव रवेर्जगत् ॥ ३७ ॥[4]
आयुष्यं कथयन्ति जन्तुषु पयः सा[5]रः पयोधेः पुनः
　पीयूषं पृथिवीजुषामनिमिषीभावाय सम्भाव्यते ।
विद्मः श्रीजिनदत्तसूरीवचनं सारः सुधानामपि
　व्यक्तं मुक्तिमपि प्रयच्छति सतां यत् [6]पीतमुत्प्रीतिकृत् ॥ ३८ ॥[7]
श्रीजीवदेवसूरीणां, त एव परमाणवः ।
जग्मुर्यदङ्गतां भेजे, तद्गुणैस्ताद्विधैव [8]सः ॥ ३९ ॥[9]

इतश्च—

श्री'वायट'प्रवणवंशमणिर्महस्वी
　श्रीवासुपूज्य इति मन्त्रिवरो विरेजे ।
येना'ऽणहिल्ल'पुरपौरपरम्पराणां
　चूडामणित्वमुररीक्रियते स शश्वत् ॥ ४० ॥[10]
रामदेव इति तत्सुतोऽभवद् , यद्यशःप्रसरदुग्धवारिधौ ।
लक्ष्मलक्षदरसोमशु[11]क्तिजा, मौक्तिकालय इवोडुपङ्क्तयः ॥ ४१ ॥[12]
तस्य मानसनिवासिनी प्रिया, पद्मिनीति सुदिवसोद्गमस्मिता ।
श्रीगृहाननकरांह्रिनीरजा, जातरूपरुचिरा व्यराजत ॥ ४२ ॥[13]
तस्य सूनुरजनिष्ट शान्तडः, शान्तलक्ष्मशशलक्ष्मसन्निभैः ।
यस्य निस्तमसि मानसे गुणैः, शर्म धर्मनृपतिर्लसन् ललौ ॥ ४३ ॥[14]
कलिकालकरालवल्गितै–र्गतसञ्ज्ञं सुकृतामृतोर्मिभिः ।
सहजी समजीवयत्तमां, दयिता तस्य पतिव्रताव्रतम् ॥ ४४ ॥[15]

---

१ चेष्टा० । २ मेघसमुद्रगजजयी । ३ शार्दूल० । ४ अनुष्टुप् । ५ बाल०–'सारात् पयो०' । ६ बाल०–'प्रीतिमुत्प्रीति०' । ७ शार्दूल० । ८ बाल०–'यः' । ९ अनुष्टुप् । १० वसन्त० । ११ क–'शक्तिजा' । १२–१५ रथोद्धता ।

[1]आसलः कलयति स कौशलं, कासु कासु न कलासु तत्सुतः [2]।
केवलं स्वगुणभाषणेऽर्थिता–रक्षणे परविभाषणेऽल्पधीः ॥ ४५ ॥[3]

तस्याऽह्दिदेविरिति देहधरेव गेह-
लक्ष्मीः प्रिया कलिविलक्षणलक्षणाऽऽसीत् ।
यस्या वरांह्रिनखरत्नधरो मनोऽब्धिः
केनापि नैव कलितो विमलात्मवृत्तिः ॥ ४६ ॥[4]

श्रीपद्म इत्यभिधया धियां निधिः, पुत्रस्तयोर्जयति मन्त्रिवृत्रहा ।
श्रीः प्राप्य तीर्थमिव यं सरस्वती–पूतं स्वपापचपलत्वमत्यजत् ॥ ४७ ॥[5]

कश्चिद् गौरगुणोऽस्ति यः स कलितोन्मादं विवादं मया
दत्तामित्यखिलेषु यस्य यशसा विश्वेषु विक्रीडितम् ।
काप्येतत्[6]प्रतिमल्लतां [7]कलयते [8]कोपी न कोऽपीत्यदाद्
[9]ब्रह्मेन्दुं जयपत्रमस्य पुरतः संलक्ष्य [10]लक्ष्माक्षरम् ॥ ४८ ॥[11]

सत्पात्रप्रसराश्रयः शुचिगुणप्राग्भारगौराशयः
सद्वृत्तो द्विजराजहंससुखकृद् दोषाकरे न्यङ्मुखः ।
श्रीमद्विश्वलदेवविश्वविभुना प्रोद्भास्य तेजोभरैः
श्रीपद्मस्तपनेन पद्मवदयं सद्म श्रियो निर्ममे ॥ ४९ ॥[12]

श्रीमद्विश्वलमेदिनीश्वरकृतप्रौढप्रसादादसौ
व्यापारानधिगम्य कानपि कदाऽप्युत्[13]सेकदावाम्बुदः ।
श्रीपद्मो नृपतिप्रजार्थयुगलीं कृत्वाऽर्थ[14]शास्त्रार्थतः
स्वार्थं सारपरोपकारकरणव्यापारमेवाकरोत् ॥ ५० ॥[15]

श्रीपद्मः समभूषयज्जिनविभुं हृन्नन्दनैश्चन्दनैः
कर्पूरैः कुसुमोत्करैः सुरभिभिः शुभ्रैर्यशोभिर्जगत् ।
तस्याग्रे दुरितोच्चयैः सह समुच्चिक्षेप कृष्णागुरुं
तं स्तौति स्म नवस्तवैरनुलवं सोऽपि त्रिलोक्या [16]स्तुतः ॥ ५१ ॥[17]

---

१ ख–'आशलः' । २ क–'भाषणार्थिनां रक्षिणापर०' । ३ रथोद्धता । ४ वसन्त० । ५ 'ललिता'च्छन्दः । ६ पद्मयशःसादृश्यम् । ७ ख–'कलयति' । ८ क्रोधवान् । ९ ब्रह्मा जयपत्रमिन्दुमदात् । १० क–'लक्ष्माकरम्' । ११ शार्दूल० । १२ शार्दूल० । १३ मानरूपदावाग्निशान्त्यर्थं मेघः । १४ राजनीतिशास्त्रस्यार्थात् । १५ शार्दूल० । १६ क–'स्तुवः' । १७ शार्दूल० ।

साधर्मिकोद्धरणसुश्रवणादिसङ्घ-
प्रोत्सर्पणाप्रवचनप्रबलानुरागैः ।
चैत्यार्पितैश्चमरकाञ्चनकुण्डलाद्यैः
श्रीजैनशासनसमुन्नतिमेष तेने ॥ ५२ ॥[१]

तस्य पुष्यति सतीत्वसम्पदं, चम्पलेति सहधर्मचारिणी ।
सेवते सुकृततत्परा परा[२], पद्मलाऽपि गुणसद्म [३]तन्मनः[४] ॥ ५३ ॥[५]

चित्ताह्लादं प्रह्लादन-देव्यप्यस्य प्रियाऽकरोत् ।
धर्मरूपः सदा यस्याः, स एवासीन्मनोऽन्तरा ॥ ५४ ॥[६]

पुत्रोऽस्य विक्रमादित्यः, पद्मलाकुक्षिसम्भवः ।
कलाभिश्च प्रभाभिश्च, सुधांशुरिव वर्धताम् ॥ ५५ ॥[७]

सौभाग्यदेवी कुलभाग्यदेवी, श्रीपद्ममन्त्रिद्युपतेः [८]स्वसाऽस्ति ।
गङ्गेव [९]या निर्मलशीललीला, जडस्वभावं न बिभर्ति किन्तु ॥ ५६ ॥[१०]

श्रीपद्ममन्त्रीश्वरभागिनेयो, मोषाकसूनुर्महणाह्वयोऽस्ति ।
तारुण्यचारुण्यपि यस्य देहे, वृद्धत्वशुद्धा विषयो वसन्ति ॥ ५७ ॥[११]

मल्लदेवो [१२]हस्तिमल्ल-प्रतिमल्लसद्यशाः ।
निजान्वयवनीसिंहो, देवसिंहो महोद्यमः ॥ ५८ ॥[१३]

पूर्णेन्दुद्युतिलुण्टाक-कीर्तिरूदाक इत्यपि ।
सहोदराः क्रमादेते, त्रयो महणमन्त्रिणः ॥ ५९ ॥[१४]

श्रीमत्तीर्थकृतां चरित्रततयश्चित्राश्चतुर्विंशतेः
स्वल्पाभिस्तिथिभिर्यथा श्रुतिपथे पान्थत्वमातन्वते ।
ग्रन्थः कोऽपि तथा भवेद् यदि ततः श्राद्धाः श्रयन्त्येव तं
शृण्वन्तः सुकृतानि पद्मसचिवेन्द्रस्येति चेतस्यभूत् ॥ ६० ॥[१५]

श्रीमद्'वायट'गच्छवारिजरवेः पादारविन्दद्वये
येन श्रीजिनदत्तसूरिसुगुरोः शृङ्गारभृङ्गायितम् ।

---

१ क-'प्रवणानु०' । २ वसन्त० । ३ क-'परां सद्मला०' । ४ पद्ममनः । ५ क-'तन्मनः' । ६ रथोद्धता । ७ अनुष्टुप् । ८ ख-'शुद्धांशु०' । ९ अनुष्टुप् । १० क-'सुशास्ति' । ११ क-'वा' । १२ उपजातिः । १३ इन्द्रवज्रा । १४ ऐरावण० । १५-१६ अनुष्टुप् । १७ शार्दूल० ।

स श्वेताम्बरमौलिरत्नममरः श्रीपद्ममन्त्रीप्सितं
'पद्मानन्द'मिदं मुदाऽकृत महाकाव्यं महानन्दकृत् ॥ ६१ ॥[1]

क्षिप्त्वा कर्मविपक्षवीरनिचयं निःश्रेयसाख्यं पदं
प्राप्ताः प्रेङ्खदनन्तसन्ततचिदानन्दोर्मिसंवर्मिताः ।
यावत् तीर्थकराः करामलकवत् पश्यन्ति विश्वस्थितिं
तावद् ग्रन्थवरोऽस्त्वसौ बुधहृदि श्रेयःसुधास्वस्तिकः ॥ ६२ ॥[3]

[4]इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रसूरिविरचिते श्रीजिनेन्द्रचरिते पद्मानन्दापरनाम्नि वीराङ्के महाकाव्ये प्रशस्तिसर्गः समाप्तः ।

खेलन्तीन्दुधिया मुखे भुवि लसन्निस्त्रिंशलेखाशया
नीलेन्दीवरसंशयाद् दृशि गिरां भौरेऽब्धिवीचिभ्रमात् ।
मत्तेभप्रभुहस्तविभ्रमतया बाहौ करेऽम्भोरुह-
भ्रान्त्याऽस्यैव सदैव पद्मसचिवं श्रीर्देवता सेवताम् ॥ १ ॥

ग्रन्थाग्र० ॥ ११५ ॥ सर्वाग्रं १०३०२ ( ? )[6]



---

१ शार्दूल० । २ क-'विदा०' । ३ शार्दूल० । ४ ख-'इत्याचार्यश्री०' । ५ क-'भावे' ।

६ अतः परं क-पाठ एवम्—

'श्रीमद्विक्रमतो ( गते ) नगवियत्पाण्ड्वब्द(१५०७)सङ्ख्येश्वरे
नाम्ना माधवशुभ्रके हरितिथौ भौमान्विते मे शुभे ।
रेवत्यां शशिनि प्लवङ्गमगते श्रीबोरसिद्धाह्वयोः( ये ?)
स्थानेऽलीलिखदर्घनिर्वृतिकृते विप्रो जगन्नाथकः ॥ १ ॥

संवत् १५०७ वर्षे श्रीकुवलीसिद्ध्यां लिखितमेतद् व्यासजगन्नाथेन ।

यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया ।
इति मत्वा च मे गाली-र्माऽदुः पुस्तकवाचकाः ॥
अदृष्टभावात् स्मृतिविभ्रमाद् वा, यदर्थहीनं लिखितं मयाऽत्र ।
तत् सर्वमार्यैः परिशोधनीयं, प्रायेण मुह्यन्ति हि ये लिखन्ति ॥
समाप्तमिदं श्रीपद्मानन्दाभिधानं महाकाव्यं जैनमतानुसारि ॥'

अर्हम्

# क-परिशिष्टम् ।

## सरस्वतीकण्ठाभरणवेणीकृपाणेतिविरुदधारिश्रीअमरचन्द्रसूरिसूत्रितानि

## ॥ चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरितानि ॥

श्रेयोवल्लिवनाङ्कुराः कुजननश्रेणीपिधानेऽर्गला
मोहद्रोहणमुद्गराः शिवसुखारोहे महारज्जवः ।
अंहःसंहतिजैत्रधर्मविजयस्तम्भाः शुभं भाविनां
पुष्यासुर्वृषभप्रभोः पदनखप्राप्तोदया रश्मयः ॥ १ ॥[1][2]

पूर्वं श्रीवृषभादीना-मर्हतां चरितानि ते ।
पुरः श्रीपद्म! सङ्क्षेपाद्, वक्ष्ये विस्तरतस्ततः ॥ २ ॥[3]

श्रीपद्म! प्रथयिष्यामि, प्रथमं पुरतस्तव ।
श्रीमद्वृषभचरित्रं, त्रयोदशभवाद्भुतम् ॥ ३ ॥[4]

धनसार्थवाह १ युगलज २-'सौधर्म'सुरा ३ महाबलनरेन्द्रः ४ ।
'ईशाने' ललिताङ्गा-भिधविबुधो ५ वज्रजङ्घनृपः ६ ॥ ४ ॥[6]

युग्मी ७ 'सौधर्म'ग ८ भिष-ग ९ 'ऽच्युत'जा १० वज्रनाभचक्री ११ च ।
'सर्वार्थ'सुरो १२ वृषभ १३-स्त्रयोदशेत्यादिनाथभवाः ॥ ५ ॥[7]-युग्मम्

अथ श्रीआदिनाथचरितम्

अस्ति कुण्डलिभिर्द्वीपै-र्नदीपैः परितो वृतः ।
शाश्वतश्रीनिधिर्द्वीपो, 'जम्बूद्वीपो'ऽभिधानतः ॥ १ ॥[8]

अयं जयति सद्वृत्त-धरो द्वीपाधिराजवत् ।
'जम्बूद्वीपः' परद्वीपैः, प्रावृतः सेवकैरिव ॥ २ ॥

यस्य चूडामणिज्योति-श्चित्रनेत्राश्चितोऽभितः ।
एकातपत्रवन्'मेरु'-र्जल्पति द्वीपराजताम् ॥ ३ ॥

उभौ [9]सोमावुभौ [10]तीक्ष्णा-वुपायाविव भूपतेः ।

---

१ क-'वल्लिविना०' । २ शार्दूल० । ३ अनुष्टुप् । ४ क-'चरितं' । ५ अनुष्टुप् । ६-७ आर्या । ८ अतः परं सप्तदशं पद्यं यावत् छन्दो'ऽनुष्टुप्' । ९ साम-दामौ । १० दण्ड-भेदौ ।

शशिनौ [1]तपनौ यस्य, प्रकाशाय सदोद्यतौ ॥ ४ ॥
भूषितः [2]सप्तभिर्वर्षैः, [3]षड्भिर्वर्षधरैश्च यः ।
दीर्घश्रीकैर्महोच्छ्रायै, [4]राज्यमङ्गैर्[5]गुणैरिव ॥ ५ ॥
अस्त्यस्य पश्चिमस्थेषु, 'विदेहे'षु महर्द्धिमत् ।
'क्षितिप्रतिष्ठितं' नाम, स्वर्धामपुरवत् पुरम् ॥ ६ ॥
धर्मकल्पतरुर्यत्र, जिनेन्द्रस्नपनोदकैः ।
सिक्तो [6]भक्तिनतां कैः कै–र्न कामैः फलितोऽन्वहम् ॥ ७ ॥
यस्य वाससुखं नाप्ता–स्तप्ताः स्ववासकर्मणा ।
वहन्त्यनिमिषीभावं, चिन्तयेव दिवौकसः ॥ ८ ॥
प्रसन्नचन्द्रो निस्तन्द्र––श्चन्द्रोज्ज्वलयशा नृपः ।
तत्र क्षत्रशिरोरत्न–मभूत् तीव्रमहोमहाः ॥ ९ ॥
स राजाऽऽत्मानमायत्तं, गुणानामेव निर्ममे ।
कुर्वन्ति स्म कृतज्ञास्ते, तदायत्तं सदा जगत् ॥ १० ॥
तेनावहीलिता दोषा, न स्थितिं लेभिरे क्वचित् ।
गुणास्त्वङ्गीकृतास्तेन, केन गीता न गौरवात्? ॥ ११ ॥
तस्य पृथ्वीपतेः प्रौढ–प्रसादपरमास्पदम् ।
धनाढ्यः सार्थवाहोऽभूत्, [7]परार्थप्रथनो द्विधा ॥ १२ ॥
महासार्थो वणिज्यार्थं, स 'वसन्तपुरं' व्रजन् ।
प्रावृट्काले पथि प्राप्ते, वनेऽस्थाद् वृष्टिकष्टतः ॥ १३ ॥
प्राक् सार्थेन सहायाताद्, धर्मघोषगुरोरिह ।
साधुभ्यो घृतदानेन, बोधिबीजं स भेजिवान् ॥ १४ ॥
वर्षात्यये गुरून् नत्वा, स 'वसन्तपुरे'ऽगमत् ।
'क्षितिप्रतिष्ठे' नगरे, कृतार्थः पुनराययौ ॥ १५ ॥
तत्र क्रमेण पूर्णायु–रुत्तरेषु 'कुरु'ष्वसौ ।
'जम्बू'वृक्षस्य पूर्वेणो–त्तरे 'सीता'नदीतटे ॥ १६ ॥

---

१ सूर्यौ । २ प्रेक्ष्यतां पञ्चदशं पृष्ठम् । ३ अवलोक्यतां चतुर्दशं पृष्ठम् ।
४ "स्वाम्यमात्यसुहृत्कोश–राष्ट्रदुर्गबलानि च । राज्याङ्गानि" इत्यमरकोशे (श्लो॰ ७५१) ।
५ "सन्धिर्ना विग्रहो यान–मासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरकोशे (श्लो॰ ७५२) ।
६ ख–'मतां' । ७ मोक्षः, पक्षे परेषामर्थस्तस्य प्रसिद्धिकारकः ।

मुनिदानप्रभावेण, युग्मधर्मी पुमानभूत् ।
युग्मायुः पूरयित्वाऽयं, 'सौधर्मे' विबुधोऽभवत् ॥ १७ ॥–युग्मम्

च्युत्वा ततो 'विदेहे'–ष्वपरेषु स 'गन्धिलावती'विजये ।
'वैताढ्ये' गिरौ गन्ध–समृद्धे 'गन्धार'देशपुरे ॥ १८ ॥[1]

शतबलनाम्नो विद्या–धरधरणीन्द्रस्य चन्द्रकान्तायाम् ।
पत्न्यामुदपादि सुतो, महाबलो नाम गुणधाम ॥ १९ ॥[2]

प्रव्रजितजनकराज्यं, प्राप्यासौ विषयलीनहृद् बुद्धः ।
केवलिचारणयतिबो–धितः स्वयम्बुद्धमन्त्रिगिरा ॥ २० ॥[3]

निजतनुजार्पितराज्यः, स प्रव्रज्याऽऽश्रितः कृतानशनः ।
द्वाविंशतिदिवसानथ, ललिताङ्गः सुरोऽज'नीशाने' ॥ २१ ॥[4]

'श्रीप्रभ'नाम्नि विमाने, स्वयम्प्रभा वल्लभाऽभवत् तस्य ।
स्वीकृतदीक्षोऽनशनी, मृतः स्वयम्बुद्धमन्त्रिपतिः ॥ २२ ॥[5]

सोऽत्राजनीन्द्रसामा–निकश्च दृढधर्मसञ्ज्ञया त्रिदशः ।
च्युतयाऽथ तया प्रियया, ललिताङ्गो विरहितोऽर्त्तिमगात् ॥ २३ ॥[6]

प्राह प्राग्भवसौहार्दाद्, दृढधर्मः समेत्य ताम् ।
ललिताङ्गाकुलो मा भू–र्मयाऽज्ञायि प्रिया तव ॥ २४ ॥[7]

'धातुकी'खण्डद्वीपे प्राग्–'विदेहे' 'नन्दि'नामनि ।
ग्रामे 'नागिल'सञ्ज्ञोऽस्ति, श्रेष्ठी दारिद्र्यविद्रुतः ॥ २५ ॥

सप्तानां तस्य पुत्रीणा–मुपर्येषाऽष्टमी सुता ।
जज्ञे तस्यां च जातायां, प्रणश्य स पिता ययौ ॥ २६ ॥

कृतमस्या न केनापि, नाम निर्नामिकेति सा ।
निर्भाग्याऽद्भुतदौर्भाग्या, परिणिन्ये न केनचित् ॥ २७ ॥

सा शैले'ऽम्बरतिलके,' दार्वाद्यानेतुमन्यदा ।
गता युगन्धरं तत्रा–पश्यत् केवलिनं मुनिम् ॥ २८ ॥

गिरा तस्य विरक्ताऽसौ, गृहीतानशनाऽधुना ।
तत्रैवास्ते ततस्तस्या–स्त्वं गत्वा स्वं प्रदर्शय ॥ २९ ॥

---

१–२ आर्या । ३ गीतिः । ४–६ आर्या । ७ अतः परं ५७तमं पद्यं यावत् छन्दो'ऽनुष्टुप्' । ८ काष्ठादि समानेतुम् ।

ततस्त्वद्रागिणी मृत्वा, भवति त्वत्प्रियैव सा ।
तद्गिरेति कृते साऽपि, मृत्वोत्पन्ना स्वयम्प्रभा ॥ ३० ॥
रेमे समेतया भूयः, कालं भूयांसमेतया ।
ललिताङ्गस्ततोऽमंस्त, चिह्नैश्च्यवनमात्मनः ॥ ३१ ॥
ईशानेन्द्रेण सार्द्धं स, श्रद्धयाऽधिकया सुधीः ।
'नन्दीश्वरा'दितीर्थेषु, यात्रां [1]संसूत्रयंश्च्युतः ॥ ३२ ॥
'जम्बूद्वीपे' प्राग्'विदेहे', 'सीता'नद्युत्तरे तटे ।
विजये 'पुष्कलावत्यां', पुरे 'लोहार्गला'ह्वये ॥ ३३ ॥
राज्ञः सुवर्णजङ्घस्य, लक्ष्मीदेव्यां सुतोऽजनि ।
स वज्रजङ्घ [2]इत्याप, तारुण्यं पुण्यकन्दलः ॥ ३४ ॥–युग्मम्
पुत्री स्वयम्प्रभाऽत्रैव, विजये श्रीमतीति सा ।
'पुण्डरीकिण्यां' पुर्यासीद्, वज्रसेनस्य चक्रिणः ॥ ३५ ॥
तस्याः स्वयंवरार्थं च, पित्राऽऽहूता नृपात्मजाः ।
वज्रजङ्घकुमारोऽपि, प्राप्तो 'लोहार्गला'त् पुरात् ॥ ३६ ॥
जातिस्मरणमुत्पेदे, श्रीमत्यास्तु पुरान्तिके ।
मुनेः केवलिमहिमा–यातामर्त्येक्षणात् तदा ॥ ३७ ॥
पित्रोः प्राग्भववृत्तं स्व–माचख्यौ सा सखीमुखात् ।
ललिताङ्गाद् वरो नान्यो, मान्यो मेऽस्त्विति चाग्रहम् ॥ ३८ ॥
तच्चरित्रपटः पित्रा–ऽस्थापि राजपथान्तरे ।
चेत् कोऽपि ललिताङ्गात्मा, राजपुत्रो भवेदिति ॥ ३९ ॥
वज्रजङ्घोऽपि तं प्रेक्ष्य, जातिस्मृतिमवाप्तवान् ।
श्रीमत्या प्रत्ययात् कण्ठे, वरमालाऽस्य चिक्षिपे ॥ ४० ॥
सोऽप्येनां परिणीय स्वं, पुरं प्राप तयाऽन्वितः ।
पिता तस्यार्पयद् राज्यं, तस्य पुत्रोऽप्यभूत् क्रमात् ॥ ४१ ॥
सोऽगात् पुष्कलपालाख्य–श्रीमतीभ्रातृविद्विषः ।
विजेतुं सीमसामन्तान्, सदारः 'पुण्डरीकिणी'म् ॥ ४२ ॥

---

१ क–'स सूत्र०' । २ क 'इत्यापत्' ।

तत्र पुष्कलपालस्य, दासीकृत्याखिलद्विषः ।
आगच्छत् स्वपुरं मार्गे, सोऽन्तः शरवणं स्थितः ॥ ४३ ॥
तत्र तौ दम्पती श्रुत्वा, तदात्वोत्पन्नकेवलात् ।
धर्मं मुनिद्वयाज्जैनं, विरक्तौ स्वपुरं गतौ ॥ ४४ ॥
प्रातर्न्यस्यात्मजं, राज्ये प्रव्रजिष्याव इत्यमू ।
सुप्तौ पुत्रस्तु तच्चिन्ता–ऽनभिज्ञो राज्यलोभतः ॥ ४५ ॥
विषधूपं तयोर्वास–भुवनान्तरकारयत् ।
मृत्वोत्तर'कुरु'ष्वेतौ, उत्पन्नौ युग्मरूपिणौ ॥ ४६ ॥–युग्मम्
ततोऽप्यायुःक्षये जातौ, 'सौधर्मे' स्नेहलौ सुरौ ।
'जम्बूद्वीपे' 'विदेहे'ऽथ, पुरे 'क्षितिप्रतिष्ठिते' ॥ ४७ ॥
च्युत्वाऽभूद् वज्रजङ्घात्मा, वैद्यस्य सुविधेः सुतः ।
जीवानन्द इति ख्यातः, श्रीमत्यात्मा ततश्च्युतः ॥ ४८ ॥
तत्रैव श्रेष्ठिपुत्रोऽभूत्, केशवाख्यः स चाप्तवान् ।
जीवानन्दस्य मित्रत्वं, तयोरप्यपरेऽभवन् ॥ ४९ ॥
चत्वारः सुहृदस्तेऽमी, सुबुद्धिर्मन्त्रिनन्दनः ।
सूनुरीशानचन्द्रस्य, महीन्द्रस्य महीधरः ॥ ५० ॥
सार्थवाहश्रेष्ठिपुत्रौ, पूर्णभद्र-गुणाकरौ ।
पञ्चाऽन्ये सुहृदो जग्मु–र्जीवानन्दगृहेऽन्यदा ॥ ५१ ॥
तदा गुणाकरस्तत्र, व्रती भिक्षार्थमागतः ।
दृष्ट्वा कुष्टाकुलं तं च, पञ्चानामप्यभूत् कृपा ॥ ५२ ॥
एतैरुत्साहितो जीवा–नन्दो मुनिचिकित्सने ।
स्वगृहे लक्षपाकं [1]च, तैलं सज्जीचकार सः ॥ ५३ ॥
तैर्मूल्यादर्थितो जीर्ण–श्रेष्ठी साधुं चिकित्सितुम् ।
मुधा दत्ते स्म गोशीर्ष–चन्दनं रत्नकम्बलम् ॥ ५४ ॥
षडेते काननं गत्वा, चिकित्सामसृजन् मुनेः ।
प्रणेमुर्मुनिमुल्लासं, दधुर्बोधं च तद्गिरा ॥ ५५ ॥
चिकित्साशेषगोशीर्ष–कम्बलादिकविक्रयात् ।

१ ख–'सः, तैलं सज्जीचकार च' ।

लब्धैः स्वैः स्वैर्धनैर्धन्या–स्ते जिनायतनं व्यधुः ॥ ५६ ॥
षडपि प्राप्तदीक्षास्ते, प्रपाल्य विमलं व्रतम् ।
मृत्वोत्पन्नाः क्रमात् कल्पे, सर्वेऽप्य'ऽच्युत'नामनि ॥ ५७ ॥
अथ 'जम्बू'द्वीपे पूर्व–'विदेहे'षु 'पुष्कलावती'विजये ।
पुर्यां च 'पुण्डरीकि–ण्यां' राज्ञो वज्रसेनस्य ॥ ५८ ॥[१]
धारिण्यां प्रेयस्यां, पञ्चैते जज्ञिरे क्रमात् पुत्राः ।
च्युत्वा स वैद्यजीव–श्चतुर्दशस्वप्नसूचितश्चक्री ॥ ५९ ॥[२]
प्रथमः समजनि तनयो, विदितोऽयं वज्रनाभ इति नाम्ना ।
ते चत्वारश्च्युत्वा, नृपसचिवश्रेष्ठिसार्थवाहसुताः ॥ ६० ॥[३]
जातौ बाहु-सुबाहू, क्रमतः पीठो महापीठः ।
केशवजीवश्च्युत्वा, सुयशा इति तत्र राजपुत्रोऽभूत् ॥ ६१ ॥[४]
सुयशा वज्रनाभं तु, शिश्रिये शैशवादपि ।
ते पञ्च[५] स च तारुण्यं, प्रापुः प्रीतिपरा मिथः ॥ ६२ ॥[६]
तीर्थं प्रवर्त्तयेत्युक्ते, देवैर्लोकान्तिकैस्ततः ।
वज्रसेनोऽपि राज्ये स्वे, वज्रनाभं न्यवीविशत् ॥ ६३ ॥
[७]स सांवत्सरिकं दानं, दत्त्वा दीक्षां प्रपन्नवान् ।
उत्पेदे केवलज्ञानं, क्रमादस्य तपस्यतः ॥ ६४ ॥
उत्पन्ने वज्रनाभोऽपि, चक्रे षट्खण्डचक्रयभूत् ।
सुयशाः सारथिस्तेन, कृतोऽन्ये विषयेश्वराः ॥ ६५ ॥
चक्रवर्ती पितुर्धर्म–चक्रिणो वज्रसेनतः ।
दीक्षां जग्राह सोदर्यै–स्तथा सारथिनाऽन्वितः ॥ ६६ ॥
[८]विंशत्या स्थानकैर्वज्र–नाभेन मुनिनाऽद्भुतम् ।
अर्जितं तीर्थकृन्नाम–कर्म दुष्कर्ममर्मभित् ॥ ६७ ॥
बाहुना साधुयोग्यान्न–पानाद्यानयनादिना ।
वैयावृत्त्येन चोपार्जि, चक्रिभोगोज्ज्वलं फलम् ॥ ६८ ॥

---

१ आर्या । २-३–गीतिः । ४ आर्या (?) । ५ वज्रनाभः । ६ अतः परं ११३तमपर्यन्तानां पद्यानां छन्दो'ऽनुष्टुप्' । ७ वज्रसेनः । ८ एतन्नामार्थं प्रेक्ष्यन्तां ११८–१२०तमानि पृष्ठानि ।

सुबाहुना महर्षीणां, सद्विश्रामणयाऽनणु[1] ।
उपार्जितं बाहुबलं, वज्रनाभोऽस्तवीच्च तौ ॥ ६९ ॥
तदीर्षया पीठ-महा–पीठाभ्यां स्त्रीत्वमर्जितम् ।
चतुर्दशपूर्वलक्षा–ण्येते व्रतमपालयन् ॥ ७० ॥
आयुःक्षये त्रयस्त्रिंशत्–सागरप्रमितायुषः ।
सर्वे 'सर्वार्थसिद्धौ' ते, समुत्पेदुर्दिवौकसः ॥ ७१ ॥
'जम्बू'द्वीपेऽत्र 'भरते'[2], क्षेत्रे कुलकरोऽभवत् ।
सप्तमो नाभिनामाऽस्य, मरुदेवा प्रियाऽभवत् ॥ ७२ ॥
तदा च चतुरशीति–पूर्वलक्षैस्तृतीयके ।
अरके स नवाशीति–पक्षैरूने गते सति ॥ ७३ ॥
त्रयस्त्रिंशत्सागरायुः–क्षये 'सर्वार्थसिद्धि'तः ।
आषाढे कृष्णचतुर्थ्या–मुत्तराषाढयाऽऽश्रिते ॥ ७४ ॥
चन्द्रे च्युत्वा स जीवोऽथ, वज्रनाभस्य चक्रिणः ।
श्रीनाभिपत्न्याः श्रीमरु–देव्याः कुक्षाववातरत् ॥७५॥–त्रिभिर्विशेषकम्
वृषभे-भ-हरि-श्री-स्रक्–चन्द्रा-ऽर्क-ध्वज-कुम्भकाः ।
सरो-ऽर्णव-विमानानि, रत्नौघ-ज्वलनाविति ॥ ७६ ॥
चतुर्दश महास्वप्ना, देव्या गर्भगते विभौ ।
निशि तस्यामदृश्यन्त, सुप्तया वासवेश्मनि ॥ ७७ ॥–युग्मम्
गतेषु नवमासेषु, सार्द्धाष्टमदिनेष्वथ ।
चैत्रस्य बहुलाष्टम्या[3]–मुत्तराषाढया युते ॥ ७८ ॥
चन्द्रे धनुर्गते देवी, निशीथे युग्मधर्मिणम् ।
तनयं सुषुवे स्वर्ण–वर्णं वृषभलाञ्छनम् ॥ ७९ ॥–युग्मम्
[4]षट्पञ्चाशद् दिक्कुमार्यः, स्वस्वकृत्यानि चक्रिरे ।
प्रभोरिन्द्राश्चतुःषष्टि–'मेरौ' स्नात्रोत्सवं व्यधुः ॥ ८० ॥
स्वप्ने मात्रैक्षि प्रागूरु–गश्चाङ्को वृषभोऽस्य यत् ।

---

१ महत् । २ ख–'भरतक्षेत्रे' । ३ कृष्णपक्षीय० । ४ एतदभिधानाद्यर्थमवलोक्यन्तां १५०–१५२तमानि पृष्ठानि । ५ १७०–१७३ तमेषु पृष्ठेषु एतदधिकारः ।

ततः पितृभ्यां वृषभ, इति नाम प्रभोः कृतम् ॥ ८१ ॥[1]
चक्रे सुमङ्गलेत्याख्या, युग्मजायाः स्त्रियः पुनः ।
कस्यापि मिथुनस्य स्त्री, पुंसि तालफलान्मृते ॥ ८२ ॥
एकाकिनी सुनन्देति, पित्राऽग्राहि प्रभोः कृते ।
ते द्वे स्वामी [2]समयेऽथ, हरिणा परिणायितः ॥ ८३ ॥–युग्मम्
उपायनीकृतादिक्षो–र्ग्रहणे हरिणा कृतः ।
'इक्ष्वाकु'रिति वंशोऽभूद्, विभोर्भुवनविश्रुतः ॥ ८४ ॥
च्युत्वा सुमङ्गलादेव्या–स्तौ जीवौ बाहु-पीठयोः ।
सञ्जातौ भरत-ब्राह्म्यौ, समये युग्मधर्मिणौ ॥ ८५ ॥
तौ सुबाहु-महापीठ–जीवौ च्युत्वा बभूवतुः ।
सुनन्दाया बाहुबलि–सुन्दर्यौ युग्मरूपिणौ ॥ ८६ ॥
गतेषु पूर्वलक्षेषु, विंशतौ जन्मतो हरिः ।
'विनीतां' नगरीं कृत्वा, तत्र राज्ये प्रभुं [3]न्यधात् ॥ ८७ ॥
पञ्चचापशतोच्छ्राय–स्तत्र पुत्रशतावृतः ।
त्रिषष्टिं पूर्वलक्षाणि, राज्यं प्रभुरपालयत् ॥ ८८ ॥
चैत्रे च बहुलाष्टम्यां, दिनभागे च पश्चिमे ।
'उत्तराषाढ'नक्षत्रे, कृतषष्ठ[4]तपः प्रभुः ॥ ८९ ॥
'सुदर्शनाऽऽ'ख्या(ख्य ?)शिबिका–रूढः 'सिद्धार्थ'कानने ।
गत्वोत्तीर्या'ऽशोक'तरो–र्मूले प्रव्रजितोऽभवत् ॥ ९० ॥–युग्मम्
स्वच्छान्तःकरणाः कच्छ–महाकच्छादयो नृपाः ।
दीक्षां सहस्राश्चत्वारो, जगृहुः स्वामिना समम् ॥ ९१ ॥
'कुरु'देशे 'गजपुरे', पुत्रो बाहुबलेर्नृपः ।
सोमप्रभोऽभवत् तस्य, सूनुः श्रेयांससञ्ज्ञया ॥ ९२ ॥
सुयशा राजपुत्रो यः, प्रभोः प्राग्भवसारथिः ।
'सर्वार्थसिद्धे'श्च्युत्वा स, श्रेयांसः प्रभुपौत्रजः ॥ ९३ ॥

---

१ ८४तमस्य एतदनु स्थानं प्रतिभाति । २ क–'समेतेऽथ' । ३ क–'व्यधात्' ।
४ ख–'तपाः' ।

जातिस्मरणविज्ञात–दानधर्मेण पारणम् ।
प्रभुरिक्षुरसैर्वर्षो–पोषितस्तेन कारितः ॥ ९४ ॥–विशेषकम्

छद्मस्थो विजहाराथ, ग्रामा-ऽरण्य-पुरादिषु ।
व्रताद् वर्षसहस्रान्ते–'ऽयोध्या'शाखापुरे प्रभुः ॥ ९५ ॥

पुरे 'पुरिमताला'ख्ये, 'शकटानन'नामनि ।
उद्याने कङ्केल्लितरु–मूले प्रतिमया स्थितः ॥ ९६ ॥

फाल्गुने कृष्णैकादश्या–मुत्तराषाढया युते ।
शशाङ्के केवलज्ञानं, लेभेऽष्टमतपः परम् ॥ ९७ ॥–युग्मम्

प्रभोर्भूरिप्रभाचक्रं, धर्मचक्रं पुरोऽभवत् ।
आविर्भूतं क्षणेऽत्रैव, चक्रं भरतभूपतेः ॥ ९८ ॥

प्रभोः समवसरणं, सुराश्चक्रुर्गणाधिपाः ।
[1]आसन् वृषभसेनाद्या, [2]अशीतिश्चतुरुत्तराः ॥ ९९ ॥

क्रोशत्रयोन्नतश्चैत्य–वृक्षोऽभूद् वृषभप्रभोः ।
वराक्षसृग्युतावाम–दोर्युगो गजवाहनः ॥ १०० ॥

समातुलिङ्गपाशान्य–दोर्द्वयः कनकद्युतिः ।
यक्षो गोमुखो नामाऽभूत्, प्रभोस्तीर्थेऽन्तिकस्थितः ॥ १०१ ॥–युग्मम्

प्रभोरप्रतिचक्राऽऽख्या, तीर्थे शासनदेवता ।
युता [3]सँचक्रपाशेषु–वरदैर्दक्षिणैः करैः ॥ १०२ ॥

चक्रा-ऽङ्कुश-धनु-र्वज्र–लक्षणैर्दक्षिणेतरैः ।
सुपर्णवाहना स्वर्ण–वर्णा सन्निधिवर्तिनी ॥ १०३ ॥–युग्मम्

प्रभोः सर्वपरीवारः, समभूदिति साधवः ।
सहस्राश्चतुरशीतिः, साध्व्यो लक्षत्रयं तथा ॥ १०४ ॥

[4]चतुःसहस्री पञ्चाशद्–युक्ता [5]पञ्चशती[6] तथा ।
चतुर्दशपूर्विणः स्यु–रवधिज्ञानिनो नव ॥ १०५ ॥

---

१ ख–'आसन्नृषभ०' । २ एतन्नामानि न क्वापि प्रेक्ष्यन्ते । ३ क–'सचक्र०' । ४ 'सहस्राणि तु चत्वारि तथा सप्त शतानि च । पञ्चाशदधिकान्यासन्, श्रीचतुर्दशपूर्विणाम् ॥' इति पाठस्तु त्रिषष्टिशलाकापुरुषचरित्रे (प० १, स० ६, श्लो० ४५३) । ५ ख–'सप्त०' । ६ ४५५० ।

सहस्राणि केवलिनः, सहस्रा विंशतिः पुनः ।
षट्शती विंशतिसह-स्राः [1]सद्वैक्रियलब्धयः ॥ १०६ ॥
सार्द्धषट्शती द्वादश, सहस्राणि[2] च वादिनः ।
एतावन्त एव तथा, मनःपर्ययशालिनः ॥ १०७ ॥
[3]द्वाविंशतिसहस्राः स्यु-रनुत्तरोपपातिनः ।
त्रीणि लक्षाणि पञ्चाशत्, सहस्राः श्रावकाः पुनः ॥ १०८ ॥
पञ्चाशत्सहस्रैश्चतुः-सहस्राभ्यधिकैः पुनः ।
समन्वितानि लक्षाणि, पञ्चाशत्(सन्?)[4]श्राविकास्तथा ॥ १०९ ॥
दीक्षा[5]कालात् पूर्वलक्षे, गते'ऽष्टापद'पर्वते ।
साधुसहस्रैर्दशभि-श्चतुर्दशतपः[6]परैः ॥ ११० ॥
एतस्यामवसर्पिण्यां, तृतीयस्यारकस्य तु ।
एकोननवतौ पक्षे-ष्ववशिष्टेषु सत्सु च ॥ १११ ॥
माघकृष्णत्रयोदश्यां, पूर्वाह्णेऽभीचिगे विधौ ।
पर्यङ्कासनवान् मोक्षं, ययौ श्रीवृषभप्रभुः ॥ ११२ ॥-त्रिभिर्विशेषकम्
विंशतिस्त्रिषष्टिरेकं, कौमारे राज्य-दीक्षयोः ।
पूर्वलक्षाण्यायुश्चतु-रशीतिर्वृषभप्रभोः ॥ ११३ ॥
श्रिये स नाभेयजिनोऽस्तु यस्त्रयो-द[7]शक्रियास्थानविमुक् त्रयोदशे ।
जातो भवे तीर्थकरः परं गु[8]ण-स्थानाद् गुणस्थानमगात् त्रयोदशात् ११४[9]

ग्रन्थाग्रं ॥ १२५ ॥

[10]इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशति-
जिनेन्द्रसङ्क्षिप्तचरिते प्रथमं श्रीमदादिनाथचरितं समाप्तम् ॥ १ ॥



१ २०६०० । २ १२६५० । ३ ख-'द्वाविंशतिः' । ४ ५५४००० । ५ क-'कालाद्-गते पूर्व-लक्षेऽष्टापद०' । ६ क-'परम्' । ७-८ पश्यतां ४४तमं पृष्ठम् । ९ वंशस्थविलम् । १० अयं पाठो नास्ति क-प्रतौ ।

## अथ श्रीअजितस्वामिचरित्रम् ॥ २ ॥

यत् तेने गतिनिर्जितो गजपतिर्यस्याङ्कमूर्त्या पदो-
पास्तिं तैरिव नव्यपुण्यनिवहैस्तज्जातिरप्यद्भुता[1] ।
श्रीविश्रामपदं रणेऽद्भुतजया मान्या च राज्ञामभूत्
स श्रीमानजितो जिनः सृजतु वो दुष्कर्ममर्मच्छिदम्[2] ॥ १ ॥[3]

'जम्बू'द्वीपविभूषण–महा'विदेह'स्थ'वत्स'विजयजुषि ।
अजनि 'सुसीमा'पुर्यां, महीपतिर्विमलवाहनो नाम ॥ २ ॥[4]

सारिन्दममुनेरन्ते, तपस्तेपे धृतव्रतः ।
विपद्या'ऽनुत्तरे' देवो, विमाने 'विजये'ऽजनि ॥ ३ ॥[5]

'जम्बू'द्वीपेऽत्र 'भरते', 'विनीता' विद्यते पुरी ।
तस्या'मिक्ष्वाकु'वंशेऽभूज्–जितशत्रुर्नरेश्वरः ॥ ४ ॥

[6]सद्धर्मचारिणी तस्य, विजया सञ्ज्ञयाऽजनि ।
त्रयस्त्रिंशत्सागरायुः–क्षये 'विजय'तस्ततः ॥ ५ ॥

जीवो विमलवाहन–नरेन्द्रस्य परिच्युतः ।
वैशाखमासि शुक्लायां, त्रयोदश्यां तिथावथ ॥ ६ ॥

रोहिणीधिष्ण्यसंयोगं, प्राप्ते पीयूषरोचिषि ।
स तस्या विजयादेव्याः, कुक्षिदेशमभूषयत् ॥ ७ ॥–विशेषकम्

माघस्य धवलाष्टम्यां, रोहिण्यां वृषगे विधौ ।
सुतं साऽसूत तीर्थेशं, द्वितीयं हस्तिलाञ्छनम् ॥ ८ ॥

द्यूते गर्भस्थितस्यास्य, जननी न जिता मया ।
इत्यदादजित इति, नाम तस्य प्रभोः पिता ॥ ९ ॥

युवा सार्द्धचतुश्चाप–शतोच्चः काञ्चनच्छविः ।
सम्पूर्णाष्टादशपूर्व–लक्षो[7] राज्येऽभवत् प्रभुः ॥ १० ॥

त्रिपञ्चाशत्पूर्वलक्षीं, राज्यं प्रभुरपालयत् ।
माघे नवम्यां शुक्लायां, श्रिते शशिनि रोहिणीम् ॥ ११ ॥

---

१ क–'प्यद्भुतम्' । २ क–'च्छिदाम्' । ३ शार्दूल० । ४ आर्या । ५ अतः परं ३३तमं पद्यं यावत् छन्दो'ऽनुष्टुप्' । ६ क–'सधर्म०' । ७ ख–'लक्षे' ।

'सुप्रभां' प्रभुरारुह्य, शिबिकां निर्ययौ पुरः[1] ।
'सहस्राम्र'वणे गत्वा, सप्तच्छदतले स्थितः ॥ १२ ॥–युग्मम्

दिनस्य पश्चिमे भागे, सहस्रेण नृपैः सह ।
कृतषष्ठतपाः स्वामी, चारित्रं प्रतिपन्नवान् ॥ १३ ॥

द्वितीये दिवसे जात–मजितस्य जिनेशितुः ।
ब्रह्मदत्तनृपावासे, परमान्नेन पारणम् ॥ १४ ॥

ततो द्वादश वर्षाणि, छद्मस्थो व्यहरत् प्रभुः ।
दीक्षास्थाने 'सहस्राम्रो'–पवने पुनराययौ ॥ १५ ॥

तत्र सप्तच्छदतरो–रधः प्रतिमया स्थितः ।
पौषस्य शुक्लैकादश्यां, रोहिण्यां दिवसोदये ॥ १६ ॥

प्रपेदे केवलज्ञानं, कृतषष्ठतपाः प्रभुः ।
सिंहसेनप्रभृतयो, नवतिः पञ्चभिर्युता[2] ॥ १७ ॥

आसन् गणधराश्चैत्य–पादपस्त्वजितप्रभोः ।
चतुर्दशधनुःशत्य[3]–धिकक्रोशद्वयोन्नतः[4] ॥ १८ ॥–त्रिभिर्विशेषकम्

सपाशा-ऽक्षस्रग्-मुद्गर–वरदैर्दक्षिणैः करैः ।
शक्त्य-ऽङ्कुश-बीजपूरा–ऽभयदैर्दक्षिणेतरैः ॥ १९ ॥

अष्टबाहुर्महायक्ष–नामा यक्षश्चतुर्मुखः ।
श्यामो गजरथस्तीर्थे, समभूदजितप्रभोः ॥ २० ॥–युग्मम्

बिभ्राणा दक्षिणौ बाहू, वरदं पाशशालिनम् ।
बीजपूरा-ऽङ्कुशयुतौ, वामौ तु कनकद्युतिः ॥ २१ ॥

देवता त्वजितबला, तीर्थेऽभूदजितप्रभोः ।
लोहासनसमासीना, पार्श्वे शासनदेवता ॥ २२ ॥–युग्मम्

आ केवलात्[5] परीवारः, सर्वोऽयमजितप्रभोः ।
व्रतिनो लक्षं व्रतिन्य–स्त्रिलक्षी त्रिसहस्रयुक्[6] ॥ २३ ॥

त्रिंशत्सहस्री च चतु–र्दशपूर्वभृतः पुनः ।
त्रिसहस्री सप्तशती, मनःपर्ययशालिनः ॥ २४ ॥

---

१ क–'पुनः' । २ पञ्चनवतिः । ३ ख–'शताधिक०' । ४ ख–'द्वयान्वितः' । ५ क–'श्री-केवलात्' । ६ 'त्रिषष्टि०चरित्रे तथा जैनतत्त्वादर्शग्रन्थे त्रीणि लक्षाणि त्रिंशत् सहस्राणि ।

सहस्रा द्वादश तथा, सपञ्चाशच्चतुःशती ।
आविर्भूतावधिज्ञाना-श्चतुर्णवतिशत्यपि ॥ २५ ॥
उत्पन्नकेवलज्ञानाः, सहस्रा द्व्यग्रविंशतिः ।
वादिनश्चतुःशत्यग्राः, सहस्रा द्वादशाऽभवन् ॥ २६ ॥
सद्वैक्रियलब्धयोऽपि, सहस्रा विंशतिस्तथा ।
चतुःशती(?) श्रावकास्तु, सहस्रद्वितयोनितम् ॥ २७ ॥
लक्षत्रयं श्राविकाश्च, पञ्चलक्षीसमन्विताः ।
पञ्चचत्वारिंशत्सङ्ख्यैः, सहस्रैरभवन् पुनः ॥ २८ ॥-युग्मम्
दीक्षाकालादेकाङ्गोने, पूर्वलक्षे गते सति ।
चैत्रस्य शुक्लपञ्चम्यां, पूर्वाह्णे मृगशीर्षगे ॥ २९ ॥
विधौ सानशनो मासं, सहस्रेणर्षिभिः सह ।
'समेता'द्रौ पर्यङ्कस्थः, शिवं प्रापाऽजितप्रभुः ॥ ३० ॥-युग्मम्
पूर्वलक्षाणि कौमार्ये, ययुरष्टादश प्रभोः ।
राज्यभोगे त्रिपञ्चाशत्, पूर्वाङ्गेण युतानि तु ॥ ३१ ॥
[1]दीक्षायां पूर्वलक्षं तु, पूर्वाङ्गेण विवर्जितम् ।
द्वासप्ततिः पूर्वलक्ष्या-ण्यायुरित्यजितप्रभोः ॥ ३२ ॥-युग्मम्
अजितस्वामिनो मोक्षः, श्रीमद्वृषभमोक्षतः ।
पञ्चाशत्कोटिलक्षेषु, सागराणां गतेष्वभूत् ॥ ३३ ॥
कृत्वा मोहतमोहतिं प्रकटितानन्तार्थसार्थस्थिते-
र्निःपर्यन्तमुपेयुषः समुदयं यज्ज्ञानभानोः पुरः ।
द्वीपोदन्वदसङ्ख्यसूर्यततयः खद्योतपोतप्रभां
प्रापन् पापचमूः समूलमजितस्वामी स मे लुम्पतु ॥ ३४ ॥
ग्रन्थाग्रं ॥ ३८ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते द्वितीयं श्रीमदजितजिनचरितं समाप्तम् ॥ २ ॥

---

१ नास्तीदं पद्यं ख-प्रतौ ।

## श्रीसम्भवचरित्रम् ॥ ३ ॥

श्रीसम्भवः स भवताद् भवतां विभूत्यै
यस्यांह्रियुग्मनखपङ्क्तिमहःप्ररोहाः ।
[1]नम्रस्य भालभुवि बिभ्रति भूर्भुवःस्वः-
स्वामित्वशंसिनवरत्नकिरीटशोभाम् ॥ १ ॥[2]

अभू'दैरावत'क्षेत्रे, 'धातुकी'खण्डमण्डने ।
राजा 'क्षेमपुरी'पुर्यां, नाम्ना विपुलवाहनः ॥ २ ॥[3]
स्वयम्प्रभगुरोरन्ते, तपस्तप्त्वा धृतव्रतः ।
पूर्णायु'रानते' कल्पे, नवमे स सुरोऽभवत् ॥ ३ ॥
'जम्बू'द्वीपेऽत्र 'भरते', 'श्रावस्त्यां' पुर्यभून्नृपः ।
जितारि'रिक्ष्वाकु'वंशे, तस्य सेना प्रियाऽजनि ॥ ४ ॥
फाल्गुनस्य सिताष्टम्यां, चन्द्रे मृगशिरःश्रिते ।
जीवो विपुलवाहन-नरेन्द्रस्या'ऽऽनता'त् च्युतः ॥ ५ ॥
तस्याः सेनामहादेव्याः, कुक्षाववततार सः ।
साऽसूत समये सूनु-मश्वाङ्कं कनकद्युतिम् ॥ ६ ॥
मार्गशुक्लचतुर्दश्यां, धिष्ण्ये मृगशिरोऽभिधे ।
विधौ मिथुनराशिस्थे, तृतीयं तीर्थनायकम् ॥ ७ ॥-युग्मम्
अस्मिन् गर्भगते धान्यं, सम्भूतं यदभूद् भृशम् ।
सम्भवः [4]सम्भवश्चेति, पित्रा नामाऽस्य तत् कृतम् ॥ ८ ॥
गतेषु पञ्चदशसु, पूर्वलक्षेषु जन्मतः ।
न्यस्य श्रीसम्भवं राज्ये, जितारिर्व्रत[5]भागभूत् ॥ ९ ॥
चतुश्चापशतोच्चाङ्गः, सपूर्वाङ्गचतुष्टयीम्[6] ।
चतुश्चत्वारिंशत्पूर्व-लक्षीं राज्यं व्यधात् प्रभुः ॥ १० ॥
ततो मार्गपूर्णिमायां, मृगशीर्षगते विधौ ।
श्रितः 'सर्वार्थ'[7]शिबिकां, नगर्या निर्गतो विभुः ॥ ११ ॥

---

१ क-'तम्रस्य (?)' । २ ख-वसन्त० । ३ अतः परं त्रिंशत्तमं पद्यं यावत् छन्दो'ऽनुष्टुप्' ।
४ क-'शम्भव०' । ५ ख-'वृत०' । ६ ख-'चतुष्टयम्' । ७ क-'सिद्धार्थां' ।

राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
कृतषष्ठतपा दीक्षां, पश्चिमेऽह्नयग्रहीत् प्रभुः ॥ १२ ॥
सुरेन्द्रदत्तभूपस्या–वासे तत्रैव पारणम् ।
स्वामिनः परमान्नेन, द्वितीये दिवसेऽभवत् ॥ १३ ॥
चतुर्दशान्यत्र समा, विहृत्य पुनरागतः ।
'सहस्राम्रवणे' शाल–द्रुमूले प्रतिमास्थितः ॥ १४ ॥
कार्त्तिके कृष्णपञ्चम्यां, मृगाङ्के मृगशीर्षगे ।
पूर्वाह्णे सम्भवस्वामी, षष्ठेन प्राप केवलम् ॥ १५ ॥–युग्मम्
चारमुख्या[1] गणभृतो, बभूवुर्द्व्यधिकं शतम्[2] ।
चैत्यद्रुश्च साष्टधन्व–शतक्रोशद्वयः प्रभोः ॥ १६ ॥
स बभ्रु[3]-गदाभृद्-ऽभी–प्रदक्षिणदोस्त्रयः ।
समातुलिङ्ग-नागा-ऽक्ष–सूत्रवामभुजत्रयः ॥ १७ ॥
त्रिनेत्रः षड्भुजो यक्षः, श्यामो बर्हिणवाहनः ।
त्रिमुखस्त्रिमुखाख्योऽभूत्, तीर्थे श्रीसम्भवप्रभोः ॥ १८ ॥–युग्मम्
वरदानपरा-ऽक्षस्रग्–युता दक्षिणदोर्युगा ।
अभयप्रद-फणिभृद्–वरवामकरद्वया ॥ १९ ॥
दुरितारिरिति नाम्ना, गौराङ्गी च्छागवाहना ।
चतुर्भुजा श्रीसम्भव–तीर्थे शासनदेव्यभूत् ॥ २० ॥–युग्मम्
श्रीसम्भवपरीवारे, द्वे लक्षे व्रतिनोऽभवन् ।
व्रतिन्यस्त्रीणि लक्षाण्या–सन् षट्त्रिंशत्सहस्र्यपि ॥ २१ ॥
सर्वपूर्वभृतः सार्द्धै–कविंशतिशती पुनः ।
अवधिज्ञानिनः षण्ण–वतिर्जाता शतानि तु ॥ २२ ॥
सहस्रा द्वादश तथा, शतं सार्द्धं मनोविदः ।
सहस्राणि पुनः पञ्च–दश केवलशालिनाम्[5] ॥ २३ ॥
अष्टादश शतान्यासँ–ल्लब्धवैक्रियलब्धयः ।
सहस्राणि द्वादश तु, वादलब्धिसमन्विताः ॥ २४ ॥

---

१ क–'चारुमुख्या' । २ १०२ सङ्ख्याप्रमिताः । ३ नकुल० । ४ क–'स्त्रयः' । ५ क–'शालिनः' ।

लक्षद्वयं त्रिनवति-सहस्राः श्रावकाः पुनः ।
षड् लक्षाणि षट्त्रिंश-च्च सहस्राः श्राविकास्तथा ॥ २५ ॥
चतुःपूर्वाङ्गहीनेऽथ, पूर्वलक्षे गते व्रतात् ।
चैत्रस्य शुक्लपञ्चम्यां, प्रभाते मृगशीर्षगे ॥ २६ ॥
मासिकेनानशनेनो-र्ध्वस्थः श्रीसम्भवप्रभुः ।
'समेता'द्रौ समं साधु-सहस्रेण शिवं ययौ ॥ २७ ॥
कुमारत्वेऽभवन् पूर्व-लक्षाः पञ्चोत्तरा दश ।
राज्ये चतुश्चत्वारिंश-श्चतुःपूर्वाङ्गसंयुता ॥ २८ ॥
दीक्षायां पूर्वलक्षं तु, चतुःपूर्वाङ्गवर्जितम् ।
इति षष्टिः पूर्वलक्षाः, सर्वायुः सम्भवप्रभोः ॥ २९ ॥
श्रीसम्भवस्य निर्वाणं, निर्वाणादजितप्रभोः ।
सागराणां त्रिंशत्कोटि-लक्षेषु गलितेष्वभूत् ॥ ३० ॥
भूयाद् वः स शुभाय सम्भवविभुर्यद्देशनासंसदि
स्वर्गौकःप्रकरैः प्रसूनततयो मुक्ताः पतन्त्यो बभुः ।
सानन्दप्रभुवन्दनभ्रमदमर्त्यौघार्तिसङ्घट्टन-
व्यग्रघोघनघर्मबिन्दुनिवहप्रागल्भ्यलीलावहाः ॥ ३१ ॥

ग्रन्थाग्रं ॥ ३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते तृतीयं सम्भवजिनचरितं समाप्तम् ॥ ३ ॥

## श्रीअभिनन्दनचरित्रम् ॥ ४ ॥

नानास्थानपरिभ्रमभ्रमतया नित्यं प्रतेने मम[2]
द्वैराज्यं ननु यन्मनस्तदमुना निर्मूलमुन्मूलितम् ।
यस्येत्यङ्कमिषाच्चकार चरणोपास्तिं प्लवङ्गो न किं
स श्रीमानभिनन्दनस्त्रिभुवनानन्दाय कन्दायताम् ॥ १ ॥[3]
'जम्बू'द्वीपेऽत्र प्राग्-'विदेहे' वर'मङ्गलावती'विजये ।
पुरि 'रत्नसञ्चया'यां, महाबलो नाम नृपतिरभूत् ॥ १ ॥[4]

१ क-'शीर्षमे' । २ क-'नम-' । ३ शार्दूल० । ४ आर्या ।

काले विमलसूरीणां, पादान्ते सोऽग्रहीद् व्रतम् ।
तपस्तप्त्वा विपद्याभूद्, विमाने 'विजये' सुरः ॥ २ ॥[1]
'जम्बू'द्वीपेऽत्र 'भरते', 'विनीता' विद्यते पुरी ।
तस्यां संवरभूमीशः, सिद्धार्था तत्प्रियाऽभवत् ॥ ३ ॥
[2]वैशाखे शुक्लचतुर्थ्या–मभीचि (भिजिद्?) धिष्ण्यगे विधौ ।
त्रयस्त्रिंशत्सागरायुः–क्षये 'विजय'तश्च्युतः ॥ ४ ॥
सिद्धार्थाकुक्षिं स महा–बलजीवो व्यभूषयत् ।
माघशुक्लद्वितीयाया–मभीचौ मकराश्रिते ॥ ५ ॥
शशाङ्केऽसूत सा सूनुं, स्वर्णाभं कपिलाञ्छनम् ।
'इक्ष्वाकु'कुलकोटीरं, चतुर्थं तीर्थनायकम् ॥ ६ ॥–विशेषकम्
गर्भस्थेऽत्र कुलं राज्य–मभ्यनन्ददतो व्यधात् ।
अभिनन्दन इत्यस्य, नाम संवरभूवरः ॥ ७ ॥
सहार्द्धद्वादशपूर्व–लक्षान्ते जनकेन सः ।
[3]धनुःसार्द्धत्रिंशतोच्चो, युवा राज्येऽभ्यषिच्यत ॥ ८ ॥
संवरे धृतदीक्षेऽथ, प्रभोः पालयतः प्रजाः ।
सार्द्धा सहाष्टपूर्वाङ्गा, षट्त्रिंशत् पूर्वलक्ष्यगात् ॥ ९ ॥
माघेऽथ शुक्लद्वादश्या–मभीचिं संश्रिते विधौ ।
शिबिका'मर्थसिद्धा'ख्या–मारूढो निर्ययौ पुरः ॥ १० ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
पश्चिमेऽह्नि कृतषष्ठः, प्रभुर्दीक्षामुपाददे ॥ ११ ॥
दिवसे द्वितीये स्वामी, परमान्नेन पारणम् ।
इन्द्रदत्तावनीशेन, 'विनीता'यामकार्यत ॥ १२ ॥
विहृत्याष्टादश समा–श्छद्मस्थोऽन्यत्र स व्रतात् ।
पौषशुक्लचतुर्दश्या–मभीचिं शशिनि [4]श्रिते ॥ १३ ॥
'सहस्राम्रवणा'रामे, [5]प्रियालुद्रुतले [6]प्रभुः ।
पूर्वाह्णे केवलं प्राप, षष्ठेन प्रतिमास्थितः ॥ १४ ॥–युग्मम्

१ प्रान्तस्थं पद्यं विहाय अतः परं सर्वेषां छन्दो'ऽनुष्टुप्' ।　२ क–'वैशाखशुक्ल०' ।
३ क–'धनुसार्ध०' ।　४ क–'श्रते' ।　५ क–'प्रियाल०' ।　६ क–'पुनः' ।

लक्षद्वयं त्रिनवति-सहस्राः श्रावकाः पुनः ।
षड् लक्षाणि षट्त्रिंश-च्च सहस्राः श्राविकास्तथा ॥ २५ ॥
चतुःपूर्वाङ्गहीनेऽथ, पूर्वलक्षे गते व्रतात् ।
चैत्रस्य शुक्लपञ्चम्यां, प्रभाते मृगशीर्षगे ॥ २६ ॥
मासिकेनानशनेनो-र्ध्वस्थः श्रीसम्भवप्रभुः ।
'समेता'द्रौ समं साधु-सहस्रेण शिवं ययौ ॥ २७ ॥
कुमारत्वेऽभवन् पूर्व-लक्षाः पञ्चोत्तरा दश ।
राज्ये चतुश्चत्वारिंश-श्चतुःपूर्वाङ्गसंयुता ॥ २८ ॥
दीक्षायां पूर्वलक्षं तु, चतुःपूर्वाङ्गवर्जितम् ।
इति षष्टिः पूर्वलक्षाः, सर्वायुः सम्भवप्रभोः ॥ २९ ॥
श्रीसम्भवस्य निर्वाणं, निर्वाणादजितप्रभोः ।
सागराणां त्रिंशत्कोटि-लक्षेषु गलितेष्वभूत् ॥ ३० ॥
भूयाद् वः स शुभाय सम्भवविभुर्यद्देशनासंसदि
स्वर्गौकःप्रकरैः प्रसूनततयो मुक्ताः पतन्त्यो बभुः ।
सानन्दप्रभुवन्दनभ्रमदमर्त्यौघार्तिसङ्घट्टन-
व्यग्रग्रोघनघर्मबिन्दुनिवहप्रागल्भ्यलीलावहाः ॥ ३१ ॥

ग्रन्थाग्रं ॥ ३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-
सङ्क्षिप्तचरिते तृतीयं सम्भवजिनचरितं समाप्तम् ॥ ३ ॥

## श्रीअभिनन्दनचरित्रम् ॥ ४ ॥

नानास्थानपरिभ्रमभ्रमतया नित्यं प्रतेने मम
द्वैराज्यं ननु यन्मनस्तदमुना निर्मूलमुन्मूलितम् ।
यस्येत्यङ्कमिषाच्चकार चरणोपास्तिं प्लवङ्गो न किं
स श्रीमानभिनन्दनस्त्रिभुवनानन्दाय कन्दायताम् ॥ १ ॥[3]
'जम्बू'द्वीपेऽत्र प्राग्-'विदेहे' वर'मङ्गलावती'विजये ।
पुरि 'रत्नसञ्चया'यां, महाबलो नाम नृपतिरभूत् ॥ १ ॥[4]

१ क-'शीर्षसे' । २ क-'नम-' । ३ शार्दूल० । ४ आर्या ।

काले विमलसूरीणां, पादान्ते सोऽग्रहीद् व्रतम् ।
तपस्तप्त्वा विपद्याभूद्, विमाने 'विजये' सुरः ॥ २ ॥[1]
'जम्बू'द्वीपेऽत्र 'भरते', 'विनीता' विद्यते पुरी ।
तस्यां संवरभूमीशः, सिद्धार्था तत्प्रियाऽभवत् ॥ ३ ॥
[2]वैशाखे शुक्लचतुर्थ्या-मभीचि(भिजिद्?) धिष्ण्यगे विधौ ।
त्रयस्त्रिंशत्सागरायुः-क्षये 'विजय'तश्च्युतः ॥ ४ ॥
सिद्धार्थाकुक्षिं स महा-बलजीवो व्यभूषयत् ।
माघशुक्लद्वितीयाया-मभीचौ मकराश्रिते ॥ ५ ॥
शशाङ्केऽसूत सा सूनुं, स्वर्णाभं कपिलाञ्छनम् ।
'इक्ष्वाकु'कुलकोटीरं, चतुर्थं तीर्थनायकम् ॥ ६ ॥-विशेषकम्
गर्भस्थेऽत्र कुलं राज्य-मभ्यनन्ददतो व्यधात् ।
अभिनन्दन इत्यस्य, नाम संवरभूवरः ॥ ७ ॥
सहार्द्धद्वादशपूर्व-लक्षान्ते जनकेन सः ।
ध[3]नुःसार्द्धत्रिंशतोच्चो, युवा राज्येऽभ्यषिच्यत ॥ ८ ॥
संवरे धृतदीक्षेऽथ, प्रभोः पालयतः प्रजाः ।
सार्द्धा सहाष्टपूर्वाङ्गा, षट्त्रिंशत् पूर्वलक्ष्यगात् ॥ ९ ॥
माघेऽथ शुक्लद्वादश्या-मभीचिं संश्रिते विधौ ।
शिबिका'मर्थसिद्धा'ख्या-मारूढो निर्ययौ पुरः ॥ १० ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
पश्चिमेऽह्नि कृतषष्ठः, प्रभुर्दीक्षामुपाददे ॥ ११ ॥
दिवसे द्वितीये स्वामी, परमान्नेन पारणम् ।
इन्द्रदत्तावनीशेन, 'विनीता'यामकार्यत ॥ १२ ॥
विहृत्याष्टादश समा-श्छद्मस्थोऽन्यत्र स व्रतात् ।
पौषशुक्लचतुर्दश्या-मभीचिं शशिनि [4]श्रिते ॥ १३ ॥
'सहस्राम्रवणा'रामे, [5]प्रियालुद्रुतले प्र[6]भुः ।
पूर्वाह्णे केवलं प्राप, षष्ठेन प्रतिमास्थितः ॥ १४ ॥-युग्मम्

---

१ प्रान्तस्थं पद्यं विहाय अतः परं सर्वेषां छन्दो'ऽनुष्टुप्' । २ क-'वैशाखशुक्ल०' । ३ क-'धनुसार्ध०' । ४ क-'श्रते' । ५ क-'प्रियाल०' । ६ क-'पुनः' ।

गंणेशा वज्रनाभाद्याः, शतं षोडश च प्रभोः ।
चैत्यद्रुमः स द्विचाप-शतक्रोशद्वयोन्नतः ॥ १५ ॥
श्यामः समातुलिङ्गा-ऽक्ष-सूत्रदक्षिणदोर्द्वयः ।
नकुला-ङ्कुशभृद्वाम-दोर्युगो गजवाहनः ॥ १६ ॥
यक्षेश्वराख्यो यक्षोऽभूत्, तीर्थेऽभिनन्दनप्रभोः ।
श्यामा वरद-पाशाङ्कौ, बिभ्राणा दक्षिणौ करौ ॥ १७ ॥
नागा-ऽङ्कुशधरौ वामौ, कालिका कमलासना ।
अभिनन्दनदेवस्य, तीर्थे शासनदेव्यभूत् ॥ १८ ॥–त्रिभिर्विशेषकम्
प्रभोः सर्वपरीवारे, त्रीणि लक्षाणि साधवः ।
साध्व्यस्त्रिंशत्सहस्राया(ग्रा?), षड्लक्षी सर्वपूर्विणः ॥ १९ ॥
पुनः पञ्चदशशता-न्यवधिज्ञानधारिणः ।
शतान्यष्टानवतिस्तु, मनःपर्ययसंयुताः ॥ २० ॥
एकादश सहस्राणि, सार्द्धानि षट् शतानि च ।
चतुर्दश सहस्राणि, केवलज्ञानशालिनः ॥ २१ ॥
एकोनविंशतिर्सह-स्राः सद्वैक्रियलब्धयः ।
एकादश सहस्राणि, वादलब्धिविराजिनः ॥ २२ ॥
अष्टाशीतिसहस्राग्रा, द्विलक्षी श्रावकास्तथा ।
श्राविकाः पञ्च लक्षाणि, सहस्राः सप्तविंशतिः ॥ २३ ॥
पूर्वलक्षेऽष्टादशाब्द्या-ऽष्टाङ्ग्योने केवलाद् गते ।
'सम्मेत'पर्वते साधु-सहस्रेण सह प्रभुः ॥ २४ ॥
वैशाखस्य शुक्लाष्टम्यां, सुधांशौ पुष्यधिष्णगे ।
सन्ध्यायां च प्रवृत्ताया-मूर्ध्वसंस्थानसंस्थितः ॥ २५ ॥
मासं सानशनः सिद्धिं, मेजिवानभिनन्दनः ।
सार्द्धा द्वादश कौमार्ये, राज्ये त्रिंशत् षडुत्तरा ॥ २६ ॥–विशेषकम्
सार्द्धा साष्टाङ्गा दीक्षाया-मेकाष्टाङ्गविवर्जिता ।
पञ्चाशल्लक्षाः पूर्वाणां, सर्वायुरभिनन्दने ॥ २७ ॥

---

१ गणधराः । २ क–'वद्धाम०' । ३ क–'समा' । ४ क–'सहस्रास्तद्वैक्रिय०' । ५ क–'पञ्चसप्ततिः' । ६ क–'दशास्या' । ७ ख–'समेत०' । ८ क–'सुस्थितः' ।

अभिनन्दननिर्वाणं, सम्भवप्रभुनिर्वृतेः ।
कोटिलक्षेषु दशसु, सागराणां गतेष्वभूत् ॥ २८ ॥
किं संसारचतुर्गतीर्दलयितुं सञ्ज्ञाश्चतस्रोऽथवा–
संहर्तुं युगपज्जनस्य चतुरो जेतुं कषायान् नु वा ।
ख्यातुं धर्मचतुष्टयीमुत चतुर्ध्यानानि देष्टुं स्वैक–
व्याख्यापर्वणि यश्चतुर्वपुरभूत् सोऽव्याच्चतुर्थो जिनः ॥ २९ ॥[४]
ग्रन्थाग्रं ॥ ३३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते चतुर्थं श्रीमदभिनन्दनजिनचरितं समाप्तम् ॥ ४ ॥

## श्रीसुमतिनाथचरित्रम् ॥ ५ ॥

सन्तः स्नात्वा प्रतिमितिमिषात् कान्तितोयोर्मिपूर्णे
तूर्णं यस्य क्रमनखसरश्चक्रवाले नमन्तः ।
सम्पद्यन्ते भवदवभवत्तापसन्तापमुक्ता
मुक्तेः स्वामी स सुमतिजिनो जायतां प्रीतये वः ॥ १ ॥[५]
'जम्बू'द्वीपस्थप्राग्-विदेह 'वरपुष्कलावती'विजये ।
'शङ्खपुरे' नृपतिर्जय–सेनोऽस्याजनि सुदर्शना दयिता ॥ २ ॥[६]
तयोः पुरुषसिंहाख्यः, सुतः सुकृतभूरभूत् ।
कुमारत्वेऽपि विनय–नन्दनाख्याद् गुरोरयम् ॥ ३ ॥[७]
प्रव्रज्यां प्राप चक्रे च, तपोऽद्भुततरं ततः ।
विमाने 'वैजयन्ता'ह्वे, महर्द्धिरमरोऽजनि ॥ ४ ॥–युग्मम्
'जम्बू'द्वीपेऽत्र 'भरते'–ऽयोध्या'यां पुरि भूपतिः ।
मेघ इत्यभवत् तस्य, मङ्गलाऽजनि वल्लभा ॥ ५ ॥
त्रयस्त्रिंशत्पयोराशि–प्रमाणस्यायुषः क्षये ।
जीवः पुरुषसिंहस्य, 'वैजयन्ता'च्च्युतोऽथ सः ॥ ६ ॥
श्रावणे मासि शुक्लायां, द्वितीयायां सुधाकरे ।

---

१ ख–'मुदा' । २ ख–'मथ' । ३ क–'तु वा' । ४ शार्दूल० । ५ मन्दाक्रान्ता । ६ गीतिः । ७ अतः परं ३०तमपर्यन्तानां पद्यानामनुष्टुप्छन्दः । ८ क–'दिवाकरे' ।

मघास्थे मङ्गलादेव्याः, कुक्षिदेशमभूषयत् ॥ ७ ॥
वैशाखस्य सिताष्टम्यां, मघायां सिंहगे विधौ ।
मङ्गला सुषुवे सूनुं, क्रौञ्चाङ्कं कनकच्छविम् ॥ ८ ॥
'इक्ष्वाकु'कुलकल्पद्रुं, तीर्थनाथं च पञ्चमम् ।
गर्भस्थितेऽत्र समभूज्-जनन्याः शोभना मतिः ॥ ९ ॥
स्वामिनः सुमतिरिति, नाम पित्रा ततः कृतम् ।
पूर्वाणां दशभिर्लक्षै-र्युवराज्येऽभवत् प्रभुः ॥ १० ॥
एकोनत्रिंशतं पूर्वलक्षाः सद्‌द्वादशाङ्गिकाः ।
धनुःशतत्रयोत्तुङ्गो, राज्यं प्रभुरपालयत् ॥ ११ ॥
वैशाखे शुक्लनवम्यां, मघाधिष्ण्याश्रिते विधौ ।
शिबिका'मभयंकरा'-मारूढो निर्ययौ पुरः ॥ १२ ॥
समं नृपसहस्रेण, 'सहस्राम्रवणे' वने ।
पूर्वाह्णे नित्यभक्तेन, प्रव्रज्यामग्रहीत् प्रभुः ॥ १३ ॥
दिने द्वितीये 'विजय'-पुरे पद्मनृपौकसि ।
पारणं परमान्नेन[1], बभूव सुमतिप्रभोः ॥ १४ ॥
छद्मस्थो विजहारोर्वीं, विभुर्वर्षाणि विंशतिम्[2] ।
'सहस्राम्रवणे'ऽभ्येत्य, प्रियङ्गुक्ष्मारुहस्तले ॥ १५ ॥
चैत्रस्य शुक्लैकादश्यां, मघाभे प्रतिमास्थितः ।
पूर्वाह्णे केवलं प्राप, षष्ठेन सुमतिप्रभुः ॥ १६ ॥-युग्मम्
शतं गणधरा भर्तु-र्जज्ञिरे चमरादयः ।
चापषोडशशत्यग्र-क्रोशोच्चश्चैत्यपादपः ॥ १७ ॥
यक्षः सुमतितीर्थेऽभूत्, तुम्बुरुस्तार्क्ष्यवाहनः ।
श्वेताङ्गो वरदशक्ति-युतदक्षिणदोर्युगः ॥ १८ ॥
गदा-पाशधरवाम-करद्वन्द्वोऽन्तिकास्थितः ।
करौ वरद-पाशाङ्कौ, दक्षिणौ दक्षिणेतरौ ॥ १९ ॥
मातुलिङ्गा-ङ्कुशधरौ, बिभ्राणाऽम्भोरुहासना ।
हेमकान्तिर्महाकाली, देवी सुमतिशासने ॥ २० ॥

१ क-'परा०' । २ ख-'विंशतिः' ।

युक्ता सहस्रैर्विंशत्या, त्रिलक्षी साधवोऽभवन् ।
व्रतिन्यः पञ्चलक्षी च, सहस्रैस्त्रिंशताऽन्विता ॥ २१ ॥
चतुर्दशपूर्वभृत–श्चतुर्विंशतिशत्यपि ।
एकादश सहस्राणि, त्ववधिज्ञानशालिनः ॥ २२ ॥
अयुतं संयुतं चार्द्ध–चतुःशत्या मनोविदः ।
उत्पन्नकेवलज्ञानाः सहस्राणि त्रयोदश ॥ २३ ॥
वादिनां दश सहस्राः, सपञ्चाशच्चतुःशती ।
अष्टादश सहस्राणि, चतुःशत्यान्वितानि तु ॥ २४ ॥
सद्वैक्रियलब्धिमन्तः, श्राद्धा लक्षत्रयं तथा ।
एकाशीतिसहस्राणि, श्राविका लक्षपञ्चकम् ॥ २५ ॥
सहस्राणि षोडशेति, परिवारः प्रभोरभूत् ।
पूर्वलक्षे द्वादश्याङ्ग्या, विंशत्याब्द्या च वर्जिते ॥ २६ ॥
ज्ञानाद् गते 'समेता'द्रा–वूर्ध्वो मासमुपोषितः ।
चैत्रस्य शुक्लनवम्यां, पुनर्वसुगते विधौ ॥ २७ ॥
ययौ मुनिसहस्रेण, पूर्वाह्णे सुमतिः शिवम् ।
कौमारे दश राज्ये तु, द्वादशाङ्गसमन्विताः ॥ २८ ॥
एकोनत्रिंशद् दीक्षायां, द्वादशाङ्गोज्झिताः प्रभोः ।
एका लक्षा चत्वारिंशत्, पूर्वाणामायुरित्यभूत् ॥ २९ ॥
[1]सुमतिस्वामिनिर्वाण–मभिनन्दननिर्वृतेः ।
सागराणां नवकोटि–लक्षेषु गलितेष्वभूत् ॥ ३० ॥
युष्माकं सुमतिप्रभुः शुभमतिं पुष्णातु यस्य द्विधा–
प्युष्णांशुर्महसा परेण तपसा तीव्रेण च न्यक्कृतः ।
[2]द्वेधाभूतवपुष्टयाऽधित पुरः पृष्ठेऽपि तिष्ठन् परां
सेवां निर्मलधर्मचक्रविलसद्भामण्डलच्छद्मना ॥ ३१ ॥
ग्रं० ॥ ३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-
सङ्क्षिप्तचरिते पञ्चमं सुमतिनाथजिनचरितं समाप्तम् ॥ ५ ॥

---

१ इदं पद्यं न वर्तते क–प्रतौ । २ क–'द्वेधीभूत०' ।

## श्रीपद्मप्रभचरित्रम् ॥ ६ ॥

क्षीणाशेषघनावृतेर्भृशमसम्भाविक्षयस्याभितो-
लोकालोकप्रकाशकं श्रितवतो विस्तारमस्ताधिकम् ।
यज्ज्ञानामृतरोचिषो न किमयं द्विःसप्तरज्ज्वात्मको
लोकोऽङ्कः स्थितिमातनोति स मुदे पद्मप्रभोऽस्तु प्रभुः ॥ १ ॥[4]

'धातु(त)की'खण्डद्वीपे प्राग्-विदेहे [5]विजये पुनः ।
'वत्सा'ह्वे 'सुसीमा'पुर्यां, राजाऽसीदपराजितः ॥ १ ॥[7]
पिहिताश्रुत( श्रव ? )सूरीणा-मन्ते स व्रतमग्रहीत् ।
तपस्तप्त्वाऽथ नवमे-ऽजनि ग्रैवेयके सुरः ॥ २ ॥
'जम्बू'द्वीपेऽत्र 'भरते', 'वत्स'देशेऽस्ति पूर्वरा ।
'कोशम्ब्य'त्र धरो राजा, सुसीमा तत्प्रियाऽजनि ॥ ३ ॥
माघस्य षष्ठ्यां कृष्णायां, चित्रां याते सुधाकरे ।
एकत्रिंशत्सागरायुः-क्षये ग्रैवेयकाच्च्युतः ॥ ४ ॥
सोऽपराजितस्य जीवः, सुसीमाकुक्षिमाश्रयत् ।
सुसीमा समयेऽसूत, षष्ठं तीर्थकरं सुतम् ॥ ५ ॥
'इक्ष्वाकु'कुलकोटीरं, पद्माभं पद्मलाञ्छनम् ।
कार्तिके कृष्णद्वादश्यां, चित्रां कन्यां [6]श्रिते विधौ ॥ ६ ॥-युग्मम्
मातुर्गर्भस्थितेऽत्राभूत्, पद्मतल्पस्य दोहदः ।
पद्माभश्चेति चक्रे स, पित्रा पद्मप्रभाभिधः ॥ ७ ॥
गतेषु पूर्वलक्षेषु, सार्द्धसप्तस्वथ प्रभुः ।
सार्द्धचापद्विशत्युच्चः, पित्रा राज्येऽभ्यषिच्यत ॥ ८ ॥
राज्ये षोडशपूर्वाङ्ग-युक्ता सार्द्धैकविंशतिः ।
पूर्वलक्षा व्यतिक्राम्य-ति स पद्मप्रभः प्रभुः ॥ ९ ॥
कार्तिकेऽथ कृष्णत्रयो-दश्यां चित्रागते विधौ ।
आरुह्य 'निर्वृतिकरां', शिबिकां निर्ययौ पुरः ॥ १० ॥

---

१ क-'वृते भृश०' । २ क-'विकासकं' । ३ क-'मस्तावधि' । ४ शार्दूल० । ५ क-'विजये पुरौ (?)' । ६ ख-'ऽभूद०' । ७ अतः परं चरमं पद्यं विहाय समस्तानां छन्दो'ऽनुष्टुप्' । ८ क-'गते' । ९ क-'पूर्वैक०' ।

राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
अपराह्णेऽग्रहीद् दीक्षां, कृतषष्ठो जगत्पतिः ॥ ११ ॥
द्वितीये दिवसे स्वामी, पुरे पंद्मस्थलेऽकरोत् ।
सोमदेवनृपावासे, परमान्नेन पारणम् ॥ १२ ॥
छद्मस्थोऽन्यत्र षण्मासान्, विहृत्यैत्य पुनः स्थितः ।
'सहस्राम्रवणे' मूले, वटद्रोः प्रंतिमां श्रितः ॥ १३ ॥
चैत्रमासे पूर्णिमायां, चन्द्रे चित्रामुपेयुषि ।
कृतषष्ठतपाः स्वामी, पूर्वाह्णे प्राप केवलम् ॥ १४ ॥
शतं सप्ताधिकं जाता, गणेशाः सुव्रतादयः ।
सार्द्धक्रोशोन्नतश्चैत्य-पादपोऽभूत् तथा प्रभोः ॥ १५ ॥
यक्षः कुसुमनामाऽऽसीन्-नीलाङ्गो मृगवाहनः ।
बिभ्राणो दक्षिणौ पाणी, सफला-ऽभयदौ परौ ॥ १६ ॥
नकुला-ऽक्षसूत्रयुक्तौ, तीर्थे पद्मप्रभप्रभोः ।
अच्युता शासनदेवी, श्यामाङ्गी नरवाहना ॥ १७ ॥
दक्षिणौ वरदं पाशं, शोभितं बिभ्रती भुजौ ।
वामौ पुनर्धनुर्दण्ड-प्रचण्डाभयदायिनौ ॥ १८ ॥
त्रिंशत्सहस्रयुक्तानि, त्रीणि लक्षाणि साधवः ।
साध्व्यश्चत्वारि लक्षाणि, सहस्रा विंशतिस्तथा ॥ १९ ॥
चतुर्दशपूर्वभृत-स्त्रयोविंशतिशत्यपि ।
समुत्पन्नावधिज्ञानाः, सहस्राणि पुनर्दश ॥ २० ॥
मनोविदां सहस्राणि, दश त्रीणि शतानि च ।
उत्पन्नकेवलज्ञानाः, सहस्रा द्वादशाभवन् ॥ २१ ॥
सद्वैक्रियलब्धयोऽपि, सहस्राणि तु षोडश ।
शतमष्टसमेतं च, वादिलब्धिपराः[3] पुनः ॥ २२ ॥
सहस्रनवकं षट् च, शतानि श्रावकाः पुनः ।
उभे लक्षे षट्सप्तत्या, सहस्रैरधिके तथा ॥ २३ ॥
श्राविकाः पञ्च लक्षाणि, सहस्राण्यपि पञ्च च ।

---

१ क-'ब्रह्मस्थले' । २ ख-'प्रतिमास्थितः' । ३ ख-'लब्धकराः' ।

इति सर्वपरीवारः पद्मप्रभप्रभोरभूत् ॥ २४ ॥

ज्ञानात् षोडश पूर्वाङ्गा, षण्मास्योने गते सति ।
पूर्वलक्षे 'समेता'द्रा-वूर्ध्वो मासमुपोषितः ॥ २५ ॥

मार्गस्य कृष्णैकादश्यां, चित्रां याते विधौ प्रगे ।
त्र्यग्राष्टशत्या साधूनां, सिद्धिं पद्मप्रभोऽभजत् ॥ २६ ॥

कुमारत्वे सप्त सार्द्धा, राज्ये सार्द्धैकविंशतिः ।
षोडशाङ्गा युता लक्षा, तयोर्नैका व्रते पुनः ।
लक्षाः पूर्वाणामित्यायु-स्त्रिंशत् पद्मप्रभप्रभोः ॥ २७ ॥[1]

श्रीपद्मप्रभनिर्वाणं, सुमतिस्वामिनिर्वृतेः ।
गतायामब्धिकोटीनां, सहस्रा नवतावभूत् ॥ २८ ॥

रङ्गद्विभातभवरङ्गविभाभुजङ्ग-
चङ्गा यदङ्गरुचिवीचिचयाः स्फुरन्ति ।
रागोर्मयः किल बहिर्मनसो निरस्ताः
पद्मप्रभप्रभुरसौ दुरितानि भिन्द्यात् ॥ २९ ॥[3]

ग्रन्थाग्रं ॥ ३२ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते षष्ठं श्रीमत्पद्मप्रभजिनचरितं समाप्तम् ॥ ६ ॥

## श्रीसुपार्श्वचरित्रम् ॥ ७ ॥

देवः सेवापरसुरशिरःक्रीडदापीडरत्न-
ज्योतिर्जातच्छुरितचरणः श्रीसुपार्श्वः श्रियेऽस्तु ।
भेजुः पञ्चेन्द्रियजयभवत्पञ्चधा कीर्तिवल्ली-
कन्दाकारं फणिपतिफणाः पञ्च यस्योत्तमाङ्गे ॥ १ ॥[4]

'धातुकी'खण्डद्वीपे प्राग्-'विदेहे' विजयेऽजनि ।
रमणीये 'क्षेमपुर्यां', नन्दिषेणो धराधवः ॥ २ ॥[5]

स जग्राहाऽरिदमना-चार्यान्ते समये व्रतम् ।
तपस्तप्त्वाऽद्भुतं जातः, षष्ठे 'ग्रैवेयके' सुरः ॥ ३ ॥

---

१ क-'षोडश्याङ्ग्या युता लक्षास्तयो०' । २ षट्पदी । ३ वसन्त० । ४ मन्दाक्रान्ता । ५ अतः परं त्रिंशत्तमपर्यन्तानां पद्यानां छन्दोऽनुष्टुप् ।

'जम्बू'द्वीपेऽत्र 'भरत'—क्षेत्रे 'वाराणसी' पुरी ।
तत्र प्रतिष्ठो राजाऽऽसीत्[1], तस्य पृथ्वीति वल्लभा ॥ ४ ॥
कृष्णाष्टम्यां भाद्रपद—स्यानुराधाश्रिते विधौ ।
अष्टाविंशतिवार्ध्यायुः[2]—क्षये 'ग्रैवेयका'च्च्युतः ॥ ५ ॥
नन्दिषेणनृपजीवः, पृथ्व्याः कुक्षाववातरत् ।
सा सुतं सुषुवे स्वर्ण—वर्णं स्वस्तिकलाञ्छनम् ॥ ६ ॥
ज्येष्ठस्य शुक्लद्वादश्यां, विशाखायां तुलाश्रिते ।
विधौ सप्तमतीर्थेश—'मिक्ष्वाकु'कुलमण्डनम् ॥ ७ ॥—युग्मम्
फणिन्येकफणे पञ्च—फणे नवफणेऽपि च ।
सुप्तं स्वप्ने प्रभौ गर्भ—स्थिते माता स्वमैक्षत ॥ ८ ॥
अस्मिन् गर्भस्थिते माता, सुपार्श्वा समभूद् यतः ।
ततः सुपार्श्व इत्याख्यां, करोति स्म पिता प्रभोः ॥ ९ ॥
गतेषु जन्मनः स्वामी, पूर्वलक्षेषु पञ्चसु ।
धनुःशतद्वयोत्तुङ्गः, पित्रा राज्येऽभ्यषिच्यत ॥ १० ॥
चतुर्दश पूर्वलक्षा, विंशत्यङ्गसमन्विताः ।
राज्यं पालयतो जग्मुः, श्रीसुपार्श्वजगत्पतेः ॥ ११ ॥
ज्येष्ठशुक्लत्रयोदश्यां, राधायां[3] पश्चिमेऽहनि ।
'मनोहरा'ऽऽख्यां शिबिकां, श्रितः षष्ठपरो गतः ॥ १२ ॥
'सहस्राम्रवणे' राज्ञां, सहस्रेणाभवद् यतिः ।
प्रभुश्चक्रे द्वितीयेऽह्नि, 'पाटलीखण्ड'पत्तने ॥ १३ ॥
पारणं परमान्नेन, महेन्द्रनृपवेश्मनि ।
छद्मस्थो नवमासांश्च, विजहारावनीं विभुः ॥ १४ ॥—युग्मम्
'सहस्राम्रवणे'ऽभ्येत्य, प्रभुः प्रतिमया स्थितः ।
फाल्गुनस्य कृष्णषष्ठ्यां, विशाखां संश्रिते विधौ ॥ १५ ॥
शिरीषमूले षष्ठेन, पूर्वाह्णे प्राप केवलम् ।
चतुर्धन्वशताग्रैक—क्रोशोऽभूच्चैत्यपादपः ॥ १६ ॥

---

१ ख—'ऽभूत्' । २ सागरोपमायुः । ३ विशाखायाम् ।

पृथ्व्या स्वप्नेक्षितं तादृक्-सर्पं शीर्षोपरि प्रभोः ।
शक्रो विचक्रे समव-सरणेषु सदा विभोः ॥ १७ ॥
अभूवन् पञ्चनवति-र्विदर्भाद्या गणेश्वराः ।
दक्षिणौ बिल्व-पाशाङ्कौ, वामौ सनकुला-ऽङ्कुशौ ॥ १८ ॥
भुजौ दधानो मातङ्गो, यक्षो नीलो गजाश्रयः ।
शासने देवता शान्ता, स्वर्णवर्णेभवाहना ॥ १९ ॥
दक्षिणौ वरदं साक्ष-सूत्रं वामौ तु बिभ्रती ।
शूलाङ्का-ऽभयदौ बाहू, श्रीसुपार्श्वप्रभोरभूत् ॥ २० ॥-युग्मम्
प्रभोः सर्वपरीवारे, त्रीणि लक्षाणि साधवः ।
साध्व्यः पुनश्चतुर्लक्षी, सहस्रैस्त्रिशताऽन्विता ॥ २१ ॥
चतुर्दशपूर्विणो द्वौ, सहस्रौ त्रिंशदन्वितौ ।
अवधिज्ञानसंयुक्ताः, सहस्राणि पुनर्नव ॥ २२ ॥
सहस्रनवकं सार्द्धै-कशतं च मनोविदः ।
सहस्राण्येकादश तु, केवलज्ञानशालिनः ॥ २३ ॥
सद्वैक्रियलब्धयोऽपि, संयुक्तानि शतैस्त्रिभिः ।
सहस्राणि पञ्चदश, वादलब्धिधराः पुनः ॥ २४ ॥
सहस्राण्यष्ट सचतुः-शतानि श्रावकाः प्रभोः ।
द्वे लक्षे सप्तपञ्चाशत्, सहस्राः श्राविकाः पुनः ॥ २५ ॥
पञ्च लक्षाणि सहस्रै-रधिकानि च सप्तभिः ।
विंशत्यङ्गा नवमास्या, वर्जिते केवलाद् गते ॥ २६ ॥
पूर्वलक्षे 'समेता'द्रा-वूर्ध्वो माससुपोषितः ।
फाल्गुने कृष्णसप्तम्यां, मूलेधिष्ण्यगते विधौ ॥ २७ ॥
मुनिपञ्चशतीयुक्तः, सुपार्श्वो मुक्तिमाप्तवान् ।
कौमारे पञ्च राज्ये स-विंशत्यङ्गाश्चतुर्दश ॥ २८ ॥
विंशत्यङ्गोज्झिता सैका, दीक्षायामिति विंशतिः ।
लक्षाः पूर्वाणां सर्वायुः, श्रीसुपार्श्वजिनेशितुः ॥ २९ ॥

१ क-'दक्षिणं' । २ ख-'पुनः' । ३ क-'पञ्चलक्षे' । ४ ख-'धिष्ण्ये गते' ।

श्रीसुपार्श्वस्य निर्वाणं, श्रीपद्मप्रभनिर्वृतेः ।
यातेष्वर्णवकोटीनां, सहस्रेषु नवस्वभूत् ॥ ३० ॥
पञ्चशीर्षफणभृत्फणच्छलात्, पञ्चशाख इव केवलश्रिया ।
मूर्ध्नि शान्तरसपायिनः कृतो, यस्य सोऽवतु सुपार्श्वतीर्थकृत् ॥ ३१ ॥[1]
ग्रन्थाग्रं० ॥ ३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते सप्तमं श्रीमत्सुपार्श्वजिनचरितं समाप्तम् ॥ ७ ॥

---

## श्रीचन्द्रप्रभचरित्रम् ॥ ८ ॥

धर्मद्रोः स्मेरपुष्पस्तबक इव लसत्केवलज्ञानदुग्धा-
　म्भोधेः सम्पृक्तमुक्ताचय[2] इव विकसद्वंश्यकीर्ते[3]रिवौघः ।
सन्दोहः शारदेन्दुप्रतिमसमुदितध्यानदीप्तेरिवासौ
　सौधं [4]सिद्धेरिवेन्दूपलविमलवपुः पातु चन्द्रप्रभो वः ॥ १ ॥[5]
'धातुकी'खण्डद्वीपस्थ-प्राग्'विदेह'विभूषणे ।
विजये 'मङ्गलावत्यां', पूरास्ते[6] 'रत्नसञ्चया' ॥ २ ॥[7]
तत्र पद्म इति क्ष्मापो, राज्यं कृत्वा धृतव्रतः ।
युगन्धरगुरोरन्ते, चिरं तेपेऽद्भुतं तपः ॥ ३ ॥
पूर्णायु'[8]वैजयन्त्या'ख्ये, विमाने विबुधोऽजनि ।
'जम्बू'द्वीपेऽत्र 'भरत'-क्षेत्रे 'चन्द्रानना' पुरी ॥ ४ ॥
[9]महसेनो नृपस्तत्र, तत्प्रिया लक्ष्मणाऽभवत् ।
चैत्रस्य कृष्णपञ्चम्या-मनुराधागते विधौ ॥ ५ ॥
त्रयस्त्रिंशत्पयोराशि-प्रमाणायुःक्षये च्युतः ।
'वैजयन्ता'त् पद्मजीवो, लक्ष्मणाकुक्षिमाश्रयत् ॥ ६ ॥
पौषस्य कृष्णद्वादश्या-मनुराधां च [10]वृश्चिकम् ।

---

१ रथोद्धता । २ क-'सुधाचय' । ३ क-'वंशकीर्ते०' । ४ क-'सिद्धेरिवेन्दोपल०' । ५ स्रग्धरा । ६ नगरी । ७ अतः परं २७ तमपर्यन्तानां पद्यानामनुष्टुप् छन्दः । ८ ख-'ज-यन्ताख्यविमाने' । ९ ख-'महसेननृप०' । १० क-'वृश्चिके' ।

इन्दौ श्रितेऽसूत सुतं, लक्ष्मणाऽर्हन्तमष्टमम् ।
'इक्ष्वाकु'वंशाब्धिचन्द्रं, चन्द्राभं चन्द्रलाञ्छनम् ॥ ७ ॥–षट्पदी
गर्भस्थेऽत्राभवन्मातु–श्चन्द्रपानाय दोहदः ।
चन्द्राभश्चायमित्याह्व–दमुं चन्द्रप्रभं पिता ॥ ८ ॥
पूर्वलक्षद्वये सार्द्धे, जन्मकालाद् गते प्रभुः ।
सार्द्धधन्वशतोच्छ्रायः, पित्रा राज्येऽभ्यषिच्यत ॥ ९ ॥
राज्ये षट् पूर्वलक्षाणि, सार्द्धानि त्रिजगत्पतिः ।
चतुर्विंशतिपूर्वाङ्ग–संयुक्तान्यत्यवाहयत् ॥ १० ॥
पौषकृष्णत्रयोदश्या–मनुराधास्थिते विधौ ।
'मनोरमा'ऽऽख्यां शिबिका–मारूढो निर्ययौ पुरः ॥ ११ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
अपराह्णेऽग्रहीद् दीक्षां, कृतषष्ठतपाः प्रभुः ॥ १२ ॥
'पद्मखण्ड'पुरे स्वामी, सोमदत्तनृपौकसि ।
पारणं परमान्नेन, द्वितीये दिवसे व्यधात् ॥ १३ ॥
छद्मस्थोऽन्यत्र मासांस्त्रीन्, विहृत्यैत्य पुनः स्थितः ।
'सहस्राम्रवणा'रामे, पुन्नागस्य तरोस्तले ॥ १४ ॥
फाल्गुने कृष्णसप्तम्या–मनुराधास्थिते विधौ ।
प्रतिमास्थितः पूर्वाह्णे, प्राप षष्ठेन केवलम् ॥ १५ ॥
आसीदष्टादश धनुः–शतोच्चश्चैत्यपादपः ।
दत्तादयो गणभृतस्तथा त्रिनवतिः प्रभोः ॥ १६ ॥
तीर्थेऽभूद् विजयो यक्षो, नीलाङ्गो हंसवाहनः ।
सखड्गं दक्षिणं बाहुं, वहन् वामं समुद्गरम् ॥ १७ ॥
खड्ग–मुद्गरसंयुक्तौ, बिभ्राणा दक्षिणौ करौ ।
वामौ फलक–परशु–शालिनौ हंसवाहना ॥ १८ ॥
सुवर्णवर्णा भृकुटी, प्रभोः शासनदेव्यभूत् ।
द्वे लक्षे साधवः सार्द्धे, साध्व्यो लक्षत्रयं तथा ॥ १९ ॥

१ ख–'प्रभुं' । २ ख–'षष्ठेन प्राप' ।

सहस्रैरशीत्या युक्तं, [1]द्विसप्तपूर्विणः पुनः ।
द्विसहस्र्यवधिज्ञान–भृतस्तथा मनोविदः ॥ २० ॥
अष्टौ सहस्राः केवल–भृतो दशसहस्र्यपि ।
चतुर्दश सहस्राणि, जातवैक्रियलब्धयः ॥ २१ ॥
षट्शतीसंयुता सप्त–सहस्री वादिनः पुनः ।
द्वे लक्षे श्रावकाः सार्द्धे, श्राविका लक्षपञ्चकम् ॥ २२ ॥
ऊनं नवत्या सहस्रैः, परिवारेऽभवन् प्रभोः ।
पूर्वलक्षे त्रिमासोने, केवलज्ञानतो गते ॥ २३ ॥
[2]नभस्यकृष्णसप्तम्यां, सुधांशौ श्रवणाश्रिते ।
ऊर्ध्वस्थः 'सम्मेत'गिरौ, मासं सानशनः प्रभुः ॥ २४ ॥
समं मुनिसहस्रेण, पूर्वाह्णे मुक्तिमाप्तवान् ।
कौमारे द्वे लक्षे सार्द्धे, राज्ये सार्द्धाश्च षट् पुनः ॥ २५ ॥
युताश्चतुर्विंशत्यङ्ग्या, तयोर्नैका पुनर्व्रते ।
लक्षाः पूर्वाणामित्यायु–र्दश चन्द्रप्रभप्रभोः ॥ २६ ॥
श्रीचन्द्रप्रभनिर्वाणं, श्रीसुपार्श्वस्य निर्वृतेः ।
शतेष्वर्णवकोटीनां, व्यतीतेषु नवस्वभूत् ॥ २७ ॥
[3]चञ्चच्चूडारुणमणिगणोदञ्चदुद्द्योतरज्य–
[4]च्चक्षुश्चन्द्रोपलमदजलस्मेरका[5]श्मीरनीरैः ।
चक्रे शक्रः सनवमवनिन्यस्तहस्तो य[6]दंह्रि–
द्वन्द्वे लक्ष्मीं रचयतु स वश्चन्द्रलक्ष्मा जिनेन्द्रः ॥ २८ ॥[7]
ग्रन्थाग्रं ॥ ४२ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-
सङ्क्षिप्तचरितेऽष्टमं श्रीमच्चन्द्रप्रभजिनचरितम् ॥ ८ ॥

---

१ चतुर्दशपूर्विणः । २ भाद्रपद० । ३ क–'न्यञ्चचूडा०' । ४ क–'श्चक्षु०' । ५ क–'काश्मीर०' । ६ ख–'यदङ्घ्रि' । ७ मन्दाक्रान्ता ।

## श्रीसुविधिचरित्रम् ॥ ९ ॥

सुविधिजिनपतिर्वः पातु पातालपृथ्वी-
त्रिदिवजयमहौजा निर्जितो येन गर्जन् ।
सहजमकरचिह्नच्छद्मना पादसीम्नि
स्वमिव मकरकेतुः केतुमौज्झद् विजेतुः ॥ १ ॥[1]
'पुष्करवर'द्वीपार्द्धे, प्राग्'विदेह'विभूषणे ।
विजये 'पुष्कलावत्यां', पूरास्ते 'पुण्डरीकिणी' ॥ २ ॥[2]
तत्रासीत् पद्मभूपोऽसौ, जगन्नन्दगुरोर्व्रतम् ।
प्राप्य तप्त्वा तपो मृत्वा, 'वैजयन्ते' सुरोऽजनि ॥ ३ ॥
'जम्बू'द्वीपेऽत्र 'भरते', 'काकन्दी'त्यस्ति पूर्वरा ।
नृपोऽभूत् तत्र सुग्रीव-स्तस्य रामेति वल्लभा ॥ ४ ॥
फाल्गुने कृष्णनवम्यां, सुधांशौ मूलधिष्ण्यगे ।
'वैजयन्ता'त् त्रयस्त्रिंशत्-सागरायुःक्षये च्युतः ॥ ५ ॥
महापद्मनृपजीवो, रामाकुक्षाववातरत् ।
मार्गस्य कृष्णपञ्चम्यां, मूलर्क्षे घनगे विधौ ॥ ६ ॥
रामाऽसूत सुतं श्वेत-कान्ति मकरलाञ्छनम् ।
'इक्ष्वाकु'कुलकोटीरं, नवमं तीर्थनायकम् ॥ ७ ॥
दक्षा सर्वेषु विधिषु, गर्भस्थेऽत्र जनन्यभूत् ।
पुष्पदोहदतो दन्तो-द्गमोऽस्याभूदिति प्रभोः ॥ ८ ॥
सुविधिः पुष्पदन्तश्चे-त्यभिधाने पिता व्यधात् ।
जन्मतः पूर्वपञ्चाशत्-सहस्रेषु गतेष्वभूत् ॥ ९ ॥
धनुःशतोन्नतः पित्रा, स्वामी राज्ये न्यवेश्यत ।
साष्टाविंशत्यङ्गं पूर्व-लक्षार्द्धं राज्यधार्यभूत् ॥ १० ॥
प्रभुर्मार्गस्य कृष्णायां, षष्ठ्यां मूले परेऽहनि ।
'शूरप्रभा'ऽऽख्यां शिबिका-मारूढो निरगात् पुरः ॥ ११ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
कृतषष्ठतपाः स्वामी, प्रव्रज्यां प्रतिपन्नवान् ॥ १२ ॥

---

१ मालिनी । २ अतः परमन्त्यं पद्यं विहाय सर्वेषां छन्दोऽनुष्टुप् ।

द्वितीयेऽह्नि पुरे 'श्वेत–पुरे' पुष्पनृपौकसि ।
बभूव परमान्नेन, पारणं सुविधिप्रभोः ॥ १३ ॥
ततोऽन्यत्र चतुर्मासीं, छद्मस्थो व्यहरत् प्रभुः ।
'सहस्राम्रवणे' भूयो–ऽभ्येत्य प्रतिमया स्थितः ॥ १४ ॥
मा[1]लूरस्य तरोर्मूले, पूर्वाह्ने षष्ठ[2]तत्परः ।
ऊ[3]र्जशुक्लतृतीयायां, मूलर्क्षे प्राप केवलम् ॥ १५ ॥
चैत्यद्रुर्द्वादशधनुः–शतोच्चः सुविधेरभूत् ।
अष्टाशीतिर्गणधरा, वराहप्रमुखास्तथा ॥ १६ ॥
अजिताख्योऽभवद् यक्षः, श्वेताङ्गः कूर्मवाहनः ।
मातुलिङ्गा-ऽक्ष[4]सूत्राङ्कौ, बिभ्राणो दक्षिणौ करौ ॥ १७ ॥
वामौ नकुल-कुन्ताङ्कौ, तीर्थे श्रीसुविधिप्रभोः ।
दक्षिणौ वरदं साक्ष–सूत्रं च दधती भुजौ ॥ १८ ॥
वामौ कलशा-ऽङ्कुशाङ्कौ, गौराङ्गी वृषवाहना ।
सुतारा सुविधेरासीत्, तीर्थे शासनदेवता ॥ १९ ॥
प्रभोः सर्वपरीवारे, द्वे लक्षे व्रतिनोऽभवन् ।
व्रतिन्यो लक्षमेकं तु, सहस्रा विंशतिस्तथा ॥ २० ॥
शतानि चतुरशीति–रवधिज्ञानशालिनः ।
चतुर्दशपूर्वभृतः, सहस्रं पञ्चशत्यपि ॥ २१ ॥
मनःपर्ययिणः सप्त, सहस्राः पञ्चशत्यपि ।
केवलज्ञानसंयुक्ताः, शतानि पञ्चसप्ततिः ॥ २२ ॥
त्रयोदश सहस्राणि, जातवैक्रियलब्धयः ।
षट्सङ्ख्यानि सहस्राणि, सञ्जातवादलब्धयः ॥ २३ ॥
द्वे लक्षे एकोनत्रिंशत्, सहस्राः श्रावकाः पुनः ।
श्राविकास्तु चतुर्लक्षी, द्वासप्ततिसहस्र्यपि ॥ २४ ॥
अष्टाविंशत्यङ्गया हीने, पूर्वलक्षे गते व्रतात् ।
ऊर्ध्वस्थितः सानशनो, मासं 'सम्मेत'पर्वते ॥ २५ ॥

---

१ ख–'सालूरस्य' । २ क–'तत्परैः' । ३ कार्त्तिक० । ४ क–'सूत्राख्यो' (?) ।

समं मुनिसहस्रेण, पूर्वाह्णे सुविधिप्रभुः ।
नभस्ये शुक्लनवम्यां, मूलर्क्षेऽगात् परं पदम् ॥ २६ ॥-युग्मम्

पूर्वलक्षार्द्धं कौमार्ये, पूर्वलक्षार्द्धमेव हि ।
अष्टाविंशत्यङ्गयुक्तं, राज्यभोगे ययौ पुनः ॥ २७ ॥

पूर्वलक्षमष्टाविंश-त्यङ्गहीनं पुनर्व्रते ।
इत्यासीत् पूर्वलक्षे द्वे, सर्वायुः सुविधिप्रभोः ॥ २८ ॥

सुविधिस्वामिनिर्वाणं, श्रीचन्द्रप्रभनिर्वृतेः ।
सागरोपमकोटीनां, गतायां नवतावभूत् ॥ २९ ॥

ध्याते यत्र नवग्रहार्तिरुदयं नायाति तत्त्वानि यो
व्याचख्यौ नव यस्य वाग् नवसुधाकुण्डत्रपाकारिणी ।
नित्यं यत्पदपद्मयुग्मपुरतः पद्मानि देवा नव
व्यातेनुर्नवमो जिनः स जयति श्रीपुष्पदन्तः प्रभुः ॥ ३० ॥[1]

ग्रन्थाग्रं ॥ ३३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते नवमं सुविधिजिनचरितं समाप्तम् ॥ ९ ॥

## श्रीशीतलचरित्रम् ॥ १० ॥

सम्यग्ज्ञानचरित्रदर्शनसमुद्भूतं यशः किं त्रिधा
त्रैलोक्यं पवितुं महः समुदितं किं ब्रह्मरन्ध्रात् त्रिधा ।
दातुं वा भुवनत्रयाय सुकृतं सज्जीकृतं किं त्रिधे-
त्यूह्यं वोऽवतु शीतलस्य शिरसि श्वेतातपत्रत्रयम् ॥ १ ॥[2]

'पुष्करवर'द्वीपार्द्धे, प्राग्'विदेहे'कमण्डने ।
'वत्स'नाम्नि विजयेऽस्ति, 'सुसीमा' सञ्ज्ञया पुरी ॥ २ ॥[3]

तस्यां पद्मोत्तरो राजा, समये सोऽग्रहीद् व्रतम् ।
अस्ताघर्गुरोः पार्श्वेऽसौ, मृत्वाऽभूत् 'प्राणते' सुरः ॥ ३ ॥

१-२ शार्दूल० । ३ अन्त्यं पद्यं त्यक्त्वा शेषाणां छन्दोऽनुष्टुप् । ४ क-'गुरुपार्श्वे' । ५ ख-'मृत्वाऽऽसीत्' ।

'जम्बू'द्वीपेऽत्र भरते-ऽभूद् 'भद्दिलपुरे'[1] पुरे ।
राजा दृढरथो नाम, नन्दा[2] तस्य प्रियाऽजनि ॥ ४ ॥
विंशतिसागरानायुः, प्रपाल्य 'प्राणता'च्च्युतः ।
वैशाखस्य कृष्णषष्ठ्यां, पूर्वाषाढास्थिते विधौ ॥ ५ ॥
नन्दाकुक्षिं पद्मोत्तर-नृपजीवो व्यभूषयत् ।
माघस्य कृष्णद्वादश्यां, पूर्वाषाढाभिधे च भे ॥ ६ ॥
विधौ धनगतेऽसूत, सुतं नन्दा सुवर्णभम् ।
'इक्ष्वाकु'वंश्यं दशमा-र्हन्तं श्रीवत्सलाञ्छनम् ॥ ७ ॥-विशेषकम्
गर्भस्थे तत्र नन्दायाः, स्पर्शाद् दाहज्वरातुरः ।
शैत्यं पिताऽऽप तेनैतं, स चक्रे शीतलाभिधम् ॥ ८ ॥
प्रभुः पूर्वसहस्रेषु, गतेषु पञ्चविंशतौ ।
युवा नवतिचापोच्चः, पित्रा राज्ये न्यवेश्यत ॥ ९ ॥
ततः पूर्वसहस्राणि, पञ्चाशत् परमेश्वरः ।
जनकेनार्पितं राज्यं विधिवत् पर्यपालयत् ॥ १० ॥
माघस्य कृष्णद्वादश्यां, पूर्वाषाढागते विधौ ।
'चन्द्रप्रभा'ऽऽख्यां शिबिका-मारूढो निर्ययौ पुरः ॥ ११ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
अपराह्णे कृतषष्ठः, प्रव्रज्यां प्रभुरग्रहीत् ॥ १२ ॥
द्वितीयेऽह्नि 'रिष्टपुरे', पुनर्वसुनृपौकसि ।
चकार परमान्नेन, पारणं शीतलप्रभुः[3] ॥ १३ ॥
छद्मस्थोऽन्यत्र त्रीन् मासान्, विहृत्य पुनरागतः ।
'सहस्राम्रवणे' प्लक्ष-द्रुमूले प्रतिमाश्रितः ॥ १४ ॥
पौषकृष्णचतुर्दश्यां, पूर्वाषाढागते विधौ ।
पूर्वाह्णे केवलं प्राप, कृतषष्ठतपाः प्रभुः ॥ १५ ॥
चैत्यद्रुरशीत्यधिक-दशचापशतोन्नतः ।
एकाशीतिरानन्दाद्याः, प्रभोर्गणभृतस्तथा ॥ १६ ॥

---

१ क-'भद्दिलपुरे' । २ ख-'तस्य नन्दा' । ३ क-'विधिवत् प्रभुः' ।

यक्षस्तीर्थे प्रभोर्ब्रह्म-नामा त्र्यक्षश्चतुर्मुखः ।
श्वेतः पद्मासनो बिभ्र-च्चतुरो दक्षिणान् भुजान् ॥ १७ ॥
मातुलिङ्ग-मुद्गरिण्यौ, सपाशा-ऽभयदायिनौ ।
वामांस्तु नकुल-गदा-ऽङ्कुशा-ऽक्षसूत्रधारिणः ॥ १८ ॥
दक्षिणौ वरदं पाश-शोभितं बिभ्रती भुजौ ।
वामौ फला-ऽङ्कुशधरौ, मुद्गाभाऽब्जासनाऽजनि ॥ १९ ॥
अशोकाख्या श्रीशीतल-तीर्थे शासनदेवता ।
प्रभोर्विहरतः पृथ्व्यां, परिवारस्त्वभूदिति ॥ २० ॥
व्रतिनो लक्षं व्रतिन्यो, लक्षं तु षड्भिरन्वितम् ।
चतुर्दशपूर्वभृतः, सहस्रं सचतुःशतम् ॥ २१ ॥
अवधिज्ञानिनः सप्त, सहस्राणि शतद्वयम् ।
मनःपर्यायिणः सप्त, सहस्राः सप्तशत्यपि ॥ २२ ॥
उत्पन्नकेवलज्ञानाः, शतानि सप्ततिः पुनः ।
सद्वैक्रियलब्धयोऽपि, सहस्रा द्वादशाभवन् ॥ २३ ॥
जातवादलब्धयश्चा-ष्टपञ्चाशत् शतानि तु ।
श्रावकाः सनवाशीति-सहस्रं लक्षयुग्मकम् ॥ २४ ॥
श्राविकाश्चतुर्लक्षी सा-ऽष्टपञ्चाशत्सहस्रिका ।
ज्ञानात् पूर्वसहस्रेषु, गतेषु पञ्चविंशतौ ॥ २५ ॥
मासत्रितयहीनेषु, प्रभुः 'सम्मेत'पर्वते ।
ऊर्ध्वः सानशनो मासं, सहस्रेण सहर्षिभिः ॥ २६ ॥
वैशाखे मासि कृष्णायां, द्वितीयायां सुधाकरे ।
पूर्वाषाढाश्रिते प्राप, पूर्वाह्णे शीतलः शिवम् ॥ २७ ॥
कुमारत्वे गताः पूर्व-सहस्राः पञ्चविंशतिः ।
पञ्चाशत् पूर्वसहस्रा, राज्यस्य परिपालने ॥ २८ ॥
पञ्चविंशतिसहस्राः, पूर्वाणां व्रतपालने ।
सर्वायुरिति पूर्वाणां, लक्षं श्रीशीतलप्रभोः ॥ २९ ॥

---

१ ख-'श्चतुर्भुजः' । २ क-'दक्षिणं' ।

श्रीशीतलस्य निर्वाणं, सुविधिस्वामिनिर्वृतेः ।
नवस्वासीदतीतासु, सागरोपमकोटिषु ॥ ३० ॥

तपःप्रतानैर्विजितोऽनलो वा, ज्ञानप्रकाशैरहिमद्युतिर्वा ।
भामण्डलस्य च्छलतो बभार, यस्यानुवृत्तिं श्रय शीतलं तम् ॥ ३१ ॥[1]

ग्रन्थाग्रं ॥ ३४ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रसूरिमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते दशमं श्रीमच्छीतलनाथजिनचरितं समाप्तम् ॥ १० ॥

## श्रीश्रेयांसचरित्रम् ॥ ११ ॥

श्रीश्रेयांसः श्रियं स प्रभुरयतु सुरक्षिप्तपुष्पप्रसङ्गाद्
भृङ्गा रेजुर्यदग्रे किमु कलितमदोत्कर्ष[2]भूरोमहर्षाः ।
किं बोधद्धर्मचक्रद्युमणिदिततमःखण्डखण्डानि किं वा
स्वामिप्रेक्षाप्रहृष्यत्त्रिभुवनजनताविच्युताः[3] क्लेशलेशाः ॥ १ ॥[4]

प्राच्ये 'विदेहे' 'पुष्कर–वर'द्वीपार्द्धभूषणे ।
'कच्छा'ह्वे विजये नाम्ना[5], 'क्षेमा'ऽस्ति नगरी वरा ॥ २ ॥[6]

तस्यां नलिनगुल्माख्यो, राजा राज्यमपालयत् ।
विरक्तो वज्रदत्तर्षि–दत्तमादत्त स व्रतम् ॥ ३ ॥

स तपो दुस्तपं तप्त्वा, मृत्वा 'शुक्रे' सुरोऽभवत् ।
'जम्बू'द्वीपेऽत्र 'भरते'–ऽत्रास्ति 'सिंहपुरं' पुरम् ॥ ४ ॥

तत्र विष्णुरभूद् भूप–स्तस्य विष्णुरिति प्रिया ।
षष्ठ्यां[7] ज्येष्ठस्य कृष्णायां, शशिनि श्रवणं श्रिते ॥ ५ ॥

जीवो नलिनगुल्मस्य, पृथ्वीशस्य परिच्युतः ।
'शुक्र'कल्पाद् विष्णुदेव्याः, कुक्षाववततार सः ॥ ६ ॥

फाल्गुने श्यामद्वादश्यां, धिष्ण्ये श्रवणनामनि ।
इन्दौ मकरराशिस्थे, शातकुम्भनिभप्रभम्[8] ॥ ७ ॥

---

१ उपजातिः । २ क–'नवोत्कर्ष०' । ३ क–'च्युतक्लेशलेशाः' । ४ स्रग्धरा । ५ ख–'क्षेमा नाम्ना' । ६ अतः परं प्रान्तिमं पद्यं विहाय समस्तानां छन्दोऽनुष्टुप् । ७ ख–'ज्येष्ठस्य षष्ठ्यां कृष्णायां श्रवणं शशिनि श्रिते' । ८ ख–'निभं प्रभुम्' ।

'इक्ष्वाकु'कुलकासार–सरोजं खड्गिलाञ्छनम् ।
एकादशं तीर्थकरं, विष्णुः सूते स सा सुतम् ॥ ८ ॥–युग्मम्
यतो जगत्पतिर्जातः, सोऽयं श्रेयसि वासरे ।
श्रेयांस इति नामास्य, जनकोऽजनयत् ततः ॥ ९ ॥
क्रमादशीतिकोदण्ड–कायोऽभिनवयौवनः ।
पितुराज्ञापरो राज–कन्यां[1] पर्यणयत् प्रभुः ॥ १० ॥
जन्मतो वर्षलक्षेषु, व्यतीतेष्वेकविंशतौ ।
जनकेन निजे राज्ये, न्ययोज्यत जगत्पतिः ॥ ११ ॥
स राज्यं द्विचत्वारिंशद्, वर्षलक्षाण्यपालयत् ।
ततो विरक्तो 'विमल–प्रभा'ऽऽख्यां शिबिकां श्रितः ॥ १२ ॥
तपस्यस्य[2] त्रयोदश्यां, श्यामायां श्रुतिगे[3] विधौ ।
नगरान्निरगान्नाथो, वृतः सर्वसुरेश्वरैः ॥ १३ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
कृतषष्ठोऽग्रहीद् दीक्षां, श्रेयांसः पूर्ववासरे ॥ १४ ॥
'सिद्धार्थ'नगरे नन्द–मेदिनीश्वरमन्दिरे ।
पारणं परमान्नेन, द्वितीयेऽह्नि विभुर्व्यधात् ॥ १५ ॥
वर्षद्वयं विहृत्योर्वीं, छद्मस्थो भगवान् पुनः ।
'सहस्राम्रवणे'ऽशोक–मूले प्रतिमया स्थितः ॥ १६ ॥
माघे कृष्णपञ्चदश्यां, श्रवणाश्रयणे विधौ ।
पूर्वाह्णे केवलज्ञानं, कृतषष्ठोऽभजत्[4] प्रभुः ॥ १७ ॥
गोस्तुभाद्याः[5] षट्सप्ततिः, प्रभोर्गणभृतोऽभवन् ।
चैत्यवृक्षः षष्ठ्यधिक–नवेष्वासशतोन्नतः[6] ॥ १८ ॥
ईश्वराख्योऽभवद् यक्ष–स्त्र्यक्षो गौरो वृषाश्रयः ।
मातुलिङ्ग-गदायुक्तौ, बिभ्राणो दक्षिणौ करौ ॥ १९ ॥
वामौ तु सनकुला-ऽक्ष–सूत्रौ श्रेयांसशासने ।
देवी च मानवी गौर–शरीरा सिंहवाहना[7] ॥ २० ॥

---

१ क–'कन्याः'। २ फाल्गुनस्य। ३ श्रवणनक्षत्रं गते चन्द्रे। ४ क–'भवत्'। ५ 'गोस्तुभावाः' इति त्रिषष्टिशलाका०। ६ इष्वासः–धनुः। ७ क–'हंसवाहना'।

वरदं मुद्गराग्रं, बिभ्राणा दक्षिणौ करौ ।
कलशेनाङ्कुशेनापि, प्रशस्तौ दक्षिणेतरौ ॥ २१ ॥—विशेषकम्
सहस्राश्चतुरशीतिः, समजायन्त साधवः ।
आर्यिका लक्षमेकं तु, सहस्रत्रितयाधिकम् ॥ २२ ॥
चतुर्दश पूर्वभृतः, सहस्रं त्रिशती[1]युतम् ।
षट्सहस्त्यवधिमन्तो, मनःपर्ययिणस्तथा ॥ २३ ॥
केवलज्ञानयुक्ताः षट्-सहस्री पञ्चशत्यपि ।
एकादश सहस्राणि, जातवैक्रियलब्धयः ॥ २४ ॥
सहस्राणि पुनः पञ्च, वादलब्धिसमन्विताः ।
सैकोनाशीतिसहस्रे, द्वे लक्षे श्रावकाः पुनः ॥ २५ ॥
लक्षाश्चतस्रोऽष्टचत्वा-रिंशत्सहस्रसंयुताः ।
श्राविका इत्ययं स[2]र्वः, परिवारः प्रभोरभूत् ॥ २६ ॥
गतायां वर्षलक्षैक-विंशतौ [3]ततो विभुः ।
नभःकृष्णतृतीयायां, धनिष्ठाधिष्ण्यगे विधौ ॥ २७ ॥
सार्द्धं साधुसहस्रेणो-र्ध्वस्थः 'सम्मेत'पर्वते ।
प्रातः सानशनो मासं, श्रेयांसः सिद्धिमासदत् ॥ २८ ॥—युग्मम्
श्रीश्रेयांसस्य कौमारे, वर्षलक्षैकविंशतिः ।
वर्षाणां द्विचत्वारिंश-ल्लक्षाणि क्षोणिरक्षणे ॥ २९ ॥
एकविंशतिलक्षाणि, वर्षाणां व्रतपालने ।
इत्यायुश्चतुरशीति-वर्षलक्षाण्यभूत् प्रभोः ॥ ३० ॥—युग्मम्
सागराणां कोटिरेका, सा सागरशतोनिता ।
वर्षाणां च षड् लक्षाणि, षड्विंशतिसहस्त्यपि ॥ ३१ ॥
एतावत्यन्तरे [4]जाते, शीतलस्वामिमोक्षतः ।
श्रीश्रेयांसप्रभोरासीन्-निःश्रेयससमाश्रयः ॥ ३२ ॥
केषां 'मेरु'गिरिर्गुरुर्न हि भुवश्चक्रे स नाभीयते
सोऽप्यम्भोऽजनि वार्द्धिवारिणि तदप्यब्दाध्वनः स्यन्दवत् ।

१ क-'तथा । २ क-'सर्वपरि०' । ३ क-'तु ततो' । ४ क-'याते' ।

शैवालैकलवच्छविं व्रजति यज्ज्ञानार्णवे सोऽपि स

श्रीश्रेयांसजिनेश्वरो जनयतु श्रेयांसि भूयांसि वः ॥ ३३ ॥[१]

ग्रन्थाग्रं ॥ ३७ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरिते एकादशं श्रीमच्छ्रेयांसजिनचरितं समाप्तम् ॥ ११ ॥

---

## अथ श्रीवासुपूज्यचरितम् ॥ १२ ॥

ब्रह्मद्रोरात्मनः किं कुसुमसमुदयः किं धुतारातिकर्मा

धर्मक्ष्मापप्रतापः किमुरुतरभवारण्यदाही दवाग्निः ? ।

किं भूसुभ्रूविभूषाऽरुणमणिमुकुटः किं वरज्ञानलक्ष्मी-

भाले कालेयपङ्को जयति नवजपाभासुरो वासुपूज्यः ॥ १ ॥[२]

प्राच्य'विदेहे' 'पुष्कर-वर'द्वीपार्द्धमण्डने ।

विजये 'पुष्कलावत्यां', पूरास्ते 'रत्नसञ्चया' ॥ २ ॥[३]

तत्र पद्मोत्तरः पृथ्वी-पतिः पृथ्वीमपालयत् ।

स भेजे वज्रनाभर्षि-पार्श्वे भीतो भवाद् व्रतम् ॥ ३ ॥

कृत्वाऽद्भुतं तपो मृत्वा, गीर्वाणः 'प्राणते'ऽजनि ।

'जम्बू'द्वीपेऽत्र 'भरते,' 'चम्पा'ऽस्ति प्रवरा पुरी ॥ ४ ॥

वसुपूज्यो नृपस्तस्या-मासीत् तस्य प्रिया जया ।[४]

ज्येष्ठे नवम्यां कृष्णाया-मिन्दौ शतभिषक्श्रिते ॥ ५ ॥[५]

इतः पद्मोत्तरक्ष्माप-जीवः 'प्राणत'कल्पतः ।

परिच्युतो जयादेव्याः, कुक्षाववततार सः ॥ ६ ॥-युग्मम्

फाल्गुनस्य कृष्णचतु-र्दश्यां शतभिषज्यथ ।

कुम्भराशिचरे चन्द्रे, सूते स तनयं जया ॥ ७ ॥

पद्मरागमणिप्राय-च्छायं महिषलाञ्छनम् ।

'इक्ष्वाकु'कुलकोटीरं, द्वादशं तीर्थनायकम् ॥ ८ ॥-युग्मम्

---

१ शार्दूल० । २ स्रग्धरा । ३ अतः परं प्रान्तिमं पद्यं विहाय समग्राणां छन्दो-ऽनुष्टुप् । ४ क-'पूज्योऽभवत् तस्यामभूत् तस्य' । ५ शततारकाख्यं नक्षत्रं गते ।

सुतस्य तस्य नामाथ, वसुपूज्येन निर्ममे ।
यथाविधि यथार्हं च, वासुपूज्य इति श्रुतम् ॥ ९ ॥
युवा सप्ततिचापोच्चो, राजकन्यां विवाहितः ।
प्रभुः पित्राऽर्पितं राज्यं, भवोद्विग्नोऽग्रहीन्न तु ॥ १० ॥
अष्टादशस्वतीतेषु, वर्षलक्षेषु जन्मतः ।
'पृथिवीं' शिबिकां रूढो, नगर्या निर्गतो विभुः ॥ ११ ॥
जग्राह व्रतमुद्याने, 'विहारगृह'नामनि ।
फाल्गुनस्यामावास्या–यामिन्दौ शतभिषक्श्रिते ॥
अपराह्णे चतुर्थेन, राज्ञां षड्भिः शतैः समम् ॥ १२ ॥ षट्पदी
'महापुरे' पुरे स्वामी, [1]सुनन्दनृपमन्दिरे ।
पारणं परमान्नेन, द्वितीये दिवसे व्यधात् ॥ १३ ॥
छद्मस्थो मासमन्यत्र, विहृत्य पुनरेत्य च ।
'विहारगृह'मुद्यानं, पाटलाद्रोरधः स्थितः ॥ १४ ॥
माघे शुक्लद्वितीयाया–मिन्दौ शतभिषग्जुषि ।
पूर्वाह्णे केवलज्ञानं, चतुर्थेनाभजत् प्रभुः ॥ १५ ॥
षट्षष्टिः सूक्ष्मप्रमुखाः, प्रभोर्गणभृतोऽभवन् ।
चैत्रद्रुः सचत्वारिंशद्–धनुरष्टशतोन्नतः ॥ १६ ॥
यक्षोऽजनि कुमाराख्यः, श्यामाङ्गो हंसवाहनः ।
दधानो दक्षिणौ हस्तौ, मातुलिङ्ग-शरान्वितौ ॥ १७ ॥
वामौ नकुल-चापाङ्कौ, श्रीवासुपूज्यशासने ।
देवी चण्डाऽऽह्वया श्याम–धामदेहाऽश्ववाहना ॥ १८ ॥
बिभ्राणा वरदं शक्ति–धारिणं दक्षिणौ भुजौ ।
पुष्पेण गदया युक्तौ, दधाना दक्षिणेतरौ ॥ १९ ॥–विशेषकम्
वासुपूज्यपरीवारे, समभूवन् सुसाधवः ।
द्वासप्ततिः सहस्राणि, लक्षमेकं तथाऽऽर्यिकाः ॥ २० ॥
चतुर्दशपूर्वभृतः, सहस्रं द्विशतान्वितम् ।

---

१ क–'सुमन्द०' ।

उत्पन्नावधयः पञ्च, सहस्राणि चतुःशती ॥ २१ ॥
षट् सहस्राण्येकशतं, मनःपर्ययसंयुताः ।
षडेव तु सहस्राणि, केवलज्ञानशालिनः ॥ २२ ॥
पुनर्दश सहस्राणि, लब्धवैक्रियलब्धयः ।
वादलब्धिमन्तश्चतुः–सहस्री सप्तशत्यपि ॥ २३ ॥
लक्षद्वयं पञ्चदश, सहस्राः श्रावकास्तथा ।
चतुर्लक्षी सषट्त्रिंशत्–सहस्रीः श्राविकाः पुनः ॥ २४ ॥
दीक्षातश्चतुःपञ्चाशद्–वर्षलक्षेष्वितेष्वथ ।
'चम्पा'यां साधुषट्शत्या, सार्द्धं मासमुपोषितः ॥ २५ ॥
वासुपूज्यः शुचौ[1] शुक्ल–चतुर्दश्यां सितद्युतौ ।
श्रितोत्तरभाद्रपदे, प्रातरूर्ध्वः शिवं ययौ ॥ २६ ॥–युग्मम्
कौमारेऽष्टादश चतुः–पञ्चाशच्च व्रते ययुः ।
वर्षलक्षा द्वासप्तति–र्वासुपूज्यायुरित्यभूत् ॥ २७ ॥
श्रीवासुपूज्यनिर्वाणं, श्रेयांसप्रभुनिर्वृतेः[2] ।
सागरेषु चतुःपञ्चा–शति यातेष्वजायत ॥ २८ ॥

मौलौ पाटलपुष्पदामघटना सीमन्तसीमान्तरे
सिन्दूरप्रकरः कपोलफलके काश्मीरपत्रावली ।
कर्णे पङ्कजकर्णिकाऽजनि नतस्वर्धामवामभ्रुवां
शोणा यस्य तनुद्युतिः स जयति श्रीवासुपूज्यो जिनः ॥२९॥[3]

ग्रन्थाग्रं ॥ ३३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशति-
जिनेन्द्रसङ्क्षिप्तचरिते द्वादशश्रीमद्वासुपूज्यजिनचरितं
समाप्तम् ॥ १२ ॥

## अथ श्रीविमलस्वामिचरित्रम् ॥ १३ ॥

पुण्यापुण्यलिपी ललाटभुवि यत्पादाग्रजाग्रन्नख-
ज्योतिर्जालजलोर्मयः प्रणमतां प्रक्षालयन्ति क्षणात् ।

---

१ आषाढे । २ ख–'श्रीश्रेयांसस्य निर्वृतेः' । ३ शार्दूल० ।

दुष्कर्मद्रुमखण्डखण्डनकलादुर्दान्तदन्तावलः
स श्रीमान् विमलप्रभुर्भवतु वो निश्रेयसश्रेयसे ॥ १ ॥[1]
'धातुकी'खण्डद्वीपे प्राग्-'विदेहे' 'भरता'ह्वये ।
विजयेऽस्ति जितस्वर्ग-पुरी नाम्ना 'महापुरी' ॥ २ ॥[2]
पद्मसेनो नृपस्तत्र, प्रजाश्चिरमपालयत् ।
सर्वगुप्तगुरोरन्ते, वैराग्यादग्रहीद् व्रतम् ॥ ३ ॥
तीव्रं कृत्वा व्रतं मृत्वा, 'सहस्रारे' सुरोऽभवत् ।
'जम्बू'द्वीपेऽत्र 'भरते,' 'काम्पिल्यं' विद्यते पुरम् ॥ ४ ॥
[3]कृतवर्मा नृपस्तत्रा-जनि श्यामेति तत्प्रिया ।
इतश्च्युतः 'सहस्रारा'त्, पद्मसेननरेशितुः ॥ ५ ॥
स जीवो मासि [4]वैशाखे, शुक्लायां द्वादशीतिथौ ।
श्रितोत्तराभाद्रपदे, विधौ तत्कुक्षिमाश्रयत् ॥ ६ ॥-युग्मम्
माघमासेऽथ [5]शुक्लायां, तृतीयायां सुधाकरे ।
श्रितोत्तराभद्रपदे, श्यामा सुतमसूत सा ॥ ७ ॥
त्रयोदशतीर्थकर-'मिक्ष्वाकु'कुलमण्डनम् ।
उत्तप्तकनकप्रायच्छ-छायं शूकरलाञ्छनम् ॥ ८ ॥-युग्मम्
यतो गर्भाश्रिते तस्मिन्, जननी विमलाऽजनि ।
तं नाम्ना विमल इति, जनकोऽजनयत् ततः ॥ ९ ॥
षष्टिं[6]चापोन्नतो नव्य-यौवनो नृपकन्यकाः ।
उपायंस्त विरक्तोऽपि, प्रभुः पित्रोर्महाग्रहात् ॥ १० ॥
गतेषु पञ्चदशसु, वर्षलक्षेषु जन्मतः ।
अनीहोऽप्यवनीपत्वे, प्रभुः पित्राऽभ्यषिच्यत ॥ ११ ॥
राज्यं श्रीविमलस्त्रिंशद्, वर्षलक्षाण्यपालयत् ।
दीक्षायै 'देवदत्ता'ख्या-मारूढः शिबिकां ततः ॥ १२ ॥
स्वामी माघस्य शुक्लायां, चतुर्थ्यां सितरोचिषि ।

---

१ शार्दूल० । २ अतः परं ३०तमपर्यन्तानां पद्यानां छन्दो'ऽनुष्टुप्' । ३ ख-'कृत-कर्मा' । ४ क-'वैशाखशुक्लायाम्' । ५ क-'शुद्धायां' । ६ क-'चापोन्नतौन्नत्ययौवनो' ।

श्रितोत्तराभद्रपदे, 'सहस्राम्रवणं' श्रितः ॥ १३ ॥
कृतषष्ठतपास्तत्र, सहस्रेण नृपैः सह ।
अपरेऽहनि जग्राह, प्रव्रज्यां विमलप्रभुः ॥ १४ ॥
पुरे 'धान्यकरा'भिख्ये, जयक्षोणीशवेश्मनि ।
द्वितीयेऽह्नि विभुश्चक्रे, परमान्नेन पारणम् ॥ १५ ॥
छद्मस्थोऽन्यत्र मासौ द्वौ, विहृत्य विमलप्रभुः ।
'सहस्राम्रवणं' भूयः, प्राप्य प्रतिमया स्थितः ॥ १६ ॥
जम्बूतरुतले पौष–शुक्लषष्ठ्यां प्रगे विधौ ।
श्रितोत्तराभद्रपदे, षष्ठेन प्राप केवलम् ॥ १७ ॥–युग्मम्
बभूवुः सप्तपञ्चाशन्–मन्दराद्या गणेश्वराः ।
चैत्यद्रुश्च विंशत्यग्र–सप्तचापशतः प्रभोः ॥ १८ ॥
बभूव षण्मुखो यक्षः, शिखियानो वलक्षरुक् ।
दक्षिणैः फलचक्रेषु–खड्गपाशाक्षसूत्रिभिः ॥ १९ ॥
वामैः स नकुल-चक्र-कोदण्ड–फलका-ऽङ्कुशैः ।
अभीदेन च दोर्दण्डैः, श्रीमद्विमलशासने ॥ २० ॥
देवी विदिताख्याऽब्जस्था, स्वर्णाभा दधती भुजौ ।
दक्षिणौ बाण-पाशाङ्कौ[1], धनु-र्नागधरौ परौ ॥ २१ ॥–त्रिभिर्विशेषकम्

अष्टषष्टिसहस्राणि, समजायन्त साधवः ।
आर्यिका लक्षमेकं तु, शतैः संयुतमष्टभिः ॥ २२ ॥
चतुर्दशपूर्वभृतः, शतान्येकादशैव तु ।
अष्टचत्वारिंशच्छता–न्यवधिज्ञानिनः पुनः ॥ २३ ॥
मनःपर्ययिणः पञ्च–सहस्री पञ्चशत्यपि ।
उत्पन्नकेवलज्ञाना–स्त्वेतावत्यैव सङ्ख्यया ॥ २४ ॥
पुनर्नव सहस्राणि, जातवैक्रियलब्धयः ।
त्रिसहस्री द्विशती च, वादलब्धिसमन्विता ॥ २५ ॥
श्रावका लक्षद्वितयं, सहस्रैरष्टभिर्युतम् ।
चतुर्लक्षी चतुस्त्रिंशत्, सहस्री श्राविकाः पुनः ॥ २६ ॥

१ क–'पाशाङ्कौ' ।

इति सर्वपरीवारो, विमलस्वामिनोऽभवत् ।
गतानि वर्षलक्षाणि, तथा पञ्चदश व्रतात् ॥ २७ ॥
आषाढकृष्णसप्तम्यां, रेवतीं शशिनि श्रिते ।
षड्भिः सहस्रैः साधूनां, समं 'सम्मेत'पर्वते ॥ २८ ॥
विहितानशनो मास–मूर्ध्वस्थः पूर्ववासरे ।
स श्रीमान् विमलस्वामी, प्रपेदे पदमव्ययम् ॥ २९ ॥–विशेषकम्
कौमारेऽब्दलक्षाः पञ्च–दश त्रिंशत् प्रजावने ।
व्रते पञ्चदशेत्यायुः, प्रभोः षष्ट्यब्दलक्ष्यभूत् ॥ ३० ॥
विमलस्वामिनिर्वाणं, वासुपूज्यस्य निर्वृतेः ।
सागरेषु व्यतीतेषु, त्रिंशत्सङ्ख्येष्वजायत ॥ ३१ ॥

मुक्त्यङ्गनाविरहिणो हृदि यत्पदाब्जं
के नाम कामभवतापहरं निधाय ।
नासादयन्ति तत एव वियोगपारं
पारं भवस्य भवतां विमलः प्रदत्ताम्[1] ॥ ३२ ॥[2]

ग्रं० ॥ ३५ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशति-जिनेन्द्रसङ्क्षिप्तचरिते त्रयोदशं श्रीमद्विमलनाथजिनचरितं समाप्तम् ॥

## अथ श्रीअनन्तस्वामिचरितम् ॥ १४ ॥

यस्यांह्रिहस्ताक्षियुगैर्मुखेन्दु–नाभीशिरोभिर्नवधा धुतानि ।
इतीव पद्मानि नवत्वमेत्य, सेवां वितेनुः स जयत्यनन्तः ॥ १ ॥[3]
'धातुकी'खण्डद्वीपे प्राग्–'विदेहे' विजये पुनः ।
'ऐरावते' [4]'रिष्टा'पुर्यां, नृपः पद्मरथोऽभवत् ॥ २ ॥[5]
[6]चित्तरक्षगुरोः सोऽन्ते, व्रतं प्राप्याकरोत् तपः ।
मृत्वा देवः 'प्राणते'ऽभूत्, 'पुष्पोत्तर'विमानगः ॥ ३ ॥

१ क–'स दत्ताम्' । २ वसन्त० । ३ उपजातिः । ४ ख–'रिष्टपुर्यां' । ५ अतः परं प्रान्तस्थं पद्यं विहाय सर्वेषां छन्दो'ऽनुष्टुप्' । ६ क–चित्ररथः ।

'जम्बू'द्वीपेऽत्र 'भरते', 'विनीता' विद्यते पुरी ।
सिंहसेनो नृपस्तस्यां, सुयशास्तत्प्रियाऽभवत् ॥ ४ ॥
इतः पद्मरथक्ष्माप-जीवः स 'प्राणता'च्च्युतः ।
श्रावणश्यामसप्तम्यां, [1]पौष्णे तत्कुक्षिमाश्रयत् ॥ ५ ॥
वैशाखे बहुले पक्षे, त्रयोदश्यां च पौष्णभे ।
मीनराशिगते चन्द्रे, साऽसूत सुयशाः सुतम् ॥ ६ ॥
चतुर्दशं तीर्थंकर-'मिक्ष्वाकु'कुलभास्करम् ।
काञ्चनप्रतिमच्छायं, श्येनलाञ्छनलाञ्छितम् ॥ ७ ॥–युग्मम्
अनन्तं जितवान् वैरि-बलं गर्भागतेऽत्र यत् ।
अनन्तजिदिति प्राह, तस्य नाम ततः पिता ॥ ८ ॥
क्रमेण प्राप्ततारुण्यः, पञ्चाशद्धनुरुन्नतः ।
पितुराग्रहतो राज-कन्याः पर्यणयत् प्रभुः ॥ ९ ॥
जन्मतो वर्षलक्षेषु, गतेष्वर्द्धाष्टमेष्वथ ।
प्रभुः पित्राऽऽग्रहाद् राज्य-भारमङ्गीचकार सः ॥ १० ॥
राज्यं पञ्चदश वर्ष-लक्षाः प्रभुरपालयत् ।
ततः 'सागरदत्ता'ख्यां, निष्क्रान्तः शिबिकां [2]श्रितः ॥ ११ ॥
वैशाखे मासि बहुले, पक्षे चतुर्दशीतिथौ ।
पौष्णधिष्ण्याश्रये शीत-करे पश्चिमवासरे ॥ १२ ॥
राज्ञां सह सहस्रेण, 'सहस्राम्रवणे' वने ।
कृतषष्ठतपाः स्वामी, प्रव्रज्यां प्रतिपन्नवान् ॥ १३ ॥–युग्मम्
नगरे 'वर्द्धमाना'ह्वे, विजयोर्वीशवेश्मनि ।
पारणं परमान्नेन, द्वितीयेऽह्नि विभुर्व्यधात् ॥ १४ ॥
विहृत्यान्यत्र छद्मस्थ-स्त्रिवर्षीं पुनरेत्य च ।
'सहस्राम्रवणा'राम-मशोकद्रुतले स्थितः ॥ १५ ॥
वैशाखस्य कृष्णचतु-र्दश्यां पौष्णाश्रिते विधौ ।
पूर्वाह्णे केवलज्ञानं, प्रपेदेऽनन्तजिज्जिनः ॥ १६ ॥–युग्मम्

---

१ रेवत्याम् । २ क-'ततः' । ३ ख-'जित् प्रभुः' ।

यशोमुख्याः प्रभोरासन्, पञ्चाशद् गणधारिणः ।
बभूव चैत्यवृक्षस्तु, षट्कार्मुकशतोन्नतः ॥ १७ ॥
पातालस्त्रिमुखो यक्ष–स्ताम्रो मकरवाहनः ।
दक्षिणैर्बाहुभिः खड्ग–पद्म-पाशाङ्कितैस्त्रिभिः ॥ १८ ॥
वामैर्नकुल-फलका–ऽक्षसूत्रप्रवरैर्युतः ।
अङ्कुशा नाम्ना देवी तु, गौराङ्गी कमलासना ॥ १९ ॥
दक्षिणे फलकं वामे, त्वङ्कुशं दधती करे ।
अनन्तस्वामिनस्तीर्थो–त्पन्ना[1] शासनदेवता ॥ २० ॥
उदपद्यन्त षट्षष्टि–सहस्राणि सुसाधवः ।
द्वाषष्टिस्तु सहस्राणि, व्रतिन्यो विमलव्रताः ॥ २१ ॥
चतुर्दशपूर्वभृतः, शतान्येव पुनर्नव ।
अवधिज्ञानयुक्तास्त्रि–चत्वारिंशच्छतानि तु ॥ २२ ॥
मनःपर्ययिणः पञ्च–चत्वारिंशच्छती तथा ।
सहस्राणि पुनः पञ्च, केवलज्ञानशालिनः ॥ २३ ॥
अष्टौ तथा सहस्राणि, व्यक्तवैक्रियशक्तयः ।
त्रयः सहस्रा द्विशती, वादलब्धिविराजिताः ॥ २४ ॥
श्रावका लक्षद्वितयं, षट्सहस्रसमन्वितम् ।
श्राविकास्तु चतुर्दक्षी, चतुर्दशसहस्रयुक् ॥ २५ ॥
अनन्तस्वामिनः सर्व–परिवारोऽयमित्यभूत् ।
व्रतात् तु सप्त सार्द्धानि, वर्षलक्षाणि जज्ञिरे ॥ २६ ॥
चैत्रस्य शुक्लपञ्चम्यां, रेवतीं शशिनि श्रिते ।
'सम्मेत'पर्वते साधु–सहस्रैः सप्तभिः सह ॥ २७ ॥
विहितानशनो मास–मूर्ध्वस्थः प्रथमेऽहनि ।
अनन्तनाथो भगवा–नवाप पदमव्ययम् ॥ २८ ॥–युग्मम्
कौमारे वर्षलक्षाणि, सप्त सार्द्धानि जज्ञिरे ।
दश पञ्च च वर्षाणां, लक्षाणि क्षितिरक्षणे ॥ २९ ॥

---

१ ख–'त्पन्ने शासनदेवते' ।

सप्तैव वर्षलक्षाणि, सार्द्धानि व्रतपालने ।
त्रिंशद् वर्षलक्षाण्यायु-रित्यनन्तजितः प्रभोः ॥ ३० ॥-युग्मम्
अनन्तस्वामिनिर्वाणं, विमलस्वामिनिर्वृतेः ।
समतीतेषु नवसु, जलराशिष्वजायत ॥ ३१ ॥
यो गर्भाश्रयणे चतुर्दशशुभस्वप्नाभिसंसूचितो
यो जन्माधिगमाच्चतुर्दशमहापूर्वाब्धिपारङ्गमः ।
यज्ज्ञानैकतटे चतुर्दशलसद्रज्जुप्रमाणोऽप्यमा-
लोकः किं न चतुर्दशो जिनपतिः सोऽनन्तजित् पातु वः ॥३२॥[1]
ग्रन्थाग्रं ३५ आदितो ग्रं. ५६९

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते चतुर्दशं श्रीमदनन्तनाथजिनचरितं समाप्तम् ॥ १४ ॥

## अथ श्रीधर्मनाथचरितम् ॥ १५ ॥

यः शान्तोऽपि नितान्तमान्तररिपुच्छेदप्रचण्डोद्यमो
निष्कामोऽपि जगत्त्रयीजनमनःकामप्रदायी सदा ।
निःसङ्गोऽप्यनुरक्तमुक्तिवनितासंश्लेषकारी भृशम्
वाञ्छां यच्छतु धर्मकर्मणि स वः श्रीधर्मनाथो जिनः ॥ १ ॥[2]
'धातुकी'खण्डद्वीपे प्राग्-'विदेहे' 'भरता'ह्वये ।
विजये 'भद्रिलपुरे,'[3] राजा दृढरथोऽजनि ॥ २ ॥[4]
स राज्यं सुचिरं कृत्वा, विरक्तो भववासतः ।
जग्राह पार्श्वे विमल-वाहनाह्वगुरोर्व्रतम् ॥ ३ ॥
तपस्तप्त्वाऽद्भुतं प्रान्ते, स ममार समाधिना ।
विमाने 'वैजयन्ता'ख्ये, विबुधः समजायत ॥ ४ ॥
'जम्बू'द्वीपेऽत्र 'भरता'-र्द्धेऽस्ति 'रत्नपुरं' पुरम् ।
भानुनामा नृपस्तत्र, तत्प्रिया सुव्रताऽभवत् ॥ ५ ॥
वैशाखशुक्लसप्तम्यां, पुष्यर्क्षे 'वैजयन्त'तः ।

---

१-२ शार्दूल० । ३ ख-'भद्दिलपुरे' । ४ अतः परं चरमं पद्यं त्यक्त्वा शेषाणां छन्दो'ऽनुष्टुप्' ।

च्युत्वा दृढरथक्ष्माप–जीवस्तत्कुक्षिमाप सः ॥ ६ ॥
माघशुक्लतृतीयायां, नक्षत्रे पुष्यनामनि ।
शशाङ्के कर्कराशिस्थे, सुव्रताऽसूत सा सुतम् ॥ ७ ॥
धृतदम्भोलिलक्ष्माण–'मिक्ष्वाकु'कुलकेतनम् ।
तीर्थङ्करं पञ्चदशं, शातकुम्भनिभप्रभम् ॥ ८ ॥–युग्मम्
यन्मातुर्गर्भगेऽत्राभूद्, धर्मकर्मणि दोहदः ।
तेनास्य भानुभूजानि–र्धर्म इत्यभिधां व्यधात् ॥ ९ ॥
ततः क्रमात् पञ्चचत्वा–रिंशच्चापोन्नतो युवा ।
पितुराज्ञापरो राज–कन्यां परिणिनाय सः ॥ १० ॥
व्यतीते जन्मतः सार्द्धे, वर्षलक्षद्वये प्रभुः ।
अङ्गीचकार भूभार–माग्रहाद् भानुभूपतेः ॥ ११ ॥
वर्षाणां पञ्च लक्षाणि, ररक्षोर्वीं विभुस्ततः ।
आरुह्य 'नागदत्ता'ख्यां, शिबिकां निर्ययौ पुरात् ॥ १२ ॥
माघशुक्लत्रयोदश्यां, पुष्यधिष्ण्याश्रिते विधौ ।
अपराह्णे महोद्याने, 'वप्रकाञ्चन'नामनि ॥ १३ ॥
कृतषष्ठतपाः सार्द्धं, सहस्रेण महीभुजाम् ।
श्रीधर्मनाथो भगवान्, प्रव्रज्यां प्रतिपन्नवान् ॥ १४ ॥–युग्मम्
द्वितीयेऽह्नि प्रभुश्चक्रे, पुरे 'सौमनसा'ह्वये ।
धर्मसिंहनृपावासे, परमान्नेन पारणम् ॥ १५ ॥
स्वामी छद्मस्थितोऽन्यत्र, विहृत्याब्दद्वयं पुनः ।
'वप्रकाञ्चन'मुद्यान–मध्यास्य ध्यानमाश्रयत् ॥ १६ ॥
पौषे राकातिथौ पुष्ये, दधिपर्णतरोस्तले ।
षष्ठेन तपसा स्वामी, पूर्वाह्णे प्राप केवलम् ॥ १७ ॥
स्वामिनस्त्रिचत्वारिंश–दरिष्टाद्या गणेश्वराः ।
चैत्यद्रुमश्चत्वारिंशत्–पञ्चचापशतोन्नतः ॥ १८ ॥
त्रिमुखः किन्नराख्योऽभूद्, यक्षः कूर्मरथोऽरुणः ।

१ नृपः । २ पूर्णिमायाम् ।

इतोऽभूद्‘ऽचलग्रामे’, ब्राह्मणो [1]धरणिजढः ।
तद्भार्याऽऽसीद् यशोभद्रा, सा द्वौ सौति स्म नन्दनौ ॥ ७ ॥
इन्द्रभूति-श्रीभूत्याख्यौ, तावाचख्यौ पिता तयोः ।
तथाऽऽसीत् कपिलादास्यां, कपिलोऽस्यापरः सुतः ॥ ८ ॥
इन्द्रभूति-श्रीभूत्योस्तु, पठतोः पितुरन्तिके ।
कपिलः [2]प्रज्ञिलो जज्ञे, कर्णश्रुत्यैव वेदवित् ॥ ९ ॥
स[3] चतुर्दश विद्यानां, पारदृश्वा पितुर्गृहात् ।
निर्गत्य भुवि बभ्राम, महाविप्रोऽस्म्यदो वदन् ॥ १० ॥
पुरे पुरे परां पूजां, प्राप्नुवानः कलाबलात् ।
स प्राप कपिलो भ्राम्यन्, क्रमाद् ‘रत्नपुरं’ पुरम् ॥ ११ ॥
पुरेऽत्र सर्वविद्याना–मुपाध्यायस्य सत्यकेः ।
गत्वा पठनशालायां, स[4] तस्थौ तदनुज्ञया ॥ १२ ॥
विनेयाध्यापनैः प्रीतो, जम्बुकाकुक्षिसम्भवाम् ।
कपिलाय सत्यभामां, सत्यकिः स्वसुतां ददौ ॥ १३ ॥
स सत्यभामया कामं, [5]विषयाभोगभागभूत् ।
प्रावृड्निश्यन्यदा सोऽस्थाद्, द्रष्टुं प्रेक्षणकं बहिः ॥ १४ ॥
तत्रायाति गृहं[6] मार्गे, ववर्षोत्कर्षवान् घनः ।
कक्षा[7]ऽन्ते सोऽक्षिपद् ध्वान्ते, नग्नीभूय निजांशुके ॥ १५ ॥
प्राग्वस्त्रे [8]तीमिते सत्य–भामेत्यपरवाससी ।
कपिलेनार्पयन्तीति, प्रोचे पल्लवितस्मितम् ॥ १६ ॥
विद्याबलान्न मद्वस्त्रे, तीमिते मितवादिनि ! ।
तेनेत्युक्ते सत्यभामा, चेतस्येव[9]मचिन्तयत् ॥ १७ ॥
यदि विद्याबलं तु[10] स्यात्, तन्नाङ्गमपि तीम्यते ।
मन्ये नग्नोऽयमेति स्म, तन्नैतस्योज्ज्वलं कुलम् ॥ १८ ॥

---

१ ख–‘धरिणीजड’ । २ ख–‘प्रज्ञालो’ । ३ ख–‘चतुर्दशापि’ । ४ ख–‘तस्थौ स’ । ५ क–‘विधायाभोग०’ । ६ क–‘गृहे’ । ७ क–‘कक्षान्तः’ । ८ जलार्द्रीकृते । ९ ‘तदचिन्तयत्’ । १० क–‘स्यात् तन्नास्याङ्गमपि’ ।

ध्यात्वेत्यूचे न सा किञ्चित्, तत्र तुच्छरतिस्त्वभूत् ।
कालेऽस्मिन् धरणिजढः, [1]श्रीक्षीणस्तत्पिताऽभ्यगात् ॥ १९ ॥
स्वपितुः कपिलश्चक्रे, पाद्यस्नानादिकं स्वयम् ।
अशनावसरे प्राप्ते, प्रोवाचेति प्रियां पुनः ॥ २० ॥
न वपुःपटुता मेऽद्य, तत्पृथक् प्रथय प्रिये ! ।
मत्पितुर्भोजनस्थानं, पवित्रतमुत्तमम् ॥ २१ ॥
इत्युक्तेति तयाऽतर्कि, मत्पतिर्नैकपङ्क्तिकः ।
भक्त्याऽथ भोजयामास, श्वशुरं [2]सा सगौरवम् ॥ २२ ॥
शपथं ब्रह्महत्यायाः, सा प्रदायाद्दतैकदा ।
भक्तिप्रसन्नं प्रच्छन्नं, पप्रच्छ श्वशुरं स्वयम् ॥ २३ ॥
पुत्रोऽयं तातपादानां, मत्पतिः पूतपक्षजः ।
किं वा विरुद्धजः शुद्धं, ब्रूत भूषितभूतलाः ! ॥ २४ ॥
तत्पुरः श्वशुरेणाथ, यथातथमकथ्यत ।
पूजितः पुत्रमापृच्छ्य, निजग्रामं जगाम सः ॥ २५ ॥
सत्यभामा [3]सभां प्राप्य, श्रीषेणनृपमभ्यधात् ।
कपिलेनाकुलीनेन, व्यूढाऽहं देव ! दैवतः ॥ २६ ॥
तन्मां विमोचयामुष्मात्, करिष्ये सुकृतं परम् ।
कार्याकार्यविदाकार्य, प्रोवाच कपिलं नृपः ॥ २७ ॥
मुञ्च भद्र ! भवाद् भीतां, सत्यभामां तपःकृते ।
कपिलः प्राह नैवाह–मुत्सृजामि प्रियामिमाम् ॥ २८ ॥
सत्यभामा तपःकामा, सभामाह न मां यदि ।
मोक्ष्यत्येष तदा मोक्ष्ये, प्राणान् वह्नावथाम्बुनि ॥ २९ ॥
राज्ञोक्तं कपिल ! प्राणान्, मा स्म त्याक्षीदसाविति ।
कियन्त्यपि दिनान्यस्तु, सुते वाऽस्माकवेश्मनि ॥ ३० ॥
अस्त्वेवं कपिलेनोक्ते–ऽर्पिता पत्न्योर्नृपेण सा ।
समस्थित वितन्वाना, नानारूपं तपस्ततः ॥ ३१ ॥

---

१ ख–'क्षीणश्री०' । २ ख–'सारगौरवम्' । ३ ख–'सभामाप्य' ।

तदोर्वीशेन 'कौशाम्ब्या', बलेन श्रीमतीभवा ।
प्रैषि पुत्रीन्दुषेणाय, श्रीकान्ताख्या स्वयंवरा ॥ ३२ ॥
एकामनन्तमत्याख्यां, समायातां तया समम् ।
ऐक्षिषातामिन्दुषेण–बिन्दुषेणौ पणाङ्गनाम् ॥ ३३ ॥
ममैवेयं ममैवेय–मिति संवादिनौ मिथः ।
कुमारौ देवरमणो–द्याने तौ योद्धुमुद्यतौ ॥ ३४ ॥
क्रुद्धावेकवधूलुब्धा–विमौ [1]युद्धान्निषेधितुम् ।
प्रियाद्वयान्वितो जज्ञे, न श्रीषेणनृपः क्षमः ॥ ३५ ॥
विषण्णः श्रीषेणनृपः, पद्मं तालपुटाविलम् ।
प्रियाभ्यां सममाघ्राय, सद्य एव व्यपद्यत ॥ ३६ ॥
सम्भाव्य सत्यभामाऽपि, कपिलाद् भाव्यमङ्गलम् ।
आघ्रायाब्जं [2]तदैवागान्–मरणं शरणं विना ॥ ३७ ॥
चत्वारोऽप्यभवन् मृत्वा, स्फूर्जदार्जवमार्दवाः ।
'जम्बू'द्वीपोत्तर'कुरु'–क्षेत्रेऽमी युग्मध[3]र्मिणः ॥ ३८ ॥
श्रीषेणा-ऽभिनन्दितौ ता–वभूतां पुंस्त्रियावुभौ ।
क्षेत्रेऽत्र शिखिनन्दिता–सत्यभामे च ते तथा ॥ ३९ ॥
जननी प्राग्भवेऽहं वां, भगिनी गणिका त्वियम् ।
इति [4]तीर्थङ्करेणोक्तं, श्रुत्वा विद्याधरात् तु तौ ॥ ४० ॥
इन्दुषेण-बिन्दुषेणौ, निवृत्तौ सम्परायतः ।
गुरोर्धर्मरुचेरात्त–[5]व्रतौ तौ मुक्तिमापतुः ॥ ४१ ॥–युग्मम्
प्रपाल्यायुस्त्रिपल्यानि, श्रीषेणाद्या विपद्य ते ।
चत्वारोऽपि युगलिनः, 'सौधर्मे' जज्ञिरे सुराः ॥ ४२ ॥
अस्त्यत्र 'भरत'क्षेत्रे, 'वैताढ्या'ह्वगिरौ पुरम् ।
पुरस्थित'चक्रवाल'–'रथनूपुर'संज्ञया ॥ ४३ ॥
जज्ञे ज्वलनजट्याख्य–स्तत्र विद्याधराधिपः ।
तस्यार्ककीर्त्तिरित्यासीद्, युवराजस्तनूजनिः ॥ ४४ ॥

---

१ क–'युद्धान्निवर्तितुम्' । २ क–'तदेवासीन्' । ३ क–'रूपिणः' । ४ ख–'तीर्थ-करेणोक्तौ' । ५ क–'व्रतौ मुक्तिमवापतुः' ।

अर्ककीर्ते[1]रनुजा[2] त–स्या[3]भूत् पुत्री स्वयम्प्रभा ।
प्राजापत्यस्त्रिपृष्ठाख्य–स्तां 'पोतन'पुरेश्वरः ॥ ४५ ॥
आदिमो वासुदेवाना–मचलाह्वबलानुजः ।
जीवः श्रीवीरनाथस्य, परिणिन्ये स्वयम्प्रभाम् ॥ ४६ ॥–युग्मम्
त्रिपृष्टेन प्रहृष्टेन, तदा ज्वलनजट्यसौ ।
चक्रे विद्याधरश्रेणि–द्वयराज्यस्य भाजनम् ॥ ४७ ॥
अर्ककीर्तेः प्रिया जज्ञे, ज्योतिर्मालेति सञ्ज्ञया ।
श्रीषेणजीवः 'सौधर्मा'च्–च्युत्वा पुत्रस्तयोरभूत् ॥ ४८ ॥
गर्भगेऽत्र चिरं माता, ददर्शामिततेजसम् ।
अस्याऽमिततेजा इति, नाम तेने ततः पिता ॥ ४९ ॥
दत्त्वाऽर्ककीर्त्तये राज्यं, व्रतभाग् वह्निजट्यभूत् ।
चारणर्षिजगन्नन्द–नाभिनन्दनयोर्गिरा ॥ ५० ॥
च्युत्वा 'सौधर्म'तः सत्य–भामाजीवः सुताऽजनि ।
अर्ककीर्तेः सुतारेति, भगिन्यमिततेजसः ॥ ५१ ॥
जीवोऽभिनन्दितायाः स, च्[4]युत्वा 'सौधर्म'तोऽभवत् ।
त्रिपृष्ठ-स्वयम्प्रभयोः, पुत्रः श्रीविजयाह्वयः ॥ ५२ ॥
त्रिपृष्ठ-स्वयम्प्रभयो–र्द्वितीयोऽपि तनूद्भवः ।
सञ्ज्ञया विजयभद्रो, जज्ञे श्रीविजयानुजः ॥ ५३ ॥
'सौधर्म'कल्पात् स शिखि–नन्दितात्मा च्युतोऽभवत् ।
त्रिपृष्ठ-स्वयम्प्रभयोः, पुत्री ज्योतिःप्रभाभिधा ॥ ५४ ॥
त्रिपृष्ठस्य तनूजेन, विजयेन निजाङ्गजाम् ।
विद्याध[5]रेन्द्रोऽर्ककीर्त्तिः, सुतारां पर्यणाययत् ॥ ५५ ॥
ज्योतिःप्रभां निजां पुत्रीं, त्रिपृष्ठोऽप्युदवाहयत् ।
स्वरूपेणाऽर्ककीर्त्ति–पुत्रेणाऽमिततेजसा ॥ ५६ ॥
यः पुरा कपिलो नाम, सत्यभामाधवोऽभवत् ।
नानायोनिषु स भ्रान्त्वा, चिरं भवमहावने ॥ ५७ ॥

---

१ क–'अर्ककीर्त्यनु०' । २ भगिनी । ३ ज्वलनजटिनः । ४ ख–'च्युतः' ।
५ क–'धरोऽर्क०' ।

अभू'च्चमरचञ्चा'यां, पुर्यां 'वैताढ्य'पर्वते ।
ख्यातोऽशनिघोष इति, नाम्ना विद्याधरेश्वरः ॥ ५८ ॥–युग्मम्
'रथनूपुर'पुरस्थ–'चक्रवाल'पुरेऽन्यदा ।
अभिनन्दन-जगन्न–न्दनाऽग्निजटिनस्त्रयः ॥ ५९ ॥
मुनयः समवासार्षु–स्तदन्ते व्रतमग्रहीत् ।
[1]अर्ककीर्त्तिः सुतं राज्ये, नियोज्याऽमिततेजसम् ॥ ६० ॥
इतोऽभूत् 'पोतनपुरे', त्रिपृष्ठः परलोकभाक् ।
तत्पुत्रं विजयं राज्ये, न्यस्य प्रव्रजितोऽचलः ॥ ६१ ॥
पैत्र्यं प्रपालयन् राज्यं, विजयी विजयोऽन्यदा ।
सुतारया युतो रन्तुं, ययौ 'ज्योतिर्वनं' वनम् ॥ ६२ ॥
तदा कपिलजीवः सो–ऽशनिघोषो दिवि व्रजन् ।
प्रेक्ष्य प्राग्जन्मसंस्कारात्, सुतारां प्रति राग्यभूत् ॥ ६३ ॥
प्लवमानं मृगं हैमं, स विचक्रे तयोः पुरः ।
सुताराऽर्थनयाऽत्यर्थं, दूरं तं विजयोऽन्वगात् ॥ ६४ ॥
हरिणेन हृते दूरं, विजये वायुवेगिना ।
शनैरेत्याऽशनिघोषः, स्राक् सुतारां जहार सः ॥ ६५ ॥
तेन प्रतारिणी विद्या–दिष्टाऽहं कुर्कटाहिना ।
दष्टेति पूत्करोति स्म, सुतारारूपधारिणी ॥ ६६ ॥
[2]तं निशम्य मृगं मुक्त्वा, ववले विजयो रयात् ।
मणिमन्त्रादिकं तस्य, कुर्वतः सा व्यपद्यत ॥ ६७ ॥
स मूर्च्छान्ते सचैतन्य–स्तया सार्द्धं श्रितश्चिताम् ।
वह्निमज्वालयत् ताव–देतौ विद्याधरावुभौ ॥ ६८ ॥
अभिमन्त्र्याम्भसाऽसिञ्चत्, तयोरेकश्चितां च ताम् ।
साऽट्टहासा पलायिष्ट, सा क्षिप्रं विप्रतारिणी ॥ ६९ ॥
[3]विजयं विस्मितं विद्या–धरौ तावूचतुस्ततः ।
आवां पु[4]त्रौ विद्याधर–पतेरमिततेजसः ॥ ७० ॥

---

१ क–'आत्मकीर्तिः' । २ क–'तन्निशम्य' । ३ ख–'विस्मितं विजयं' । ४ क–'पत्ती' ।

अहं सम्भिन्नश्रोता मत्–पुत्रो दीपशिखस्त्वयम् ।
तीर्थेषु निर्गतौ तीर्थ–कृद्विम्बानि विवन्दिषू ॥ ७१ ॥
आपतद्भ्यामिहावाभ्या–मश्रावि करुणेति गीः ।
हा मज्जीवितनाथ! श्री–विजयारिजयोज्ज्वल! ॥ ७२ ॥
हा तेजस्विशिरोरत्ना–ऽमिततेजःसहोदर! ।
हा पुत्र! विजयभद्र!, भद्रविद्रावण! द्विषाम् ॥ ७३ ॥
त्रायध्वं त्रायध्वमति–क्रूराद् विद्याधराधमात् ।
इत्युक्त्याऽऽवामन्वयाव, स्वामिजामिमवेत्य ताम् ॥ ७४ ॥
निरीक्ष्याऽशनिघोषं तं, कृष्टाऽसी हन्तुमुद्यतौ ।
यावदावां रयात् तावत्, तारमुक्तं सुतारया ॥ ७५ ॥
त्यक्त्वा युद्धं युवां वेगाद्, यातं 'ज्योतिर्वनं' वनम् ।
तत्र श्रीविजयस्वामी, प्रतारिण्याऽस्ति वञ्चितः ॥ ७६ ॥
स्वप्राणान् [1]मोक्तुकामं तं, रक्षतं रक्षतं द्रुतम् ।
नैव जीवाम्यहं तत्र, मदर्थं गतजीविते ॥ ७७ ॥
रयात् तदाज्ञयाऽऽगाभ्या–मावाभ्यां त्वचिताऽनलः ।
विध्यापितोऽयं विधिवत्, पयोभिरभिमन्त्रितैः ॥ ७८ ॥
सुताराखपधारिण्या, प्रतारिण्या पलायितम् ।
श्रुत्वेत्यासीदसीमार्त्तिः, सुताराहरणान्नृपः ॥ ७९ ॥
विद्याधराभ्यां नीतोऽयं, 'वैताढ्यं' विजयो नृपः ।
वृत्तं ज्ञात्वाऽसौ विद्याः स्वा, [2]दत्ताश्चामिततेजसा ॥ ८० ॥
पुर्यां 'चमरचञ्चा'यां, पुत्रपञ्चशतीवृतः ।
प्रहितोऽशनिघोषं तं, हन्तुं सोऽमिततेजसा ॥ ८१ ॥
जयायाऽशनिघोषस्य, प्रबलस्य 'हिमाचल'म् ।
महाज्वालाभिधां विद्यां, स्वयं साधयितुं ययौ ॥ ८२ ॥
इत'श्चमरचञ्चा'यां, विजया-ऽशनिघोषयोः ।
युद्धमुद्धतमारब्धं, विद्याधरचमूचरैः ॥ ८३ ॥

---

१ ख–'त्यक्तुकामं' । २ ख–'दत्तास्त्वमित०' ।

एति साऽमिततेजाः स, सिद्धविद्यो 'हिमा'ऽद्रितः ।
तद्विद्ययाऽशनिघोषः, पलायिष्ट गरिष्ठभीः ॥ ८४ ॥
महाज्वाला महाविद्या, निर्दिष्टाऽमिततेजसा ।
रुष्टा हठात् तमाक्रष्टुं, पर्यधाविष्ट पृष्ठतः ॥ ८५ ॥
तस्या भयाद् रयान्नश्य-न्नवाप्य शरणं क्वचित् ।
अपाग्[1]'भरत'वर्षार्द्धं, शरणस्पृहयाऽविशत् ॥ ८६ ॥
तदैव तत्र 'सीमा'द्रौ, मुनीन्द्रमचलं बलम् ।
उत्पन्नकेवलज्ञानं, समाजग्मुः सुरासुराः ॥ ८७ ॥
तौ चाऽभिनन्दन-जगन्-नन्दनौ वह्निजव्यपि ।
चारणश्रमणाश्चान्ये, समीयुस्तमुपासितुम् ॥ ८८ ॥
तं प्रेक्ष्याऽशनिघोषोऽपि, महाज्वालाभयाकुलः ।
मुनीन्द्रमचलं दक्ष-स्तत्क्षणं शरणं ययौ ॥ ८९ ॥
शक्राशनेरपि स्फूर्ति-र्न हन्तुं ज्ञा[2]निसंसदि ।
व्यावृत्तेति महाज्वाला-ऽशनिघोषम[3]पोह्य तम् ॥ ९० ॥
तत्स्वरूपं परिज्ञाय, महाज्वालानिवेदितम् ।
यातावमिततेजःश्री-विजयावचलान्तिके ॥ ९१ ॥
गत्वा 'चमरचञ्चा'न्तः, सुतारां द्रुतमानयेः ।
इत्युक्तस्ताभ्यां गच्छद्भ्यां, मारीचाह्वो निशाचरः ॥ ९२ ॥
अन्तःपुरीं गतः सर्वं, सुतारायै शशंस सः ।
सुतारां स्वयमादाया-ऽशनिघोषजनन्यथ ॥ ९३ ॥
मारीचेन युताऽऽयाता, 'सीमा'द्रावचलं मुनिम् ।
सुतारां साऽर्पयत् तत्र, विजया-ऽमिततेजसोः ॥ ९४ ॥
मुन्यग्रेऽशनिघोषोऽपि, रोषोज्झितमतिस्तदा ।
क्षमयामास साम्ना तौ, विजया-ऽमिततेजसौ ॥ ९५ ॥
अनुरागः सुतारायां, प्रभो ! मम कुतोऽभवत् ।
इत्युक्तोऽशनिघोषेण, शशंस प्राग्भवान् मुनिः ॥ ९६ ॥

---

१ दक्षिण० । २ क-'ज्ञानसंसदि०' । ३ क-'मुपो(ह्य) तम्' ।

श्रीषेणाद्यान् पूर्वभवा–नाख्यदागामिनस्तथा ।
शान्तिनाथभवं याव–द्[1]चलोऽमिततेजसे ॥ ९७ ॥
शान्तिनाथभवे सूनुं, भाविनं विजयं नृपम् ।
तं चैव गणभृज्ज्येष्ठं, शशंसाऽमिततेजसः ॥ ९८ ॥
तन्निशम्य मुनिं नत्वा, विजया-ऽमिततेजसौ ।
विधिवद् द्वादशविधं, संश्रितौ श्रावकव्रतम् ॥ ९९ ॥
कपिलादिभवान् [2]स्मृत्वा–ऽशनिघोषो विरागवान् ।
अचलर्षिपदोपान्ते, प्रव्रज्यां प्रतिपन्नवान् ॥ १०० ॥
जननी विजयस्यापि, तत्र प्राप्ता स्वयम्प्रभा ।
अचलस्य यतीन्द्रस्य, पादान्ते व्रतमग्रहीत् ॥ १०१ ॥
विजयो-ऽमिततेजास्तौ, विद्याधरनरेश्वरौ ।
सर्वेऽप्यन्ये मुनिं नत्वा, [3]ययुः स्थानं निजं निजम् ॥ १०२ ॥
अन्यदा 'नन्दन'वने, विजया-ऽमिततेजसौ ।
शाश्वतानर्हतो नन्तु–मुभौ सम्भूय जग्मतुः ॥ १०३ ॥
शाश्वतार्हत्प्रणामान्ते, तौ वनेऽस्मिन्नपश्यताम् ।
चारणौ [4]विमलमति–महामत्याह्वयौ मुनी ॥ १०४ ॥
तौ नत्वा ज्ञानिनौ पृष्टा–वाचख्यतुरुभौ तयोः ।
[5]षड्विंशतिदिनान्येव, शेषमायुर्द्वयोरपि ॥ १०५ ॥
इति नत्वा मुनी नत्वा, विजया-ऽमिततेजसौ ।
पुरं निजं निजं प्राप्तौ, धर्मोपक्रमतत्परौ ॥ १०६ ॥
चैत्येष्वष्टाहिकां कृत्वा, तौ राज्यं न्यस्य पुत्रयोः ।
प्रीत्याऽभिनन्दनजगन्–नन्दनान्ते श्रितौ व्रतम् ॥ १०७ ॥
तौ पादपोपगमना–नशनं चक्रतुस्ततः ।
तदा च पितुरैश्वर्यं, सस्मार विजयो मुनिः ॥ १०८ ॥
यादृक् पिता त्रिपृष्ठो मे, भूयासमहमीदृशः ।
[6]सप्तरत्नेश्वर इति, निदानं विततान सः ॥ १०९ ॥

---

१ क–'चला-ऽमितेतजसोः' । २ क–'मत्वा' । ३ क–'स्थानं निजं निजं ययुः' ।
४ ख–'विपुलमति–' । ५ क–'षट्त्रिंशतं दिना०' । ६ वासुदेवसम्बन्धि ।

विपन्नौ 'प्राणते' कल्पे, तौ गीर्वाणौ बभूवतुः ।
विमाने 'सुस्थितावर्ते', 'नन्दितावर्त्तके' तथा ॥ ११० ॥
मणिचूल-दिव्यचूला-भिधौ तौ विबुधावुभौ ।
विंशतिं सागरानायुः, पालयन्तौ स्थितौ सुखम् ॥ १११ ॥
'जम्बू'द्वीपे प्राग्'विदेहे,' विजये 'रमणीयके' ।
'शुभा'ह्वायामभूत् पुर्यां, राजा स्तिमितसागरः ॥ ११२ ॥
वसुन्धरा-ऽनुद्धरा च, तस्य पत्न्यौ बभूवतुः ।
'नन्दितावर्त्त'तो जीवः, स च्युतोऽमिततेजसः ॥ ११३ ॥
श्रीमद्वसुन्धरादेव्याः, कुक्षाववततार च ।
देव्याऽदर्शि चतुःस्वप्नी, गजश्चन्द्रो वृषः सरः ॥ ११४ ॥
श्रुत्वा[1] स्वप्नान् नृपोऽशंसद्, देवि! भावी सुतो बलः ।
सुतं साऽसूत नाम्नाऽसौ, पित्राऽकार्यऽपराजितः ॥ ११५ ॥
'सुस्थितावर्त्त'तो जीव-श्च्युतः श्रीविजयस्य सः ।
अनुद्धरामहादेव्याः, कुक्षिदेशमशिश्रियत्[2] ॥ ११६ ॥
सिंहा-ऽभिषेक-कुम्भा-ब्धि-सूर्या-ऽग्नि-मणिसञ्चयाः ।
सप्तैते सुप्तया स्वप्ना, देव्या ददृशिरे तया ॥ ११७ ॥
तया प्रकाशितान् स्वप्नान्, श्रुत्वा स्तिमितसागरः ।
भावी तव सुतो विष्णु-रित्याख्याति स तत्पुरः ॥ ११८ ॥
साऽसूत समये सूनुं, तेने[3] नाम पिता ततः ।
अनन्तवीर्य इत्यस्य, प्राप्तौ द्वावपि यौवनम् ॥ ११९ ॥
अनन्तवीर्यं विन्यस्य, राज्ये स्तिमितसागरः ।
स्वयं स्वयम्प्रभाचार्यो-पान्ते प्रव्रजितोऽजनि ॥ १२० ॥
श्रामण्यं पालितं प्रान्ते, स्वान्तेनायं व्यराधयत् ।
स विपन्नः समुत्पन्न-श्चमरेन्द्रोऽसुरेश्वरः ॥ १२१ ॥
इतश्चाऽनन्तवीर्योऽपि, क्ष्मापतिः सापराजितः ।
पृथिवीं पालयामास, वासवोपमविक्रमः ॥ १२२ ॥

---

१ ख-'स्वप्नान् श्रुत्वा' । २ ख-'मभूषयत्' । ३ क-'भामपि सर्वतः' ।

ताभ्यां सौहार्दभाक्[1] कोऽपि, विद्या विद्याधरो ददौ ।
ताश्च पूर्वभवाराद्धाः, सिद्धाः श्रद्धावतोस्तयोः ॥ १२३ ॥
बर्बरीति किरातीति, तयोश्चेट्यौ बभूवतुः ।
रम्भादिभ्योऽप्यरं भावै-र्गीतनाट्यादिभिः शुभे ॥ १२४ ॥
तत्प्रेक्षणक्षणप्रेक्षा–व्याक्षिप्तस्थितयोस्तयोः ।
एकदा प्रापदास्थानं, नारदः पारदद्युतिः ॥ १२५ ॥
चेटिकानाटकालोक-रसैकाग्रतया मुनिः ।
न ताभ्यां सत्कृतस्तेन, तत्पुरः कुपितो ययौ ॥ १२६ ॥
दर्शयिष्याम्यवज्ञायाः, फलं साम्प्रतमेतयोः ।
ध्यायन्निति स 'वैताढ्ये', दमितारिनृपं ययौ ॥ १२७ ॥
सत्कृतस्तेन कुत्रापि, किञ्चिदाश्चर्यमद्भुतम् ।
दृष्टमित्यादरात् पृष्टः, स्पष्टमाचष्ट नारदः ॥ १२८ ॥
नृपस्याऽनन्तवीर्यस्य, 'शुभा'यां पुरि तिष्ठतः ।
बर्बरीति किरातीति, चेट्यौ नाट्यविचक्षणे ॥ १२९ ॥
तत्राभिनीयमानं यत्, ताभ्यां नाटकमद्भुतम् ।
मया व्यलोकि तन्नाक[2]-लोकेऽपीदृगसम्भवि ॥ १३० ॥
इत्युक्त्वा द्यां गते तत्र, स्वदूतो दमितारिणा ।
प्रहितोऽनन्तवीर्याय, चेट्यानयनहेतवे ॥ १३१ ॥
वेगाद् गतेन दूतेन, ते चेट्यौ याचिते ततः ।
धीमाननन्तवीर्योऽपि, व्याजहारेति तं पुनः ॥ १३२ ॥
चेटीभ्यामपि चेत् प्रीतो-ऽस्मासु विद्याधरेश्वरः ।
गृहीत्वा तदिमे प्रात-र्गन्तव्यं स्वपुरे त्वया ॥ १३३ ॥
इत्युक्तः प्रीतिमान् दूतो, ययौ तद्दत्तवेश्मनि ।
रहस्तौ हरितालाङ्कौ[3], मन्त्रयामासतुस्त्विति[4] ॥ १३४ ॥
दमितारिर्निरीक्ष्योऽयं, गच्छावस्तत्र तत् स्वयम् ।
विद्याप्रभावतो भूत्वा, चेटिकारूपधारिणौ ॥ १३५ ॥

---

१ क–'भाजोऽपि' । २ ख-'तन्नाग०' । ३ विष्णु-बलदेवौ । ४ ख–'तुरिति' ।

इति निश्चित्य राज्यस्य, भारं विन्यस्य मन्त्रिषु ।
तावभूतां बर्बरिका–किरात्यौ[1] विद्यया स्वयम् ॥ १३६ ॥
आवामनन्तवीर्या-ऽप–राजिताभ्यां नियोजिते ।
दमितारिनृपायेति[2], ते गत्वा दूतमूचतुः ॥ १३७ ॥
स दूतस्तद्युतो यात्वा, दमितारिमिदं जगौ ।
एते तेऽनन्तवीर्येण, चेटिके प्राभृतीकृते ॥ १३८ ॥
तयोरभिनयैः प्रीतो, दमितारिर्मुदाऽर्पयत् ।
चेट्योर्नाटकशिक्षायै, तनयां कनकश्रियम् ॥ १३९ ॥
चेट्यौ कपटनट्यौ ते, नाट्यशिक्षान्तराऽन्वहम् ।
अनन्तवीर्यं जगतु–र्गुणैर्जितजगत्रयम् ॥ १४० ॥
श्रुतानुरागतो द्रष्टु–कामायाः कनकश्रियः ।
पुरतोऽनन्तवीर्येण, स्वरूपं दर्शितं रहः ॥ १४१ ॥
रूपालोकनतो गाढा–नुरागां कनकश्रियम् ।
तां हृत्वाऽनन्तवीर्योऽथ, प्रतस्थे सापराजितः ॥ १४२ ॥
वैक्रियेण विमानेन, तौ प्रयान्तौ विहायसा ।
रणोत्कटभटाः प्रापुः, प्रेरिता दमितारिणा ॥ १४३ ॥
तदानीं सीरशार्ङ्गादि–दिव्यरत्नानि वीरयोः ।
जज्ञिरे समरायाऽप–राजिता-ऽनन्तवीर्ययोः ॥ १४४ ॥
कान्दिशीकेषु[3][4] वीरेषु, तयो रणकणादपि ।
स्वयमेत्य समं ताभ्यां, दमितारिर्व्यधाद् युधम् ॥ १४५ ॥
रणक्षीणेषु शस्त्रेषु, दमितारिरमर्षणः ।
चिक्षेपाऽनन्तवीर्याय, चक्रं भाचक्रभीषणम् ॥ १४६ ॥
तेनैव तुम्बघातेन, पतित्वोपान्तवर्त्तिना ।
आत्तेनाऽनन्तवीर्यो द्राग्, दमितारिशिरोऽहरत् ॥ १४७ ॥
केशवोऽनन्तवीर्योऽयं, बलोऽयमपराजितः ।
इति हर्षात् पुष्पवर्षं, देवास्तदुपरि व्यधुः ॥ १४८ ॥

---

१ क–'किरातौ' । २ क 'तारिनृपं ययौ' । ३ क–'कान्दिसीकेषु' । ४ 'भीत्या पलायमानेषु' ।

व्रजन्ननन्तवीर्योऽथ, विमानेन निजां पुरीम्[1]।
'मेरौ' कीर्त्तिधरं साधुं, निदध्यौ धृतकेवलम् ॥ १४९ ॥
तं प्रणम्य निषण्णोऽग्रे, सोऽश्रौषीद् धर्मदेशनाम्।
कनकश्रीस्त्वदोऽपृच्छत्, कुतो मेऽभूत् पितुर्वधः ? ॥ १५० ॥
ऋषीन्दुरिदमाचख्यौ, 'धातुकी'खण्डमण्डने।
अस्ति प्राग्'भरत'क्षेत्रे, ग्रामः 'शङ्खपुरा'ह्वयः ॥ १५१ ॥
श्रीदत्ता नाम दारिद्र्य–धाम तत्राङ्गनाऽजनि।
भ्रमन्ती प्रापदन्येद्युः, सा 'श्रीपर्वत'पर्वतम् ॥ १५२ ॥
साधुः सत्ययशा धं(क ?)र्म[2]–चक्रवालाभिधं तपः।
तस्यै तत्रादिशत् तेपे, साऽपि तत्पापतापहृत् ॥ १५३ ॥
तत्प्रभावोदितलाभो–दयकर्मवशादसौ।
प्राप पतिनिकेतैक–कोणतः कनकादिकम् ॥ १५४ ॥
पूर्णे तपसि सा तेने, हृद्यमुद्यापनं मुदा।
अर्हच्चैत्यार्चनाऽतुच्छ–सङ्घवात्सल्यकल्पनैः ॥ १५५ ॥
एतस्य जिनधर्मस्य, फलं स्याद् वा न वेत्यसौ।
कियत्यपि गते काले, विकल्पं पर्यकल्पयत् ॥ १५६ ॥
[3]प्रेक्ष्य 'श्रीपर्वते' विद्या–धरं तद्रूपमोहिता।
इमामियमनालोच्य, विचिकित्सां व्यपद्यत ॥ १५७ ॥
'जम्बू'द्वीपे प्राग्'विदेहे', 'वैताढ्ये' 'शिवमन्दिरे'।
पुरे 'कनकपूज्या'ख्यः, ख्यातः क्षितिधवोऽभवत्[4] ॥ १५८ ॥
तत्सुतोऽहं वायुवेगा–भवः कीर्त्तिधराभिधः।
अभूदनिलवेगेति, नाम्ना तु दयिता मम ॥ १५९ ॥
कुम्भीन्द्रो-क्षनिधि–कुम्भस्वप्नत्रितयसूचितः।
आसीन्मम सुतस्तस्यां[5], दमितारिरिति श्रुतः ॥ १६० ॥
शान्तितीर्थकरस्यान्ते, संसारासारतां स्मरन्।
दमितारिमहं राज्ये, न्यस्य स्वीकृतवान् व्रतम् ॥ १६१ ॥

---

१ क–'पुरम्'। २ एतत्स्वरूपार्थं प्रेक्ष्यतां ख–परिशिष्टम्। ३ ख–'प्रेष्य'। ४ क–'धरो'। ५ ख–'त्तस्या'।

अत्रैव पर्वतेऽकार्षं, वार्षिकीं प्रतिमामहम् ।
अद्यैव केवलज्ञानी, घातिकर्मक्षयेऽभवम् ॥ १६२ ॥
समुत्पन्नेन चक्रेण, दमितारि[1]र्नरेश्वरः ।
त्रिखण्डविजयं [2]कृत्वा, प्रतिविष्णुरभूद् बली ॥ १६३ ॥
श्रीदत्तायास्तु जीवस्त्वं, दमितारेः सुताऽभवः ।
प्रियायां मन्दिराह्वायां, कनकश्रीरिति श्रुता ॥ १६४ ॥
पितृबन्धुवियोगो य–स्त्व[3]याऽयमनुभूयते ।
विचिकित्साफलं कृत्स्न–मेतत् परिणतं तत्र ॥ १६५ ॥
श्रुत्वेत्यसौ विरक्ताऽऽसीत्, कनकश्रीर्व्रतार्थिनी ।
यात्वा प्रव्राजयिष्याव–स्त्वां शुभे ! नगरीमिति ॥ १६६ ॥
तामुक्त्वाऽनुज्ञाप्य मुनिं, जग्मतुर्बलकेशवौ ।
विष्णोस्तत्रार्द्धचक्रित्वा–भिषेकं भूधवा व्यधुः ॥ १६७ ॥
सा सीरिविश्वरूपाभ्यां, स्वयम्प्रभजिनान्तिके ।
प्रव्राजिता कनकश्री–स्तपस्तप्त्वा [4]शिवं ययौ ॥ १६८ ॥
भुक्तायुश्चतुरशीति–पूर्वलक्षाण्यधःक्षितिम् ।
आद्यामनन्तवीर्योऽगात्, कर्मभिस्तैर्निकाचितैः ॥ १६९ ॥
तत्र तं द्विचत्वारिंशत्–सहस्राब्दायुषं व्यधात् ।
निर्व्यथं चमरोऽभ्येत्य, पिता प्राग्विष्णुजन्मनः ॥ १७० ॥
स्वकर्मस्मरता [6]तेन, तत्र ता नरकवेदनाः ।
अनन्तवीर्यजीवेन, संविज्ञेनाधिषेहिरे ॥ १७१ ॥
न्यस्यानुजशुचा सूनौ, पृथ्वीं सोऽप्यपराजितः ।
सीरी [7]धरजयस्यान्ते, व्रतं गणभृतोऽग्रहीत् ॥ १७२ ॥
प्रवव्रजुः सहस्राणि, राज्ञां तमनु षोडश ।
तपस्तप्त्वाऽन्तेऽनशनी, [8]स मृत्वेन्द्रोऽच्युतेऽजनि ॥ १७३ ॥

---

१ क–'तारिनरेश्वरः' । २ क–'जित्वा' । ३ क–'स्तु यायम०' । ४ ख–'ययौ शिवम्' । ५ क–'तद् व्रतं' । ६ क–'तत् तत् कृता' । ७ क–'जयधर०' । ८ क–'मृत्वाऽन्ते सोऽच्युते' ।

नरकान्निर्ययौ जीवो–ऽनन्तवीर्यस्य कालतः ।
'जम्बू'द्वीपेऽत्र 'भरत'–क्षेत्रे 'वैताढ्य'पर्वते ॥ १७४ ॥
उत्तरश्रेण्यलङ्कारे, पुरे 'गगनवल्लभे' ।
मेघवाहनसञ्ज्ञस्य, विद्याधरनरेशितुः ॥ १७५ ॥
नन्दनो मेघमालिन्यां, प्रेयस्यां समजायत ।
पिता तस्याऽतनोन्नाम, मेघनाद इति श्रुतम्[1] ॥ १७६ ॥–त्रिभिर्विशेषकम्
कृत्वा तं यौवने राज्य–वाहनं मेघवाहनः ।
स्वकार्यं परलोकाया–स्ताघवादमसाधयत्[2] ॥ १७७ ॥
प्रज्ञप्तिविद्ययाऽन्येद्युः, सोऽगान् 'मन्दर'भूधरम् ।
सिद्धचैत्यार्चनं चक्रे, तत्रान्त'र्नन्दनं' वनम् ॥ १७८ ॥
अच्युतेन्द्रस्तदा तत्रो–त्तीर्णस्तमवगत्य च ।
प्राग्भवभ्रातरं तस्य, प्रबोधं गुरुवद् व्यधात् ॥ १७९ ॥
ततो विद्याधरैश्वर्यं, मेघनादः स्वनन्दने ।
न्यस्याऽमरगुरोः[3] साधु–पतेरन्तेऽग्रहीद् व्रतम् ॥ १८० ॥
पालयन् स व्रतं तीव्र–मद्रौ 'नन्दन'पर्वते ।
ध्यान्यन्यदा स्थितः श्रित्वा, प्रतिमामेकरात्रिकीम् ॥ १८१ ॥
अश्वग्रीवाङ्गभूर्भ्रान्त्वा, भवं प्राग्भवशात्रवः ।
दैत्यजन्म तदा प्राप्त–स्तत्रायातो ददर्श तम् ॥ १८२ ॥
तस्य क्रूरनिसर्गस्यो–पसर्गैः प्रागरित्वतः ।
नोग्रैरप्यचलद्[4] ध्यानान्–मनागपि स धीरधीः ॥ १८३ ॥
गते दीनमुखे तत्र, [5]विलक्षत्वोपलक्षिते ।
पारयामास स ध्यानं, निधानं श्रेयसां मुनिः ॥ १८४ ॥
तपश्चिरं चरित्वाऽथ–मन्तेऽनशनमाश्रितः ।
मृत्वा [6]कल्पेऽच्युतेन्द्रस्य, सामानिकसुरोऽजनि ॥ १८५ ॥
'जम्बू'द्वीपे प्राग्'विदेहे', 'सीता'या दक्षिणे तटे ।
विजये 'मङ्गलावत्यां', पूरास्ते 'रत्नसञ्चया' ॥ १८६ ॥

---

१ ख–'श्रुतः' । २ क–'बाधमसा०' । ३ क–'पतेः साधुगुरोरन्ते' । ४ क–'भ्रा-न्त्वा' । ५ ख–'वैलक्ष्यत्वोप०' । ६ क–'च्युतेऽच्युतेन्द्र०' ।

क्षेमङ्करनृपोऽत्रासीद्, रत्नमालेति तत्प्रिया ।
अपराजितजीवोऽभूत्, तद्गर्भे स च्युतो'ऽच्युता'त् ॥ १८७ ॥
सुखसुप्ता निशाशेषे, महास्वप्नांश्चतुर्दश ।
तथा पञ्चदशं वज्रं, महादेवी ददर्श सा ॥ १८८ ॥
सा ख्याति स्म प्रगे पत्यु-र्व्याख्याति स्म स तत्पुरः ।
वज्रीव वीरो भविता, चक्रवर्त्ती तवाङ्गजः ॥ १८९ ॥
सा सुतं समयेऽसूत, नाम तस्यातनोत् पिता ।
वज्रायुध इति स्वप्ने, देव्या वज्रस्य दर्शनात् ॥ १९० ॥
स क्रमात् प्राप्य[1] तारुण्यं, तरुणीनेत्रकार्मणम् ।
लक्ष्मीवतीमुपायंस्त, लक्ष्मीरूपां नृपाङ्गजाम् ॥ १९१ ॥
जीवोऽप्यनन्तवीर्यस्य, स च्युत्वा[2]'ऽच्युत'कल्पतः ।
लक्ष्मीवतीकुक्षिभवो, जज्ञे वज्रायुधात्मजः ॥ १९२ ॥
सहस्रायुध इत्यस्य, सञ्ज्ञां वज्रायुधो व्यधात् ।
युवा पर्यणयद् राज-कन्यां स कनकश्रियम् ॥ १९३ ॥
सहस्रायुधस्याप्यासीत्, तनयः कनकश्रियाम् ।
श्रुतं शतबलिं नाम्ना, जनकोऽजनयच्च तम् ॥ १९४ ॥
कदाप्यसौ[3] पुत्रपौत्र-प्रपौत्रपरिवारितः ।
सभां भेजे भुवः क्षेम-करः क्षेमङ्करो नृपः ॥ १९५ ॥
ईशानेन्द्रस्तदैशाने, कल्पेऽजल्पत् सदस्सदः ।
अनुवज्रायुधं धीरा, धरायां बोधिधारिणः[4] ॥ १९६ ॥
अश्रद्दधानस्तां श्रुत्वा, चित्रचूलाऽमरो गिरम् ।
क्षेमङ्करनृपस्याप, तं पर्षदममर्षणः ॥ १९७ ॥
स नास्तिक्याहतास्तिक्य[5]-स्तत्र मिथ्यात्वमूढधीः ।
नात्मा नैनो[6] न पुण्यं न, परलोकोऽस्त्यदोऽवदत् ॥ १९८ ॥
तं व्याजहार निर्व्याज-बोधिर्वज्रायुधः सुरम् ।
भो प्रत्यक्षविसंवादि, विवादिन्! वचनं तव ॥ १९९ ॥

---

१ ख-'प्राप' । २ क-'च्युतोऽच्युत' । ३ क-'कदाप्यथ' । ४ क-'धारणे' ।
५ क-'नास्तिकहता०' । ६ पापम् ।

बुध्यस्वावधिना ताव–देतद् वैभवमात्मनः ।
प्राग्जन्मनिर्मितैर्धर्म–कर्मभिः प्राभृतीकृतम् ॥ २०० ॥
मर्त्यस्त्वं प्राग्भवे सम्प्र–त्यमर्त्यत्वमवाप्तवान् ।
नैव जीवोऽस्ति चेदिह, तदेतद् घटितं कुतः ? ॥ २०१ ॥
इह प्राप्तोऽसि मर्त्यत्व–ममर्त्यत्वं परत्र च ।
ततस्ते परलोकोऽपि, प्रत्यक्षोऽस्तीह लोकवत् ॥ २०२ ॥
एवं वज्रायुधेनायं, विबुधः प्रतिबोधितः ।
[1]स्वर्भूषणैस्तमभ्यर्च्य, ततः सम्यक्त्वमग्रहीत् ॥ २०३ ॥
त्वया कुमार ! संसारे, निपतन्नुद्धृतोऽस्म्यहम् ।
किं शस्यं यस्य ते क्षेम–ङ्करस्तीर्थङ्करः पिता ॥ २०४ ॥
इत्युक्त्वैशानमाप्तं तं, [2]वज्रश्लाघाकरं सुरम् ।
ईशानेन्द्रोऽब्रवीदेव, भाव्यर्हन् भगवानयम् ॥ २०५ ॥
[3]मधौ '[4]स्वैरनिपाता'ख्यो–द्याने वज्रायुधोऽन्यदा ।
रेमे लक्ष्मीवतीमुख्यैः, सप्तदेवीशतैः समम् ॥ २०६ ॥
वाप्यां देवीयुतो यावज्–जालकेलिरतोऽस्त्यसौ ।
तावत् तत्रापतद् देवो, विद्युद्दंष्ट्राभिधः क्रुधा ॥ २०७ ॥
प्राग्भवारेर्दमितारे–[5]र्जीवो भ्रान्त्वा भवं चिरात् ।
देवोऽभवन्निभाल्यैष, क्रुद्धो वज्रायुधं तदा ॥ २०८ ॥
नागपाशैः पदद्वन्द्वे, बद्ध्वा वज्रायुधं कुधीः ।
क्षितिध्रमेकं तं पेष्टुं, चिक्षेपोत्क्षिप्य रोषतः ॥ २०९ ॥
मुष्टिप्रहारैर्यद्वज्र–सारैर्वज्रायुधः क्रुधा ।
किं चित्रमत्र यन्निन्ये, गिरिं तं विशरारुताम् ॥ २१० ॥
लीलायानेऽपि यस्याङ्घ्रि–न्यासैः स व्यथतेतराम् ।
नागत्राता त्रोटयत् स, नागपाशान् किमद्भुतम् ? ॥ २११ ॥
तदा 'विदेह'चैत्यानि, नत्वा 'नन्दीश्वरे' व्रजन् ।
शक्रोऽपश्यत् कुमारं तं, निर्जरोर्जित[6]जित्वरम् ॥ २१२ ॥

---

१ क–'स्वभूषणै०' । २ वज्रायुधप्रशंसाकारिणम् । ३ चैत्रे । ४ क–'सूरनिपाता०' । ५ ख–'जन्मारे०' । ६ क–'सत्वरम्' ।

त्वं भावी 'भरत'क्षेत्रे, शान्तिः षोडशतीर्थकृत् ।
इत्युक्त्वा तं समभ्यर्च्य, भक्त्या सुरविभुर्ययौ ॥ २१३ ॥
क्षेमङ्करनृपो लोका-न्तिकैर्देवैर्निवेदिते ।
प्रव्रज्यासमये राज्य-भाजं वज्रायुधं व्यधात् ॥ २१४ ॥
प्रव्रज्य परमं तप्त्वा, तपः प्राप्य च केवलम् ।
क्षेमङ्करस्तीर्थङ्करः, प्रवृत्तो भव्यबोधने ॥ २१५ ॥
वज्रायुधनृपस्यापि, चक्रादीनि चतुर्दश ।
रत्नानि जज्ञिरे चक्र-वर्त्तितानर्त्तितास्रये ॥ २१६ ॥
स तैराढ्यः स 'वैताढ्यं,' विजयं 'मङ्गलावती'म् ।
चक्री व्यजेष्ट षट्खण्ड-माखण्डलपराक्रमः ॥ २१७ ॥
स वृत्ते च[1]क्रवर्त्तित्वा-भिषेके भूभरक्षमम् ।
सहस्रायुधमाधत्त, यौवराज्ये नयोज्ज्वलम् ॥ २१८ ॥
अन्यदा संसदासीनं, वज्रायुधधराधिपम् ।
स्वामिन् ! मां रक्ष रक्षेति, कोऽपि विद्याधरो ब्रुवन् ॥ २१९ ॥
कम्पमानवपुः काम-मश्वस्थोऽश्वत्थपत्रवत् ।
अम्बरात् तूर्णमु[2]त्तीर्य, शरण्यं [3]शरणे श्रितः ॥ २२० ॥-युग्मम्
तत्पृष्ठे खेटकं खड्गं, दधाना [4]खेचराङ्गना ।
एत्योचे चक्रिणं चक्रिन् !, [5]दुर्णयोऽयं प्रमुच्यताम् ॥ २२१ ॥
तत्पृष्ठे च गदापाणिः, कोऽप्येत्य [6]खेचरोऽवदत् ।
क्रुधा वज्रायुधाधीशं, देवाऽस्य शृणु दुर्नयम् ॥ २२२ ॥
'जम्बू'द्वीपेऽत्र 'विदेहे', 'सुकच्छ'विजये गिरौ ।
'वैताढ्ये'ऽस्ति जितस्वर्ग-पुरं 'शुक्रपुरं' पुरम् ॥ २२३ ॥
तस्मिन् पवनवेगोऽहं, महीपालो मम प्रिया ।
सुकान्तेत्यावयोः पुत्री, नाम्ना शान्तिमतीत्यसौ ॥ २२४ ॥
प्रज्ञप्तिं साधयत्येषा, क्ष्माधरे मणिसागरे ।
उत्क्षिप्ता खेऽमुना चा[7]स्याः, सिद्धा विद्या तदैव च ॥ २२५ ॥

---

१ ख-'चक्रित्वर्तित्वा०' । २ क-'मुत्तीर्णः' । ३ क-'शरणाश्रितः' । ४ ख-'दुर्नयो मुच्यतामयम्' । ५ क-'खचराङ्गना' । ६ क-'खचरो०' । ७ क-'वाच्यां' ।

विद्याभयेन मत्पुत्र्याः, पापात्माऽयं पलायितः ।
क्वाप्यप्राप्य परित्राणं, शरणं त्वत्क्रमौ श्रितः ॥ २२६ ॥
प्रज्ञप्तिविद्यापूजायै, यावत् तं नगमागमम् ।
अहमेतां सुतां ताव-दनालोक्याकुलोऽभवम् ॥ २२७ ॥
आभोगिन्या ततो ज्ञात्वा, पापमेतं त्वदन्तिके ।
एतं तु हन्तुमायातां, तनयां चाहमागमम् ॥ २२८ ॥
तदेष त्यज्यतां दोषी, दुष्टात्मा दुष्टसूदन ! ।
कीनाशसदनं येन, प्रापये गदयाऽनया ॥ २२९ ॥
एनं[1] ततोऽवधिज्ञानाद्, बुद्ध्वा वज्रायुधोऽवदत् ।
अहो प्राग्जन्मपर्यायो, ज्ञायतामनयोरयम् ॥ २३० ॥
'जम्बू'द्वीपे'ऽत्रैरवत'-क्षेत्रे 'विन्ध्यपुरे' पुरे ।
विन्ध्यदत्तो नृपोऽभूत् तत्-पत्नी नाम्ना सुलक्षणा ॥ २३१ ॥
अनयोर्जज्ञे नलिन-केतुनामा तनूद्भवः ।
पुरे तत्र सार्थवाहो, धर्ममित्राभिधोऽभवत् ॥ २३२ ॥
श्रीदत्ता दयिता तस्य, तयोर्दत्तः सुतोऽजनि ।
दत्तस्यापि प्रिया रूप-प्रभारम्भा प्रभङ्करा ॥ २३३ ॥
तया दयितया दत्तो, वसन्ते सममन्यदा ।
स्वैरं व्यलसदुद्याने[2], शक्रः शच्येव 'नन्दने' ॥ २३४ ॥
स राजसूनुर्नलिन-केतुस्तत्र तदागतः ।
पश्यन् प्रभङ्करां[3] सद्यो, मान्मथैर्मथितः शरैः ॥ २३५ ॥
सरातुरोऽपहृत्यैतां, क्रीडावापीवनादिषु ।
तया विलासवत्याऽसौ, विललास नरेन्द्रभूः ॥ २३६ ॥
दत्तस्तद्विरहोन्मत्तः, सम्भ्रमन्सुमनोऽभिधात् ।
मुनेः केवलिनो वाचा, चैतन्यं सोऽश्रयत् पुनः ॥ २३७ ॥
शान्तो दान्तमना दान-धर्माधीनधनोऽन्वहम् ।
स कालधर्ममध्यास्ते, सम्पूर्णपुरुषायुषः ॥ २३८ ॥

---

१ ख-'एतं' । २ क-'विलस०' । ३ क-'प्रभाकरां' ।

'जम्बू'द्वीपे प्राग्'विदेहे,' 'सुकच्छे' विजये गिरौ ।
'वैताढ्ये' 'स्वर्णतिलके', पुरे विद्याधरेश्वरः ॥ २३९ ॥
महेन्द्रविक्रमाह्वोऽस्या-ऽनिलवेगा प्रियाऽभवत् ।
तयोरजितसेनाख्यो, दत्तजीवः सुतोऽजनि ॥ २४० ॥–युग्मम्
विन्ध्यदत्ते मृते 'विन्ध्य'–पुरे नलिनकेतुना ।
राज्यं कृत्वाऽन्ते प्रव्रज्य, तप्त्वा मुक्तिरवाप्यत ॥ २४१ ॥
प्रभङ्करा विना दीक्षां, तप्त्वा चान्द्रायणं तपः ।
मृत्वा पवनवेगाऽऽसीत्, सुता शान्तिमती तव[2] ॥ २४२ ॥
अनेनाऽजितसेनेन, पूर्वस्नेहेन ते सुता ।
विद्याभृता हृता तेन, कुपः पवनवेग! मा ॥ २४३ ॥
इति श्रुत्वा मिथः शान्ताः[3], क्षमयामासुराशु ते ।
व्याजहार पुनर्वज्रा[4]-युधस्तान् विस्मिताशयान् ॥ २४४ ॥
आदास्यध्वे त्रयो दीक्षां, क्षेमङ्करजिनान्तिके ।
यूयं कर्ता पुनः शान्ति-मती रत्नावलीतपः ॥ २४५ ॥
प्रान्तेऽसौ मृत्वाऽनशना- दीशानेन्द्रो भविष्यति ।
युवामपि क्षणेऽत्रैव, केवलज्ञानमाप्स्यथः ॥ २४६ ॥
ईशानेन्द्रः स तत्रैत्य, युवयोः केवलोत्सवम् ।
तपःकृशस्य चार्चा स्व-शरीरस्य करिष्यति ॥ २४७ ॥
'ईशान'तस्ततश्च्युत्वा, क्रमा'दीशान'वासवः ।
प्राप्य मर्त्यत्वमुत्पन्न[5]-केवलो मुक्तिमेष्यति ॥ २४८ ॥
त्रिकालज्ञानकलितं, तद् वज्रायुधचक्रिणः ।
वचः श्रुत्वाऽभवन् सभ्याः, सर्वे विस्मेरविस्मयाः ॥ २४९ ॥
नृपः पवनवेगस्तत्-तनया शान्तिमत्यपि ।
विद्याभृच्चाजितसेनो, यथोक्तमभजंस्त्रयः ॥ २५० ॥
सहस्त्रायुधवध्वाऽथ, जयना[6] सञ्ज्ञया निशि ।
स्वप्ने व्यलोकि कनक-शक्तिः कान्तिकरम्बिता ॥ २५१ ॥

---

१ एतत्स्वरूपार्थं दृश्यतां ख–परिशिष्टम् । २ क–'तथा' । ३ क–'क्षान्ताः' । ४ एतत्-स्वरूपार्थं प्रेक्ष्यतां तत्त्वार्थसूत्रस्य श्रीसिद्धसेनगणिकृता वृत्तिः ( द्वि. वि. पृ. २०१ ) । ५ क–'मापन्न-' । ६ ख–'जयसेना' ।

तथाऽथ कथिते स्वप्ने, प्रातरित्याह तत्पतिः ।
भविष्यति सुतो देवि !, महाशक्तिस्तव ध्रुवम् ॥ २५२ ॥
देवी बभार सा गर्भं, सौति स समये सुतम् ।
स्वप्नानुसारात् कनक–शक्तिरित्युदिताह्वयम् ॥ २५३ ॥
शैशवं समभिक्रान्तः, प्राप्ताभिनवयौवनः ।
पुत्रीं 'सुमन्दिर'पुर–स्वामिनो मेरुमालिनः ॥ २५४ ॥
मल्लाकुक्षिभवां रूपा–ऽप्रतिमल्लामिलातले ।
नाम्ना कनकमालेति, मतां परिणिनाय ताम् ॥ २५५ ॥–युग्मम्
इतो 'मशक्यसारा'ख्ये, पुरे [1]विश्वम्भरेश्वरः ।
आसीद्जितसेनाख्यः, प्रियसेनाऽस्य च प्रिया ॥ २५६ ॥
तयोर्वसन्तसेनेति, सुताऽऽसीद् रूपविश्रुता ।
सा प्राक् कनकमालायाः, प्रियालापा प्रिया सखी ॥ २५७ ॥
पिता स्वयंवरां प्रैषी–[2]देतां कनकशक्तये ।
स तां पर्यणयद् वज्रा–युधपौत्रो यथाविधि ॥ २५८ ॥
तस्यास्तेन विवाहेन, पितृष्वसृसुतोऽभवत् ।
एकाकी कनकशक्ति–रुद्यानेऽचरदन्यदा ॥ २५९ ॥
उत्पतन्तं पतन्तं च, नरं कञ्चिन्निरूप्य सः ।
तत्रोचे पत्रिवत् किं भो, त्वं पतस्युत्पतस्यथ ? ॥ २६० ॥
सोऽप्यवादीदहं विद्या–धरो 'वैताढ्य'पर्वते ।
गतोऽग्रेऽर्थेन केनापि, व्यावृत्तोऽत्रापतं पुनः ॥ २६१ ॥
अस्यारामस्य रम्यत्वं, पश्यतोऽलमवश्यकृत् ।
एकमाकाशगामिन्या, विद्याया विस्मृतं पदम् ॥ २६२ ॥
पठेत्युक्ते [3]पदेनोना, विद्योक्ता तेन साऽथ ताम् ।
पूर्णां पदानुसारिण्या, कुमारः प्रज्ञयाऽपठत् ॥ २६३ ॥
ततः पुनर्नवीभूत–विद्यो विद्याधरो ददौ ।
स स्वविद्याः कुमाराय, कृतज्ञा ह्युपकारिणः ॥ २६४ ॥

१ नृपः । २ क–'देषां' । ३ क–'तैतोनेन (?) विद्योक्ता०' ।

ययौ विद्याधरो विद्याः, कुमारस्ता यथाविधि ।
साधयित्वा सुधीरासीद्, विद्याधरशिरोमणिः ॥ २६५ ॥
वसन्तसेनायाः पितृ-ष्वस्रीयो रोषणोऽपि सः ।
न कर्तुं कनकशक्ते-रपकारं क्षमोऽभवत् ॥ २६६ ॥
अपया सोऽन्नपानादि-परिहारपरायणः ।
विपद्य त्रिदशो जज्ञे, हिमचूलाऽभिधानतः ॥ २६७ ॥
वसन्तसेना-कनक-मालाभ्यां सममिच्छया ।
सुखं विजह्रे कनक-शक्तिः शैलवनादिषु ॥ २६८ ॥
प्रियाद्वयान्वितः सोऽगात्, कदापि 'हिमवद्'गिरिम् ।
देशनां विपुलमति-चारणर्षेरिहाशृणोत् ॥ २६९ ॥
प्रतिबुद्धोऽथ कनक-शक्तिः कान्ताद्वयं गृहे ।
राज्यश्रिया समं मुक्त्वा, मुक्तिदं व्रतमग्रहीत् ॥ २७० ॥
वसन्तसेना-कनक-माले ते निर्मलाशये ।
आर्याया विमलमतेः, पार्श्वे जगृहतुर्व्रतम् ॥ २७१ ॥
एकदा कनकशक्तिः, साधुः सिद्धिपदे गिरौ ।
शिलायां स्थितवान्[1] श्रित्वा, प्रतिमामेकरात्रिकीम् ॥ २७२ ॥
हिमचूलः सुरस्तत्र, प्राप्तस्तं प्रेक्ष्य रोषवान् ।
उपसर्गान् सृजन् विद्या-धरैर्वित्रासितोऽधमः ॥ २७३ ॥
प्रतिमां पारयित्वा तां, विहरन्नवनीं मुनिः ।
जगाम कनकशक्ति-र्नगरीं 'रत्नसञ्चया'म् ॥ २७४ ॥
तत्र सूरनिपातोप-वने प्रतिमयाऽथ सः ।
[1]तस्थिवानेकरा[2]त्रिक्या, केवलज्ञानमाप्तवान् ॥ २७५ ॥
केवलज्ञानमहिमां, तस्यैत्य त्रिदशा व्यधुः ।
निभाल्य हिमचूलस्तत्, तमेव शरणं [3]श्रितः ॥ २७६ ॥
तस्य वज्रायुधश्चक्री, ससहस्रायुधो मुनेः ।
निर्माय महिमां श्रुत्वा, देशनां स्वपुरीं[5] ययौ ॥ २७७ ॥

१ ख-'स्थितवान्' । २ क-'रात्रिक्यः' । ३ ख-'स्थितः' । ४ क-'अक्रे' । ५ क-'पुरं ययौ' ।

अथ वज्रायुधो राज्ये, स्वे सहस्रायुधं व्यधात् ।
क्षेमङ्करजिनोपान्ते, स्वयं दीक्षामुपाददे ॥ २७८ ॥
चतुःसहस्री राज्ञीनां, शतं[1] राज्ञां किरीटिनाम् ।
शतानि सप्त पुत्राणां, तमनुव्रतिनोऽभवन् ॥ २७९ ॥
'सिद्धशैले'ऽन्यदा वज्रा-युधर्षिर्विहरन् गतः ।
वार्षिकीं प्रतिमां तत्र, स्तम्भे वैरोचने स्थितः ॥ २८० ॥
मणिकेतु-मणिकुम्भा-वितोऽश्वग्रीवनन्दनौ ।
भवं भ्रान्त्वा चारुतपो-[2]ऽभावादसुरतां गतौ ॥ २८१ ॥
तत्र तौ स्वैरचर्याप्तौ, तमृषिं प्रेक्ष्य चक्रतुः ।
तस्योपसर्गानमित-तेजोभवजवैरतः ॥ २८२ ॥—युग्मम्
तदा तिलोत्तमा-रम्भा-दयो देव्यो दिवौकसाम् ।
तत्रावतेरुस्तं नन्तुं, त्रस्तौ तौ तद्भयाद् रयात् ॥ २८३ ॥
वार्षिकीं प्रतिमां तां स, नीत्वा पारमपारयत् ।
ततो वज्रायुधो धात्रीं, विजहार [3]महायतिः ॥ २८४ ॥
स सहस्रायुधो न्यस्य, राज्ये शतबलिं सुतम् ।
पिहिताश्रवगणभृत्-पादान्ते व्रतमग्रहीत् ॥ २८५ ॥
वज्रायुधर्षेर्विहरन्, स सहस्रायुधोऽमिलत् ।
संयुक्तौ तौ पितापुत्रौ, तपस्यन्तौ विचेरतुः ॥ २८६ ॥
भवार्त्तौ 'वीषत्प्राग्भार'-क्षितिध्रमधिरुह्य तौ ।
पादपोपगमं नाम, श्रितावनशनं मुनी ॥ २८७ ॥
मृत्वा महामुनिपञ्च-विंशत्यब्धिमितस्थितौ ।
ग्रैवेयके तृतीये ता-वहमिन्द्र[4]पदे स्थितौ ॥ २८८ ॥
'जम्बू'द्वीपेऽत्रैव प्राच्य-'विदेहे' 'क्षितिभूषणे' ।
विजये 'पुष्कलावत्यां', पूरास्ते 'पुण्डरीकिणी' ॥ २८९ ॥
तस्यां घनरथो राजा, रेजे तस्य प्रियाद्वयम् ।
एका प्रियमतिर्नाम्ना, द्वितीया तु मनोरमा ॥ २९० ॥
वज्रायुधस्य जीवोऽथ, च्युत्वा ग्रैवेयकादभूत् ।

---

१ ख-'तथा'। २ ख-'बालतपोभावा०'। ३ क-'महीपतिः'। ४ ख-'पदं श्रितौ'।

प्रियमत्याः सुतो मेघ-स्वप्नान्मेघरथाभिधः ॥ २९१ ॥
सहस्रायुधजीवोऽपि, जज्ञे ग्रैवेयकाच्च्युतः ।
मनोरमायास्तु रथ-स्वप्नाद् दृढरथाभिधः ॥ २९२ ॥
घनप्रीती मिथो मेघ-रथो दृढरथोऽपि तौ ।
क्रमेण कामिनीनेत्र-कार्मणं यौवनं श्रितौ ॥ २९३ ॥
नृपतेर्निहतशत्रोः, 'सुमन्दिर'[1]पुरप्रभोः ।
मन्त्री घनरथं प्राप्य, प्रणम्येति व्यजिज्ञपत् ॥ २९४ ॥
नृपतेः सन्ति निहत-शत्रोस्तिस्रः सुताः प्रभो ! ।
उभे मेघरथस्यास्ता-मेका दृढरथस्य तु ॥ २९५ ॥
मुदा सम्मान्य तं राज्ञा, कुमारौ प्रहितौ ततः ।
तौ चेलतुश्च सामन्ता-ऽमात्यसैन्यशतावृतौ ॥ २९६ ॥
प्रयाणैः प्रचलन्तौ तौ, 'सुमन्दिर'पुरं प्रति ।
राज्ञः सुरेन्द्रदत्तस्य, देशसीमां समीयतुः ॥ २९७ ॥
दूतः सुरेन्द्रदत्तस्या-भ्येत्य मेघरथं जगौ ।
मा गा मद्देशमध्येन, स्वामी मे त्वां वदत्यदः ॥ २९८ ॥
स्मित्वा मेघरथोऽवादीद्, देशोऽयं मेऽध्वनाऽमुना ।
याम्यन्योऽस्ति यदि स्वामी, निवारयतु मां स तत् ॥ २९९ ॥
इति दूतेन गत्वोक्ते, व्यक्तं रोषारुणेक्षणः ।
सुरेन्द्रदत्तः प्राचालीत्, ततः सर्वाभिसारतः ॥ ३०० ॥
युध्यमानोऽभिमानोग्रः, कुमाराभ्यां विजित्य सः ।
जीवन् गृहीतस्तद्देशे, निजाज्ञा घोषिता ततः ॥ ३०१ ॥
नीतः सुरेन्द्रदत्तोऽपि, 'सुमन्दिर'पुरे समम् ।
अभ्याययौ स निहत-शत्रू[2] राजकुमारयोः ॥ ३०२ ॥
उपयेमे मेघरथः, प्रियमित्रा-मनोरमे ।
ज्यायस्यौ दृढरथोऽपि, सुमत्याख्यां कनीयसीम् ॥ ३०३ ॥
सम्मानितौ विसृष्टौ तौ, राज्ञा निहतशत्रुणा ।
ताभ्यां सुरेन्द्रदत्तोऽपि, स्वदेशे स्थापितः पुनः ॥ ३०४ ॥

---

१ क-'सुमन्दर०' । २ क-'शत्रुराजकुमारयोः' ।

सम्प्राप्तौ स्वपुरीं प्रीत्या, श्लिष्टौ घनरथेन तौ ।
विशेषितोत्सवां द्वेषि–पेषिशौर्यौ प्रवेशितौ ॥ ३०५ ॥
पत्न्यौ मेघरथस्यापि, सुषुवाते सुतौ क्रमात् ।
नन्दिषेणं प्रियमित्रा, मेघसेनं मनोरमा ॥ ३०६ ॥
प्रिया दृढरथस्यापि, सूते स्म सुमतिः सुतम् ।
रथसेनाभिधं सर्व–कलाकौशलशालिनम् ॥ ३०७ ॥
अन्तःपुरे प्रियापुत्र–पौत्रैर्घनरथो वृतः ।
सुसेनावेश्यया [2]व्यज्ञ–प्यैवं कुर्कुटहस्तया ॥ ३०८ ॥
देवाऽयं कुर्कुटो मेऽन्य-कुर्कुटेन रणोत्कटः ।
जीयते चेत् त[3]दा लक्षं, दीनाराणां पणं ददे ॥ ३०९ ॥
देवी मनोरमाऽवादी–देवं देवाऽमुना मम ।
वज्रतुण्डस्ताम्रचूडः, पणेनानेन युध्यताम् ॥ ३१० ॥
एवमस्त्विवति राज्ञोक्तं, ततस्तौ च[4]रणायुधौ ।
उर्व्यामुत्तारितौ चित्र–गतिनृत्तौ प्रजह्रतुः ॥ ३११ ॥
चञ्चूभ्यां चरणाभ्यां च, चण्डयोस्ताम्रचूडयोः ।
तयोर्घनं प्रहरतो–रथो घनरथोऽवदत् ॥ ३१२ ॥
न मध्यादनयोरेको–ऽप्येकेन युधि जेष्यते ।
आह मेघरथः किं ना[6]–ऽनयोर्जयपराजयौ ? ॥ ३१३ ॥
अथो घनरथो राजा, ज्ञानत्रयधरोऽब्रवीत् ।
प्राचीनजन्माचरितं, चरितं शृणुतैत[7]योः ॥ ३१४ ॥
अस्यैव ‘जम्बू’द्वीपस्य, क्षेत्रेऽ‘स्त्यैरवते’ पुरम् ।
नाम्ना ‘रत्नपुरं’ तत्र, वणिजौ द्वौ बभूवतुः ॥ ३१५ ॥
दत्तो धनवसुश्चैतौ, प्रीतिप्रीतौ परस्परम् ।
भ्रेमतुर्भूरिवित्ताशौ, युतौ ग्रामपुरादिषु ॥ ३१६ ॥
मा[8]र्गे भाराक्षमानुक्ष्णः, शं[9]कटैर्भारसङ्कटैः ।

---

१ क–‘वीर्यौ’ । २ ख–‘विज्ञप्येवं’ । ३ ख–‘पणं लक्षं, दीनाराणां तदाददे’ । ४ कुर्कुटः । ५ कुर्कुटौ । ६ क–‘मानयो०’ । ७ ख–‘नयोः’ । ८ ख–‘महा-भारा०’ । ९ ख–‘शकटैर्भण्डिसङ्कटैः’ ।

प्रतोदैर्यष्टिभिस्त्यक्त-दयं ताडयतः स तौ ॥ ३१७ ॥
तयोः कूटतुलामानै-र्मर्त्यान् वञ्चयतोश्चिरम् ।
अबोधयोर्विरोधोऽभू-देकद्रव्याभिलाषयोः ॥ ३१८ ॥
क्रुद्धौ युध्वा मिथो मृत्वा, तावभूतामुभाविभौ ।
तत्रै'वैरवते' 'स्वर्ण-कूला'कूलंकषातटे ॥ ३१९ ॥
क्रमादुद्यौवनादेतौ, दन्तादन्ति कराकरि ।
द्वावपि प्रक्षरद्दानौ, क्रुद्धोदग्रमृधौ मृतौ ॥ ३२० ॥
अस्यैव 'जम्बू'द्वीपस्य, क्षेत्रेऽत्र 'भरता'भिधे ।
'विनीता'यां नन्दिमित्रो-ऽभूदिद्धमहिषीधनः ॥ ३२१ ॥
तस्येष्टे महिषीयूथे, जातौ तौ महिषौ ततः ।
'अयोध्या'ऽधिपतिः शत्रुञ्जयोऽभूज्जगतीविभुः ॥ ३२२ ॥
देवानन्दा प्रिया तस्य, तयोः पुत्रौ बभूवतुः ।
[1]धरषेण-नन्दिषेणौ, महिषौ तावपश्यताम् ॥ ३२३ ॥
ताभ्यां तौ कौतुकात् क्रीत्वा, रक्ताक्षौ वपुषोत्कटौ ।
मिथः प्राग्जन्मवैरान्धा-वयोध्येतां क्रुधोद्धुरौ ॥ ३२४ ॥
युध्वा मृत्वा च तौ जातौ, पुर्यां तत्रैव मेण्ढकौ ।
मिथः प्रहृत्य मृत्वा ता-वुत्पन्नौ कुर्कुटाविमौ ॥ ३२५ ॥
पुराऽप्येतौ समप्राणौ, नैकोऽप्येकेन निर्जितः ।
एकः पूर्ववदेकेन, सम्प्रत्यपि न जेष्यते ॥ ३२६ ॥
स्माह मेघरथो देव,! न वैरादेव केवलम् ।
युध्येते कुर्कुटौ विद्या-धराक्रान्ताविमौ पुनः ॥ ३२७ ॥
तथाहि 'धातुकी'खण्डे, पूर्वैरवतभूषणे ।
अभूदभयघोषाख्यो, राजा 'वज्रपुरे' पुरे ॥ ३२८ ॥
बभूव वल्लभा तस्य, सुवर्णतिलकाह्वया ।
विजयो वैजयन्तश्च, तयोः [2]पुत्रावजायताम् ॥ ३२९ ॥
तत्रै'वैरवत'क्षेत्रे, पुरे '[3]स्वर्णपुरे' नृपः ।
शङ्खोऽभूत् तत्प्रिया पृथ्वी, पृथ्वीसेना तयोः सुता ॥ ३३० ॥

१ ख-'धनसेन०'। २ ख-'पुत्रौ बभूवतुः'। ३ १ ख-'स्वर्णद्रुमे'।

एतामभयघोषाय, शङ्खक्ष्मापः सुतां ददौ ।
स रेमे पृथिवीनाथः, पृथ्वीसेनया तया ॥ ३३१ ॥
स वसन्तेऽन्यदोद्यानं, राजा सान्तःपुरो ययौ ।
पृथ्वी देवी त्वनुज्ञाप्य, नृपं चिक्रीड तत्र सा ॥ ३३२ ॥
तदन्तर्दन्तमथनं, दृष्ट्वाऽवन्दत सा मुनिम् ।
निशम्य देशनां तस्य, भववैराग्यभागभूत् ॥ ३३३ ॥
नृपमापृच्छ्य सा दन्त–मथनान्मुनितो व्रतम् ।
भवभीताऽभजद् भूप–स्तां शंसन् स्वपुरं ययौ ॥ ३३४ ॥
तदाद्यभयघोषोऽपि, दानादिसुकृतोद्यतः ।
कृतराज्योऽनन्तनाथ–तीर्थेशान्तेऽभवद् व्रती ॥ ३३५ ॥
विजयो वैजयन्तश्चा–ऽगृह्णीतां तमनु व्रतम् ।
पिता पुत्रौ त्रयोऽप्येते, दुस्तरं(पं ?) तेपिरे तपः ॥ ३३६ ॥
राजर्षिरभयघोषो, विंशत्या स्थानकैः[1] पुनः ।
सदैव सेवितैरर्हन्–नामगोत्रमुपार्जयत् ॥ ३३७ ॥
सेवितानशनाः प्रान्ते, ते त्रयोऽप्यायुषः क्षये ।
'अच्युते' द्युसदोऽभूवन्, द्वाविंशत्यर्णवायुषः ॥ ३३८ ॥
जीवोऽथाऽभयघोषस्य, प्रच्युतो'ऽच्युत'कल्पतः ।
पुर्यस्यां 'पुण्डरीकिण्यां', हेमाङ्गदमहीपतेः ॥ ३३९ ॥
जायायां वज्रमालिन्यां, सूनुर्घनरथो भवान् ।
जातस्तीर्थकरस्तात–कृतजन्मोत्सवः सुरैः ॥ ३४० ॥–युग्मम्
'जम्बू'द्वीपस्य 'भरत'–क्षेत्रे 'वैताढ्य'भूभृति ।
उत्तरश्रेण्यलङ्कारे, 'स्वर्ण'नामाह्वये पुरे ॥ ३४१ ॥
राजा गरुडवेगोऽभूद्, धृतिषेणेति तत्प्रिया ।
विजयो वैजयन्तश्च, तौ च्युता'वच्युता'त् ततः ॥ ३४२ ॥
उत्पेदाते तयोः पुत्रौ, चन्द्रार्कस्वप्नदर्शनात् ।
तौ चन्द्रतिलक-सूर–तिलकौ नामतः श्रुतौ ॥ ३४३ ॥

---

१ ख–'स्थानकैस्तु सः' ।

अन्यदा जग्मतु'र्मेरो'-र्मूर्ध्नि तौ 'नन्दने' वने ।
चरन्तौ सागरचन्द्र-चारणर्षिमपश्यताम् ॥ ३४४ ॥
केवलज्ञानिना तेन, पृष्टेन प्राग्भवास्तयोः ।
ख्यातास्ताभ्यां ततोऽज्ञायि, प्राग्जन्मजनको भवान् ॥ ३४५ ॥
तौ त्वां द्रंष्टुमिहायातौ, स्वामिन्! विद्याधराविमौ ।
सङ्कमं चक्रतुस्ताम्र-चूडयोः क्रीडयाऽनयोः ॥ ३४६ ॥
इति श्रुत्वा स्फुटीभूय, प्राग्जन्मजनकं नृपम् ।
भक्त्या घनरथं नत्वा, गतौ विद्याधरौ गृहम् ॥ ३४७ ॥
तावप्यात्मभवानेवं, निन्ध्यानाकर्ण्य कुर्कुटौ ।
सम्यक्त्वं घनसंवेगौ, श्रितौ घनरथान्तिके ॥ ३४८ ॥
मृत्वा सानशनौ 'भूत-रत्ना'टव्यां बभूवतुः ।
ताम्रचूल-स्वर्णचूला-ऽभिधौ तौ भूतभूपती ॥ ३४९ ॥
तौ बुद्ध्वाऽवधिना पूर्व-भवमेत्योपकारिणम् ।
श्रुत्वा घनरथं मेघ-रथमित्यूचतुर्मुदा ॥ ३५० ॥
आवां तौ कुर्कुटौ युष्मत्-प्रसादाद् व्यन्तरेश्वरौ ।
अभूवेमौ तदेतन्नौ, विमानमधिरुह्यताम् ॥ ३५१ ॥
सर्वां सर्वंसहां पश्य, ज्ञाताऽस्ति ज्ञानतो यदि ।
इत्यर्थितो मेघरथो, विमानमधिरूढवान् ॥ ३५२ ॥
तस्मै सपरिवाराय, तद्विमानाधिरोहिणे ।
तौ साद्रिसागरद्वीपां, दर्शयामासतुः क्षितिम् ॥ ३५३ ॥
अथ मेघरथं नीत्वा, तौ पुनः 'पुण्डरीकिणी'म् ।
सौधे कृत्वा रत्नवृष्टिं, नत्वा स्वं जग्मतुः पदम् ॥ ३५४ ॥
अथो घनरथो राजा, राज्ये मेघरथं न्यधात् ।
यौवराज्ये दृढरथं, स्वयं दीक्षामुपाददे ॥ ३५५ ॥
तीर्थङ्करो घनरथः, क्रमादुत्पन्नकेवलः ।
प्रबोध्य प्राणिनः क्षीण-कर्मा मोक्षमुपेयिवान् ॥ ३५६ ॥

---

१ क-'द्रंष्टुमिह प्राप्तौ'। २ क-'स्तुत्वा'। ३ आवयोः।

चक्रे मेघरथो राजा, राज्यं दृढरथान्वितः ।
सोऽन्यदा 'देवरमणो'–द्याने ऽयासीद् रिरंसया ॥ ३५७ ॥
प्रियमित्राप्रियायुक्तः, तत्राशोकतले स्थितः ।
सङ्गीतमविगीतं स, यावत् प्रास्तावयन्नृपः ॥ ३५८ ॥
तावद् भूतैराविर्भूतैः, प्रभूतैर्भूपतेः पुरः ।
प्रारभ्यताद्भुतालम्ब–स्ताण्डवाडम्बरः परः ॥ ३५९ ॥–युग्मम्
यावत् ते ताण्डवं तेनु–स्तावदाविरभूत् पुरः ।
पुमानेको विमानेन, रामया रम्ययाऽन्वितः ॥ ३६० ॥
भक्त्या मेघरथं नत्वा, क्षमयित्वा च सोऽगमत् ।
प्रियमित्राऽऽह नाथाऽयं, कः केयं कथमागतौ ? ॥ ३६१ ॥
अथो मेघरथोऽवादीत्[1], 'पुष्करा'र्द्धस्य 'भारते'[2]।
पूर्वस्मिन्नस्त्यनर्घ्यश्रि, पुरं 'सङ्घपुरा'ह्वयम् ॥ ३६२ ॥
राज्यगुप्ताभिधस्तत्र, दुःस्थोऽभूत् कुलपुत्रकः ।
शङ्खिका नाम तत्पत्नी, परकर्मकरावुभौ ॥ ३६३ ॥
प्राप्तौ तौ फलसङ्ख्याया–न्यदा 'सङ्घगिरिं' गिरिम् ।
सर्वगुप्तमुनेर्धर्मं, तत्राकर्णयतः स तौ ॥ ३६४ ॥
किञ्चिदात्मोचितं याच–मानयोरनयोस्तपः ।
सर्वगुप्तो दिदेश द्वा–त्रिंशत्कल्याणिकं तपः ॥ ३६५ ॥
द्वे त्रिरात्रे चतुर्थानि, द्वात्रिंशदिति तत् तपः ।
कृत्वाऽन्ते[3] धृतिधरर्षिं, प्रत्यलाभयतां च तौ ॥ ३६६ ॥
सर्वगुप्तमुनेरन्ते, राज्यगुप्तः सशङ्खिकः ।
प्रवव्राज स चा[4]चाम्ल–वर्द्धमानं[5] तपो व्यधात् ॥ ३६७ ॥
राज्यगुप्तो यतिः प्रान्ते, विपन्नोऽनशनान्वितः ।
'ब्रह्मलोके' दशोदन्व–ज्जीवितो निर्जरोऽजनि ॥ ३६८ ॥
'जम्बू'द्वीपेऽत्र 'भरते,' 'वैताढ्यो'त्तरधरे पुरि ।
'अलका'यामभूद् विद्युद्–रथो विद्याधरेश्वरः ॥ ३६९ ॥

---

१ ख–'ऽवोचत्' । २ एतत्स्वरूपं ख–परिशिष्टे निरूपयिष्यते । ३ क–'कृत्वा ते धृतधर' । ४ क–'तावासवर्ध०' । ५ एतत्स्वरूपार्थं विलोक्यतां ख–परिशिष्टम् ।

तस्य मानसवेगाऽऽसीत्, पत्नी पुत्रस्तयोरभूत् ।
जीवः स राज्यगुप्तस्य, प्रच्युतो 'ब्रह्मलोक'तः ॥ ३७० ॥
कृतः पित्रा सिंहरथ–स्वप्नात् सिंहरथाभिधः ।
स व्युवाहोत्कृष्टकुल–कन्यां वेगवतीं युवा ॥ ३७१ ॥
शङ्किका साऽपि तत्पत्नी, तपस्तप्त्वा [1]'विपद्य च ।
'ब्रह्मलोके' सुरो जज्ञे, ततश्च्युत्वाऽस्य पत्न्यभूत् ॥ ३७२ ॥
न्यस्य सिंहरथं राज्ये, दीक्षां विशुद्धरथो[2]ऽग्रहीत् ।
तपोभिर्दुस्तपैः क्षीण–शेषकर्मा शिवं ययौ ॥ ३७३ ॥
सोऽथ सिंहरथो द्वीपे, 'धातुकी'खण्डनामनि ।
पश्चिमेषु 'विदेहे'षु, 'सीतोदो'त्तररोधसि ॥ ३७४ ॥
'सूत्रा'ऽभिधाने विजये, पुरे 'खड्गपुरा'ह्वये ।
गत्वा पत्न्या सहार्हन्तं, नुनावाऽमितवाहनम् ॥ ३७५ ॥–युग्मम्
तद्धर्मदेशनां श्रुत्वा, तं नत्वाऽऽत्मपुरीं प्रति ।
व्यावृत्तस्य नभस्यूर्ध्वं, [3]तत्रास्य स्खलिता गतिः ॥ ३७६ ॥
गतिर्मे स्खलिता कस्मा–दित्यधः स न्यधाद् दृशम् ।
यावत् तावदिहस्थं मां, निध्याय व्यधित क्रुधम् ॥ ३७७ ॥
मामुत्क्षेप्तुमुपायाते, मयाऽस्मिन् वामपाणिना ।
आक्रान्ते रसति प्रेय–स्यस्य मां शरणं [4]गता ॥ ३७८ ॥
[5]मुक्तो मयाऽयं मत्प्रीत्यै, सङ्गीतं तत्पुरो व्यधात् ।
प्राक्तनतपसा चेय–मृद्धिरस्य महीयसी ॥ ३७९ ॥
पुरीं प्राप्यात्मजं राज्ये, कृत्वा मत्पितुरन्तिके ।
[6]प्रव्रज्योग्रं तपस्तप्त्वा, मुक्तिमेष गमिष्यति ॥ ३८० ॥
इत्युक्त्वा प्रियमित्रायै, सप्रियः 'पुण्डरीकिणी'म् ।
पुरीं मेघरथो 'देव–रमणो'द्यानतो ययौ ॥ ३८१ ॥
पौषधीं पौषधागारे, स्थितो मेघरथोऽन्यदा ।
धर्ममार्हतमाख्यातु–मारेभे भाविनां पुरः ॥ ३८२ ॥

---

१ क–'व्यपद्यत' । २ ख–'ऽश्रयत्' । ३ ख–'तस्यात्र' । ४ ख–'श्रिता' ।
५ क–'मुक्तोऽयं मया यत्प्रीत्यै, सङ्गीतं मत्पुरो' । ६ क–'प्रव्रज्योग्रतप०' ।

तदङ्के कम्पवान् दीना–ननश्चलविलोचनः ।
अवाप्तभयः[1] पारा–पत एकोऽपतत् तदा ॥ ३८३ ॥
स[2] तं स्वस्याभयं याच–मानं मानुषभाषया ।
मा भैषीरित्यभाषिष्ट, भूयो भूयोऽपि भूपतिः ॥ ३८४ ॥
नरेन्द्र! मुञ्च मुञ्चामुं, मम भक्ष्यमिदं वदन् ।
तस्यानुमार्गमागच्छच्–छ्येनपक्षी क्षुधातुरः ॥ ३८५ ॥
भूमीशोऽभ्यधित श्येन–मेनमेनःपरोद्यमम् ।
देवस्याप्यर्पयिष्यामि, नैवामुं शरणाश्रितम् ॥ ३८६ ॥
काप्यनाप्तपरित्राण–प्राणिप्राणप्रहाणतः ।
भवतोऽप्यात्मनः पोषः, शोष एवैष तत्त्वतः ॥ ३८७ ॥
प्राणानां धारणा तु स्यात्, परैर्भोज्यान्तरैरपि ।
केवलं नरकायैव, जीविका जीवकायजा ॥ ३८८ ॥
नृपं मर्त्त्यगिरा श्येनः, सदस्येनमथावदत् ।
कपोतो मद्भयार्त्तोऽयं, क्षुधार्त्तोऽहं क्षितीश्वर! ॥ ३८९ ॥
यद्यर्त्तिं शरणाप्तस्य, हरस्यस्येश! रक्षणात् ।
तत् किं नाम ममाप्यार्त्तिं, न कृन्तस्येतदर्पणात् ? ॥ ३९० ॥
त्रोटिकोटित्रुटद्व्यक्त–रक्तपत्रिपलाशिनः ।
ममाभक्ष्याणि भक्ष्याणि, पराणि क्व नु तृप्तये ॥ ३९१ ॥
मद्भक्ष्यं भवता रक्ष्यं, पारापतपतत्र्यसौ ।
प्राणा यान्त्यपरित्राणा, ह्री मे तेऽस्तु कृपालुता ॥ ३९२ ॥
तं स्माह साहसी श्येनं, भो ही दुःस्थ[3]! ददाम्यहम् ।
पारापतेन तुलितं, स्वपलं माऽऽकुलो भव ॥ ३९३ ॥
श्येनेनास्त्वेवमित्युक्ते, स पारापतमेकतः ।
तुलायां न्यधितान्यत्रोत्–कृत्योत्कृत्यात्मनः पलम् ॥ ३९४ ॥
यथा यथा वपुःखण्डं, खण्डयित्वा नृपोऽक्षिपत् ।
तथा तथा स वद्वृधे, भारात् पारापतोऽधिकम् ॥ ३९५ ॥
कृपाकूपारस्तं पारा–पतं भाराधिकं[4] विदन् ।

---

१ क–'राप्तभयः' । २ क–'तं च' । ३ क–'दुःस्थे' । ४ क–'मारामितं' ।

स्वयं तुलाधिरूढोऽपि, त्रैलोक्येऽप्यतुलोऽभवत् ॥ ३९६ ॥
धन्यो धन्योऽस्म्यहं यस्य, वपुरासीत् परार्थिहृत् ।
इत्युक्त्वा श्येनमित्यूचे, भो ग्रसानर्गलं पलम् ॥ ३९७ ॥
इति रोमाङ्कुराकीर्णे, जल्पत्युरुकृपे नृपे ।
वदन् जय जयेत्युच्चै-राविरासीत् पुरः सुरः ॥ ३९८ ॥
कृत्वा सज्जतनुं देवो, नरदेवमदोऽवदत् ।
त्वमेव पुरुषेष्वेकः, [1]पौरुषाद् गलितोऽसि न ॥ ३९९ ॥
सत्त्वाश्रयं शशंस त्वां, शश्व'दीशान'वासवः ।
महीशाऽसहमानोऽह-मकार्षं [2]त्वत्परीक्षणम् ॥ ४०० ॥
अद्राक्षं पक्षिणावेतौ, प्राग्वैरेण रणोल्बणौ ।
अध्यतिष्ठमकार्षं च, क्षमेशैतत् क्षमस्व तत् ॥ ४०१ ॥
मेदिनीन्दुमुदित्वेदं, देवोऽदीव्यद् दिवे मुदा ।
ततः सभासदो भूपं, वदन्ति स्म सविस्मयाः ॥ ४०२ ॥
किं श्येन-पारापतयो-रेतयोर्वैरकारणम् ? ।
देवेनाऽनेन देवस्य, कुतो वा कष्ट[3]माहितम् ? ॥ ४०३ ॥
राजाऽजल्पज्'जम्बू'द्वीपे, क्षेत्रेऽ'स्त्यैरावते' पुरम् ।
आख्यया 'पद्मिनीखण्ड'-माखण्डलपुरोपमम् ॥ ४०४ ॥
तत्र सागरदत्ताख्यः, श्रेष्ठी श्रीसागरोऽजनि ।
तद्भार्या विजयसेना, तत्पुत्रौ धन-नन्दनौ ॥ ४०५ ॥
वाणिज्यार्थं गतौ 'नाग-पुरं' पितुरनुज्ञया ।
महामूल्यं महारत्नं, तौ तत्रैकमवापतुः ॥ ४०६ ॥
तौ 'शङ्ख'तटिनीतीरे, रणं तद्रत्नकारणम् ।
कुर्वाणौ कोपसाटोपौ, पेततुस्तन्महाह्रदे ॥ ४०७ ॥
श्येन-पारापतावेता-वुत्पेदाते विपद्य तौ ।
इहापि कलहायेते, प्राग्भवोद्भववैरतः ॥ ४०८ ॥
'जम्बू'द्वीपे प्राग्'विदेहे', 'सीता'या दक्षिणे तटे ।
विजये 'रमणीया'ख्ये, पूः ख्याताऽस्ति 'शुभा'ऽभिधा ॥ ४०९ ॥

१ क-'पौरुषान्(द्) गलितोऽसि नः' । २ ख-'तत्परी०' । ३ क-'मीहितम्' ।

तस्यां भूपोऽभूत् [1]स्तिमित–सागरोऽस्य सुतोऽभवम् ।
अमुतः पञ्चमभवे, नाम्नाऽहमपराजितः ॥ ४१० ॥
अभूवं बलदेवोऽहं, तदा विष्णुस्तु मेऽनुजः ।
आसीदनन्तवीर्याह्वः, सोऽभूद् दृढरथोऽधुना ॥ ४११ ॥
प्रतिविष्णुर्दमितारि–स्तदानीं मदर्[2]दुर्दमः ।
कनकश्रीकन्यकार्थं, निजघ्नेऽस्माभिराहवे ॥ ४१२ ॥
भ्रान्त्वा संसारकान्तारं, स 'जम्बू'द्वीप'भारते' ।
मूले'ऽष्टापद'शैलस्य, 'निकृत्याः' सरितस्तटे ॥ ४१३ ॥
सोमप्रभाभिधस्यासीत्, तापसाधिपतेः सुतः ।
बालं तपः स कृत्वाऽलं, सुरूपाख्यसुरोऽभवत् ॥ ४१४ ॥
ईशानेन्द्रकृतामस्मत्–प्रशंसामसहिष्णुना ।
देवेनानेन तेने च, प्रत्यक्षं मत्परीक्षणम् ॥ ४१५ ॥
स्मृत्वा प्राग्भववृत्तं स्वं, श्येन-पारापतौ तु तौ ।
जातजातिस्मृती रुग्णौ, नृपान्तेऽनशनं श्रितौ ॥ ४१६ ॥
विपन्नौ तौ समुत्पन्नौ, सुरौ [3]भवनवासिषु ।
पारयित्वा पौषधं तु, सौधं मेघरथोऽगमत् ॥ ४१७ ॥
धराधाराधिपः पारा–पतश्येनपतत्रिणोः ।
वृत्तेन तेन वैराग्यं, शमभाग्यं स भेजिवान् ॥ ४१८ ॥
कृताष्टमतपाः पृथ्वी–पतिः प्रतिमयाऽन्यदा ।
धीरो वैराग्यसौ[4]भाग्यं, ध्यानमाधाय तस्थिवान् ॥ ४१९ ॥
ईशानेन्द्रः परप्रीति–रन्तरन्तःपुरं [5]तदा ।
नमश्चक्रे नमस्तुभ्यं, नमस्तुभ्यमिति ब्रुवन् ॥ ४२० ॥
महिष्यस्तमभाषन्त, कस्मै स्वामिन्! नमस्कृतिः ? ।
[6]सोऽशंसत् 'पुण्डरीकिण्यां', पुर्यां मेघरथो नृपः ॥ ४२१ ॥
कृताष्टमतपाः सूनु–रर्हद्घनरथस्य सः ।
सम्प्रत्यप्रतिमध्यानं, महाप्रतिमया स्थितः ॥ ४२२ ॥

---

१ क–'समितिसागरो' । २ ख–'दुर्मदः' । ३ क–'भुवन०' । ४ ख–'भाग्यध्यान०' । ५ क–'मुदा' । ६ ख–'खेऽशंसत्' ।

'जम्बू'द्वीपस्य 'भरते', भाव्यसौ शान्तितीर्थकृत् ।
एनं प्रेक्ष्य नमोऽकार्षं, हर्षादहमिह स्थितः ॥ ४२३ ॥
सदारैः सपरीवारैः, सुरासुरनरेश्वरैः ।
ध्यानाद् ध्वंसयितुं धीरो, ध्रुवं निर्धार्यते न सः ॥ ४२४ ॥
[1]अतिरूपा-सुरूपाख्ये, तन्महिष्यौ महेर्ष्यया ।
श्लाघामसहमाने तं, प्रक्षोभयितुमीयतुः ॥ ४२५ ॥
विकुर्वाते स्म ते तत्र, शतपत्रदृशस्ततः ।
तास्तत्पुरः स्मरस्मेरान्, विकारान् विविधान् व्यधुः ॥ ४२६ ॥
जनितैर्यामिनीं सर्वां, विभ्रमैः सुरसुभ्रुवाम् ।
मनागपि मनस्तस्य, न ध्यानाद् ध्वंसमासदत् ॥ ४२७ ॥
विभातायां विभावर्यां, देव्यावनुशयान्विते ।
हृत्वा वैक्रियरूपाणि, क्षमयामासतुर्नृपम् ॥ ४२८ ॥
[2]शंसित्वा ते स्ववृत्तान्तं, जग्मतुर्निजमाश्रयम् ।
प्रतिमां पौषधं पृथ्वी-पतिः प्रातरपारयत् ॥ ४२९ ॥
अथो मेघरथो राज्ये, मेघसेनं निजात्मजम् ।
रथसेनं यौवराज्ये, न्यधाद् दृढरथाङ्गजम् ॥ ४३० ॥
चतुःसहस्र्या भूपानां, सुतानां सप्तभिः शतैः ।
समं दृढरथेनानु-जन्मना जन्मनाशिनीम् ॥ ४३१ ॥
परिव्रज्यां पितुस्तीर्थ-कृतो घनरथस्य सः ।
पादान्ते समुपादत्त, ततो मेघरथो नृपः ॥ ४३२ ॥-युग्मम्
विंशत्या स्थानकैरर्हन्-नामगोत्रमुपार्जयत् ।
तथा मेघरथश्चक्रे, [3]सिंहविक्रीडितं तपः ॥ ४३३ ॥
इत्थं मुनिपतिर्मेघ-रथो दृढरथान्वितः ।
पूर्वलक्षमखण्डं स, श्रमणत्वमपालयत् ॥ ४३४ ॥
आरुह्या'ऽम्बरतिलकं', शैलं युक्तोऽनुजन्मना ।
शिश्रायानशनं शान्त-मना मेघरथो मुनिः ॥ ४३५ ॥

---

१ क-'इति रूपा०' । २ ख-'शंसयित्वा स्ववृत्तान्तं' । ३ एतत्स्वरूपार्थं प्रेक्ष्यतां तत्त्वार्थवृत्तिः (द्वि. वि. पृ. २०२) ।

आयुःप्रान्ते त्रयस्त्रिंशत्–सागरप्रमितायुषौ ।
गीर्वाणौ 'सर्वार्थसिद्धि'[1]–विमाने तौ बभूवतुः ॥ ४३६ ॥
'जम्बू'द्वीपेऽत्र 'भरते', 'कुरु'देशविशेषकम् ।
'हस्तिनापुर'मित्यस्ति, पुरं सुरपुरोपमम् ॥ ४३७ ॥
तत्रासीद् विश्वसेनाख्यो, नृपस्तस्याऽचिरा प्रिया ।
तत्कुक्षौ भाद्रपदस्य[2], श्यामायां सप्तमीतिथौ ॥ ४३८ ॥
भरणीस्थे निशानाथे, च्युतः 'सर्वार्थसिद्धि'तः ।
जीवो मेघरथक्षोणी–पतेरवततार सः ॥ ४३९ ॥
ज्येष्ठश्यामत्रयोदश्यां, धिष्ण्येशे भरणी[3]श्रिते ।
मेषराशौ प्रसौति स्म, सुतं देव्यऽचिरा ततः ॥ ४४० ॥
'इक्ष्वाकु'वंशतिलकं, मृगाङ्कं काञ्चनच्छविम् ।
षोडशं तीर्थाधिपतिं, पञ्चमं चक्रवर्त्तिनम् ॥ ४४१ ॥
गर्भस्थेऽत्र प्रशान्तानि, प्राग्जातान्यशिवानि यत् ।
तन्नाम स्वामिनश्चक्रे, पित्रा शान्तिरिति श्रुतम् ॥ ४४२ ॥
क्रमाद्युद्यौवनश्चत्वा–रिंशच्चापोन्नतः प्रभुः ।
विश्वसेननरेशेन[4], पर्यणायि नृपात्मजाः ॥ ४४३ ॥
यातेष्वब्दसहस्रेषु, जन्मतः पञ्चविंशतौ ।
पिता शान्तिं न्यधाद् राज्ये, स्वयं तु स्वार्थभाग्भूत् ॥ ४४४ ॥
प्रभोः पालयतो राज्यं, प्राज्यैरनणुभिर्गुणैः ।
सर्वान्तःपुरमुख्यत्वं, प्राप पत्नी यशोमती ॥ ४४५ ॥
जीवो दृढरथस्यापि, च्युत्वा 'सर्वार्थसिद्धि'तः ।
यशोमत्याः श्रितः कुक्षिं, चक्रस्वप्नेन सूचितः ॥ ४४६ ॥
अथ सा समये सूनुं, प्रसूते स्म यशोमती ।
चक्रस्वप्नात् पिता तं च, चक्रे चक्रायुधाभिधम् ॥ ४४७ ॥
स पित्रा प्राप्ततारुण्यो, नृपपुत्रीः स्वयंवराः ।
गणेशोऽनणुलावण्य–प्रवणाः पर्यणायत[5] ॥ ४४८ ॥

---

१ क–'सर्वार्थसिद्ध०' । २ क–'पदश्यामायां' । ३ क–'भरणीस्थिते' । ४ क–'नृपेशेन' । ५ क–'पर्यणाय्यत' ।

प्रभोः पालयतो राज्यं, वर्षाणां पञ्चविंशतौ ।
सहस्रेषु गतेष्वासी–च्चक्रं शस्त्रगृहान्तरा ॥ ४४९ ॥
षट्खण्ड'भरत'क्षेत्रे, ततश्चक्रेण साधिते ।
प्रभोर्बभूव चक्रित्वा–भिषेको 'हस्तिनापुरे' ॥ ४५० ॥
चक्रोत्पत्तिदिनाचक्र–वर्त्तित्वं त्रिजगत्पतिः ।
पालयामास वर्षाणां, सहस्रान् पञ्चविंशतिम् ॥ ४५१ ॥
न्यस्य चक्रायुधं राज्ये, 'सर्वार्थां' शिबिकां ततः ।
समारुह्य ययौ स्वामी, 'सहस्राम्रवणं' वनम् ॥ ४५२ ॥
ज्येष्ठश्यामचतुर्दश्यां, भरण्यामपरेऽहनि ।
सह राज्ञां सहस्रेण, कृतषष्ठोऽग्रहीद् व्रतम् ॥ ४५३ ॥
नगरे 'मन्दिरा'भिख्ये, सुमित्रक्ष्मापमन्दिरे ।
विभुर्व्यधाद् द्वितीयेऽह्नि, परमान्नेन पारणम् ॥ ४५४ ॥
मासांश्छद्मपरोऽन्यत्र, विहृत्य द्वादश प्रभुः ।
दीक्षापदं तदेवाप, 'सहस्राम्रवणं' वनम् ॥ ४५५ ॥
[१]पौषे नवम्यां शुक्लायां, भरण्यां पूर्ववासरे ।
नन्दिद्रुमूले तत्राप, प्रभुः षष्ठेन केवलम् ॥ ४५६ ॥
प्रभोर्देशनया बुद्धो, राज्ये विन्यस्य नन्दनम् ।
[२]पञ्चत्रिंशन्नृपैः सार्द्धं, व्रतं चक्रायुधोऽग्रहीत् ॥ ४५७ ॥
चैत्यद्रुमोऽशीत्यधिक–[३]चतुर्धन्वशतं प्रभोः ।
चक्रायुधादयस्त्रिंशत्, षड्युता गणधारिणः ॥ ४५८ ॥
यक्षोऽभूद् गरुडाभिख्यः, क्रोडास्यः करिवाहनः ।
बिभ्राणो दक्षिणौ पाणी, बीजपूरा-ऽम्बुजाङ्कितौ ॥ ४५९ ॥
नकुलेनाक्षसूत्रेण, प्रवणौ दक्षिणेतरौ ।
निर्वाणी नाम्ना गौराङ्गी, स्मेर[४]पङ्केरुहासना ॥ ४६० ॥
दधाना दक्षिणौ हस्तौ, पुस्तकोत्पलमालिनौ ।
वामौ कमण्डलु-सरो–रुहालङ्करणौ पुनः ॥ ४६१ ॥

१ ख–'पौषनवम्यां' । २ क–'पञ्चविंशन्नृपैः' । ३ ख–'चतुर्धनुशतं' । ४ ख–'पङ्कजवाहना' ।

श्रीशान्तितीर्थनाथस्य, तीर्थे शासनदेवता ।
आभ्यामभुक्तसान्निध्यो, विजहार धरां विभुः ॥ ४६२ ॥
शान्तिप्रभोः सहस्राणि, द्वाषष्टिः साधवोऽभवन् ।
एकषष्टिसहस्राणि, षट्शती चार्यिकाः पुनः ॥ ४६३ ॥
चतुर्दशपूर्वधराः, पुनरष्टौ शतानि च ।
समुत्पन्नावधिज्ञानाः, सहस्रास्त्रिमितास्तथा ॥ ४६४ ॥
सहस्राणि तु चत्वारि, मनःपर्ययशालिनः ।
शतानि त्रिचत्वारिंशत्, केवलज्ञानिनः पुनः ॥ ४६५ ॥
षट्सङ्ख्यानि सहस्राणि, जातवैक्रियलब्धयः ।
वादलब्धिप्रधानास्तु, द्वौ सहस्रौ चतुःशती ॥ ४६६ ॥
उभौ लक्षौ सहस्राणि, नवतिः श्रावकास्तथा ।
तिस्रो लक्षास्त्रिनवति–सहस्राः श्राविकाः पुनः ॥ ४६७ ॥
आ केवलाद् विहरतः, परीवारः प्रभोरिति ।
जग्मुश्चाब्दसहस्राणि, व्रततः पञ्चविंशतिः ॥ ४६८ ॥
ज्येष्ठश्यामत्रयोदश्यां, भरणीधिष्ण्यगे विधौ ।
'सम्मेत'पर्वते सार्द्धं, साधूनां नवभिः शतैः ॥ ४६९ ॥
निर्मितानशनो मास–मूर्ध्वस्थो दिवसोदये ।
श्रीशान्तिनाथो भगवान्, निर्वाणं समुपेयिवान्[1] ॥ ४७० ॥–युग्मम्
कौमारे मण्डलीकत्वे, चक्रित्वेऽथ व्रतेऽगमत् ।
प्रत्येकं लक्षतुर्यांशो–ऽब्दलक्षायुरिति प्रभोः ॥ ४७१ ॥
श्रीशान्तिनाथनिर्वाणं, श्रीधर्मस्वामिनिर्वृतेः ।
पादोनपल्य[2]हीनेषु, गतेषु त्रिषु वार्द्धिषु ॥ ४७२ ॥

येन द्वादश सद्व्रतानि गृहिणां ता द्वादशानुक्रमं
भिक्षूणां प्रतिमास्तथाऽभिदधिरे सद्भावना द्वादश ।

---

१ ख–'प्रतिपन्नवान्' । २ पल्योपम० ।

यश्च द्वादशकल्पवासवनिषेव्यांह्रिर्भवे द्वादशे-
ऽङ्गानि द्वादश सञ्जगौ जिनपतिः शान्तिः स वोऽस्तु श्रिये ॥४७३॥[1]

ग्रन्थाग्रं ॥ ४७८ ॥

इति श्रीमज्जिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते षोडशं श्रीमच्छान्तिजिनचरितं समाप्तम् ॥ १६ ॥[2]

## अथ श्रीकुन्थुनाथचरितम् ॥ १७ ॥

कीर्त्याऽस्य शैत्यैर्विजितः सुधांशु–स्त्रिधाऽऽतपत्रत्रयकैतवेन ।
यस्य [3]त्रिधाभूय तनोति सेवां, देवो मुदे वोऽस्तु स कुन्थुनाथः ॥१॥[4]

'जम्बू'द्वीपे प्राच्य'वि–देहे'ष्वा'ऽऽवर्त्त'नाम्नि विजयेऽस्ति ।
'खड्गि'पुरी तत्रासीद्, राजा सिंहावहो नाम ॥ २ ॥[5]

वत्सराचार्यपादान्ते, धृतदीक्षस्तपोऽद्भुतम् ।
कृत्वा मृत्वाऽथ '[6]सर्वार्थ–सिद्धौ' सुरवरोऽभवत् ॥ ३ ॥[7]

'जम्बू'द्वीपेऽत्र 'भरते'–ऽस्ति 'हस्तिनापुरं' पुरम् ।
तत्र सूरोऽभवद् राजा, तस्य श्रीरिति पत्न्यभूत् ॥ ४ ॥

श्रावणे कृष्णनवम्यां, सुधांशौ कृत्तिकाश्रिते ।
त्रयस्त्रिंशत्सागरायुः–क्षये 'सर्वार्थसिद्धि'तः ॥ ५ ॥

च्युत्वा सिंहावहजीवः, श्रियः कुक्षाववातरत् ।
वैशाखे बहुलचतु–र्दश्यामाग्नेयगे[8] विधौ ॥ ६ ॥

---

१ शार्दूल० । २ क–'इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रसूरिविरचिते पद्मा-नन्दापरनाम्नि जिनेन्द्रचरिते महाकाव्ये षोडशतीर्थङ्करश्रीशान्तिनाथचरित्रवर्णनम् ।
ग्रन्थाग्रं ॥ ४७८ ॥
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥
अहिंसा परमो धर्मो, मान्या देवी सरस्वती ।
ध्यानेन मुक्तिमाप्नोति, सर्वदर्शनसम्मतम् ॥
मङ्गलं माहा(?)श्रीः ॥ छ ५ ॥'

३ ख–'त्रिधीभूय' । ४ उपजातिः । ५ आर्या । ६ क–'सिद्धार्थ–' । ७ अतः परं विंशतितमं पद्यं यावत् छन्दो'ऽनुष्टुप्' । ८ क–'यमे' । ९ कृत्तिकायाम् ।

[1]उच्चस्थे श्रीः [2]प्रसूते स्म, तनयं छगलाञ्छनम् ।
[3]स्वर्णप्रभं सप्तदशा–र्हन्त'मिक्ष्वाकु'वंशजम् ॥ ७ ॥–युग्मम्
कुन्थ्वास्यो रत्नसन्दोहो–ऽदर्शि मात्राऽत्र गर्भगे ।
इति कुन्थुरिति नाम, प्रभोः पित्रा प्रकल्पितम् ॥ ८ ॥
[4]गतेष्वब्दसहस्रेषु, जन्मनस्त्र्यग्र[5]विंशतौ ।
अर्द्धाष्टमशताग्रेषु, पित्रा राज्ये प्रभुः कृतः ॥ ९ ॥
तावत्स्वब्देषु यातेषु, पञ्चत्रिंशद्धनुर्मितेः ।
राज्यात् प्रभोरभूच्चक्र–रत्नं शस्त्रगृहान्तरे ॥ १० ॥
ततः साधितषट्खण्ड–'भरत'श्चक्रवर्त्यभूत् ।
अर्द्धाष्टमशतान् वर्ष–सहस्रांस्त्र्यग्रविंशतिम् ॥ ११ ॥
वैशाखे कृष्णपञ्चम्यां, कृत्तिकास्वपरेऽहनि ।
[6]'विजयां' शिबिकां रूढो, नगरान्निर्ययौ [7]प्रभुः ॥ १२ ॥
'सहस्राम्रवणो'द्याने, सहस्रेण नृपैः सह ।
कृतषष्ठतपाः कुन्थु–स्वामी दीक्षामुपाददे ॥ १३ ॥
पुरे 'चक्रपुरे' चक्रे, व्याघ्रसिंहनृपौकसि ।
कुन्थुनाथो द्वितीयेऽह्नि, परमान्नेन पारणम् ॥ १४ ॥
[8]छद्मस्थितो विहृत्योर्वीं, विभुर्वर्षाणि षोडश ।
'सहस्राम्रवणे'ऽभ्येत्य, तिलकद्रुतले स्थितः ॥ १५ ॥
चैत्रशुक्लतृतीयायां, कृत्तिकास्वधिजग्मिवान् ।
पूर्वाह्णे केवलं कुन्थुः, षष्ठेन प्रतिमास्थितः ॥ १६ ॥
चैत्यद्रुमो विंशत्यग्र–चतुर्धन्वशतोन्नतः ।
पञ्चत्रिंशद् गणभृतः, [9]स्वयम्भूप्रमुखाः प्रभोः ॥ १७ ॥
गन्धर्वनामा यक्षोऽभू–दसितो हंसवाहनः ।
दक्षिणौ वरदं पाश–धरं बिभ्रत् करौ परौ ॥ १८ ॥
मातुलिङ्गा-ऽङ्कुशधरौ, तीर्थे कुन्थुजिनेशितुः ।
देवी बलाह्वया गौर–देहा बर्हिणवाहना ॥ १९ ॥

---

१ क–'वृषस्थे' । २ ख–'प्रसौति स्म' । ३ ख–'स्वर्णच्छविं' । ४ क–'गतेष्वष्ट०' । ५ क–'ग्रविंशतौ' । ६ क–'विजयाशिबिकारूढो' । ७ ख–'विभुः' । ८ ख–'छद्मस्थो वि०' । ९ ख–'स्वयम्प्रभुमुखाः' ।

बीजपूरक-शूलाङ्कौ, बिभ्राणा दक्षिणौ भुजौ ।
वामौ मुषण्ढी-पद्माङ्कौ, कुन्थोः शासनदेव्यभूत् ॥ २० ॥[१]
व्रतिनां षष्टिसहस्री, व्रतिनीनां साधिका शतैः षड्भिः ।
सप्तत्यधिकानि चतु-र्दशपूर्वभृतां च षट् शतान्येव ॥ २१ ॥[२]
अवधिज्ञाननिधीनां, पञ्चशताभ्यधिकविंशतिशतानि ।
सत्रिशती त्रिसहस्री, चत्वारिंशन्मनोऽवबोधभृताम् ॥ २२ ॥[३]
केवलिनां द्वात्रिंश-च्छतानि वैक्रियकलब्धिमताम् ।
पञ्चसहस्र्येकशतं, विवादिनां द्वे सहस्रे तु ॥ २३ ॥[४]
एकं लक्षमशीति-न्यूनः सहस्रः श्रावकाणां च ।
लक्षत्रयमेकाशी-तिसहस्राः श्राविकाणां तु ॥ २४ ॥[६]
इति सर्वपरीवारः, कुन्थुतीर्थकृतोऽभवत् ।
ज्ञानाद् वर्षसहस्रेषु, गतेषु त्र्यग्रविंशतौ ॥ २५ ॥[७]
चतुस्त्रिंशदधिकेषु, तथा शतेषु सप्तसु ।
वैशाखे कृष्णादितिथा-वाग्नेये पूर्ववासरे ॥ २६ ॥[८]
'सम्मेता'द्रौ प्रभुः सार्द्धं, साधूनां दशभिः शतैः ।
मासं सानशनः प्राप-दूर्ध्वस्थः परमं पदम् ॥ २७ ॥[९]—विशेषकम्
समानभागे कौमारे, राज्ये चक्रित्व-दीक्षयोः ।
कुन्थोः पञ्चनवत्यब्द-सहस्राण्यायुरित्यभूत् ॥ २८ ॥[१०]
अर्द्धपल्योपमे याते, श्रीशान्तिप्रभुनिर्वृतेः ।
श्रीकुन्थुनाथतीर्थेशो, निर्वाणं समुपेयिवान् ॥ २९ ॥[११]

त्यक्त्वा तामपि चक्रवर्त्तिपदवीं विश्वत्रयत्रायिनो
निःसङ्गत्वमुपेयुषोऽपि परमं पूर्वानुरागादिव ।
यस्यांह्रिद्वयसन्निधिं न निधयोऽमुञ्चन्नवाब्जच्छलाद्
देवः पल्लवितां स वः प्रथयतु श्रीकुन्थुनाथः श्रियम् ॥ ३० ॥[१२]

ग्रन्थाग्रं ॥ ३२ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरिते सप्तदशं श्रीकुन्थुनाथजिनचरितं समाप्तम् ॥ १७ ॥

---

१ "मुषुण्ढी' स्याद् दारुमयी वृत्तायःकीलसञ्चिता" इति हैमशेषनाममालायाम् । २ आर्या । ३ गीतिः । ४ आर्या । ५ क-'लक्षसहस्रीन्यूनसहस्रः' । ६ आर्या (?) । ७-११ अनुष्टुप् । १२ शार्दूल० ।

## अथ श्रीअरनाथचरितम् ॥ १८ ॥

रुचिररुचिमिषेणोत्सङ्गरङ्गत्तरङ्गा
दशविधयतिधर्मश्रीवधूकेलिवाप्यः ।
अरचरणनखा वः पान्तु नम्रेन्द्रचूला–
मरकतकरवल्लीवर्यपर्यन्तदेशाः ॥ १ ॥[1]

'जम्बू'द्वीपे पूर्व'वि–देहे' 'सीता'महानद्याः ।
उत्तरतटगे विजये, 'वत्सा'ह्वये पुरि 'सुसीमा'याम् ॥ २ ॥[2]
आसीद् धनपतिर्भूपः, स काले संवरान्मुनेः ।
प्राप्तव्रतोऽथ नवमे, देवो ग्रैवेयकेऽभवत् ॥ ३ ॥[3]
'जम्बू'द्वीपेऽत्र 'भरते'–ऽस्ति 'हस्तिनपुरं' पुरम् ।
तस्मिन् सुदर्शनो राजा–ऽजनि देवीति तत्प्रिया ॥ ४ ॥
फाल्गुने मासि शुक्लायां, द्वितीयायां सुधाकरे ।
रेवतीसंश्रिते जीवो, राज्ञो धनपतेस्तदा ॥ ५ ॥
एकत्रिंशत्सागरायुः–क्षये 'ग्रैवेयका'च्च्युतः ।
देव्याः कुक्षाववातार्षीत्, साऽसूत समये सुतम् ॥ ६ ॥
स्वर्णाभं नन्द्यावर्त्ताङ्क–मष्टादशजिनेश्वरम् ।
मार्गस्य शुक्लदशम्यां, रेवत्यां मीनगे विधौ ॥ ७ ॥
अरः स्वर्णमयो मात्रा–ऽदर्शि स्वप्नेऽत्र गर्भगे ।
अर इत्यभिधानं तत्, प्रभोः पित्रा प्रकल्पितम् ॥ ८ ॥
गतेषु जन्मतो वर्ष–सहस्रेष्वेकविंशतौ ।
त्रिंशच्चापोन्नतो राज्ये, सोऽभू'दिक्ष्वाकु'वंशजः ॥ ९ ॥
तावत्येव गते राज्यात्, काले चक्रमभूत् प्रभोः ।
षट्खण्ड'भरत'क्षेत्रं, चक्री प्रभुरसाधयत् ॥ १० ॥
चक्रित्वतो गते काले, तावत्येवाऽरतीर्थकृत् ।
'विजयन्त्या' शिबिकया, 'सहस्राम्रवणं' गतः ॥ ११ ॥

---

१ मालिनी । २ आर्या (?) । ३ अतः परं २९तमपर्यन्तानां पद्यानां छन्दो'ऽनुष्टुप्' ।
४ क–'श्र सः' ।

मार्गस्य शुक्लैकादश्यां, रेवत्यां पश्चिमेऽहनि ।
राज्ञां सह सहस्रेण, षष्ठेन प्राव्रजत् प्रभुः ॥ १२ ॥
अपराजितभूपस्य, धाम्नि 'राजपुरे' पुरे ।
द्वितीयेऽह्नि प्रभुश्चक्रे, परमान्नेन पारणम् ॥ १३ ॥
छद्मस्थो व्यहरत् पृथ्वीं, त्रीणि वर्षाण्यथागतः ।
'सहस्राम्रवणे' चूत-मूले प्रतिमया स्थितः ॥ १४ ॥
कार्त्तिके शुक्लद्वादश्यां, रेवतीसंश्रिते विधौ ।
पूर्वाह्णे केवलं प्राप, कृतषष्ठतपाः प्रभुः ॥ १५ ॥
चैत्रद्रुमः षष्ठ्यधिक-त्रिकोदण्डशतोन्नतः ।
त्रयस्त्रिंशद् गणभृतः, कुम्भप्रभृतयः प्रभोः ॥ १६ ॥
यक्षोऽभूत् षण्मुखस्त्र्यक्षः, श्यामाङ्गः शङ्खवाहनः ।
समातुलिङ्ग-बाणा-ऽसि-मुद्गरान् पाशभीप्रदौ[1] ॥ १७ ॥
दक्षिणान् षड् भुजान् बिभ्रद्, वामौ चक्र-धनुर्धरौ[2] ।
सवर्म-शूला-ऽङ्कुशा-ऽक्ष-सूत्रान् तीर्थे त्वरप्रभोः ॥ १८ ॥-युग्मम्
मातुलिङ्गोत्पलधरौ, बिभ्राणा दक्षिणौ भुजौ ।
पद्मा-ऽक्षसूत्रिणौ वामौ, नीलाङ्गी नलिनासना[3] ॥ १९ ॥
धारणीत्यरनाथस्य, तीर्थे शासनदेवता ।
प्रभोः सर्वपरीवारो-ऽभवद् विहरतस्त्विति ॥ २० ॥-युग्मम्
पञ्चाशत् साधुसहस्राः, सहस्राण्यार्यिकाः पुनः ।
पञ्चषष्टिश्चतुर्दश-पूर्विणः षट्शती दश ॥ २१ ॥
स षट्शतौ सहस्रौ द्वा-ववधिज्ञानशालिनाम् ।
सहस्रौ द्वौ सार्द्धावेक-पञ्चाशच्च मनोविदाम् ॥ २२ ॥
केवलज्ञानभाजौ द्वौ, सहस्रावष्टशत्यपि ।
सहस्राः सप्त त्रिशती, लब्धवैक्रियलब्धयः ॥ २३ ॥
सहस्रः षट्शतीयुक्तो[4], वादलब्धिविराजिनः ।
श्राद्धाः षोडश सहस्र-हीनं लक्षद्वयं पुनः ॥ २४ ॥

---

१ क-'यासभीप्रदौ' । २ ख-'बभ्रुधनु०' । ३ ख-'नलिनाशना' । ४ ख-'षट्शतैर्युक्तो' ।

श्राविकास्त्रीणि लक्षाणि, सहस्रौ द्वौ च सप्ततिः ।
इत्युद्यत्परिवारस्य, प्रभोररजिनेशितुः ॥ २५ ॥
ज्ञानाद् वर्षत्रयोनैक–विंशत्यब्दसहस्र्यगात् ।
ततो यतिसहस्रेण, समं 'सम्मेत'पर्वते ॥ २६ ॥
ऊर्ध्वस्थितो मार्गशुक्ल–दशम्यां पौष्णगे विधौ ।
मासं सानशनः स्वामी, प्रातः प्राप परं पदम् ॥ २७ ॥
तुल्यभागं कुमारत्वे, राज्ये चक्रित्व-दीक्षयोः ।
आयुश्चतुरशीत्यब्द–सहस्राणीत्यरप्रभोः ॥ २८ ॥
श्रीकुन्थुमोक्षतो वर्ष–कोटीहीने गते सति ।
पल्योपमचतुर्भागे, जज्ञे मुक्तिररप्रभोः ॥ २९ ॥

सदा सुदिवसोदयं त्रिजगदन्तरा स्त्रयन्
नयन्नपि तमः क्षयं हृदयगर्भगर्भेश्वरम् ।
सृजन् जनचकोरकप्रमदमेत्य तारापथं
जयत्यरजिनेश्वरस्तरणिरद्भुतः कोऽप्ययम् ॥ ३० ॥[1]

ग्रन्थाग्रं० ॥ ३५(?) ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरितेऽष्टादशं श्रीमदरनाथजिनचरितं समाप्तम् ॥ १८ ॥

## अथ श्रीमल्लिनाथचरितम् ॥ १९ ॥

मुदेऽस्तु मल्लेर्वदनं यदग्रतो
बतोज्झिताश्चामरयुग्मकैतवात् ।
सरत्नदण्डाः सितरोचिषा रुचो–
गुणाः सरोजेन मृणालजा निजाः ॥ १ ॥[2]

'जम्बूद्वीपे' द्वीपेऽत्र प्राग्–'विदेहे'ष्वपरेषु च ।
'सलिलावत्यां' विजये, 'वीतशोका'ऽस्ति पूर्वरा ॥ २ ॥[3]
तत्राभवद् बलो राजा, धारिणी तस्य वल्लभा ।
तयोर्महाबलः सूनुः, सिंहस्वमोद्भवोऽभवत् ॥ ३ ॥[5]

१ पृथ्वी । २ वंशस्थविलम् । ३ अनुष्टुप् । ४ क–'धारणी' । ५ अनुष्टुप् ।

कमलश्रीप्रभृतीनि, राजकन्याशतानि तु ।
एकस्मिन्नेव[1] दिने व्य-वाहयत् पितुराज्ञया ॥ ४ ॥[2]
अचलक[3]-धर-पूरण-वसु-वैश्रमणाख्या-ऽभिचन्द्रनामानः ।
षडमी सुहृदोऽभूवन्, महाबलास्यस्य शैशवतः ॥ ५ ॥[4]
अन्येद्युः स बलो राजा, वीतशोकापुरो[5] बहिः ।
ऐशान्या'मिन्द्रकुब्जा'ख्यो-द्याने मुनिसमीपतः ॥ ६ ॥[6]
धर्मं श्रुत्वा सवैराग्यो, राज्ये न्यस्य महाबलम् ।
ऊरीकृत्य परिव्रज्यां, तपस्तप्त्वा शिवं ययौ ॥ ७ ॥–युग्मम्
महाबलोऽपि तैर्मित्रैः, सह राज्यं चिरं व्यधात् ।
ततो व्रतोत्कः स्वे राज्ये, बलभद्रं सुतं न्यधात् ॥ ८ ॥
स्वे[7] स्वे राज्ये सुतं स्वं स्वं, चक्रुस्ते सुहृदोऽपि षट् ।
वरधर्मगुरोरन्ते, सप्तापि प्राव्रजन्नथ ॥ ९ ॥
यदेकः कुरुते कार्य-मपरैरपि तत् तपः ।
इति प्रतिज्ञा सप्ताना-मपि तेषामभून्मिथः ॥ १० ॥
शिरस्यथोदरेऽप्यार्त्ति-र्नाद्य क्षुदिति मायया ।
वञ्चयन्नधिकं तेभ्य-स्तपस्तेपे महाबलः ॥ ११ ॥
बबन्ध मायया कुर्व-स्तपः स्त्रीवेदकर्म सः ।
तीर्थकृन्नामकर्मार्हद्-भक्त्यादिस्थानकैरपि ॥ १२ ॥
कृत्वा चतुरशीत्यब्द-सहस्रीं दुस्तपं तपः ।
विमाने 'वैजयन्ता'ह्वे, सुराः सप्तापि जज्ञिरे ॥ १३ ॥
'जम्बू'द्वीपेऽत्र 'भरते, क्षेत्रेऽस्ति 'मिथिला' पुरी ।
तत्र कुम्भोऽभवद् भूपः, प्रिया तस्य प्रभावती ॥ १४ ॥
फाल्गुने शुक्लचतुर्थ्या-मश्विनीं शशिनि श्रिते ।
'वैजयन्ता'त् त्रयस्त्रिंशत्-सागरायुःक्षये च्युतः ॥ १५ ॥
श्रितः कुक्षिं प्रभावत्या, जीवो महाबलस्य सः ।
मार्गेऽथ शुक्लैकादश्या-मश्विन्यां मेषगे विधौ ॥ १६ ॥

---

१ क–'चैक०' । २ अनुष्टुप् । ३ 'अचल-धरण-पूरण-' इति प्रतिभाति । ४ आर्या ।
५ क–'पुरीबहिः' । ६ अतः परं ६८तमपर्यन्तानां छन्दोऽ'नुष्टुप्' । ७ क–'स्वस्वराज्ये' ।

कन्यां देवी प्रसूते स, [1]नीलाभां कुम्भलाञ्छनाम् ।
एकोनविंशं तीर्थेश–'मिक्ष्वाकु'कुलभूषणम् ॥ १७ ॥
गर्भस्थायामत्र मातु–र्माल्यतल्पस्य दोहदः ।
आसीत् तन्मल्लिरित्यस्या, नाम कुम्भनृपो व्यधात् ॥ १८ ॥
'भरते'ऽत्रैव 'साकेत–नगरे' 'वैजयन्त'तः ।
जीवोऽचलस्य स च्युत्वा, प्रतिबुद्धिनृपोऽजनि ॥ १९ ॥
इतो धरणजीवोऽपि, 'वैजयन्ता'त् परिच्युतः ।
'चम्पा'यां पुरि भूपाल–श्चन्द्रच्छायाभिधोऽभवत् ॥ २० ॥
इतः पूरणजीवोऽपि, 'वैजयन्ता'त् परिच्युतः ।
'श्रावस्त्यां' पुरि सञ्जज्ञे, रुक्मिनामा नरेश्वरः ॥ २१ ॥
स च्युतो वसुजीवोऽपि, 'वैजयन्त'विमानतः ।
जज्ञे 'वाराणसी'पुर्यां, शङ्खो नाम क्षितीश्वरः ॥ २२ ॥
जीवो [2]वैश्रमणस्यापि, स च्युतो 'वैजयन्त'तः ।
अदीनशत्रुनामाऽऽसीन्–नरेन्द्रो 'हस्तिनापुरे' ॥ २३ ॥
अभिचन्द्रस्य जीवोऽपि, 'वैजयन्त'विमानतः ।
च्युत्वा 'काम्पिल्य'नगरे, जितशत्रुर्नृपोऽजनि ॥ २४ ॥
[3]मल्लिरूपस्वरूपं ते, मत्वा षडपि पार्थिवाः ।
स्वदूतान् प्रेषयामासु–रुत्कास्तत्प्रार्थनाकृते ॥ २५ ॥
परिणेतुं न मत्कन्यां, देवानामपि योग्यता ।
क्व ते [4]नृपशवस्त्वेवं, ते कुम्भेन निराकृताः ॥ २६ ॥
कुम्भभूपपराभूता, दूतास्ते स्वस्वभूभुजे ।
तमुदन्तमवोचन्त, कोपसन्तमसोदयम् ॥ २७ ॥
तेऽसमानापमानार्त्ति–भृतः सम्भूय भूभृतः ।
सैन्यैर्दत्तासुहृद्दैन्यैः, प्रचेलु'र्मिथिलां' प्रति ॥ २८ ॥
मल्लिः प्राग्जन्ममित्राणां, षण्णामेषां क्षमाभुजाम् ।
बोधं [5]स्वोपज्ञमज्ञानां, विज्ञायावधिना व्यधात् ॥ २९ ॥

---

१ क–'कुम्भाभां नीललाञ्छनाम्' । २ क–'वैश्रवण०' । ३ क–'मल्लीरूपं स्वरूपं तं' । ४ मनुष्यरूपेण मृगाः । ५ क–'पक्कमज्ञानां' ।

‘अशोका’वनिकान्तःस्थ–सौधापवरकान्तरे ।
सौवर्णीं प्रतिमां [1]स्वस्य, रत्नपीठ[2]प्रतिष्ठिताम् ॥ ३० ॥
यथास्थानार्हविन्यस्त–नानावर्णमणिव्रजाम् ।
तालुच्छिद्रान्वितां तत्र, हेमपद्मपिधानिकाम् ॥ ३१ ॥
तत्र मूर्त्त्यपवरके, पुरो भित्तिगतानि षट् ।
स जालककपाटानि, मल्लिर्द्वाराण्यकारयत् ॥ ३२ ॥
ह्रस्वापवरकास्तेषां, द्वाराणां पुरतश्च षट् ।
सैकं द्वारं प्रतिमायाः, पृष्ठभित्तौ न्यवेशयत् ॥ ३३ ॥
प्रतिमायास्तालुछिद्रे, सा सर्वाहारपिण्डिकाम् ।
क्षिप्त्वा पिधाय च स्वर्णा–म्भोजेन बुभुजेऽन्वहम् ॥ ३४ ॥
इतश्च युगपत् षड्भि–स्तैररोधि विरोधिभिः ।
अन्तःस्थे कुम्भपृथ्वीशे, परितो ‘मिथिला’ पुरी ।
पूरोधात् कैरपि दिनै–रुद्विग्नं कुम्भभूपतिम् ।
मल्लिरेत्य [3]जगादेदं, खेदभूस्तात! मा स्म भूः ॥ ३५ ॥
तुभ्यं स्वपुत्रीं दास्यामी–त्युक्त्वा षडपि तान् नृपाः
आनयैकाकिनः सायं, प्रत्येकं गूढपूरुषैः ॥ ३७ ॥
क्रमेण षट्सु मन्मूर्त्तेः, पुरोऽपवरकेषु ते ।
अविज्ञाता मिथः सायं, विशन्तु श्वेतवाससः ॥ ३८ ॥
तथैवाकृत पृथ्वीन्दु–रथायातं तथैव तैः ।
कपाटजालकैर्मल्लि–मूर्त्तिं [4]मल्लिधियैक्ष्यत ॥ ३९ ॥
संसार[5]सारसारङ्ग–नेत्रा प्रापि मयेत्यमी ।
पूर्वजन्मानुरागेण, दध्युः सर्वे पृथग् हृदि ॥ ४० ॥
तत्रागात् प्रतिमापृष्ठ–[6]द्वारा मल्लिरिह क्षणे ।
मूर्त्तिच्छन्नाऽपनिन्ये च, तात्वावरणवारिजम् ॥ ४१ ॥
प्राक्षिप्ताहारपिण्डानां, कुथितानामभूद् बहिः ।
दुर्गन्धोऽपरदुर्गन्ध–गर्वसर्वस्वतस्करः ॥ ४२ ॥

१ क–‘न्यस’। २ क–‘रत्नपीठमणि०’। ३ ख–‘जगादेवं’। ४ क–‘मल्लीधि०’।
५ ख–‘सारं सारङ्ग’। ६ क–‘द्वारे’।

पिधाय विधुरा नासां, वाससाऽवनिवासवाः ।
सद्यः पराङ्मुखीभूताः, पातकादिव सात्त्विकाः[1] ॥ ४३ ॥
ततोऽभिदधिरे मल्लि–स्वामिन्याऽमी नृपा इति ।
भो भो नानामणिस्यूता, प्रतिमा हेममय्यसौ ॥ ४४ ॥
ईदृशोऽत्राऽपि गन्धोऽय–माहारक्षेपतोऽन्वहम् ।
किं कथ्यं तस्य देहस्य, यः शुक्रासृक्समुद्भवः ? ॥ ४५ ॥
अत्र तादृक् समुत्पत्तौ, गर्भे विण्मूत्रवासिनि ।
स्वयं पुरीषकोष्ठे च, का स्त्रीवपुषि वो रतिः ? ॥ ४६ ॥
यन्मया सह युष्माभि–स्तृतीयेऽस्माद् भवाद् भवे ।
तप्तं तपोऽद्भुतं तत् किं, तन्न स्मरत बालिशाः ? ॥ ४७ ॥
इति मल्लिवचः श्रुत्वा, तेषां [2]विमर्शतां क्षणात् ।
सञ्जातं जातिस्मरणं, षण्णामपि महीभुजाम् ॥ ४८ ॥
ते मल्लिमब्रुवन्नेवं, साधु साधु प्रबोधिताः ।
स्मृतमस्माभिरेतद् यत्, सप्तापि सुहृदो वयम् ॥ ४९ ॥
कृत्यं दिशेति तैरुक्ते, स्वीकृत्यं समये व्रतम् ।
मल्ल्येत्युक्त्वा ययुः [3]स्वं स्वं, पुरं षडपि पार्थिवाः ॥ ५० ॥
पञ्चविंशतिचापोच्चा, जन्मतोऽब्दशते गते ।
'जयन्तीं' शिबिकां मल्लि–रारूढो निर्ययौ पुरः ॥ ५१ ॥
पूर्वाह्णे मार्गशुक्लैका–दश्यामिन्दौ श्रितेऽश्विनीम् ।
अभ्यन्तरपरीवारे, समं स्त्रीणां त्रिभिः शतैः ॥ ५२ ॥
तथा परिच्छदे बाह्ये, नरेन्द्राणां त्रिभिः शतैः ।
'सहस्राम्रवणे' मल्लिः, प्राव्रजद् विहिताष्टमा ॥ ५३ ॥
अत्रैवाहन्यशोकद्रु–तलस्थस्याष्टमस्पृशः ।
श्रीमल्लिस्वामिनो जज्ञे, पूर्वाह्णे एव केवलम् ॥ ५४ ॥
धनुःशतत्रयीतुङ्गः, श्रीमल्लेश्चैत्यपादपः ।
तथा भिषक्प्रभृतयो–ऽष्टाविंशतिर्गणेश्वराः ॥ ५५ ॥

---

१ ख–'तात्त्विकाः' ।　२ क–'विमृशतां' ।　३ क–'स्वस्वपुरं' ।

तेऽपि प्राग्जन्मसुहृदः, षडपि प्राव्रजन् नृपाः ।
जज्ञिरे श्रावकाः कुम्भ-राजप्रभृतयः प्रभोः ॥ ५६ ॥
द्वितीये दिवसे मल्लि-प्रभोस्तत्रैव कानने ।
पारणं परमान्नेन, विश्वसेननृपादभूत् ॥ ५७ ॥
मल्लितीर्थेऽभवद् यक्षः, कुबेराख्यश्चतुर्मुखः ।
इन्द्रायुधद्युतिर्दन्ति[1]-वाहनश्चतुरो दधत् ॥ ५८ ॥
वरदं पर्शु-शूलाङ्का-वभीदं दक्षिणान् भुजान् ।
वामान् बीजपूर-शक्ति-मुद्गराङ्का-ऽक्षसूत्रिणः ॥ ५९ ॥
वरदं साक्षसूत्रं च, दक्षिणौ बिभ्रती भुजौ ।
वामौ पुनर्मातुलिङ्ग-शक्त्यङ्कौ कमलासना ॥ ६० ॥
वैरोट्या राजपट्टाभा, मल्लेः शासनदे[2]व्यभूत् ।
परीवारेऽस्य यतयः, सहस्रा [3]द्विगविंशतिः ॥ ६१ ॥
व्रतिन्यः पञ्चपञ्चाशत्, सहस्राः सर्वपूर्विणः ।
षट् शतान्यष्टषष्टिश्चा-वधिज्ञानविराजिनः ॥ ६२ ॥
द्वे सहस्रे शते द्वे च, मनःपर्य[4]यशालिनः ।
सपञ्चाशत्सप्तदश-शती केवलशालिनः ॥ ६३ ॥
द्वे सहस्रे शतद्वन्द्वं, जातवैक्रियलब्धयः ।
त्रिसहस्री शतेनोना, वादिनां तु चतुर्दश ॥ ६४ ॥
शतानि श्रावका लक्षं, सत्र्यशीतिसहस्रकम् ।
श्राविकास्त्रीणि लक्षाणि, सहस्राः सप्ततिस्तथा ॥ ६५ ॥
व्रताद् वर्षशतोनेषु, पञ्चपञ्चाशति प्रभुः ।
यातेष्वब्दसहस्रेषु, प्राप्तः 'सम्मेत'पर्वते ॥ ६६ ॥
सार्द्धं साध्वीनां साधूनां, पञ्चभिः पञ्चभिः शतैः ।
फाल्गुने शुक्लद्वादश्यां, भरणीधिष्ण्यगे विधौ ॥ ६७ ॥
विहितानशनो मास-मूर्ध्वसंस्थानसं[5]स्थितः ।
श्रीमल्लिनाथः पूर्वाह्णे, परं पदमवाप्तवान् ॥ ६८ ॥—विशेषकम्

१ क-'श्चतुर्दन्ति-' । २ क-'देवता' । ३ चत्वारिंशत् । ४ ख-'यिणः पुनः' । ५ क-'सुस्थितः' ।

पञ्चपञ्चाशत्सहस्र—वर्षायुररनिर्वृतेः ।
वर्षकोटिसहस्रेऽति—क्रान्ते मल्लिर्ययौ शिवम् ॥ ६९ ॥

परममहिमज्योतिर्द्योती सशब्दगुणोऽन्तर-
स्फुरितभुवनो मल्लिस्वामी श्रियेऽस्तु नभोनिभः ।
शमयतितमां यत्र ज्ञानांशुमान् सततोदित-
त्रिभुवनजनस्वान्तभ्रान्तं तमोभरडम्बरम् ॥ ७० ॥[1]

ग्रन्थाग्रं ७५ ।

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरित एकोनविंशं श्रीमन्मल्लिनाथजिनचरितं समाप्तम् ॥ १९ ॥

## अथ श्रीमुनिसुव्रतचरित्रम् ॥ २० ॥

श्रीसुव्रतस्य पदयोर्नखरश्मिदण्डाः
सिद्धिं दिशन्तु दश वो दशसाधुधर्मैः ।
स्तम्भा इव प्रधनकेलिकृतप्रतिज्ञै-
रारोपिताः प्रबलकर्मरिपून् प्रहर्तुम् ॥ १ ॥[2]

'जम्बूद्वीपे' द्वीपेऽत्रैव, 'विदेहे'ष्वपरेषु च ।
विजये 'भरता'ह्वेऽस्ति, 'चम्पे'ति प्रवरा पुरी ॥ २ ॥[3]

आसीत् तस्यां सुरश्रेष्ठो, नृपः काले धृतव्रतः ।
[4]सुनन्दनमुनेः पार्श्वे, तस्याऽभूत् 'प्राणते' सुरः ॥ ३ ॥

च्युत्वाऽतो 'हरि'वंशेऽर्ह—न्नयमासीद् यतस्ततः ।
उत्पत्तिस्तस्य वंशस्य, प्रागियं परिकीर्त्यते ॥ ४ ॥

'जम्बू'द्वीपेऽत्र 'भरते', 'कौशाम्ब्यां' सुमुखो नृपः ।
बाह्यारामेऽचलद् रन्तुं, हस्त्यारूढो मधूत्सवे ॥ ५ ॥

पत्नीं वीरकुविन्दस्य, वनमालाह्वयां पथि ।
रूपे निरुपमां प्रेक्ष्य, नृपः कामातुरोऽभवत् ॥ ६ ॥

---

१ हरिणी ।　२ वसन्त० ।　३ अतः परं प्रान्तिमं पद्यं विहाय सर्वेषां छन्दोऽनुष्टुप् ।
४ क—'स नन्दन०' ।

तद्वियोगातुरं मत्वा, सुमतिः[1] सचिवो नृपम् ।
आत्रेय्या प्रव्राजिकया[2]-ऽयोजयद् वनमालया ॥ ७ ॥
राज्ञा कृताऽनुरक्तेन, रक्ता साऽन्तःपुरेश्वरी ।
वीरः सोऽपि कुविन्दस्तद्-विरहे ग्रहिलोऽभवत् ॥ ८ ॥
हा प्रिये! वनमाले! त्वं, क्व गता देहि दर्शनम् ।
इत्यादि [3]विलपन् बालै-रोलोत्तालै(?)र्वृतोऽभ्रमत् ॥ ९ ॥
अन्यदा प्रलपन् राज-मन्दिराजिरमाययौ ।
तं तथार्त्तं धराधीशो, वनमालाऽप्यलोकत ॥ १० ॥
तद्वीक्षणाद् विषादार्त्तौ, स्वं निन्दन्तौ स्वकर्मणा ।
तौ व्रताकाङ्क्षिणौ दग्धौ, विद्युत्पातादिह क्षणे ॥ ११ ॥
शुभध्यानाद् विपन्नौ तौ, मिथः स्नेहलमानसौ ।
'हरिवर्षा'ह्वये वर्षे, जज्ञाते युग्मधर्मिणौ ॥ १२ ॥
हरिश्च हरिणी चेति, नाम पित्रा तयोः कृतम् ।
कल्पद्रुपूर्णसर्वेच्छौ, सुखिनौ[5] तत्र तस्थतुः ॥ १३ ॥
इतो वीरकुविन्दोऽपि, चक्रे बालतपोऽद्भुतम् ।
मृत्वा 'सौधर्म'कल्पेऽसौ, सुरः किल्बिषिकोऽभवत् ॥ १४ ॥
स बुद्ध्वाऽवधिना पूर्व-भवं तौ हरिणी-हरी ।
दारापहारदुःखं च, जज्ञे रोषारुणेक्षणः ॥ १५ ॥
स ययौ 'हरि'वर्षाय, संहर्तुं हरिणी-हरी ।
द[6]ध्यौ च युग्मिनां न स्या-दसम्पूर्णायुषां मृतिः ॥ १६ ॥
मृतानां च ध्रुवा स्वर्ग-गतिः क्षेत्रप्रभावतः ।
तत्र क्षेत्रे नयाम्येतौ, ततः पूर्वभवद्विषौ ॥ १७ ॥
यत्राकालेऽपि मृत्युः स्यान्-मृतानां यत्र दुर्गतिः ।
ध्यात्वेत्युत्पाटयामास, स तौ कल्पद्रुमैः स[7]मम् ॥ १८ ॥
तावत्र 'भरत'क्षेत्रे, पुरीं 'चम्पा'मुपानयत् ।
तदा च चन्द्रकीर्त्त्याख्य-'श्चम्पे'शः पञ्चतां गतः ॥ १९ ॥

---

१ क–'सुमन्तः' । २ क–'प्रावृजिकया' । ३ ख–'प्रलपन्' । ४ क–'रूपिणौ' । ५ क–'सुखं तौ' । ६ क–'स दध्यौ युग्मिनां' । ७ ख–'सह' ।

तस्यापुत्रस्य राज्यार्थं, प्रकृतीस्तेन दुःखिताः ।
अन्तरिक्षान्तरस्थेन, प्रत्यक्षेण बभाषिरे ॥ २० ॥
भो भो सामन्ताः! सचिवा!, युष्मत्पुण्यैरिहेरितः ।
'हरिवर्षा'द्धरिं नाम्ना, राज्यार्हमम्[1]मानयम् ॥ २१ ॥
जायाऽस्य सहजा युग्म–रूपिणी हरिणीत्यसौ ।
एतेऽप्यानिन्यिरे कल्प–द्रुमा भोगार्थमेतयोः ॥ २२ ॥
अयं भवतु वो राजा, [2]प्रतापी रिपुतापनः ।
मांसमिश्रा सुरा देया–ऽनयोः कल्पद्रुजैः [3]फलैः ॥ २३ ॥
एवमस्त्विवति तैरुक्ते, तेभ्योऽदान्मिथुनं सुरः ।
चक्रे स्वशक्त्या स्वल्पायुः, शतचापोन्नतं च तत् ॥ २४ ॥
ततो राज्येऽभिषिषिचुः, सामन्तसचिवा हरिम् ।
नरकान्ते कृते राज्ये, तस्य हर्षी ययौ सुरः ॥ २५ ॥
तीर्थे शीतलनाथस्य, नृपो हरिरसावभूत् ।
'हरि'वंशस्ततो विश्वे, [4]यातः ख्यातिं तदाख्यया ॥ २६ ॥
पुत्रः पृथ्वीपतिर्नाम्ना, हरिणीगर्भजो हरेः ।
ततः पृथ्वीपतिरभूत्, तत्पुत्रोऽथ महागिरिः ॥ २७ ॥
ततो हिमगिरिस्तस्या–दासीद् वसुगिरिर्नृपः ।
अनेकशोऽभवन्नेवं, 'हरि'वंशे नरेश्वराः ॥ २८ ॥
इति हरिवंशोत्पत्तिः ।
इतश्चात्रैव 'भरते', देशे 'मगध'नामनि ।
पुरे '[5]राजगृहे' राजा, सुमित्रो 'हरि'वंशजः ॥ २९ ॥
तस्य पद्मावती पत्नी, तस्याः कुक्षाववातरत् ।
सोऽथ श्रावणराकायां, शशाङ्के श्रवणाश्रिते ॥ ३० ॥
सुरश्रेष्ठनृपजीव–श्च्युत्वा 'प्राणत'कल्पतः ।
ततो ज्येष्ठस्य कृष्णाया–मष्टम्यां श्रवणाख्यभे ॥ ३१ ॥

---

१ क–'राज्यार्थमनुमानय' । २ क–'प्रतीपरिपु०' । ३ क–'समम्' । ४ ख–'ख्यातिं यातस्तदा०' । ५ ख–'राज्यगृहे' ।

इन्दौ मकरगे पद्मा–वती सूते स नन्दनम् ।
तीर्थेशं विंशतितमं, श्यामलं कूर्मलाञ्छनम् ॥ ३२ ॥–युग्मम्
मुनिवत् सुव्रता जाता, माताऽस्मिन् गर्भमागते ।
मुनिसुव्रत इत्यस्य, ततो नाम पिताऽकरोत् ॥ ३३ ॥
यौवने विंशतिधनु–रुन्नतो राजकन्यकाः ।
प्रभावतीप्रभृतिका, जगत्प्रभुरुपायत ॥ ३४ ॥
प्रभावत्यां प्रभोः पुत्रः, सुव्रतोऽभूत् ततो विभुः ।
राजा वर्षसहस्रेषु, गतेष्वर्द्धाऽष्टमेष्वभूत् ॥ ३५ ॥
राज्यं वर्षसहस्राणि, चक्रे पञ्चदश प्रभुः ।
नियोज्य सुव्रतं पुत्रं, राज्ये 'राजगृहा'त् ततः ॥ ३६ ॥
निश्चक्राम समारूढः, शिबिका'मपराजिता'म् ।
ययौ 'नीलगुहा'नामो–द्यानं श्रीमुनिसुव्रतः ॥ ३७ ॥–युग्मम्
फाल्गुने शुक्लद्वादश्यां, श्रवणर्क्षे परेऽहनि ।
स्वामी राज्ञां[1] सहस्रेण, कृतषष्ठोऽग्रहीद् व्रतम् ॥ ३८ ॥
पुरे 'राजगृहे'[2] स्वामी, ब्रह्मदत्तनृपौकसि ।
द्वितीये दिवसे चक्रे, परमान्नेन पारणम् ॥ ३९ ॥
छद्मस्थो व्यहरत् पृथ्वीं, मासानेकादश प्रभुः ।
पुन'[3]र्नीलगुहो'द्याने, दीक्षास्थाने समागतः ॥ ४० ॥
तत्र प्रतिमयाऽधस्ता–च्चम्पकस्य तरोः स्थितः ।
फाल्गुने कृष्णद्वादश्यां, श्रवणं शशिनि श्रिते ॥ ४१ ॥
कृतषष्ठतपाः प्राप, पूर्वाह्ने एव केवलम् ।
चैत्यद्रुः सचत्वारिंशद्–धनुः शतयुगः प्रभोः ॥ ४२ ॥
मातुलिङ्ग-गदा-बाण–शक्त्यङ्कान् दक्षिणान् भुजान् ।
वामान् नकुला-ऽक्ष-धनुः–पर्शुयुक्तान् वहन् सितः ॥ ४३ ॥
मुनिसुव्रततीर्थेऽष्ट–बाहुर्वृषभवाहनः ।
[6]वारुणाख्योऽभवद् यक्ष–स्त्रिनेत्रश्चतुराननः ॥ ४४ ॥–युग्मम्

१ क–'राजसहस्रेण' । २ क–'राजपुरे' । ३ क–'मुनिर्नील०' । ४ ख–'केवलं प्रभुः' । ५ क–'तीर्थे मुनेः सुव्रतस्याष्ट–' । ६ क–'वरुणाक्षो' ।

वरदं साक्षसूत्रं च, बिभ्रती दक्षिणौ भुजौ[1] ।
समातुलिङ्ग-शूलाङ्कौ, वामौ भद्रासनस्थिता ॥ ४५ ॥
गौराङ्गी नरदत्ताऽऽख्या, तथा शासनदेवता ।
प्रभोरष्टादशाभूव-निन्द्राद्यास्तु गणेश्वराः ॥ ४६ ॥
विहरन् समवासार्षीद्, 'भृगुकच्छ'पुरे प्रभुः ।
जितशत्रुर्नृपो नन्तुं, तत्रारुह्याश्वमाययौ ॥ ४७ ॥
मुनिसुव्रततीर्थेश-देशनां क्लेशनाशिनीम् ।
रोमाञ्चनिचितो राजा, राजाश्वोऽप्यशृणोन्मुदा ॥ ४८ ॥
गणभृद्देशनाप्रान्ते, पप्रच्छेति जगद्गुरुम् ।
अस्मिन् समवसरणे, प्रतिबुद्धोऽद्य कः प्रभो! ॥ ४९ ॥
स्वाम्यप्युवाच नो बोधं, कोऽप्यद्य प्रत्यपद्यत ।
एकं विना जात्यमश्वं, जितशत्रुनरेशितुः ॥ ५० ॥
जितशत्रुनृपोऽपृच्छद्, विस्मितस्त्रिजगत्पतिम् ।
विश्वेश! कोऽयमश्वोऽत्र, धर्मं यः प्रतिपन्नवान्? ॥ ५१ ॥
स्वाम्याह 'पद्मिनीखण्ड'-पत्तने श्रावकोत्तमः ।
जिनधर्माभिधो जैन-धर्मकर्मदृढोऽभवत् ॥ ५२ ॥
तस्य सागरदत्ताख्यो, मित्रं तत्पत्तनाग्रणीः ।
ययौ स नित्यं चैत्येषु, तद्युतो भद्रकत्वतः ॥ ५३ ॥
साधुभ्य इति सोऽश्रौषीत्, कारयत्यार्हतानि यः ।
बिम्बानि स भवेऽन्यत्र, धर्मं भवभिदं श्रयेत् ॥ ५४ ॥
इति सागरदत्तोऽपि, श्रुत्वा भद्रकभावतः ।
कारयित्वाऽर्हतीं हेम-प्रतिमां प्रत्यतिष्ठिपत् ॥ ५५ ॥
सम्यक्त्वमनवाप्यैव, स्वभावादेव [2]दानवान् ।
धनार्जनमहातृष्णो, मृत्वाऽश्वोऽयं तवाभवत् ॥ ५६ ॥
एतद्बोधार्थमायाता, वयमत्र महीपते! ।
प्राग्जन्मकृतार्हद्बिम्ब-प्रभावाद् बोधमाप्तवान् ॥ ५७ ॥[3]

---

१ ख-'दक्षिणौ बिभ्रती' । २ दानशीलः । ३ इदमनन्तरं च पद्यं नोपलभ्येते क-प्रतौ ।

ख्याते श्रीसुव्रतेनैवं, जितशत्रुः सविस्मयः ।
अश्वमुक्त्वा क्षमस्वेति, तं चक्रे स्वैरचारिणम् ॥ ५८ ॥
ततः प्रभृत्यभू'दश्वा—वबोध'मिति विश्रुतम् ।
'भृगुकच्छ'महातीर्थं, त्रिजगज्जनपावनम् ॥ ५९ ॥
श्रीसुव्रतजिनेशोऽपि, विश्वोपकृतिकर्मठः ।
भगवान् समवासार्षीद्, विहरन् 'हस्तिनापुरे'[1] ॥ ६० ॥
तस्मिन्नासीत् पुरे राजा, जितशत्रुरिति श्रुतः ।
तथा वणिक् सहस्रेशः, कार्त्तिकः श्रावकोत्तमः ॥ ६१ ॥
स श्रेष्ठी दृढसम्यक्त्वः, पाखण्डिषु पराङ्मुखः ।
परिव्राजकस्यैकस्य, मासोपवासपारणे ॥ ६२ ॥
जितशत्रुनृपेणैष, कारितः परिवेषणम् ।
स तस्मादेव निर्वेदात्, श्रीसुव्रतपदान्तिके ॥ ६३ ॥
समं वणिक्सहस्रेण, प्रव्रज्यामाददे तदा ।
स तपो द्वादशाब्दानि, द्वादशाङ्गधरोऽकरोत् ॥ ६४ ॥—विशेषकम्
शक्रः 'सौधर्म'कल्पस्य, विपद्याजनि कार्त्तिकः ।
परिव्राड् वाहनं जज्ञे, शक्रस्यैरावतः पुनः ॥ ६५ ॥
सहस्राः साधवस्त्रिंशत्, ते तु पञ्चाशदार्यिकाः ।
शतानि पञ्च तु चतु—र्दशपूर्वविचक्षणाः ॥ ६६ ॥
सहस्रमष्टशत्यग्र—मवधिज्ञानशालिनः ।
[2]सहस्रं पञ्चशती च, मनःपर्ययसंयुताः ॥ ६७ ॥
सहस्रमष्टशती च, केवलज्ञानशालिनः[3] ।
सहस्रद्वयसङ्ख्यास्तु, [4]लब्धवैक्रियलब्धयः ॥ ६८ ॥
सहस्रं शतयुग्मं च, सञ्जातवादलब्धयः ।
श्रावका लक्षमेकं तु, सहस्रा द्व्यग्रसप्ततिः[5] ॥ ६९ ॥
श्राविकास्त्रीणि लक्षाणि, सार्द्धानीति परिच्छदः ।
मुनिसुव्रतनाथस्य, पृथ्व्यां विहरतोऽभवत् ॥ ७० ॥

---

१ क—'हस्तिनापुरम्' । २ क—'सहस्रमष्टशती च, मनःपर्यायशालिनः' । ३ ख—'शोभिनः' । ४ ख—'सिद्धवैक्रिय०' । ५ क—'विंशतिः' ।

मुनिसुव्रतनाथस्य, केवलज्ञानशालिनः ।
एकादशमासहीना-ऽर्द्धाष्टमाब्दसहस्र्यगात् ॥ ७१ ॥
ततो मुनिसहस्रेण, समं 'सम्मेत'पर्वते ।
ज्येष्ठे नवम्यां कृष्णायां, शशिनि श्रवणाश्रये ॥ ७२ ॥
पूर्वाह्ण ऊर्ध्वसंस्थानो, मासं सानशनः प्रभुः[1] ।
मुनिसुव्रततीर्थेशः, पदं प्रापदनश्वरम् ॥ ७३ ॥-युग्मम्
सार्द्धाः सप्ताब्दसहस्राः[2], पृथक् कौमार-दीक्षयोः ।
राज्ये पञ्चदशेत्यायुः[3]-स्त्रिंशच्छ्रीमुनिसुव्रते ॥ ७४ ॥
मुनिसुव्रतनिर्वाणं, श्रीमल्लिप्रभुनिर्वृतेः ।
वर्षाणां लक्षेषु चतुः-पञ्चाशति गतेष्वभूत् ॥ ७५ ॥
येनायोज्यत षष्टियोजनमतिक्रम्य 'प्रतिष्ठान'तो-
ऽध्वानं प्राप्य दिनैस्त्रिभि'र्भृगुपुरं'[4] राज्ञस्तुरङ्गः स्वयम् ।
शुद्धश्रावकधर्मवर्त्मनि कृपानिष्ठेन षष्टिव्रता-
तीचारव्यतिलङ्घनाय स सतां श्रीसुव्रतोऽस्तु श्रिये ॥ ७६ ॥[5]

ग्रन्थाग्रं ॥ ८३ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-संक्षिप्तचरिते विंशतितमं श्रीमन्मुनिसुव्रतजिनचरितं समाप्तम् ॥ २० ॥

## अथ श्रीनमिनाथचरितम् ॥ २१ ॥

व्यक्तं मुक्तावलयललितो वारिलेशापदेशा-[6]
ज्जन्मस्नात्रे त्रिदशवनितासेवितोपान्तदेशः ।
'मेरो'र्मूर्ध्नि भ्रमरहितया सौमनस्यश्रिया वो-
ऽनल्पः कल्पद्रुम इव नमिर्यच्छताद् वाञ्छितानि ॥ १ ॥[7]
'जम्बू'द्वीपे[8] प्रत्यग्-'विदेहे' विजयेऽस्ति पूर्'भरत'सञ्ज्ञे ।
'कौशाम्बी'ति विशाम्पति-रिति सिद्धार्थाभिधानोऽभूत् ॥ २ ॥[9]

---

१ क-'पुनः' । २ क-'सहस्रापृथक्' । ३ क-'त्यायुर्विंशतश्री' । ४ ख-'भृगुपुरे' । ५ शार्दूल० । ६ क-'लेशोपदेशा०' । ७ मन्दाक्रान्ता । ८ क-'जम्बूद्वीपेऽत्र भरत-प्रत्यग्०' । ९ आर्या ।

सुदर्शनमुनेः पार्श्वे, प्राप्तदीक्षोऽद्भुतं तपः ।
तप्त्वा मृत्वा विमानेऽसौ, सुरोऽभू'दपराजिते' ॥ ३ ॥[1]
'जम्बू'द्वीपेऽत्र 'भरते,' क्षेत्रेऽस्ति 'मिथिले'ति पूः ।
तत्रासीद् विजयो राजा, जज्ञे वप्रेति तत्प्रिया ॥ ४ ॥
आश्विनस्य पूर्णिमाया-मश्विनीं शशिनि श्रिते ।
त्रयस्त्रिंशत्सागरायुः-क्षये च्युत्वा'ऽपराजिता'त् ॥ ५ ॥
स सिद्धार्थनृपजीवो, वप्राकुक्षाववातरत् ।
सा सूते स्म सुतं नीलोत्-पलाङ्कं कनकद्युतिम् ॥ ६ ॥
तीर्थेशमेकविंशति-तम'मिक्ष्वाकु'वंशजम् ।
श्रावणेऽष्टम्यां कृष्णाया-मश्विन्यां मेषगे विधौ ॥ ७ ॥
रिपुभि'र्मिथिला' रुद्धा, पुरी गर्भगते प्रभौ[2] ।
वप्रादेवी क्षणात् तत्रा-रोहत् प्रासादमूर्द्धनि ॥ ८ ॥
दृष्ट्वा देवीं च तद्गर्भ-प्रभावाद् विजयं नृपम् ।
नेमुर्यद्वैरिणस्तेन, नमिर्नाम प्रभोः कृतम् ॥ ९ ॥
सार्द्धेऽथ जन्मतो वर्ष-सहस्रद्वितये गते ।
युवा पञ्चदशधनु-स्तुङ्गो राज्येऽभवत् प्रभुः ॥ १० ॥
पञ्च वर्षसहस्राणि, राज्यं प्रभुरपालयत् ।
सुप्रभं नाम पुत्रं स्वं, ततो राज्ये न्यवेशयत् ॥ ११ ॥
शिबिकां 'देवकुर्वा'ख्या-मारूढो निर्ययौ पुरः ।
कृतषष्ठो गतः[3] स्वामी, 'सहस्राम्रवणे' वने ॥ १२ ॥
आषाढे कृष्णनवम्या-मश्विन्यां चरमेऽहनि ।
सार्द्धं नृपसहस्रेण, प्रव्रज्यामग्रहीत् प्रभुः ॥ १३ ॥
पुरे 'वीरपुरे' दत्त-मेदिनीपतिमन्दिरे ।
द्वितीये दिवसे स्वामी, क्षैरेय्या पारणं व्यधात् ॥ १४ ॥
नव मासान् विहृत्योर्वीं, 'सहस्राम्रवणे' पुनः ।
बकुलस्य तरोर्मूले, तस्थौ प्रतिमया प्रभुः ॥ १५ ॥

---

१ अतः परं ३१तमपर्यन्तानां छन्दो'ऽनुष्टुप्' । २ ख-'विभौ' । ३ क-'ऽग्रहीत् स्वामी' ।

मार्गस्य शुक्लैकादश्या–मश्विनीं शशिनि श्रिते ।
पूर्वाह्णे केवलं प्राप, कृतषष्ठो नमिः प्रभुः ॥ १६ ॥
चैत्यद्रुरशीत्यधिक–शतचापोन्नतः प्रभोः ।
कुम्भादयो गणभृत–स्तथा सप्तदशाभवन् ॥ १७ ॥
नमितीर्थे भ्रूकुट्याख्यो, यक्षस्त्र्यक्षश्चतुर्मुखः ।
वृषस्थः स्वर्णभो[1] जज्ञे, चतुरो दक्षिणान् भुजान् ॥ १८ ॥
बिभ्रन्मातुलिङ्ग-शक्ति–मुद्गराङ्का-ऽभयप्रदान् ।
वामान् नकुल-परशु–वज्रा-ऽक्षसूत्रसंयुतान् ॥ १९ ॥–युग्मम्
गान्धारी शासनदेवी, श्वेताङ्गी हंसवाहना ।
वरदं खड्गिनं बाहू, दक्षिणावपरौ पुनः ॥ २० ॥
सबीजपूरौ बिभ्राणा, सन्निधौ श्रीनमिप्रभोः ।
पृथ्व्यां विहरतः सर्व–परीवारस्त्वभूदिति ॥ २१ ॥
परिवारे सहस्राणि, विंशतिः साधवोऽभवन् ।
आसन्नेकचत्वारिंशत्, सहस्राः पुनरार्यिकाः ॥ २२ ॥
सार्द्धं शतचतुष्कं च, द्विःसप्तपूर्वधारिणः[2] ।
सहस्रं षट्शतोपेत–मवधिज्ञानशालिनः ॥ २३ ॥
सहस्रं द्वे शते षष्टि–र्मनःपर्ययसंयुताः[3] ।
उत्पन्नकेवलज्ञानाः, सहस्रं षट्शतान्वितम् ॥ २४ ॥
पञ्चकं तु सहस्राणां, जातवैक्रियलब्धयः ।
शतानि दशसङ्ख्यानि, वादलब्धिविराजिनः ॥ २५ ॥
श्रावका लक्षमेकं तु, सहस्राः सप्ततिस्तथा ।
श्राविका लक्षत्रय्यष्ट–चत्वारिंशत् सहस्र्यपि ॥ २६ ॥
नवमासोनिते सार्द्धे–ऽब्दसहस्रद्वये गते ।
ज्ञानान्मुनिसहस्रेण, समं 'सम्मेत'पर्वते ॥ २७ ॥
वैशाखकृष्णदशम्या–मश्विनीं शशिनि श्रिते ।
ऊर्ध्वस्थ एव पूर्वाह्णे, मासं सानशनः प्रभुः ॥ २८ ॥

---

१ ख–'स्वर्णरुग्' । २ क–'धारिणाम्' । ३ क–'शालिनः' ।

जगामापुनरावृत्ति-पदं नमिजिनेश्वरः ।
कुमारत्वे सहस्रौ द्वौ, सार्द्धौ राज्ये तु पञ्च ते ॥ २९ ॥
व्रते सार्द्धौ सहस्रौ द्वौ, वर्षाणां श्रीनमिप्रभोः ।
दश वर्षसहस्राणि, सर्वमायुरभूदिति ॥ ३० ॥
श्रीनमिप्रभुनिर्वाणं, मुनिसुव्रतनिर्वृतेः ।
अतिक्रान्तेषु वर्षाणां, षट्सु लक्षेष्वजायत ॥ ३१ ॥
किं वन्दारुसुरीशिरोऽग्रपतितः सिन्दूरपूरः किमु
प्रेङ्खद्भाविकलक्षरञ्जनकरो लाक्षारसः सज्जितः? ।
रागः किं नु मनोऽन्तरालगलितो भाति स यस्य क्रम-
द्वन्द्वं शोणनखांशुमण्डलमिषाल्लक्ष्मीं स पुष्यान्नमिः ॥ ३२ ॥[1]

ग्रन्थाग्रं ॥ ३५ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते एकविंशं श्रीमन्नमिनाथजिनचरितं समाप्तम् ॥ २१ ॥

## अथ श्रीनेमिनाथचरित्रम् ॥ २२ ॥

स[2]न्ध्येव प्रभुसेविनां शुभदिनप्रारम्भसंरम्भिणी
ज्ञानश्रीवसनानुरञ्जनकरी कौसुम्भभ[3]ङ्गीव च ।
शोभाकृद्घुसृणावलीव विलसत्यार्हन्त्यलक्ष्म्या तु या
सा नेमिक्रमयोर्नखद्युतिततिर्दत्तां प्रमत्तां श्रियम् ॥ १ ॥[4]
धनो राजा धनवती, राज्ञी १ 'सौधर्मगौ सुरौ २ ।
विद्याधरेश्वरचित्र-गती रत्नावती प्रिया ३ ॥ २ ॥
'माहेन्द्र'गौ ४ प्रिया प्रीति-मती भूपोऽपराजितः ५ ।
आ[5]रु(र)णे त्रिदशौ ६ शङ्ख-क्ष्मापः पत्नी यशोमती ७ ॥ ३ ॥
'अपराजिते' विमाने, देवौ ८ राजिमती-जिनौ ९ ।
श्रीनेमेस्तत्प्रियायाश्च, भवा इति नवाप्यमी ॥ ४ ॥-विशेषकम्
'जम्बू'द्वीपेऽत्र 'भरते'-ऽप्यत्रा'ऽचलपुरे'ऽजनि ।
धनो राजा धनदत्त-धनदेवाऽनुजान्वितः ॥ ५ ॥

---

१ शार्दूल० । २ क-'सन्ध्येष' । ३ क-'भङ्गं च वा' । ४ शार्दूल० । ५ क-'अरणवं(?)त्रिदशौ क्ष्मापशङ्खपत्नी' ।

राजाऽऽसीत् 'कुसुमपुरे', सिंहोऽस्य विमला प्रिया ।
तयोर्धनवती पुत्री, धनस्याजनि वल्लभा ॥ ६ ॥
वसुन्धरमुनेः पार्श्वे, चत्वारोऽप्यभजन् व्रतम् ।
तपस्तप्त्वाऽद्भुतं सर्वे, 'सौधर्मे' जज्ञिरे सुराः ॥ ७ ॥
'वैताढ्ये'ऽस्त्युत्तरश्रेणौ, '[1]सूरतेजःपुरं' पुरम् ।
विद्याधर[2]चक्रवर्त्ती, तत्र सूराख्ययाऽभवत् ॥ ८ ॥
तस्य विद्युन्मती पत्नी, तयोः 'सौधर्म'तश्च्युतः ।
धनजीवोऽभवत् पुत्रो, नाम्ना चित्रगतिः श्रुतः ॥ ९ ॥
धनदत्त-धनदेव–जीवौ 'सौधर्म'तश्च्युतौ ।
तौ मनोगति-चपल–गत्याख्यौ सोदरावुभौ ॥ १० ॥
जातौ चित्रगतेर्जीवो, धनवत्याश्च स च्युतः ।
'वैताढ्ये' दक्षिणश्रेण्या–मनङ्गसिंहभूपतेः ॥ ११ ॥
शशिप्रभाकुक्षिभवा, पुत्री रत्नवतीत्यभूत् ।
एतां चित्रगतिः पित्रा, [3]प्रीतां दत्तामुपायत ॥ १२ ॥
पितृदत्तं ततो राज्यं, [4]चिरं चित्रगतिर्व्यधात् ।
रत्नवत्या परप्रेम्णा, सोदराभ्यां च [5]सेवितः ॥ १३ ॥
व्रतन्दमगुरोः पार्श्वे, चत्वारः समये व्रतम् ।
प्राप्य तप्त्वा तपोऽभूवन्, देवा 'माहेन्द्र'कल्पगाः ॥ १४ ॥
प्रत्यग्'विदेहे' विजये, '[6]पद्मे' 'सिंह'पुरेऽभवत् ।
हरिणन्दी नृपस्तस्य, प्रियाऽऽसीत् प्रियदर्शना ॥ १५ ॥
सोऽथ चित्रगतेर्जीव–श्च्युत्वा 'माहेन्द्र'कल्पतः ।
अनयोः समये सूनु–रपराजित इत्यभूत् ॥ १६ ॥
तौ मनोगति-चपल–गतिजीवौ ततश्च्युतौ ।
'माहेन्द्रा'त् सोम-सूराख्यौ, जातौ तदनुजावुभौ ॥ १७ ॥
अपराजितस्य जज्ञे, मिथो विश्वासवासभूः ।
बाल्याद् विमलबोधाख्य-मन्त्रिपुत्रेण मित्रता ॥ १८ ॥

---

१ क–'सूरितेजःपुरं' । २ क–'धरश्चक्रः' । ३ ख–'दत्तां प्रीतामुपा०' । ४ ख–'चित्रं' ।
५ क–'सेविता' । ६ ख–'पद्मसिंह०' ।

इतः 'कुण्डपुरे' जज्ञे, जितशत्रुर्नरेश्वरः ।
धारिणीति प्रिया तस्य, तयो'र्माहेन्द्र'कल्पतः ॥ १९ ॥
च्युत्वा रत्नवतीजीवो, जाता प्रीतिमती सुता ।
प्राग्जन्मप्रेमतः साऽऽसी–दपराजितवल्लभा ॥ २० ॥–युग्मम्
ततः पित्राऽर्पितं राज्य–मकरोदपराजितः ।
सोम-सूराऽमात्यपुत्रैः, प्रीतिमत्याऽश्रितश्चिरम् ॥ २१ ॥
काले केवलिना पार्श्वे, पश्चापि प्राव्रजन् क्रमात् ।
जाताश्चा'ऽऽरण'[1]कल्पेऽमी, शक्रसामानिकाः सुराः ॥ २२ ॥
'जम्बू'द्वीपेऽत्र भरते, नगरे 'हस्तिनापुरे' ।
श्रीषेणः क्षितिपो जज्ञे, श्रीमती तत्प्रियाऽभवत् ॥ २३ ॥
अपराजितस्य जीवः, स कल्पा'दारु(र)णा'च्च्युतः ।
अनयोस्तनयो जज्ञे, शङ्ख इत्याख्यया श्रुतः ॥ २४ ॥
[2]आरणा'त् कल्पतश्च्युत्वा, तौ जीवौ सोम-सूरयोः ।
जातौ यशोधर-गुण–धरौ शङ्खसहोदरौ ॥ २५ ॥
जीवो विमलबोधस्य, स कल्पा'दारु(र)णा'च्च्युतः ।
पुत्रो मतिप्रभो जज्ञे, श्रीषेणनृपमन्त्रिणः ॥ २६ ॥
मतिप्रभेण सार्द्धं च, पूर्वजन्मानुभावतः ।
प्रीतिः शङ्खकुमारस्य, मिथोऽभूद् विरहासहा ॥ २७ ॥
'चम्पे'त्यस्ति पुरी तस्यां, जितारिरिति भूपतिः ।
तस्य कीर्त्तिमती पत्नी, तयोरजनि नन्दिनी ॥ २८ ॥
च्युत्वा प्रीतिमतीजीवः, श्रुता नाम्ना यशोमती ।
शङ्खेन परिणिन्ये सा, पूर्वजन्मानुरागिणी ॥ २९ ॥
श्रीषेणनृपतिः शङ्खं, राज्ये न्यस्याग्रहीद् व्रतम् ।
प्रतप्य केवलं प्राप्य, व्यहरद् भव्यबोधकृत् ॥ ३० ॥
शङ्खो राज्यं चिरं कृत्वा, पितुः केवलिनोऽन्तिके ।
यशोमत्यादिभिः सार्धं, चतुर्भिर्व्रतमग्रहीत् ॥ ३१ ॥

---

१ ख–'रणकल्पे' । २ ख–'आरुणात्' ।

तपस्तप्त्वाऽद्भुतं मृत्वा, जीवाः पञ्चापि ते क्रमात् ।
'अपराजिता'भिधाने, विमाने मरुतोऽभवन् ॥ ३२ ॥[1]

'जम्बू'द्वीपेऽत्र 'भरते', 'कुशार्त्त'देशमण्डनम् ।
'शौर्य' नाम पुरं तत्र, समुद्रविजयो नृपः ॥ ३३ ॥

'हरि'वंश्योऽभवत् तस्य, शिवादेवीति वल्लभा ।
कार्त्तिके कृष्णद्वादश्यां, चित्रायामपराजितात् ॥ ३४ ॥

विमानतस्त्रयस्त्रिंशत्–सागरायुःक्षये च्युतः ।
स शङ्खनृपतेर्जीवः, शिवाकुक्षाववातरत् ॥ ३५ ॥–विशेषकम्

श्रावणे शुक्लपञ्चम्यां, चित्रायां हिमरोचिषि ।
कन्यास्थिते निशीथे सा–ऽसूत देवी शिवा सुतम् ॥ ३६ ॥

स्निग्धाञ्जनतनुच्छायं, शङ्खलाञ्छनलाञ्छितम् ।
'हरि'वंशशिरोरत्नं, द्वाविंशं तीर्थनायकम् ॥ ३७ ॥–युग्मम्

चक्रधारारिष्टमणि–मयी मात्राऽत्र गर्भगे ।
दृष्टाऽरिष्टनेमिरिति, तस्याख्यां तद् व्यधात् पिता ॥ ३८ ॥

स्वामी दशधनुस्तुङ्गः, प्रपेदे यौवनं क्रमात् ।
शतानि त्रीणि वर्षाणां, कुमारत्वेऽत्यवाहयत् ॥ ३९ ॥

आजन्ममन्मथजयी, कुमारीणां परिग्रहम्[2] ।
पित्राद्यैरर्थ्यमानोऽपि, नैव नेमिरमन्यत ॥ ४० ॥

इतो यशोमतीजीव–श्च्युत्वा सोऽप्य'ऽपराजिता'त् ।
'मथुरा'यां 'हरि'वंश–स्योग्रसेनस्य भूपतेः ॥ ४१ ॥

धारिणीकुक्षिसम्भूता, जज्ञे राजीमती सुता ।
कलयामास कन्दर्पो–ज्जीवनं यौवनं क्रमात् ॥ ४२ ॥–युग्मम्

पितृभ्यां राम-कृष्णाभ्यां, समग्रैर्यादवैः समम् ।
राजीमतीविवाहार्थं, नेमिरत्यर्थमर्थितः ॥ ४३ ॥

नीयमानः स शुश्राव, करुणारससागरः ।
भोज्यार्थं सन्निरुद्धानां, प्राणिनां करुणारवान् ॥ ४४ ॥

---

१ सुराः । २ ख–'करग्रहम्' ।

आदिश्य सारथिं स्वामी, समग्रांस्तानमोचयत् ।
कृतराजीमतीत्यागो, रथं व्यावर्त्तयत् ततः ॥ ४५ ॥
याते राज्यमकृत्वैव, जन्मतोऽब्दशतत्रये ।
शिबिका'मुत्तरकुरु'-मारूढो निर्ययौ पुरः ॥ ४६ ॥
श्रावणे षष्ठ्यां शुक्लायां, चित्रानक्षत्रगे विधौ ।
'उज्जयन्त'गिरौ यात्वा, 'सहस्राम्रवणं' वनम् ॥ ४७ ॥
नरेन्द्राणां सहस्रेण, सह षष्ठतपःपरः ।
श्रीनेमिनाथः पूर्वाह्णे[2], प्रव्रज्यां प्रतिपन्नवान् ॥ ४८ ॥–युग्मम्
गोष्ठे द्वितीये दिवसे, वरदत्तनृपौकसि[1] ।
जज्ञे श्रीनेमिनाथस्य, परमान्नेन पारणम् ॥ ४९ ॥
चतुःपञ्चाशतं नेमि-र्विहृत्यान्यत्र वासरान् ।
पुनरागाद् 'रैवतके', 'सहस्राम्रवणे' वने ॥ ५० ॥
स्थितो वेतसवृक्षस्य, तले प्रतिमया प्रभुः ।
आश्विनस्यामावस्यायां, चित्राधिष्ण्यगते विधौ ॥ ५१ ॥
कृताष्टमतपा नेमिः, पूर्वाह्णे[2] प्राप केवलम् ।
चैत्यद्रुर्विंशतिधनुः-शतं तुङ्गः प्रभोरभूत् ॥ ५२ ॥
धनदेवो धनदत्तो, यौ बन्धू धनजन्मतः ।
मन्त्री विमलबोधो यो-'ऽपराजित'भवात् पुनः ॥ ५३ ॥
ते समं प्रभुणा भ्रान्ता, जन्मन्यस्मिन्नृपास्त्रयः ।
प्राव्रजन् नेमिनोऽन्ते ते, वरदत्तनृपान्विताः ॥ ५४ ॥
गणेशा वरदत्ताद्या-स्तैः सहैकदशाभवन् ।
श्रीनेमितीर्थे गोमेधो, यक्षस्तस्यास्यो नृवाहनः ॥ ५५ ॥
त्रीन् दक्षिणान् मातुलिङ्ग-पर्शु-चक्रधरान् करान्[3] ।
श्यामो वामांस्तु नकुल-शूल-शक्तियुतान् दधत् ॥ ५६ ॥
अम्बिकाऽऽम्रलुम्बी-पाशा-लम्बिदक्षिणदोर्द्वया ।
सपुत्रा-ङ्कुशभृद्वाम-दोर्द्वया सिंहवाहना ॥ ५७ ॥
सुवर्णवर्णा श्रीनेमि-तीर्थे शासनदेवता ।

१ ख-'द्विजौकसि' । २ क-'पूर्वाह्ण एव' । ३ ख-'भुजान्' ।

नेमेर्विहरतः पृथ्वीं, परीवारस्त्वभूदिति ॥ ५८ ॥
सहस्राण्यभवन्नष्टा–दश श्रामण्यधारिणः ।
सञ्जज्ञिरे सहस्राणि, चत्वारिंशत् तथाऽऽर्यिकाः ॥ ५९ ॥
तथा शतानि चत्वारि, द्विःसप्तपूर्ववेदिनः ।
प्रत्येकं पञ्चदश तु, शतान्यवधिशालिनः ॥ ६० ॥
सद्वैक्रियलब्धयोऽपि, केवलज्ञानिनस्तथा ।
एक एव सहस्रस्तु, मनःपर्ययसंयुताः ॥ ६१ ॥
अष्टौ शतानि सञ्जात–वादलब्धिविराजिनः ।
श्रावका लक्षमेकं तु, नवषष्टिसहस्र्यपि ॥ ६२ ॥
श्राविकास्त्रिलक्ष्येकोन–चत्वारिंशत्सहस्र्यपि ।
राजीमती प्रभोः प्राप्त–प्रव्रज्या प्रययौ शिवम् ॥ ६३ ॥
आषाढस्य शुक्लाष्टम्यां, चित्रायां 'रैवता'चले ।
षट्त्रिंशदधिकसाधु–पञ्चशत्या समन्वितः ॥ ६४ ॥
मासं सानशनः स्वामी, पर्यङ्कासनमास्थितः ।
सन्ध्यायां सिद्धिसम्बन्धं, श्रीनेमिः समुपेयिवान् ॥ ६५ ॥–युग्मम्
कौमारे वर्षत्रिशती, वर्षसप्तशती व्रते ।
एकं सहस्रं वर्षाणां, सर्वायुर्नेमिनोऽजनि ॥ ६६ ॥
श्रीनेमिनाथनिर्वाणं, श्रीनमिप्रभुनिर्वृतेः ।
बभूव वर्षलक्षेषु, व्यतिक्रान्तेषु पञ्चसु ॥ ६७ ॥
यश्चक्रे नवनोकषायकषणं यो ब्रह्मगुप्तीर्नव
व्यातेने नव पाप्मनामपि निदानानि प्रभिन्ते स यः ।
भ्रान्त्वा यश्च ययौ भवान् नव नव 'ग्रैवेयका'नुत्तरा–
नप्यूर्ध्वं विदधातु वो नवनिधिप्राप्तिं स नेमिप्रभुः ॥ ६८ ॥[3]
ग्रन्थाग्रं० ॥ १७२ ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते द्वाविंशं श्रीमन्नेमिनाथजिनचरितं समाप्तम् ॥ २२ ॥

---

१ क–'शालिनः' । २ ख–'स्वामि०' । ३ शार्दूल० ।

## अथ श्रीपार्श्वनाथचरित्रम् ॥ २३ ॥

उत्क्षिप्ताः किमु सप्तदुर्गतिसमुत्खानाय कुद्दालकाः ?
किं श्रेयःफलसप्ततत्त्वलतिकाल[1]ब्धोदयाः पल्लवाः ? ।
किं वा सप्तभयारिवीरविजयप्राप्ताः पताका इति
भ्रान्तिं भोगिफणा ददुर्यदुपरि प्रीत्यै स पार्श्वोऽस्तु वः ॥ १ ॥[2]

भ्रातरावरविन्दस्य, नरेशस्य पुरोहितौ ।
कमठो मरुभूतिश्च १, कुर्कुटोरग-कुञ्जरौ २ ॥ १ ॥
पञ्चमे नरके पूर्वः[3], 'सहस्रारे' सुरः परः ३ ।
फणी किरणवेगाख्यो, विद्याधरधराधवः ४ ॥ २ ॥
पञ्चमे नरके पूर्वो–'ऽच्युत'कल्पसुरः परः ५ ।
भिल्लः प्रत्यग्'विदेहे'ऽथ, वज्रनाभधरा[4]धिपः ६ ॥ ३ ॥
सप्तमे नरके पूर्वो, म[5]ध्ये ग्रैवेयके परः ७ ।
पञ्चास्यः प्राच्य'विदेहे', सुवर्णबाहुचक्र्यपि ८ ॥ ४ ॥
चतुर्थनरके पूर्वः, 'प्राणते' त्रिदशोऽपरः ।
कठोऽर्हंश्च दशेत्युक्त्वा, भवाः कमठ-पार्श्वयोः ॥ ५ ॥–कुलकम्
भवे त्वेकादशे मेघ–कुमारः कमठः शठः ।
कृत्वा पार्श्वप्रभोर्वृष्टि–कष्टं वैरोज्झितोऽजनि ॥ ६ ॥
'जम्बू'द्वीपेऽत्र 'भरते'–ऽभूत् 'पोतनपुरे' पुरे ।
[6]अरविन्दो नृपस्तस्य, विश्वभूतिः पुरोहितः ॥ ७ ॥
अनुद्धराकुक्षिभवौ, तत्पुत्रौ द्वौ बभूवतुः ।
कमठो मरुभूतिश्च, प्रकृत्या कमठः शठः ॥ ८ ॥
मरुभूतिर्भवभीरुः, स्वभावादेव धार्मिकः ।
वरुणा कमठस्य स्त्री, मरुभूतेर्वसुन्धरा ॥ ९ ॥
मरुभूतिः सदा जैन–धर्मोपासनवासनः ।
कमठः कामयामास, छन्नं छन्नं वसुन्धराम् ॥ १० ॥

---

१ ख–'लब्धोद्भवाः' । २ शार्दूल० । ३ ख–'पूर्वं–सह०' । ४ ख–'नराधिपः' । ५ ख–'मध्यग्रैवेयके सुरः' । ६ ख–'अरविन्दनृपः' ।

शशंस मरुभूतेस्तद्-दुर्वृत्तं वरुणेर्ष्यया ।
तद्वृत्तमात्मना प्रैक्षि, गुप्तेन मरुभूतिना ॥ ११ ॥
कथिते तद्दुराचारे, क्रुद्धेन मरुभूतिना ।
कमठः सनिकारं स, राज्ञा निर्वासितः पुरात् ॥ १२ ॥
तापसाश्रममाश्रित्य, तद्विडम्बनदुःखितः ।
कमठस्तापसीभूय, तपस्तेपेऽद्रिमूर्द्धनि ॥ १३ ॥
अन्वागतः सानुशयो, नन्तुं[1] ज्येष्ठसहोदरम् ।
मरुभूतिर्नतस्तेन, मौलौ मुक्त्वा शिलां हतः ॥ १४ ॥
मरुभूतिरभून्मृत्वा, हस्ती 'विन्ध्य'धराधरे ।
वरुणा करिणी जज्ञे, मृत्वा साऽत्रैव कानने ॥ १५ ॥
मरुभूतिगजस्यासीत्, सा यूथाधिपतेः प्रिया ।
मृत्वाऽत्रैव वने जज्ञे, कमठः कुर्कुटोरगः ॥ १६ ॥
अरविन्दनृपोऽप्येतद्[2]-वृत्तेन विरतो भवात् ।
राज्ये नियोजयामास, महेन्द्रं तनुजं निजे ॥ १७ ॥
समन्तभद्राचार्यान्ते, स्वयं स व्रतमग्रहीत् ।
गीतार्थः स तपः कुर्व-न्नवधिज्ञानभाग्भूत् ॥ १८ ॥
अन्यदा'ऽष्टापदं' नन्तुं, राजर्षिर्गुर्वनुज्ञया ।
समं सागरचन्द्रेण, सार्थवाहेन सोऽचलत् ॥ १९ ॥
आवासान् स ददौ सार्था-धीशो 'विन्ध्य'वनावनौ ।
मरुभूतिगजः सोऽत्र, सरसो निःसृतस्तदा ॥ २० ॥
वरुणाकरिणीयुक्तः, क्रुद्धो लोकरवेण सः ।
मदान्धो मथयन् सार्थं, चक्रे सकलमाकुलम् ॥ २१ ॥
अरविन्दोऽपि राजर्षि-रुज्झितः सप्तभिर्भयैः ।
[3]भावनां भावयन्नन्त-र्ध्यानमध्यारुरोह सः ॥ २२ ॥
ध्यानस्थं तं स निध्याय, वरुणा करिणी च सा ।
तपःप्रभावतस्तस्या-भूतां शान्तावुभौ क्षणात् ॥ २३ ॥
अवधिज्ञानतो बुद्ध्वा, तद्बोधावसरं मुनिः ।

---

१ क-'नु नेतुं ज्येष्ठसोदरम्'।　२ क-'तच्चित्तेन'।　३ क-'भवमाभाव०'।

बभाषे मरुभूते ! किं, करोषि परुषाः क्रियाः ? ॥ २४ ॥
निशम्य तद्गिरं जज्ञे, जातिस्मरणमेतयोः ।
ततस्तस्योपदेशेन, सम्यक्त्वं ताववापतुः ॥ २५ ॥
प्रबोध्य प्रापितो बोधिं, साधुना सार्थपोऽप्यगात् ।
मुनि'रष्टापदं' नत्वा, सोऽन्यत्र विजहार च ॥ २६ ॥
स करी श्रावकाचारा[1]-श्चरन् शुष्कतृणाशनः ।
कृशोऽजनि सरःपङ्क-मग्नो निःसर्तुमक्षमः ॥ २७ ॥
दष्टः कुर्कुटसर्पेण, दैवात् तत्र प्रसर्पता ।
विपाद्य करटी तेन, नीतः पापेन पञ्चताम् ॥ २८ ॥
स करी क्लिश्यमानोऽपि, तत्राप्यक्रूरमानसः ।
स्मृतपञ्चनमस्कारः, 'सहस्रार'दिवं ययौ ॥ २९ ॥
वरुणा करिणी साऽपि, तपस्तेपे तथा वने ।
आसी'दीशान'कल्पे सा, यथा देवी महर्द्धिका ॥ ३० ॥
'ईशान'कल्पतो नीत्वा, गजजीवेन सा निजे ।
कल्पे स्वान्तःपुरस्त्रीणां, शिरोरत्नं [2]विनिर्मिता ॥ ३१ ॥
गजासृग्मांसतृप्तोऽभूत्, स मृत्वा कुर्कुटोरगः ।
पञ्चमे नरके सप्त-दशसागरसंस्थितिः ॥ ३२ ॥
'जम्बू'द्वीपे प्राग्'विदेहे', 'सुकच्छे' विजये गिरौ ।
'वैताढ्ये' दक्षिणश्रेण्यां, पूरास्ते 'तिलका'ह्वया ॥ ३३ ॥
तस्यां विद्युद्गतिर्नाम्ना, जज्ञे विद्याधरेश्वरः ।
तस्य प्रियाऽऽसीत् कनक-तिलकेत्याख्यया श्रुता ॥ ३४ ॥
कुक्षाववातरत् तस्या, गजजीवः स कल्पतः ।
'सहस्रारा'त् सप्तदश-सागरायुःक्षये च्युतः ॥ ३५ ॥
सुतं साऽसूत किरण-वेगाख्यं तं पिताऽकरोत् ।
युवानं [3]न्यस्य तं राज्ये-ऽग्रहीद् विद्युद्गतिर्व्रतम् ॥ ३६ ॥
काले किरणवेगोऽपि, पुत्रं किरणतेजसम् ।
राज्ये न्यस्याददे दीक्षां, पार्श्वे सुरगुरोर्गुरोः ॥ ३७ ॥

---

१ क-'चारश्चरन्' । २ क-'च निर्मिता' । ३ ख-'तं न्यस्य' ।

स 'पुष्करवर'द्वीपे, 'वैताढ्यं' निकषा मुनिः ।
'हैम'शैलस्य कटके, कायोत्सर्गेण तस्थिवान् ॥ ३८ ॥
कुर्कुटाहेः स जीवोऽपि, पञ्चमान्नरकाद् गिरौ ।
उद्धृत्योत्पन्नस्तत्रासीन्–महाहिर्बहुजीवहृत् ॥ ३९ ॥
दष्टो मुनिः स तेन प्राग्–जन्मवैरानुबन्धतः ।
विहितानशनो मृत्वा–'ऽच्युत'कल्पे सुरोऽजनि ॥ ४० ॥
मुनिघातपातकी स, महाहिर्दववह्निना ।
दग्धो मृत्वा समुत्पन्नः, पञ्चमे नरके पुनः ॥ ४१ ॥
'सुगन्ध'विजये 'जम्बू'–द्वीपे प्रत्यग्'विदेह'गे ।
पुरी 'शुभङ्करी'[1] तस्यां, वज्रवीर्यो[2] नृपोऽजनि ॥ ४२ ॥
तस्य लक्ष्मीवती पत्नी, तस्याः कुक्षाववातरत् ।
द्वाविंशतिपयोराशि–प्रमाणायुःपरिक्षये ॥ ४३ ॥
जीवः किरणवेगस्य, स च्युतो'ऽच्युत'कल्पतः ।
सुतं साऽसूत पित्राऽसौ, वज्रनाभाभिधः कृतः ॥ ४४ ॥–युग्मम्
युवानं न्यस्य तं राज्ये, वज्रवीर्योऽभवद् यतिः ।
वज्रनाभोऽपि विजया–जानिः पृथ्वीमपालयत् ॥ ४५ ॥
कालेऽग्रहीद् व्रतं क्षेम–ङ्करतीर्थङ्करान्तिके ।
वज्रनाभो निजे राज्ये, कृत्वा चक्रायुधं सुतम् ॥ ४६ ॥
आसन् गगनगत्यादि–लब्धयोऽस्य तपस्यतः ।
'सुकच्छ'विजये [3]सोऽगाद्, व्योमगत्याऽन्यदा मुनिः ॥ ४७ ॥
स तत्रैव सप्तदश–सागरायुःपरिक्षये ।
जीवो महाहेरुद्धृत्य, पञ्चमान्नरकादभूत् ॥ ४८ ॥
शबरः कुरङ्गकाख्यः, पल्ल्यां 'ज्वलन'पर्वते ।
तत्रैवाद्रौ मुनिर्दैवाद्, गत्वा प्रतिमया स्थितः ॥ ४९ ॥
वज्रनाभमुनिस्तेन, कुरङ्गशबरेण सः ।
शरेण प्रहतो दृष्ट्वा, दुष्टेन प्राग्भवद्विषा ॥ ५० ॥

---

१ क–'शुभकराऽस्त्यस्यां' । २ क–'वर्यवीर्यो' । ३ क–'यात्वा' ।

तत्राप्यद्वेषवानेष, मृत्वा सद्ध्यानशुद्धधीः ।
अभूद् [1]ग्रैवेयकमध्ये, ललिताङ्गाभिधः सुरः ॥ ५१ ॥
क्रूरकर्मा कुरङ्गोऽपि, मुदितो मुनिमारणात् ।
सप्तमं नरकं प्राप्तः, कालतो निहतः परैः ॥ ५२ ॥
'जम्बू'द्वीपे प्राग्'विदेहे', 'शुभा'ख्ये विजये पुरे ।
'पुराणा'ख्येऽभूत् कुलिश-बाहुर्नाम्ना नराधिपः ॥ ५३ ॥
पत्नी सुदर्शना तस्य, तस्याः कुक्षिं व्यभूषयत् ।
स जीवो वज्रनाभस्य, मध्यग्रैवेयकाच्च्युतः ॥ ५४ ॥
चतुर्दशमहास्वप्नो-दितचक्रिपदं सुतम् ।
साऽसूत [2]सुवर्णबाहु-नामानं तं पिता [3]व्यधात् ॥ ५५ ॥
युवानं न्यस्य तं राज्ये, काले कुलिशबाहुना ।
स्वयं दीक्षामुपादाय, प्रक्रान्तं स्वार्थसिद्धये ॥ ५६ ॥
उत्पन्नचक्रषट्खण्ड-पृथिवीविजयोज्ज्वलः ।
चक्रित्वं [4]सुवर्णबाहु-र्बहुकालमपालयत् ॥ ५७ ॥
निवेश्य समये सूनुं, स्वराज्ये कनक[5]प्रभम् ।
बुद्धिसागरसूरीणां, पार्श्वे जग्राह स व्रतम् ॥ ५८ ॥
गीतार्थो विहरन्नेको, गत्वा 'क्षीरवणा'टवीम् ।
कायोत्सर्गे स्थितश्चण्ड-[6]रोचिर्न्यस्तविलोचनः ॥ ५९ ॥
सप्तमान्नरकाद् भिल्ल-जीवोऽप्युद्धृत्य कानने ।
तत्र सिंहोऽभवत् प्रैक्षि, तेन स भ्रमता मुनिः ॥ ६० ॥
स्वर्णबाहुमुनिर्निन्ये, पञ्चास्येन स पञ्चताम् ।
सद्ध्यानकल्पनात् कल्पे, 'प्राणते' त्रिदशोऽभवत् ॥ ६१ ॥
सिंहोऽपि समये मृत्वा, चतुर्थे नरकेऽपतत् ।
तस्माद् दशसागरायु-र्भुक्त्वोद्धृतो भवेऽभ्रमत् ॥ ६२ ॥
सोऽत्रैव 'भरत'क्षेत्रे, 'रोर'विप्रकुलेऽभवत् ।
कठः सुतः शिशुत्वेऽस्य, पितरौ मृत्युमापतुः ॥ ६३ ॥

---

१ क-'ग्रैवेयके मध्ये' । २ ख-'स्वर्णबाहु-' । ३ ख-'ऽभ्यधात्' । ४ क-'कुलिशबाहु-' । ५ क-'प्रभुम्' । ६ क-'रोचिर्विन्यस्तलोचनः' ।

कस्मिंश्चिदुत्सवे स्वर्ण–वस्त्रभूषणभूषितान् ।
प्रेक्ष्य पौरान् विरक्तोऽसौ, प्रपन्नस्तापसं व्रतम् ॥ ६४ ॥
'जम्बू'द्वीपेऽत्र 'भरते'ऽत्रास्ते 'वाणारसी' पुरी ।
राजाऽऽसीदश्वसेनोऽस्यां, वामा देवीति तत्प्रिया ॥ ६५ ॥
चैत्रे चतुर्थ्यां कृष्णायां, विशाखां शशिनि श्रिते ।
प्रपाल्य 'प्राणता'दायुः, सागरोपमविंशतिम् ॥ ६६ ॥
च्युत्वा स्वर्णबाहुजीवः, स वामाकुक्षिमाश्रयत् ।
पौषे दशम्यां कृष्णाया–मनुराधाऽभिधे च भे ॥ ६७ ॥
वृश्चिकस्थे विधौ वामा, देवी सूते स्म नन्दनम् ।
'इक्ष्वाकु'कुलकल्पद्रुं, त्रयोविंशं जिनेश्वरम् ॥ ६८ ॥
मात्राऽत्र गर्भगे प्रैक्षि, कृष्णपक्षक्षपास्वपि ।
पार्श्वेऽहिः पार्श्व इत्यस्य, प्रभोर्नाम पिताऽकरोत् ॥ ६९ ॥
नीलोत्पलदलच्छायः, श्रीपार्श्वः सर्पलाञ्छनः ।
नवहस्तोन्नतवपुः, प्रपेदे यौवनं क्रमात् ॥ ७० ॥
प्रसेनजिन्नरेन्द्रस्य, 'कुशस्थल'पुरेशितुः ।
पुत्रीं प्रभावतीं प्रेम–परां पर्यणयत् प्रभुः ॥ ७१ ॥
सोऽपि 'वाणारसीं' प्राप्तः, पर्यटन् कठतापसः ।
'पञ्चवह्नि'तपस्तेपे, बाह्योद्यानकृतस्थितिः ॥ ७२ ॥
तस्य पार्श्वं गतः पार्श्वो, ज्ञानत्रितयभास्करः ।
अज्ञानकष्टमेतद् भो, ब्रुवन्निति कृपानिधिः ॥ ७३ ॥
अङ्गुल्या दर्शयन् दारु–खण्डं ज्वलनकुण्डतः ।
आकर्षयन् पृथक् यत्नात्, तद्विदारमकारयत् ॥ ७४ ॥
निःसृतो दारितात् तस्मा–दर्द्धदग्धो महोरगः ।
दृशा सुधार्द्रया दृष्ट्वा, नष्टार्त्तिं तं [1]विभुर्व्यधात् ॥ ७५ ॥
अश्रावयत् परमेष्ठि–मन्त्रं स्वामी कृपाकरः ।
सर्पः समाधिना मृत्वा, धरणेन्द्रो बभूव सः ॥ ७६ ॥

---

१ ख–'प्रभु०' ।

कठोऽपि लज्जितो लोकै-र्निन्द्यमानोऽन्यतो ययौ ।
मृत्वा स्वायुःक्षये 'मेघ-कुमारे'ष्वदपद्यत ॥ ७७ ॥
इतस्त्रिंशतिवर्षाणां, गतानां जन्मकालतः ।
राज्यं प्रभुरकृत्वैव, भोगकर्मफलक्षये ॥ ७८ ॥
पौषस्य कृष्णैकादश्या-मनुराधां गते विधौ ।
'विशाला'नाम्नीं शिबिका-मारूढो निर्ययौ पुरः ॥ ७९ ॥-युग्मम्
त्रिभिः शतैर्नरेन्द्राणां, सहाश्रमपदे[1] वने ।
कृताष्टमतपाः स्वामी, पूर्वाह्णे व्रतमग्रहीत् ॥ ८० ॥
सन्निवेशे 'कोपकटे', धन्यस्य गृहिणो गृहे ।
द्वितीयेऽह्नि प्रभुश्चक्रे, परमान्नेन पारणम् ॥ ८१ ॥
छ[2]द्मस्थितोऽन्यत्र चतु-रशीतिं वासरान् [3]विभुः ।
विहृत्य पुनरभ्यागात्, तदाश्रमपदं[4] वनम् ॥ ८२ ॥
स तत्रास्थाद् धातुकीद्रु-मूले प्रतिमया निशि ।
इतश्च कठजीवोऽपि, प्राप्तो 'मेघकुमार'ताम् ॥ ८३ ॥
विद्युन्माल्यभिधोऽचालीत्, तेन देशेन दैवतः ।
प्रेक्ष्य पार्श्वप्रभुं कोपा-दुपद्रोतुं प्रचक्रमे ॥ ८४ ॥
[5]सिंह-वृश्चिक-सर्पाद्यै-रप्यक्षुब्धहृदः प्रभोः ।
वृष्टिं कर्तुं प्रवृत्तेऽस्मिन्, नासाग्रं जलमाययौ ॥ ८५ ॥
अत्र क्षणे च सञ्जाता-सनकम्पः समाययौ ।
धरणेन्द्रः सदेवीकः, प्रभोरन्ते गुरुत्वरः ॥ ८६ ॥
ऊर्ध्वंमुच्चासंया[6]श्चक्रे-ऽधस्तात् कुण्डलिका[7]कृतिः ।
धरणेन्द्रः प्रभुं मूर्ध्नि, फणाच्छत्रावृतं व्यधात् ॥ ८७ ॥
निर्भर्त्स्य त्रासितो दूरं, दुरात्मा कठवारिदः ।
विमुक्तो धरणेन्द्रेण, स प्रभोः शरणं श्रितः ॥ ८८ ॥
कृतं धरणपत्नीभिः, सङ्गीतं पुरतः प्रभोः ।
पुनस्तुल्यमना जज्ञे, द्वयोरप्युपरि प्रभुः ॥ ८९ ॥

१ ख-'महाश्रम०' । २ ख-'छद्मस्थोऽन्यत्र' । ३ क-'प्रभुः' । ४ ख-'गादाश्रमपदकाननम्' । ५ ख-'सर्पवृश्चिकसिंहा०' । ६ क-'मयाश्चक्रे' । ७ क-'ताकृतिः' ।

चैत्रे चतुर्थ्यां कृष्णायां, विशाखाधिष्ण्यगे विधौ ।
कृताष्टमतपाः स्वामी, केवलज्ञानमाप्तवान् ॥ ९० ॥
आर्यदत्तादयोऽभूवन्, प्रभोर्गणधरा दश ।
सप्तविंशतिधन्वोच्च–स्तथा चैत्यद्रुमोऽजनि ॥ ९१ ॥
मातुलिङ्ग-गदायुक्तौ, बिभ्राणो दक्षिणौ करौ ।
वामौ नकुल-सर्पाङ्कौ, कूर्माङ्कः कुञ्जराननः ॥ ९२ ॥
मूर्ध्नि फणिफणच्छत्रो, यक्षः पार्श्वोऽसितद्युतिः ।
तथा पार्श्वप्रभोः पद्मा–वती शासनदेवता ॥ ९३ ॥
स्वर्णाभा पद्म-पाशाङ्कौ, [1]बिभ्राणा दक्षिणौ भुजौ ।
वामौ फला-ऽङ्कुशधरौ, कुर्कुटोरगवाहना ॥ ९४ ॥
साधवः षोडश सह–स्राण्यष्ट त्रिंशदार्यिकाः ।
चतुर्दशपूर्वभृतः, पुनः [2]सार्द्धा शतत्रयी ॥ ९५ ॥
अवधिज्ञानसंयुक्ता–श्चतुर्दश शतानि तु ।
शतानि सप्त सार्द्धानि, मनःपर्ययशालिनः ॥ ९६ ॥
सहस्रमेकं सञ्जाताः, केवलज्ञानसंयुताः ।
एकादश शतान्येव, जातवैक्रियलब्धयः ॥ ९७ ॥
वादलब्धिसमायुक्ताः, षट्सङ्ख्यानि शतानि तु ।
श्रावका लक्षमेकं तु, चतुःषष्टिसहस्र्यपि ॥ ९८ ॥
श्राविकाः सप्तसप्तति–[3]सहस्राग्रास्त्रिलक्ष्यपि ।
प्रभोरिति परीवारः, पृथ्व्यां विहरतोऽभवत् ॥ ९९ ॥
व्रताद् गतेषु सप्तत्य–ब्देषु ‘सम्मेत’पर्वते ।
त्रिंशता साधुभिः सार्द्धं, मासं सानशनः प्रभुः ॥ १०० ॥
श्रावणेऽष्टम्यां शुक्लायां, विशाखां शशिनि श्रिते ।
श्रीपार्श्वः प्रथमे यामे, सिद्धिमूर्ध्वस्थितो ययौ ॥ १०१ ॥
त्रिंशद् वर्षाणि गार्हस्थ्ये, व्रते वर्षाणि सप्ततिः ।
इत्यासीद् वर्षशतायुः, पार्श्वोऽभूचास्य निर्वृतिः ॥ १०२ ॥

---

१ ख–‘दक्षिणौ बिभ्रती’। २ ख– ‘सार्धशत०’। ३ क–‘श्राविकाख्याः०’।

त्र्यशीत्यब्दसहस्रेषु, सप्तस्वब्दशतेषु च ।
पञ्चाशद्वर्षयुक्तेषु, गतेषु नेमिनिर्वृतेः ॥ १०३ ॥—युग्मम्
स पातु पार्श्वः कंठव[1]ह्निकुण्ड—कीलाकुलं सर्पमनाकुलं यः ।
चकार कारुण्यनिधिर्निजास्य—पीयूषकुण्डोत्थवचःसुधाभिः ॥ १०४ ॥[2]
ग्रन्थाग्रं ॥ ११० ॥

इति श्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशतिजिनेन्द्र-सङ्क्षिप्तचरिते त्रयोविंशं श्रीमत्पार्श्वनाथजिनचरितं समाप्तम् ॥ २३ ॥

## अथ श्रीमहावीरचरित्रम् ॥ २४ ॥

सिद्धिज्योत्स्नासुधांशुः परमशमसुधाक्षीरनीराधिनाथः
कारुण्याम्भोजभानुर्भुवनजनमनःकल्पनाकल्पशाखी ।
क्लेशाकूपारपारं भवदवदवथून्माथपाथःप्रवाहः
श्रेयःसन्तानसन्तानक'कनक'गिरिर्वीरनाथोऽवताद् वः ॥ १ ॥[3]
नयसारो ग्रामचिन्ता—करः १ 'सौधर्म'गः सुरः २ ।
मरीचिः ३ पञ्चमे कल्पे, त्रिदशः ४ कौशिकद्विजः ॥ २ ॥
'सौधर्म'गः ६ पुष्पमित्रो, विप्रः ७ प्रथमकल्पगः ८ ।
अग्न्युद्[4]द्योतो द्विजन्माऽथ ९, द्वितीये त्रिदिवे सुरः १० ॥ ३ ॥
द्विजातिरग्निरित्याह्वो ११, देवः कल्पे तृतीयके १२ ।
भारद्वाजद्विज १३ स्तुर्ये—कल्पे देवो १४ भवभ्रमः ॥ ४ ॥
द्विजः स्थावरको १५ देवो, 'ब्रह्मलोके' १६ भवभ्रमः ।
विश्वभूतिर्युवराज—पुत्रः १७ 'शुक्र'गतिः सुरः १८ ॥ ५ ॥
त्रिपृष्ठो 'भरते' विष्णुः १९, सप्तमक्षितिनारकः २० ।
सिंहो २१ नारकस्तुर्योर्व्यां २२, तिर्यग्मर्त्यभवभ्रमः ॥ ६ ॥
प्रियमित्रश्चक्रवर्ती २३, सुरः सप्तमकल्पगे[5] ।
विमाने 'सर्वार्थ'सञ्ज्ञे २४, नन्दनो नृपनन्दनः २५ ॥ ७ ॥

---

१ क—'पृथुवह्नि०' । २ उपजातिः । ३ स्रग्धरा । ४ ख—'अग्निद्योतो' ।
५ क—'कल्पगः' ।

विमाने विबुधः 'पुष्पो–त्तरे' 'प्राणत'कल्पगे २६ ।
अर्हन् २७ वीरविभोः सप्त–विंशतिः प्रथिता भवाः ॥ ८ ॥
'जम्बू'द्वीपेऽत्रैव प्रत्यग्–'विदेहे' क्षितिभूषणे ।
'महावप्रे'ऽस्ति विजये, 'जयन्ती' सञ्ज्ञया पुरी ॥ ९ ॥
तस्यां विशांपतिर्जज्ञे, शत्रुदमनसञ्ज्ञया ।
तद्देशग्रामः 'पृथिवी–प्रतिष्ठाना'ऽभिधः श्रुतः ॥ १० ॥
नयसाराह्वयस्तत्र, बभूव ग्रामचिन्तकः ।
सोऽगाद् राजाज्ञयाऽरण्ये, श्रेष्ठकाष्ठोपलब्धये ॥ ११ ॥
तत्र प्राप्तान् मुनीन् सार्थ–भ्रष्टान् तृष्णाक्षुधातुरान् ।
प्रासुकैरन्नपानैः स, पुण्यात्मा प्रत्यलाभयत् ॥ १२ ॥
योग्योऽयमिति तस्याग्रे, तैस्तेने धर्मदेशना ।
तया[1]ऽभूद् बोधिलाभोऽस्य, सिद्धिशर्मनिबन्धनम् ॥ १३ ॥
सन्मार्गदेशिनस्तेन, ते सन्मार्गेऽवतारिताः ।
[2]स्वं गच्छं सङ्गताः सोऽपि, कृतार्थं स्वं पदं ययौ ॥ १४ ॥
साधुसन्दिष्टसद्धर्म–कर्मणायुः प्रपाल्य सः ।
पल्योपमस्थितिर्जज्ञे, देवः 'सौधर्म'कल्पगः ॥ १५ ॥
ततश्च्युतो 'विनीता'यां, मरीचिरिति सोऽभवत् ।
वृषभप्रभुपुत्रस्य, पुत्रो भरतचक्रिणः ॥ १६ ॥
युगादिदेवपादान्ते, समये सोऽग्रहीद् व्रतम् ।
यतिधर्मं यथोक्तं स, चिरकालमपालयत् ॥ १७ ॥
ग्रीष्मेऽर्ककरभीष्मेऽसा–वसहिष्णुः परीषहान् ।
अन्यदाऽचिन्तयच्चित्ते, चारित्रावरणोदयात् ॥ १८ ॥
शक्नोम्यतः परं कर्तुं, न दुष्करमिदं व्रतम् ।
एतत्त्यागे त्रपा स्यात् तत्, करिष्ये दर्शनान्तरम् ॥ १९ ॥
ध्यात्वेति सुखलिप्सुः स, 'त्रिदण्डि'व्रतितां श्रितः ।
आदिप्रभुपरीवार–पार्श्ववर्ती चचार च ॥ २० ॥

---

१ क–'तथा' । २ ख–'स्वगच्छं सोऽपि कृतार्थः स्वपदं' ।

पप्रच्छेत्यन्यदा चक्री, भरतो वृषभप्रभुम् ।
भावितीर्थकृतो जीवः, कोऽप्यस्यामस्ति पर्षदि ? ॥ २१ ॥
प्रभुः प्राहेति भरत !, मरीचिर्यस्तवाङ्गजः ।
साम्प्रतं त्यक्तचारित्र–स्त्रिदण्डित्वेन वर्तते ॥ २२ ॥
भाव्यत्र 'भरत'क्षेत्रे, स 'पोतनपुरे' पुरे ।
श्रेयांसतीर्थकृत्तीर्थे, त्रिपृष्ठः प्रथमो हरिः ॥ २३ ॥–युग्मम्
'महाविदेहे' 'मूका'यां, नगर्यां चक्रवर्त्यसौ ।
षट्खण्डाखण्डलो भावी, प्रियमित्र इति श्रुतः ॥ २४ ॥
अत्रैव 'भरत'क्षेत्रे, 'कुण्डग्रामे' भविष्यति ।
चतुर्विंशस्तीर्थकरो, वर्द्धमानोऽभिधानतः ॥ २५ ॥
ततः प्रभुमनुज्ञाप्य, प्राप्य चक्री तदन्तिकम् ।
प्रभूक्तं प्रकटीकृत्य, कृत्यवित् प्राह तं पुनः ॥ २६ ॥
त्वमत्र चरमो भावी, 'भरते' तीर्थकृद् यतः ।
मरीचे ! त्वां ततो वन्दे, प(पा)रिव्राज्यं न ते पुनः ॥ २७ ॥
इत्युक्त्वा चक्रवर्त्ती तं, वर्त्तितत्रिप्रदक्षिणः ।
भक्त्या ववन्दे भूयोऽपि, प्रभुं नत्वा पुरीं ययौ ॥ २८ ॥
अथास्फोट्य भुजावूचे, मरीचिर्मदवीचिमान् ।
अत्रार्द्धचक्री 'मूका'यां, चक्री चार्हंश्च पश्चिमः ॥ २९ ॥
भविष्यामि यतोऽहं तत्, पूर्यतामपरेण मे ।
पितामहोऽर्हतां चक्र–वर्तिनां च पिता मम ॥ ३० ॥
हरीणां प्रथमोऽहं च, ममाहो कुलमुत्तमम् ।
इति कुर्वन् मदं कर्म, नीचैर्गोत्रमुपार्जयत् ॥ ३१ ॥–विशेषकम्
कदाऽप्यसौ विधिवशाद्, व्याधिना बाधितो[1] भृशम् ।
असंयतोऽयमित्यन्यैः, प्रतिजागरितो न तु ॥ ३२ ॥
[2]ततोऽचिन्तयदित्येष, मुक्तोऽहं व्याधिनाऽमुना ।
स्वस्य शिष्यं करिष्यामि, कञ्चन प्रतिचारकम् ॥ ३३ ॥

---

१ ख–'बाधितोऽधिकम्' । २ ख–'ततो विचिन्तयत्येष' ।

उल्लापेन ततस्तेन, कपिलः कुलपुत्रकः[1] ।
प्रबोधितोऽभ्यधादेवं, धर्मोऽस्ति त्वन्मतेऽपि किम्? ॥ ३४ ॥
अर्हन्मतेऽपि धर्मोऽस्ति, मन्मतेऽप्यस्त्यदोऽवदत् ।
मरीचिरचिनोद् वार्द्धि–कोटाकोटीमितं[2] भवम् ॥ ३५ ॥
शिष्योऽभूत् कपिलस्तस्य, शिष्यास्तस्यापि जज्ञिरे ।
मरीचिः समये मृत्वा, 'ब्रह्मलोके' सुरोऽभवत् ॥ ३६ ॥
कपिलोऽपि मृतो 'ब्रह्म–लोके' देवत्वमाप्तवान् ।
स्वशक्त्या स्वमतं तेन, नीतं विश्वे प्रसिद्धताम् ॥ ३७ ॥
च्युतो मरीचिजीवोऽपि, समाप्यायुर्दशोदधीन् ।
विप्रेशः सन्निवेशेऽभूत्, 'कोल्लाके' कौशिकाह्वयः ॥ ३८ ॥
स पूर्वलक्षाशीत्यायुः, श्रित्वा प्रान्ते त्रिदण्डिताम् ।
मृत्वा भ्रान्त्वा भवं 'स्थूण'–सन्निवेशे[3] द्विजोऽजनि ॥ ३९ ॥
पुष्पमित्राभिधः[4] सोऽन्ते, त्रिदण्डित्वं श्रितो मृतः ।
द्वासप्ततिपूर्वलक्ष–प्रमाणस्यायुषः क्षये ॥ ४० ॥
मध्यमायुः स 'सौधर्मे', सुरोऽजनि ततश्च्युतः ।
'चैत्या'ह्वे सन्निवेशेऽभू–दग्न्युद्द्योतो[5] द्विजोत्तमः ॥ ४१ ॥
चतुःषष्टिपूर्वलक्षा–युः सोऽप्यन्ते त्रिदण्ड्यभूत् ।
मृत्वा देवो मध्यमायु–रासी'दीशान'कल्पगः ॥ ४२ ॥
ततश्च्युतो 'मन्दिरा'ख्ये, सन्निवेशे द्विजेश्वरः ।
षट्पञ्चाशत्पूर्वलक्षा–युष्कोऽग्निभूतिरित्यभूत् ॥ ४३ ॥
प्रागवदेव वयःप्रान्ते, प(पा)रिव्राज्यं श्रितो मृतः ।
'सनत्कुमार'कल्पेऽसौ, मध्यमायुः सुरोऽभवत् ॥ ४४ ॥
च्युत्वाऽऽसीत् पुरि 'श्वेतम्ब्यां'[6], भारद्वाज इति द्विजः ।
चतुश्चत्वारिंशत्पूर्व–लक्षप्रमितजीवितः ॥ ४५ ॥
परिव्राड् वयसः प्रान्ते, भूत्वा मृत्युमवाप्तवान् ।
अमरोऽभून्मध्यमायुः, कल्पे 'माहेन्द्र'नामनि ॥ ४६ ॥

---

१ क–'पुत्रकैः' । २ क–'कोटिकोटिमितं । ३ ख–'सन्निवेशेऽजनि द्विजः' । ४ क–'पुष्पदन्ताभिधः' । ५ ख–'दग्निद्योतो द्विजाग्रणीः' । ६ क–'श्वेतव्यां' ।

ततश्च्युत्वा भवं भ्रान्त्वा, पुरे 'राजगृहे' द्विजः ।
चतुस्त्रिंशत्पूर्वलक्षा-युष्कोऽभूत् स्थावराख्यया ॥ ४७ ॥
त्रिदण्डीभूय मृत्वा च, देवोऽभूद् 'ब्रह्मलोक'गः ।
मध्यमायुस्ततश्च्युत्वा, स बभ्राम भवान् बहून् ॥ ४८ ॥
इतोऽभूद् विश्वनन्दीति, राजा 'राजगृहे' पुरे ।
विशाखनन्दीति पत्न्यां, प्रियङ्गौ तत्सुतोऽभवत् ॥ ४९ ॥
राज्ञोऽनुजोऽस्य युवराड्, विशाखाभूतिरित्यभूत् ।
सद्धर्मचारिणी तस्य, युवराजस्य धारिणी ॥ ५० ॥
मरीचिजीवः सुकृतै-रनयोस्तनयोऽजनि ।
विश्वभूतिरिति ख्यातः, स क्रमात् प्राप यौवनम् ॥ ५१ ॥
विश्वभूतिर्व्यधात् क्रीडां, वने 'पुष्पकरण्डके' ।
अन्तःपुरपुरन्ध्रीभिः, सार्द्धं मूर्त इव स्मरः ॥ ५२ ॥
विशाखनन्द्यपि ययौ, तद्वनं क्रीडनेच्छया ।
विश्वभूतिं तदन्तःस्थं, मत्वा तस्थौ च तद्बहिः ॥ ५३ ॥
क्रीडोद्यानाद् बहिर्दत्ता-वासः क्ष्मावासवाङ्गजः ।
प्रियङ्गुदेव्याः पुरतः, स दासीभिर्न्यवेद्यत ॥ ५४ ॥
ततः क्रुधि ततस्तस्यां, तदीप्सितकृते कृती ।
मायया मेदिनीजानि-र्वदति स्म सदस्यदः ॥ ५५ ॥
क्ष्मापः पुरुषसिंहोऽस्म-दाज्ञामज्ञो न मन्यते ।
तं जेतुं याम इत्युक्त्वा, यात्राभेरीमवादयत् ॥ ५६ ॥
विश्वभूतिर्निशम्यैत-देत्य क्रीडावनान्नृपम् ।
निवार्यार्यः स्वयं चक्रे, प्रयाणं तज्जयाशया ॥ ५७ ॥
प्राप्तः पुरुषसिंहं तं, विज्ञायाज्ञानुवर्त्तिनम् ।
ववले चार्पयत् पृथ्वी-भृते तत्प्राभृतं च सः ॥ ५८ ॥
रामाभिः सममारामं, सोऽगात् 'पुष्पकरण्डक'म् ।
विशाखनन्दी मध्येऽस्ती-ति तद्द्वाःस्थो न्यवारयत् ॥ ५९ ॥

---

१ ख-'बहून् भवान्' । २ क-'सधर्म०' । ३ क-'वोङ्गजः' । ४ ख-'निवेद्यत' । ५ क-'मन्यो न' । ६ क-'रामाभिराममारामं भोगात्' ।

मायिभिर्माययैवाहं, कृष्टः क्रीडावनादतः ।
ध्यात्वेत्थमथ मुष्ट्याऽयं, कपित्थं प्राहरत् क्रुधा ॥ ६० ॥
पतितां तत्फलश्रेणीं, दर्शयन् द्वाःस्थमाह सः ।
अये मायाविनां मौली–नितीव पातयाम्यहम् ॥ ६१ ॥
[1]ज्येष्ठताते पुनर्भक्ति–रत्र प्रत्यूहकारिणी ।
भोगैर्ममालमीदृग्भि–र्वैरीदृग् बन्धुवञ्चना ॥ ६२ ॥
इत्युक्त्वा सम्भूतिमुनि–पार्श्वे गत्वाऽग्रहीद् व्रतम् ।
निशम्येत्यनु [2]नेतुं तं, राजाऽगात् सानुजानुगः ॥ ६३ ॥
त्वं सत्त्वैकनिधे! राज्यं, गृहाणानुगृहाण नः ।
इति राज्ञाऽर्थितोऽप्यैच्छद्, विश्वभूतिर्न भूपताम् ॥ ६४ ॥
तत्र त्यक्तस्पृहेऽन्यत्र, गते च गुरुणा सह ।
विश्वनन्दी निरानन्द–स्तद्वियुक्तो गृहं ययौ ॥ ६५ ॥
स विश्वभूतिरेकाकी, गीतार्थो गुर्वनुज्ञया ।
तपःकृशवपुः प्राप, विहरन् 'मथुरां' पुरीम् ॥ ६६ ॥
आगाद् विशाखानन्द्यत्रोद्–वोढुं तन्नृपजां तदा ।
मासान्तपारणे विश्व–भूतिरप्यविशत् पुरीम् ॥ ६७ ॥
विशाखनन्दिनः सैन्य–निकटे पर्यटन्नयम् ।
विश्वभूतिरिति ज्ञात्वा, तन्नरैरुपदर्शितः ॥ ६८ ॥
विशाखनन्दिनस्तस्य, पश्यतः स गवैकया ।
पर्यस्तः पतितः पृथ्व्यां, विश्वभूतिस्तपःकृशः ॥ ६९ ॥
कपित्थपातनं स्थाम, क्व ते सम्प्रत्यगादिति ।
विशाखनन्दी सैन्येन, समं तमहसच्च सः ॥ ७० ॥
हास्यकोलाहलं श्रुत्वा, क्रुधोत्तालाकृतिर्यतिः ।
गां शृङ्गाभ्यां गृहीत्वोर्ध्वं, भ्रमयित्वाऽब्रवीदिति ॥ ७१ ॥
रे रे क्रूरा! दुरात्मानः!, सिंहो यद्यपि दुर्बलः ।
तथाऽपि जम्बुकैर्नैव, कदापि परिभूयते ॥ ७२ ॥

---

१ क–'ये मृतीते (?) पुन०' । २ क–'गन्तुं' ।

अरे परिहसन्त्येवं, भवन्तः प्रश्रुतोन्मदाः ।
तपःस्थं मां यद्द्यापि, निदानं क्रियते ततः ॥ ७३ ॥
विशाखनन्दिनो युष्मत्-स्वामिनोऽमुष्य मृत्यवे ।
भवान्तरे भूरिबलो, भूयासं तपसाऽमुना ॥ ७४ ॥
कृत्वा निदानं सोऽन्यत्र, विहरन् कोटिहायनः ।
मृत्वा महामुनिः शुक्रे, प्रकृष्टायुःसुरोऽभवत् ॥ ७५ ॥
'भरते'ऽत्रैव 'पोतन-पुरे' पृथ्वीधवोऽभवत् ।
रिपुप्रतिशत्रुरिति, तस्य भद्रेति वल्लभा ॥ ७६ ॥
इतश्च प्राग्'विदेहे'ऽस्ति, नगरी 'पुण्डरीकिणी' ।
तत्रासीत् सुबलो राजा, स विरक्तोऽग्रहीद् व्रतम् ॥ ७७ ॥
मृत्वा'ऽनुत्तर'विमाने-ऽभूद् देवोऽथ ततश्च्युतः ।
इभेन्दुवृषभसर-श्चतुःस्वप्नाभिसूचितः ॥ ७८ ॥
बलभद्रोऽचलाभिख्यो, भद्रादेव्याः सुतोऽभवत् ।
क्रमान्मृगावती तस्या, मृगाक्षी तनयाऽजनि ॥ ७९ ॥-युग्मम्
सा प्राप्तयौवना मात्रा-ऽलङ्कृत्य पितुरन्तिके ।
प्रणन्तुं प्रहिता तां स, निजोत्सङ्गे न्यवेशयत् ॥ ८० ॥
पुत्र्या निरुपमं रूपं, नरनाथो निरूपयन् ।
जातानुरागस्तत्पाणि-ग्रहोपायमसूत्रयत्[2] ॥ ८१ ॥
पुत्रीं सम्प्रेष्य पौरांश्चा-हूयापृच्छदिदं नृपः ।
पृथ्व्यां यद् रत्नमुत्कृष्टं, कस्मै तदुपतिष्ठति ? ॥ ८२ ॥
प्राहुस्ते राज्ञ एवेति, तद्गिरं त्रिरुपाददौ ।
तद्वाक्छलावष्टम्भेनो-वाह पुत्रीं स निस्त्रपः ॥ ८३ ॥
स प्रजायाः पतित्वेन, प्रजापतिरिति श्रुतः ।
भद्राऽपि सत्रपा पुत्रा-न्विताऽगाद् दक्षिणापथम् ॥ ८४ ॥
'माहेश्वरीं' पुरीं तत्रा-ऽचलो व्यरचयन्नवाम् ।
नियोज्य जननीं तत्र, स ययौ जनकान्तिके ॥ ८५ ॥
स विश्वभूतिजीवोऽपि, 'महाशुक्रा'च्युतस्ततः ।

---

१ क-'मुनिश्चक्रे' । २ क-'सूचयत्' ।

कुक्षौ प्रजापतेः पत्न्या, मृगावत्याः समागमत् ॥ ८६ ॥
सिंहा-ऽभिषेक-कुम्भा-ऽब्धि-सूर्या-ऽग्नि-रत्नसञ्चयैः ।
स्वप्नैः सप्तभिरुक्तार्द्ध-चक्रित्वः स सुतोऽजनि ॥ ८७ ॥
आसन्नमुष्य वपुषि, त्रयः पृष्ठकरण्डकाः ।
त्रिपृष्ठ इति तत् तस्य, नाम पित्रा प्रकल्पितम् ॥ ८८ ॥
अचलेनाऽचलप्रेम्णा, रममाणोऽभवद् युवा ।
त्रिपृष्ठः प्रथमो विष्णु-रशीतिधनुरुन्नतः ॥ ८९ ॥
विशाखनन्दिजीवोऽपि, भवं भ्रान्त्वाऽभवद् गिरौ ।
'तुङ्गा'ह्वे मृगराड् 'शङ्ख-पुरं' सोऽन्त्यमुपाद्रवत् ॥ ९० ॥
तत्र कालेऽभवद् भूमि-धवो 'रत्नपुरे' पुरे ।
हयग्रीवः प्रतिहरि-स्त्रिखण्ड'भरत'प्रभुः ॥ ९१ ॥
कुतो[१] मृत्युर्म इत्युक्त-स्तेन नैमित्तिकोऽवदत् ।
प्रचण्डश्चण्डवेगं ते, दूतं यो धर्षयिष्यति ॥ ९२ ॥
सिंहं 'शङ्खपुरा'सन्ने, 'तुङ्गा'द्रौ यो हनिष्यति ।
स ते हन्तेति तं ज्ञातु-मुपायमकरोदिति ॥ ९३ ॥
'तुङ्गा'द्रिं निकषा 'शङ्ख-पुरे' शालीनवापयत् ।
तद्रक्षणाय क्षोणीशान्, वारकेणादिदेश सः ॥ ९४ ॥
वीर्यसारौ कुमारौ तौ, श्रुत्वा राज्ञः प्रजापतेः ।
कुतोऽप्यर्थाचण्डवेगं, प्रैषीद् दूतं सशङ्कितः ॥ ९५ ॥
स पुत्रादिपरीवारो, यदा राजा प्रजापतिः ।
सङ्गीतसुखसर्वस्वं, सदस्यनुभवन्नभूत् ॥ ९६ ॥
तदा दूतश्चण्डवेगः, समदोऽग्रसदोऽविशत् ।
अभ्युत्तस्थौ च तं भूपो, रङ्गभङ्गोऽभवत् ततः ॥ ९७ ॥–युग्मम्
पृष्टास्त्रिपृष्ठा-ऽचलयोः, शशंसुः सचिवा इति ।
प्रधानभूतो दूतोऽयं, हयग्रीवजगद्विभोः ॥ ९८ ॥
अन्येद्युर्दूतमभ्यर्च्य, विससर्ज प्रजापतिः ।

---

१ ख–'कुतो मे मृत्युरित्युक्त–' ।

तमुग्रः साग्रजो मार्गे, त्रिपृष्ठः पृष्ठतोऽगमत् ॥ ९९ ॥
रङ्गभङ्गरुषाऽध्वार्द्धे, तमभ्येत्योत्कटैर्भटैः ।
त्रिपृष्ठोऽकुट्टयन्नष्टाः, क्वापि तत्पत्तयो रयात् ॥ १०० ॥
अगृह्णादश्वग्रीवाय, प्रहितं प्राभृतादिकम् ।
वृत्तान्तं तन्नृपो मत्वा, दूतं प्रत्यानयत् पुनः ॥ १०१ ॥
नव्यद्रव्यैः स सत्कृत्य, चण्डवेगं सगौरवम् ।
राज्ञोक्तं[1] सुतदुर्वृत्तं, न शस्यं स्वामिने खलु ॥ १०२ ॥
एवं करिष्य[2] इत्युक्त्वा, सोऽगात् किन्त्वग्रतो गतैः ।
तन्नरैरश्वग्रीवाय, शशंसे तस्य[3] धर्षणम् ॥ १०३ ॥
स्ववृत्तज्ञाय भूपाय, दूतेन स्वस्य धर्षणम् ।
वृथाकथनभीतेन, यथातथमकथ्यत ॥ १०४ ॥
ततो रुषाऽश्वग्रीवेण, नियुक्तः शालिरक्षणे ।
प्रजापतिरिति प्रोचे, त्रिपृष्ठा-ऽचलयोः पुरः ॥ १०५ ॥
वत्सौ मत्सरवान् स्वामी, युवयोरपराधतः ।
अवारेऽप्यनिवारोऽय-मादिशत् सिंहरक्षणम्[4] ॥ १०६ ॥
एवमुक्त्वा प्रतिष्ठातुं, पृथ्वीशं प्रतिषिध्य तौ ।
कुमारौ जग्मतुः सिंह-युद्धश्रद्धामयौ स्वयम् ॥ १०७ ॥
प्राप्तः 'शङ्ख'पुरे[5]ऽपृच्छत्, त्रिपृष्ठः शालिगोपकान् ।
वारयन्ति कथङ्कार-मन्ये सिंहं महीधवाः ? ॥ १०८ ॥
तैरुक्तं वर्षवारेण, शालिना(जा ?)लवनं नृपाः ।
कृतपत्तिरथाश्वेभ-वप्रा रक्षन्ति जाग्रतः ॥ १०९ ॥
अन्यथाऽसन्न'तुङ्गा'ह्व-गिरिगह्वरगो हरिः ।
पवमान[6] इवोत्पत्त्य, क्रूरः कर्षति कर्षकान् ॥ ११० ॥
त्रिपृष्ठस्तानिति प्राह, यत् कालं स्वास्यतीह कः ? ।
तद् दर्शयत पञ्चास्यं, यमास्यं प्राप्यते यथा ॥ १११ ॥

१ ख-'राज्ञोचे' । २ ख-'करिष्यामीत्यु०' । ३ ख-'दूतधर्षणम्' । ४ क-'रक्षणे' । ५ ख-'सिंहपुरे' । ६ क-'पविपात' ।

मृगेन्द्रगर्भा दूरस्थै–स्ततस्तैर्दर्शितां गुहाम्।
रथस्थौ धृतवर्मा-ऽस्त्रौ, तौ त्रिपृष्ठा-ऽचलौ गतौ ॥ ११२ ॥
तौ वीरौ तद्गुहाऽभ्यर्णे, क्ष्वेडनादं प्रतेनतुः।
हर्यक्षो निर्ययौ जृम्भा–भीमवक्त्रो ध्वनिक्रुधा ॥ ११३ ॥
पृथ्वीस्थेन रथस्थस्य, न समः समरो मम।
इति त्रिपृष्ठो भूपृष्ठे–ऽवातरत् फलका-ऽसिभृत् ॥ ११४ ॥
अवर्मितवपुर्दंष्ट्रा–नखास्त्रोऽयमिति क्षणात्।
त्रिपृष्ठो वर्म-चर्मा-ऽसीन्, मुमोचाच्चर्यतमक्रमः ॥ ११५ ॥
हर्यक्षः प्रेक्ष्य तं जात–जातिस्मृतिरचिन्तयत्।
अहं विशाखनन्दी स, विश्वभूतिरयं पुनः ॥ ११६ ॥
एकमाश्चर्यमेको यन्–मद्गुहामयमागमत्।
रथ-चर्मा-ऽस्त्रमोक्षैस्तु, परा चित्रपरम्परा ॥ ११७ ॥
मदावलेपाद् बलिष्ठं–मन्यो वेत्ति न बालिशः।
मदोत्कटकरिघटा–पाटने पाटवं मम ॥ ११८ ॥
हन्म्येनं तद् विचिन्त्येति, फालं दत्त्वोत्पपात च।
पपातोपत्रिपृष्ठं च, व्यात्तवक्त्रः स केसरी ॥ ११९ ॥
आपतन्नूर्ध्वविततल–स्त्रिपृष्ठेनाभिपत्य सः।
ऊर्ध्वौष्ठः पाणिनैकेना–ऽपरेणाप्यधरे धृतः ॥ १२० ॥
तेनैवास्यविदारेण, क्रुद्धमूर्ध्वशरीरतः।
स बलिष्ठस्त्रिपृष्ठस्तं, चक्रे खण्डद्वयं रयात् ॥ १२१ ॥
किमनेन कुमारेण, कुमारेणास्मि मारितः।
इत्यमर्षाद् विखण्डोऽपि, स्फुरति स्म स केसरी ॥ १२२ ॥
त्रिपृष्ठस्यान्त्यतीर्थेश–जीवस्यास्याथ सारथिः।
गणभृद् गौतमजीवः, स्फुरन्तं सिंहमब्रवीत् ॥ १२३ ॥
पशुसिंह! नृसिंहेन, त्वमनेनासि मारितः।
निहतोऽसि न हीनेन, माऽपमानं वृथा कृथाः ॥ १२४ ॥

---

१ क–'जम्भा–'।

अमृतेनेव वाक्येन, तेन सिक्तः स केसरी ।
प्रीतो मृत्वा चतुर्थेऽथ, नरके नारकोऽजनि ॥ १२५ ॥
सिंहो हृदयशल्यं ते, हतः सम्प्रति निर्भयः ।
यथेष्टं घोटकग्रीव!, शालीन् कवलयोज्ज्वलान् ॥ १२६ ॥
इति स्वस्वामिने कथ्यं, तथ्यं दूत! त्वयेति तम् ।
उक्त्वा त्रिपृष्ठो दत्त्वा च, सिंहकृत्तिं विसृष्टवान् ॥ १२७ ॥–युग्मम्
प्रपेतुः 'पोतनपुरं', तौ त्रिपृष्ठा-ऽचलौ ततः ।
तत् तथाऽकथयद् दूतो, हयग्रीवाग्रतो गतः ॥ १२८ ॥
हयग्रीवः [1]पीवभयो, निहन्तुं [2]छद्मनाऽपि तौ ।
दत्त्वा शिक्षां पुनः प्रैषीद्, दूतं प्रति प्रजापतिम् ॥ १२९ ॥
दूतो गत्वेति तं प्राह, प्रहिणु स्वसुतौ नृप! ।
परितोषफलं राज्यं, दत्ते यदनयोः प्रभुः ॥ १३० ॥
प्रजापतिर्जजल्पेद-मेष्यामि स्वामिनं स्वयम् ।
प्रहिणोमि सुतौ नाहं, साहङ्काराविमौ यतः ॥ १३१ ॥
दूतो जगाद चेद् राजन्!, नाज्ञां यापयिष्यसि ।
ततः प्राणप्रहाणाय, रणाय [3]प्रगुणो भव ॥ १३२ ॥
इत्युक्तवतो दूतस्य, प्रधर्षणममर्षणौ ।
कृत्वा कुमारावारात् तं, निरकासयतां पुरात् ॥ १३३ ॥
हयग्रीवाय दूतोऽपि, गत्वाऽऽचख्यौ स्वधर्षणम् ।
सोऽपि कोपेन 'पोतन-पुरं' प्रत्यचलद् बलैः ॥ १३४ ॥
त्रिपृष्ठं 'रथनूपुर-चक्रवाल'पतिः सुताम् ।
विद्याधरेन्द्रो ज्वलन-[4]जटी स्वां पर्यणाययत् ॥ १३५ ॥
स्वयम्प्रभाऽऽख्यया पुत्र्या, तया सह तदाऽखिलाः ।
विद्या विद्याधराधीश-स्त्रिपृष्ठाय ददौ मुदा ॥ १३६ ॥
विद्यापुष्टस्त्रिपृष्ठोऽपि, हयग्रीवस्य सम्मुखम् ।
अचलेन समं भ्रात्रा, प्राचलत् प्रबलैर्बलैः ॥ १३७ ॥

---

१ पुष्टभीतिः । २ ख–'छद्मनाऽथ तौ' । ३ क–'प्रगुणीभव' । ४ क–'जटिः' ।

'रथावर्त्तन'गोपान्ते, हयग्रीव-त्रिपृष्ठयोः ।
आसीत् संवरणश्रान्त–कृतान्तचरणो रणः ॥ १३८ ॥
निषिध्य सैन्ययोः प्राज्य–निधनं [1]प्रधनं स्वयम् ।
अश्वग्रीवस्त्रिपृष्ठश्च, युयुधाते क्रुधा मिथः ॥ १३९ ॥
त्रिपृष्ठाय [2]निष्पिष्टास्त्र–श्चक्रं भाचक्रभीषणम् ।
अश्वग्रीवोऽमुचद् वैरि–ग्रीवालवनलम्पटम् ॥ १४० ॥
तुम्बेन पतितं चक्रं, त्रिपृष्ठोरःस्थलान्तरे ।
तद् बभौ गगनक्रोडे, किल मार्तण्डमण्डलम् ॥ १४१ ॥
त्रिपृष्ठः पाणिनिष्ठेन, तेन चक्रेण हेलया ।
लुलाव तुरगग्रीव–ग्रीवां कदलिकाण्डवत् ॥ १४२ ॥
अचलः प्रथमो राम–स्त्रिपृष्ठः प्रथमो हरिः ।
इत्युद्घोष्य सुराः पुष्प–वृष्टिं तदुपरि व्यधुः ॥ १४३ ॥
सर्वेऽप्युर्वीधवाः सद्य–स्तदाज्ञां प्रतिपेदिरे ।
'भरत'क्षेत्रे याम्यार्द्धं, ताभ्यां साधितमोजसा ॥ १४४ ॥
'मगधे'ष्व[3]र्द्धचक्री स, आद्यः कोटिशिलां शिलाम् ।
वामदोष्णोद्धृतां मूर्ध्नि, छत्रं कृत्वाऽमुचत् पुनः ॥ १४५ ॥
कृतो 'वैताढ्ये' ज्वलन–जटी श्रेणिद्वयेश्वरः ।
[4]अस्याभूचार्द्धचक्रित्वा–ऽभिषेकः 'पो[5]तने' पुरे ॥ १४६ ॥
क्रमात् पुत्रस्त्रिपृष्ठस्य, जज्ञे श्रीविजयाह्वयः ।
श्रेयांसतीर्थकृत्पार्श्वे, सम्यक्त्वप्राप्ति[6]रस्य्यभूत् ॥ १४७ ॥
गायन्तो गायनाचार्या–स्त्वयैते शयिते मयि ।
इत्यादिष्टस्त्रिपृष्ठेन, ताल्पिको नक्तमेकदा ॥ १४८ ॥
प्रबुद्धस्तेषु गायत्सु, शय्यापालं जगौ हरिः ।
नामी विसृष्टाः सोऽप्याह, कर्णयोः सुखदा इति ॥ १४९ ॥
तदाकर्ण्य क्रुधा तप्तं, कर्णयोस्तस्य विष्णुना ।
क्षेपितं त्रपु तेनाशु, तल्पपालो ममार सः ॥ १५० ॥

१ क–'पिधनं' । २ क–'निपृष्टस्त्रिव्येकं(?)भाचक्र०' । ३ वासुदेवः । ४ क–'तस्या०' । ५ ख–'पोतनपुरे' । ६ क–'रम्यभूत्' ।

दुर्विपाकं तदा वेद्यं, त्रिपृष्ठोऽपि न्यकाचयत् ।
स हिंसादिभिरप्यन्य-दुग्रं कर्म बबन्ध च ॥ १५१ ॥
प्रपाल्यायुश्चतुरशी-त्यष्टलक्षीमयं मृतः ।
नारकः सप्तमावन्या-'मप्रतिष्ठान'गोऽजनि ॥ १५२ ॥
तद्वियुक्तो यतिर्भूत्वा, तप्त्वा प्रापाऽचलः शिवम् ।
सिंहस्त्रिपृष्ठजीवो-ऽभूदुद्धृतो नरकावने[1]ः ॥ १५३ ॥
स क्रूरात्मा मृतः सिंह-श्चतुर्थं नरकं गतः ।
उद्धृत्य नरकाद् भ्रान्त-स्तिर्यग्मर्त्यभवान् बहून् ॥ १५४ ॥
कदापि मानुषं जन्म, प्राप्य कर्मार्जयच्छुभम् ।
राजाऽपर'विदेहे'ऽभून्-'मूका'पुर्यां धनञ्जयः ॥ १५५ ॥
तत्पत्नी धारिणी सोऽभूत्, [2]प्रियमित्रस्तयोः सुतः ।
चतुर्दशमहास्वप्नो-दितश्चक्रित्ववैभवः ॥ १५६ ॥
स युवा समभूच्चक्री, षट्खण्डविजयेश्वरः ।
पोट्टिलाचार्यपादान्ते, प्रतिबुद्धोऽग्रहीद् व्रतम् ॥ १५७ ॥
तपस्तेपे स शान्तात्मा, वर्षकोटीं समुत्कटम् ।
आयुः स चतुरशीति-पूर्वलक्षाण्यपूरयत् ॥ १५८ ॥
विधायानशनं प्रान्ते, धर्मध्यानपरायणः ।
मृत्वा 'शुक्रे' स 'सर्वार्थ'-विमाने विबुधो[3]ऽभवत् ॥ १५९ ॥
ततश्च्युत्वाऽत्र 'भरते', 'छत्रा'पुरि स भूपतेः ।
जितशत्रोर्भद्रापत्न्यां, नन्दनाख्यः सुतोऽजनि ॥ १६० ॥
तं युवानं पिता राज्ये, न्यस्य प्रव्रजितः स्वयम् ।
सोऽष्टानां चतुर्विंशति-लक्षीं राज्यमपालयत् ॥ १६१ ॥
प्रव्रज्य पोट्टिलाचार्य-पार्श्वे तेपे तपोऽद्भुतम् ।
विंशत्या स्थानैस्तीर्थकृत्-नामकर्मार्जयच्च सः ॥ १६२ ॥
वर्षलक्षं व्रती सोऽन्ते-ऽनशनी षष्टिवासरान् ।
क्रमादायुः पञ्चविंश-त्यष्टलक्षाण्यशेषयत् ॥ १६३ ॥

---

१ क-'नरकाद् वने'। २ ख-'प्रियमित्रः सुतस्तयोः'। ३ क-'ऽजनि'।

अधि'प्राणत'कल्पं स, 'पुष्पोत्तर'विमानगः ।
आसीद् विंशतिसागरो–पमायुर्भासुरः सुरः ॥ १६४ ॥
'जम्बू'द्वीपेऽत्र 'भरत'–क्षेत्रेऽत्रैव द्विजन्मनाम्[1] ।
सन्निवेशोऽस्ति 'ब्राह्मण–कुण्ड'ग्राम इति स्मृतः ॥ १६५ ॥
तस्मिन् वृषभदत्तोऽभूत्, 'कोडालस'कुलो द्विजः ।
'जालन्धर'कुलोद्भूता, [2]देवानन्देति तत्प्रिया ॥ १६६ ॥
तत्कुक्षौ नन्दनजीवो–ऽवातार्षीत् 'प्राणता'च्च्युतः ।
आषाढे षष्ठ्यां शुक्लायां, विधौ हस्तोत्तरर्क्षगे ॥ १६७ ॥
चतुर्दश महास्वप्नान्, देवानन्दा ददर्श सा ।
प्रातराख्यच्च पत्ये सो–ऽवदद् भावी सुतोऽद्भुतः ॥ १६८ ॥
द्व्यशीतिर्दिवसा जग्मुः, प्रभौ तद्गर्भमाश्रिते[3] ।
ततः 'सौधर्मा'[4]धिपतेः, सिंहासनमकम्पत ॥ १६९ ॥
देवानन्दागर्भगतं, विज्ञायावधिना विभुम् ।
मुक्तसिंहासनो नत्वा, वृत्रहेति व्यचिन्तयत् ॥ १७० ॥
भिक्षावृत्तिकुले रोर–कुले तुच्छकुलेऽपि वा ।
नोत्पद्यन्ते तीर्थकृतो, जगत्पूज्याः कदाचन ॥ १७१ ॥
'इक्ष्वाकु'वंशमुख्येषु, क्षत्रवंशेष्वमी पुनः ।
अर्णवेष्विव रत्नानि, जायन्ते जिनपुङ्गवाः ॥ १७२ ॥
कुले नीचेऽवतरणं, स्वामिनस्तदसङ्गतम् ।
यद्वा प्राक्कर्म नामुक्तं, क्षयमेत्यर्हतामपि ॥ १७३ ॥
उपस्थितं तदद्यापि, यन्मरीचिभवे विभुः ।
कुर्वन् कुलमदं नीचै–र्गोत्रकर्मार्जयत् पुरा ॥ १७४ ॥
जातान् नीचकुले कर्म–वशादुच्चकुलेऽन्यतः ।
अर्हतः क्षेप्तुमस्माक–मधिकारोऽस्ति निश्चितः ॥ १७५ ॥
स्वामी तत् कुत्र सञ्चार्यो, ज्ञातं तिष्ठति 'भारते' ।
क्षेत्रेऽत्र 'क्षत्रियकुण्ड'–ग्रामाह्वं प्रवरं पुरम् ॥ १७६ ॥

---

१ क–'जन्मनः' । २ क–'नन्दादेवीति' । ३ क–'संश्रिते' । ४ क–'सुधर्माधि०' ।

'इक्ष्वाकु'वंशसम्भूत-स्तत्र क्षत्रशिरोमणिः ।
सिद्धार्थोऽस्ति धराधीश-स्तस्यास्ते त्रिशला प्रिया ॥ १७७ ॥
तद्गर्भेऽस्त्यधुना पुत्री, कार्यस्तदनयोर्मया ।
देवानन्दा-त्रिशलयो-र्लघु गर्भव्यतिक्रमः ॥ १७८ ॥
विचिन्त्यैवं नैगमेषी, सेनानीः पविलक्ष्मणा ।
कार्ये तत्र समादिष्ट-स्तत् तथैव च निर्ममे ॥ १७९ ॥
श्यामाश्विनत्रयोदश्या-मिन्दौ हस्तोत्तराश्रिते ।
द्व्यशीतिदिवसप्रान्ते, स्वाम्याप त्रिशलोदरम् ॥ १८० ॥
चतुर्दश महास्वप्नान्, मुखे प्रविशतस्तदा ।
ददर्श त्रिशला देवा-नन्दा निर्गच्छतः पुनः ॥ १८१ ॥
मातुर्मयि स्पन्दमाने, मा भूत् कष्टमिति प्रभुः ।
गर्भे निभृत एवास्थाद्, योगीन्द्र इव योगवित् ॥ १८२ ॥
हृतः केनापि मद्गर्भ, इत्यार्त्ता त्रिशलाऽभवत् ।
सिद्धार्थोऽप्यवबुध्येदं, सखेदहृदयोऽजनि ॥ १८३ ॥
तज्ज्ञानत्रयवान् मत्वा, दुःखं पित्रोः परं प्रभुः ।
गर्भसञ्ज्ञाववोधाय, स्वामङ्गुलिमचालयत् ॥ १८४ ॥
गर्भोऽस्त्यक्षत एवेति, पित्रोः प्रीतिरभूत् परा ।
अदृष्टेऽपि सुते स्नेहं, तं मत्वा स्वाम्यचिन्तयत् ॥ १८५ ॥
[1]जीवतोरनयोर्दीक्षां, पित्रोर्दुष्प्रतिका[2]रिणोः ।
यद्यहं स्वीकरिष्ये त-दार्त्तध्याने पतिष्यतः ॥ १८६ ॥
जीवतोरनयोर्दीक्षां, न ग्रहीष्याम्यहं ततः ।
सप्तमे मासि जग्राहा-ऽभिग्रहं भगवानिति ॥ १८७ ॥
चैत्रे शुक्लत्रयोदश्यां, शशिन्युत्तरफा[3]ल्गुनी ।
धिष्ण्यं श्रिते कन्याराशौ, देव्यथासूत सा सुतम् ॥ १८८ ॥
तीर्थेशं चतुर्विंशति-तम'मिक्ष्वाकु'वंशजम् ।
काञ्चनप्रतिमच्छायं, सिंहलाञ्छनलाञ्छितम् ॥ १८९ ॥-युग्मम्

१ ख-'अनयोर्जीवतोर्दीक्षां' । २ क-'कर्मणः' । ३ क-'फाल्गुनिम्' ।

कालभावाल्लघुतनुः, स्वस्वभक्त्या सुरैः कृतम् ।
इयद्भिरुदकैः स्नात्रं, कथं स्वामी सहिष्यते ॥ १९० ॥
इति क्लृप्तां हरेः शङ्कां, हर्तुं 'मेरु'गिरिं प्रभुः ।
लीलयाऽचालयद् वाम-पादाङ्गुष्ठाग्रपीडनात् ॥ १९१ ॥
तद् विज्ञायावधिज्ञानात्, प्रभोर्लीलायितं हरिः ।
स्वामिन्! मिथ्या वितर्कं मे, क्षमस्वेति ननाम च ॥ १९२ ॥
गर्भस्थेऽत्राभवद् वृद्धि-र्गृहे देशे पुरे पुरे ।
इति व्यधाद् वर्द्धमान, इति नाम पिता प्रभोः ॥ १९३ ॥
कृतोपसर्गैरप्येष, न प्रकम्प्यः सुरैरपि ।
हरिर्महावीर इति, प्रभोर्नामाकरोत् परम् ॥ १९४ ॥
न्यूनाब्दहायनः सार्द्धं, सवयोभिर्नृपात्मजैः ।
विभुर्वयोऽनुरूपाभिः, क्रीडाभिः क्रीडति स सः ॥ १९५ ॥
तदाऽवदत् द्युसन्नाथो, द्युसदः सदसोऽन्तरा ।
महावीरविभुर्धीरः, क्षोभ्यो भुवि न केनचित् ॥ १९६ ॥
तं वीरं क्षोभयाम्येष, इति द्वेषधरः सुरः ।
कोऽपि त्वरापरः प्राप, सनीडं[1] क्रीडतः प्रभोः ॥ १९७ ॥
कुर्वन्नामलकीं क्रीडां, यत्रारूढस्तरौ प्रभुः ।
स सर्पीभूय भोगेन[3], तं दुष्टोऽवेष्टयत् तले ॥ १९८ ॥
भीग्रस्तेषु समस्तेषु, त्रस्तेषु नृपसूनुषु ।
प्रभुरुत्क्षिप्य साक्षेपं, दूरे चिक्षेप पन्नगम् ॥ १९९ ॥
रन्तुं पुनः समीयुस्ते, कुमारास्तत्र सत्रपाः ।
कुमाराकारतां कृत्वा, रेमे तेष्वमरोऽपि सः ॥ २०० ॥
पणोऽयमभवत् तत्र, क्रीडायां पूर्वमेव यः ।
पादपस्याग्रमारोहेत्, कुमारः स जयी भवेत् ॥ २०१ ॥
विनिर्जिताश्च जेतारं, पृष्ठारूढं वहन्ति ते ।
जित्वा वीरविभुः पृष्ठा-रूढश्चान्यानवाहयत् ॥ २०२ ॥

१ ख-'स्नानं'। २ समीपम्। ३ क-'वेगेन'।

पृष्ठारूढः क्रमाद् वीरो, वर्द्धमानं सुरं दिवि ।
निर्भयो मुष्टिना पृष्ठे, हत्वा तं वामनं व्यधात् ॥ २०३ ॥
स्वं रूपं शक्रसङ्कॢप्तां[1], प्रभोर्धैर्यस्तुतिं च ताम् ।
प्रकाश्य स प्रभुं नेत्वा[2], क्षमयित्वा ययौ सुरः ॥ २०४ ॥
साग्राष्टहायनं नीतं, पित्रा पाठकृते प्रभुम् ।
उपाध्यायान्तिके सिंहा-सने शक्रो न्यवेशयत्[3] ॥ २०५ ॥
प्रार्थितः प्रभुरिन्द्राय, तदा शब्दानुशासनम्[4] ।
यज्जल्पति स तल्लोके, 'जैनेन्द्र'मिति विश्रुतम् ॥ २०६ ॥
स्वामी क्रमात् सप्तहस्तो-च्छ्रयस्तारुण्यमाश्रयत् ।
राज्ञः समरवीरस्य, सुतैनं वोढुमागमत् ॥ २०७ ॥
सा तु प्रार्थनया मातु-स्तदाज्ञाभङ्गभीरुणा ।
राजकन्या यशोदाख्या, प्रभुणा पर्यणीयत ॥ २०८ ॥
समये समभूत् पुत्री, स्वामिनः प्रियदर्शना ।
राजात्मजो जमालिस्तां, व्युवाहावाप्तयौवनाम् ॥ २०९ ॥
जन्मतः स्वामिनो वर्षे-ऽष्टाविंशे पितरौ मृतौ ।
कल्पितानशनौ कल्प-'मच्युता'ह्वं समीयतुः ॥ २१० ॥
सिद्धार्थ-त्रिशलाजीवौ, च्युता'वच्युत'कल्पतः ।
उभावपर'विदेह[5]'-क्षेत्रे मुक्तिमवाप्स्यतः ॥ २११ ॥
अर्थितः पार्थिवो नाभूद्, भवभीरुर्विभुर्यतः ।
तदग्रजस्ततो जज्ञे, नृपतिर्नन्दिवर्द्धनः ॥ २१२ ॥
जीवतः पितरौ यावत्, तावद् गृह्णामि न व्रतम् ।
इत्यभिग्रहमापूर्णं, प्रेक्ष्य दीक्षाग्रहाग्रहः ॥ २१३ ॥
पितृशोकभृतो भ्रातु-रातुरस्योपरोधतः ।
विभुर्भावयतीभूय, वर्षमेकमवाहयत् ॥ २१४ ॥-युग्मम्
तीर्थं प्रवर्त्तयेत्युक्तो, 'लोकान्तिक'सुरैः प्रभुः ।
यथाकाममथार्थिभ्यो, दानं दत्ते स वार्षिकम् ॥ २१५ ॥

---

१ ख-'सम्भूतां' । २ क-'नीत्वा' । ३ क-'न्यवीविशत्' । ४ व्याकरणम् ।
५ क-'विदेहे' ।

षट्त्रिंशत्कार्मुकप्रोच्चां, पञ्चाशद्धनुरायताम् ।
पञ्चविंशतिकोदण्ड-विस्तारां शिबिकोत्तमाम् ॥ २१६ ॥
'चन्द्रप्रभा'ऽभिधां नन्दि-वर्द्धनो निरमापयत् ।
तादृशीमेव शक्रोऽपि, चक्रेऽन्यां शिबिकां पुनः ॥ २१७ ॥-युग्मम्
[1]विशांपतेः शिबिकायां, शक्रस्य शिबिका परा ।
देवशक्त्याऽन्तर्हिताऽऽसीत्, तत्रारूढो जगत्पतिः ॥ २१८ ॥
'ज्ञातखण्डवनं' नाम, स गत्वोपवनं [2]विभुः ।
मार्गशीर्षे श्यामलायां, दशम्यां त्रिंशदब्दिकः ॥ २१९ ॥
हस्तोत्तरास्थिते चन्द्रे, प्रहरेऽह्नश्च [3]पश्चिमे ।
कृतषष्ठतपा दीक्षा-मेकाकी प्रतिपन्नवान् ॥ २२० ॥-युग्मम्
सिद्धार्थनृपमित्राय, तदाप्ताय द्विजन्मने ।
सोमाय देवदूष्यार्द्धं, दरिद्राय ददौ विभुः ॥ २२१ ॥
स्वामी तत्र दिने सायं, 'कूर्मार'ग्राममाप्तवान् ।
उपसर्गकरं गोपं, तत्र शक्रो न्यवारयत् ॥ २२२ ॥
उपसर्गा भविष्यन्ति, द्वादशाब्दानि ते प्रभो ! ।
तान् सर्वान् वारयिष्यामि, पार्श्ववर्त्य[4]हमन्वहम् ॥ २२३ ॥
इत्युक्ते हरिणा स्वामी, साहाय्यर्हन्तो हि न क्वचित् ।
अपेक्षन्तेऽ[5]न्यसाहाय्यं, श्रेयःप्राप्तौ कृतोद्यमाः ॥ २२४ ॥
इत्युक्त्वा स्वामिनो मातृ-ष्वस्रीयं व्यन्तरं सुरम् ।
शक्रो निदेश्य रक्षायै, सिद्धार्थं स्वपदं ययौ ॥ २२५ ॥
'कोल्लाक'सन्निवेशेऽभूद्, द्वितीये दिवसे प्रभोः ।
बहुलाह्वद्विजगृहे, परमान्नेन पारणम् ॥ २२६ ॥
शूलपाण्याख्ययक्षेण, चण्डकौशिकदंष्ट्रिणा ।
त्रिपृष्ठभवनिर्भिन्न-सिंहजीवो भवे [6]भ्रमन् ॥ २२७ ॥
सुदाढाख्योऽभवन्नाग-कुमारस्तेन वैरिणा ।
गोशालेन स्वयं शिष्यी-भूय मङ्खलिसूनुना ॥ २२८ ॥

---

१ नृपस । २ ख-'प्रभुः' । ३ क-'पञ्चमे' । ४ ख-'चार्यह०' । ५ ख-'ऽथ' । ६ क-'ऽभ्रमत्' ।

भार्या विजयवत्याख्या, या त्रिपृष्ठभवे प्रभोः ।
अगौरवाऽहमित्येषा, तदामर्षान्ममार सा ॥ २२९ ॥
भवे भ्रान्त्वा तदा जाता, व्यन्तरी कटपूतना ।
जटाग्रवल्कलाग्रोत्थ–शीतलोदकबिन्दुभिः ॥ २३० ॥
माघे तपस्विनीरूप–धारिण्या नक्तमेतया ।
[1]तथा सङ्गमकेनेन्द्र–स्तुतिक्रुद्धेन नाकिना ॥ २३१ ॥
अयोभारसहस्राढ्य–कालचक्रप्रमोचिना ।
पृष्ठलग्नेन षण्मासान्, नानोपद्रवकारिणा ॥ २३२ ॥
यस्त्रिपृष्ठभवे शय्या–पालकं[2]स्त्रपु पायितः ।
सोऽभूद् भवे भ्रमन् गोपो, ग्रामे '[3]षण्मानि'नामनि ॥ २३३ ॥
तेन कर्णद्वयीक्षिप्त–काशकीलद्वयेन च ।
एतैरन्यैश्चोपसर्गान्, कृतान् सेहे बहून् विभुः ॥ २३४ ॥–अष्टभिः कुलकम्
शीतं माघनिशायां यद्, वितेने कटपूतना ।
जघन्येषूपसर्गेषु, तदुत्कृष्टं प्रभोरभूत् ॥ २३५ ॥
कालचक्रं मध्यमेषू–त्कृष्टं दुष्टसुरेरितम् ।
उत्कृष्टेषूत्कृष्टतमं, शल्यप्रोद्धरणं पुनः ॥ २३६ ॥–युग्मम्
तपःसङ्ख्या पुनरिय–मेकं षाण्मासिकं प्रभोः ।
दिनपञ्चकहीनं तु, षाण्मासिकमभिग्रहे ॥ २३७ ॥
चतुर्मासक्षपणानि, नव द्वे तु त्रिमासिके ।
सार्द्धे द्विमासिके द्वे च, द्विमासिकानि षट् पुनः ॥ २३८ ॥
सार्द्धमासिके पुनर्द्वे, मासिकानि [4]द्विषट् पुनः ।
जातान्यर्द्धमासिकानि, द्वासप्ततिमितानि तु ॥ २३९ ॥
[5]भद्रादिप्रतिमास्तिस्रो, द्वादशाष्टमभक्ततः ।
प्रतिमाश्चैकरात्रिक्यः, षष्ठानां द्वे शते [6]तथा ॥ २४० ॥
एकोनत्रिंशदधिकं, तपः सर्वं जलोज्झितम् ।
चतुर्थं नित्यभक्तं च, न कदाचिदभूत् पुनः ॥ २४१ ॥

---

१ ख–'यथा' । २ क–'मुपलायितः' । ३ क–'षण्माननामनि' । ४ द्वादश ।
५ भद्र-महाभद्र-सर्वतोभद्राः २–४–१०दिनप्रमाणाः । ६ क–'पुनः' ।

आसीदेकोनपञ्चाशं, पारणाहः शतत्रयम् ।
व्रताहश्चेति षण्मासाः, पक्षो द्वादशवर्ष्यभूत् ॥ २४२ ॥
अथ'र्जुपालिका'ख्याया, नद्या उत्तररोधसि ।
श्यामाकाह्वस्य गृहिणः, क्षेत्रे सालतरोस्तले ॥ २४३ ॥
अव्यक्तचैत्यपार्श्वस्थे, मुहूर्ते विजयाह्वये ।
कृतषष्ठतपाः स्वामी, तस्था'वुत्कटिका'सने ॥ २४४ ॥–युग्मम्
वैशाखशुक्लदशम्या-मिन्दौ हस्तोत्तराश्रिते ।
दिनस्य पश्चिमे यामे, श्रीवीरः प्राप केवलम् ॥ २४५ ॥
न सर्वविरतिं कोऽपि, गन्ताऽत्रेति विदन्नपि ।
व्याख्यां समवसरणे, स्थितिरित्यकरोत् प्रभुः ॥ २४६ ॥
मातङ्गनामा यक्षोऽभूद्, गजयानोऽसितद्युतिः ।
बीजपूरं करे वामे, नकुलं दक्षिणे दधत् ॥ २४७ ॥
देवी सिद्धार्थि(यि)का चासी-दासीना गजवाहने ।
हरिच्छविः पुस्तकाढ्या-ऽभयदौ दक्षिणौ करौ ॥ २४८ ॥
वामौ तु दधती बीज-पूर-वल्लकिसंयुतौ ।
प्रभोरभूतां ते नित्या-सन्ने शासनदेवते ॥ २४९ ॥–विशेषकम्
पुरी'मपापां' प्रापाथो-ल्लङ्घ्य द्वादशयोजनीम् ।
दिनवन्निश्यपि स्वामी, द्युसदुद्योतैः स्फुटेऽध्वनि ॥ २५० ॥
'महासेन'वनोद्याने, तस्यां पुरि सुरैः कृतम् ।
स्वामी समवसरणं, पूर्वद्वाराऽविशत् ततः ॥ २५१ ॥
ततः प्रदक्षिणीकृत्य, द्वात्रिंशद्धनुरुन्नतम् ।
चैत्यद्रुं न्यषदत् तत्र, पूर्वसिंहासने प्रभुः ॥ २५२ ॥
तस्यां पुरि धनाढ्येन, सोमिलेन द्विजन्मना ।
भट्टेन क्रतुरारब्धो, मिलितास्तत्र याज्ञिकाः ॥ २५३ ॥
ईयु'र्मगध'देशीया, 'गोबर'ग्रामवासिनः ।
पृथिवीकुक्षिसम्भूता, वसुभूतिद्विजाङ्गजाः ॥ २५४ ॥

१ ख-'पालिका०'। २ क-'मालतरो०'। ३ क-'धनुर्भूति०'।

इन्द्रभूतिरग्निभूति-र्वायुभूरिति श्रुताः ।
गोत्रेण 'गौतमा'स्तत्र, त्रयोऽप्येते सहोदराः ॥ २५५ ॥
[1]'कोल्लकादीयतुर्व्यक्तो, वारुणीधनमित्रजः ।
सुधर्मा च तत्पितृव्यधम्मिल्ल[2]भद्रिकाभवः ॥ २५६ ॥
'[3]कोल्लाके' सन्निवेशेऽभूद्, विजया-धनदेवजः ।
मण्डिकस्तत्र जाते तु, धनदेवो व्यपद्यत ॥ २५७ ॥
तत्रैव धनदेवस्य, मातृष्वसृसुतोऽजनि ।
मौर्यनामा द्विजस्तस्य, परिणीता मृताङ्गना ॥ २५८ ॥
ततो विजयदेवाऽऽसीद्, देशाचारेण तत्प्रिया ।
तस्यां मौर्यात् सुतो जज्ञे, मौर्यपुत्र इति श्रुतः ॥ २५९ ॥
ईयतुस्तौ क्रतौ तत्र, त[4]थैव 'मिथिला'पुरः ।
आयादकम्पितस्तत्र, जयन्तीदेवविप्रजः ॥ २६० ॥
आययौ 'कोशला'पुर्या, वसुद्विजतनूद्भवः ।
अचलभ्राता नाम्नाऽसौ, नन्दाकुक्षिसमुद्भवः ॥ २६१ ॥
'वत्स'देशीय'तुङ्गिक'-सन्निवेशनिवासतः ।
आगतस्तत्र मेतार्यो वरुणा[5]दत्तविप्रजः ॥ २६२ ॥
अतिभद्राकुक्षिभवो, बलविप्रस्य नन्दनः ।
प्रभासनामा यज्ञेऽत्र, प्राप्तो 'राजगृहा'त् पुरात् ॥ २६३ ॥
एकादशाप्यमी विप्राः, छिन्नजीवादिसंशयाः ।
स्वामिना दीक्षिताः कृत्वा, निःसन्देहाः पृथक् पृथक् ॥ २६४ ॥
प्रत्येकं तेषु पञ्चाद्याः, शिष्यपञ्चशतीवृताः ।
त्रिभिस्त्रिभिः शिष्यशतै-र्वृताः षड् दीक्षिताः पुनः ॥ २६५ ॥
एकादशेन्द्रभूत्याद्याः, प्रभोर्गणधरा इति ।
चन्दनाऽपि तदा तत्रो-पाध्याऽऽनीता सुरैः स्वयम् ॥ २६६ ॥
बह्वीभिर्नृपपुत्रीभिः, प्रभुणा दीक्षिता च सा ।
श्रावकत्वं नरा नार्यः, श्राविकात्वं प्रपेदिरे ॥ २६७ ॥

१ क-'कोल्लाकादीयतुव्यक्तो' । २ क-'भद्रिला०' । ३ ख-'कोल्लाकसन्निवेशे' ।
४ क-'तत्रैव' । ५ क-'दित्यमित्रजः' ।

एवं चतुर्विधः सङ्घः, श्रीवीरस्वामिनोऽभवत् ।
त्रिपद्या द्वादशाङ्गी च, गणभृद्भिरसूत्र्यत ॥ २६८ ॥
अकम्पिताऽचलभ्रात्रो–र्मैतार्याख्यप्रभासयोः ।
सदृशी वाचनाऽन्येषां, सप्तानां तु पृथक् पृथक् ॥ २६९ ॥
एकादश गणधरा, गणा नव पुनः प्रभोः ।
इत्यभूवन्नथान्यत्र, विजहार जगद्गुरुः ॥ २७० ॥
चतुर्दश सहस्राणि, समजायन्त साधवः ।
साध्व्यः शान्ताः सहस्राणि, षट्त्रिंशत्प्रमितानि तु ॥ २७१ ॥
चतुर्दशपूर्वधराः, श्रमणास्त्रिशती पुनः ।
समुत्पन्नावधिज्ञाना–स्त्रयोदश शतानि तु ॥ २७२ ॥
शतानि सप्त प्रत्येकं, जातवैक्रियलब्धयः ।
'अनुत्तर'गतिश्रेष्ठाः, केवलज्ञानिनस्तथा ॥ २७३ ॥
मनोविदां पञ्चशती, वादिनश्च चतुःशती ।
सैकोनषष्टिसहस्रा, लक्षैका श्रावकाः पुनः ॥ २७४ ॥
श्राविका लक्षत्रितय–मष्टादशसहस्रयुक् ।
इति जातः परीवारः, प्रभोर्विहरतः क्षितौ ॥ २७५ ॥
ततः पुर्या'मपापा'यां, सेव्यमानः सुरासुरैः ।
स्वायुःप्रान्तं परिज्ञाय, श्रीवीरः समवासरत् ॥ २७६ ॥
पृष्टः पञ्चमषष्ठार–स्वरूपं भगवांस्तथा ।
भावितीर्थकृतां जीवान्, गौतमाय न्यवेदयत् ॥ २७७ ॥
ततो विज्ञाय निर्वाण–समयं ज्ञातनन्दनः ।
हस्तिपालनृपालस्य, शुल्कशालां समाश्रयत् ॥ २७८ ॥
कार्त्तिकस्यामावस्यायां, निशायामन्तिमक्षणे ।
शशाङ्के स्वातिगे मुक्ति–काले शक्रः प्रभुं जगौ ॥ २७९ ॥
जिनेश! तव जन्मर्क्षं, गन्ता भंस्मकदुर्ग्रहः ।
बाधिष्यते स वर्षाणां, सहस्रे द्वे तु शासनम् ॥ २८० ॥
तस्य सङ्क्रमणं यावद्, विलम्बस्व ततः प्रभो! ।

१ अस्य कीदृशं स्वरूपमिति न ज्ञायते ।

भवत्प्रभाप्रभावेण, स यथा विफलो भवेत् ॥ २८१ ॥
स्वाम्यूचे शक्र! केनापि नायुः सन्धीयते क्वचित् ।
दुं:षमाभावतो बाधा, भाविनी मम शासने ॥ २८२ ॥
प्रबोध्येति सुधर्मेशं, त्रिंशद् वर्षाणि केवलात् ।
सार्द्धषण्मासहीनानि, प्रपाल्य परमेश्वरः ॥ २८३ ॥
द्वासप्ततिवत्सरायुः, पर्यङ्कासनमास्थितः ।
कृतषष्ठतपा मुक्ति-मेकाकी समुपेयिवान् ॥ २८४ ॥-युग्मम्
निशि तस्यां कृतो देवै-रुद्द्योतो रत्नदीपकैः ।
प्रतिवर्षं तदाद्येव, विश्वे दीपोत्सवोऽभवत् ॥ २८५ ॥
त्रिंशद्वर्षी गार्हस्थ्ये द्वि-चत्वारिंशत् समा व्रते ।
द्वासप्ततिवर्षाणीति, सर्वायुश्चरमार्हतः ॥ २८६ ॥
गते श्रीपार्श्वनिर्वाणात्, सार्द्धे वर्षशतद्वये ।
श्रीवीरस्वामिनो जज्ञे, महानन्दपदोदयः ॥ २८७ ॥

आनन्दास्वादसीमा सुजनजनहृदां भाग्यसौभाग्यसीमा
विश्वालीलोचनानां परमशमरसस्याद्भुतैश्वर्यसीमा ।
धर्मस्योल्लाससीमा शिवसुखपटलीसंश्रयोपायसीमा
श्राद्धानां शर्म संवर्द्धयतु जिनविभोर्वर्द्धमानस्य मूर्त्तिः ॥ २८८ ॥

इति वायटगच्छीयश्रीजिनदत्तसूरिशिष्यश्रीमदमरचन्द्रमहाकविविरचिते चतुर्विंशति-जिनेन्द्रसङ्क्षिप्तचरिते चतुर्विंशतितमं श्रीमहावीरजिनचरितं समाप्तम् ॥



---

१ क-'दुःखमाबाधतो भावा शंसिनी मम०' । २ मोक्षपदवीप्रादुर्भवः । ३ क-'इति श्रीजिनदत्तसूरिशिष्यसरस्वतीकण्ठाभरणवेणीकृपाणापर(नाम)पण्डितश्रीमदमरचन्द्रविरचितानि चतुर्विंशतिजिनेन्द्रचरितानि समाप्तानि ॥ ग्रन्थाग्रं २९६ ॥ ॥ २४ ॥' ।

## ख–परिशिष्टम्

# ॥ प्रकीर्णकम् ॥

### (१) षट्त्रिंशदायुधानि ।

चतुर्थे सर्गे द्वाविंशे पद्ये 'षट्त्रिंशदायुधधरा' इत्युल्लेखो वरीवर्ति । एतदभिधानानि टिप्पणरूपेण सूचितानि षट्षष्टितमे पृष्ठे । अत्र विशेषतः प्रमाणीभूतानि नामानि निर्दिश्यन्ते **द्व्याश्रय**[1] ( भा. २, स. ११, पृ. २८ )**काव्यस्य श्रीअभयतिलकगणि**गुम्फितायाष्टीकाया आधारेण । तथाहि—

"चक्र १ धनुः २ वज्र ३ खड्ग ४ क्षुरिका ५ तोमर ६ कुन्त ७ त्रिशूल ८ शक्ति ९ परशु १० मक्षिका ११ भल्लि १२ भिन्दिमा(पा)ल १३ मुष्टि १४ लुण्ठि १५ शङ्कु १६ पाश १७ पट्टिश १८ ऋष्टि १९ कणय २० कम्पन २१ हल २२ मुश(स)ल २३ गुलिका २४ कर्तरि २५ करपत्र २६ तरवारि २७ कुद्दाल २८ दुस्फोट २९ गोफणि ३० डाह ३१ डचूस ३२ मुद्गर ३३ गदा ३४ घन ३५ करवालिका ३६ इति ॥"

श्री**केशव**कृते **कल्पद्रुकोषे**[2] ( भा. १ पृ. १२४ ) षट्त्रिंशदायुधनामानि त्वेवम्—

"धनुः १ खड्गो २ गदा ३ चक्र ४ वज्र ५ खट्वाङ्ग ६ तोमराः ७ ।
यमदंष्ट्रा ८ क्षुरी[3] ९ मू(शू ?)लं १० कर्तरी ११ मुद्गरो १२ हलम् १३ ॥ ३२२॥
पाशो १४ ऽङ्कुशो १५ भिन्दिपालः १६ कणपः १७ पट्टिश १८ स्ततः ।
भुशुण्डी १९ शङ्ख २० मुसल २१ स्त(त्स ?)रु २२ गोफण २३ पत्रणाः २४ ॥३२३॥
दुःस्फोट २५ मक्षिका २६ डाह २७ डभसाः २८ करपत्रकः २९ ।
हुलिः ३० कुठारः ३१ परिघः ३२ कुन्तिः ३३ शक्तिश्च ३४ कर्त्तरी ३५ ॥३२४॥
यष्टिः ३६ शस्त्राणि षट्त्रिंशदमून्यायोधजीविनाम् ।"

**कौटिलीयेऽर्थशास्त्रे** द्वितीयाधिकरणे आयुधागाराध्यक्षेति नाम्नि प्रकरणे विविधानामायुधानां वर्णनं समस्ति, किन्तु षट्त्रिंशत् इति सञ्ज्ञा केषामायुधानामिति न तत्र दर्शितम् ।

श्री**माणिक्यचन्द्रसूरि**कृते **पृथ्वीचन्द्रचरित्रे** **वाग्विलासे**त्यपराह्वये

---

१ गीर्वाणभाषायां निबद्धमिदं महाकाव्यं 'मुम्बापुरी'स्थराजकीयग्रन्थमालायां प्रकाशितं शाके १८४३तमे वत्सरे । २ ग्रन्थोऽयं Gaekwad's Oriental Series इति सञ्ज्ञकग्रन्थमालायां प्रसिद्धिं गतः । ३ मुद्रिते ग्रन्थे क्षुरीमूलमिति संयुक्तरचनाऽस्ति, परन्त्वेवं सत्यामायुधानां प्रतिज्ञातसङ्ख्याया दुर्निर्वाहः ।

द्वितीये उल्लासे विद्यते षट्त्रिंशदायुधनिर्देशः, किन्तु ग्रन्थगौरवभयात् नायमत्रावतार्यते। एतदर्थं च विलोक्यतां **प्राचीनगुजरातीगद्यसन्दर्भः** (पृ. १३९)।

(२) चतुर्थसर्गगतस्य विंशे पद्ये उल्लिखितस्य त्रायस्त्रिंशस्य चतुर्णवतितमपद्य-निविष्टस्य सामानिकस्य षष्ठसर्गस्य २५९तमे पद्ये प्रयुक्तस्य चाहमिन्द्रस्य स्वरूपस्य रूपरेखा यथा—

"इन्द्राः सामानिकादिभेदानां नवानामधिपतयः परमैश्वर्ययुक्ताः। **सामानिका**स्त्विन्द्रतुल्या भवन्त्यायुष्कादिभिः, केवलमिन्द्रत्वं सकलकल्पाधित्वं नास्ति, शेषं समानम्, अतः समानस्थाने भवाः सामानिकाः 'समानस्य तदादेः' (**का.** वार्तिके) चेति वचनादौपसङ्ख्यानिकष्ठकू(ञ्) । अन्यस्यानिर्देशादिन्द्रैः सह समानभावः प्रत्यासन्नश्चेति, ते चामात्य-पितृ-गुरू-पाध्याय-महत्तरवद् द्रष्टव्याः, अमा सहार्थे, सह भवन्तीत्यमात्याः—कार्यालोचनसमर्थाः पिता गुरुरुपाध्यायो महत्तरश्च सर्व एते पूजनीयास्तद्वत् तेऽपि सामानिका इति । त्रयस्त्रिंशदेव त्रायस्त्रिंशाः स्वार्थेऽण् 'तद्धिताः' (**पा.** अ. ४, पा. १, सू. ७६) इति बहुवचननिर्देशादनुक्ततद्धितोत्पत्तिर्दृष्टशब्दान्वाख्यानाच्च, एते मन्त्रि-पुरोहितस्थानीयाः"।

—**तत्त्वार्थ**(अ. ४, सू. ४)स्य बृहद्वृत्तौ (पृ. २७५–२७६)

नवग्रैवेयकपञ्चानुत्तरवासिनो देवाः परस्परं न परतन्त्राः, न कोऽपि कस्यचिदन्यस्य स्वामी, सर्वेऽपि इन्द्रतुल्याः, अतस्तेषां प्रत्येकस्याहमिन्द्रेति सञ्ज्ञा समस्ति।

(३) **अप्सरसां नामावली**[1]।

नवमे सर्गे २७ तमात् पद्यात् ३३ तमपद्यपर्यन्तेषु कतिपयानामप्सरसामभिधानानि दरीदृश्यन्ते। तत्परत्वे **व्याडि**कोशादिगतानि प्रास्ताविकानि पद्यान्युद्धृतानि मया १९७ तमे पृष्ठे। अधुनाऽत्र श्री**भरत**मुनिप्रणीते **नाट्यशास्त्रे** प्रथमेऽध्यायेऽप्सरसां यानि नामानि सन्ति तेषामुल्लेखः क्रियते। यथाहि—

"मञ्जुकेशीं **सुकेशीं** च, मिश्रकेशीं सुलोचनाम्।
सौदामिनीं देवदत्तां, देवसेनां मनोरमाम् ॥ ४८ ॥
सुदतीं सुन्दरीं चैव, विदग्धां विविधां तथा।
सुमालां सन्ततिं चैव, सुनन्दां **सुमुखीं** तथा ॥ ४९ ॥

---

१ **महाभारत**गताप्सरसां नामार्थं प्रेक्ष्यतां Adolf Hortzmann इति नामधेयानां महानुभावानां 'The Mahabharat Apsaras' इति सञ्ज्ञात्मको लेखो यो Z. D. M. G. (vol. 33, pp. 631–644) इत्याह्वे ग्रन्थे प्रसिद्धिं गतः T. R. Krishnāchārya इति महोदयानां च 'An alphabetical Index of Sriman Mahabharatam' नाम ग्रन्थः।

मागधीमर्जुनीं चैव, सरलां केरलान्धनीम् ।
नन्दां सुपुष्पमालां च, कलभां चैव निर्ममे ॥ ५० ॥"

**कल्पद्रुकोषे** ( भा· १ पृ· ३७२ ) अप्सरोनामानि यथा—
"अथाकृत्यः शोभयन्त्य, ऊर्ज्यो विकुरयो रुचः ।
आप्लुवत्योऽमृतरुचो, वेगवत्यश्च भीरवः ॥ २६ ॥
रोचयन्त्यो बभ्रवश्च, भुवश्चेत्यप्सरोगणः ।
स्त्रियां बहुष्वप्सरसः, स्वर्वेश्या उर्वशीमुखाः ॥ २७ ॥
स्पर्शानन्दा रतिमदा, अपि स्युः सुदयात्मजाः ।
उरुवाशिन्र्युर्**वशी** स्याद्–र्वश्युरुवशी क्वचित् ॥ २८ ॥
अनुत्तमा सुरूपा च, **सुकेशी** च मनोवती ।
मेनका **सहजन्या** च, पर्णाशा पुञ्जिकस्थला ॥ २९ ॥
ऋतुस्थला **घृताची** च, विश्वाची पूर्ववि(चि ?)त्तिका ।
पञ्चचूडा सामवती, **चित्रलेखा** च सुप्रभा ॥ ३० ॥
मिश्रकेशी **सुगन्धिश्च**, विद्युत्स्पर्शा **तिलोत्तमा** ।
अदृश्या लक्ष्मणा क्षेमा–प्यसिता रुचिका तथा ॥ ३१ ॥
सुव्रता च सुबाहुश्च, सुबोधा सुवपुस्तथा ।
पुण्डरीकात्सुदाराश्च, सुदारा **सुरसा** तथा ॥ ३२ ॥
हेमा सरस्वती कामा, कमलाऽपि च सूनृता ।
सुमुखा हंसपादा च, वासोरी रतिलालसा ॥ ३३ ॥
इत्याद्यप्सरसो"

अपरञ्च E. Washburn Hopkins इत्येभिर्महाशयैः प्रणीते 'Epic Mythology' इत्याह्वे ग्रन्थे १६०तमे पृष्ठे आङ्ग्लभाषायामप्सरोनामावली सन्दृब्धा वर्तते । साऽवतार्यते । यथा—

अद्रिका, अद्रिकृतस्थली, अन्त्वद्या, अनुगा, अनूका, अनूचाना, अनूना, अनुम्लोचा, अम्बिका, अरुणा, अरुणप्रिया, अरूपा, अलम्बुषा, असिता, असुरा, इरा, उम्लोचा, उर्वरा, **उर्वशी,**[१] ऋतुस्थला, कर्णिका, काम्या, कुम्भयोनिः, केशिनी, क्षेमा, गन्धकाली, गुणमुख्या, गुणावरा, गोपाली, घृतस्थला, **घृताची,** चारुनेत्रा, चारुमध्या, चित्रा, चित्राङ्गदा, **चित्रलेखा,** चित्रसेना, जानपदी, जामी,

---

१ पद्मानन्दमहाकाव्यस्य नवमसर्गान्तर्गतेषु २७–३३ पद्येषु अप्सरसां यानि नामानि सन्ति तान्यत्र स्थूलमुद्राक्षरैर्दर्शितानि ।

**तिलोत्त**मा, दण्डगौरी, दान्ता, देवी, नन्दा, नागदत्ता, नागदन्ता, पञ्चचूडा, पर्णिका, पर्णिनी, पुञ्जिकस्थला, पुण्डरिका, पूर्वचित्तिः, प्रजागरा, प्रभा, प्रमाथिनी, प्रम्लोचा, प्रशमी, प्रियमुख्या, बुद्बुदा, भासी, भीमा, मधुरस्वना, मधुरस्वरा, मनुः, मनोरमा, मनोवती, मनोहरा, मरीचिः, मार्गणप्रिया, मालवी, मालिनी (?), मित्रा, मिश्रकेशी, मेनका, यामी, रक्षिता, रतिः, **रम्भा**, रुचिः, लक्षणा, लक्ष्मणा, लता, वंशा, वपुस्, वरानना, वरूथिनी, वर्गा, वामना, विद्युता, विद्युत्पर्णा, विद्योता, विप्रचित्तिः, विश्वाची, वुद्वुदा, **शारद्वती**, शुचिका, शुचिस्मिता, श्रविष्ठा, समीची, **सहजन्या**, सहा, **सुकेशी**, **सुगन्धा**, सुग्रीवी, सुप्रिया, सुबाहु, सुभगा, सुमध्या, **सुमुखी**, सुरजा, सुरता, सुरथा, सुरमा, **सुरसा**, सुरूपा, सुलोचना, सुवृत्ता, सोमा, सौरभेयी, सौरसेयी, स्वयम्प्रभा, हासिनी, हिमा, हेमदन्ता, हेमा ।

एवं विविधेष्वपि स्थलेषु समीक्षितेष्वपि अम्लोचिका-पूर्णिनी-मेनेति नामत्रितयं न दृष्टिपथमवतरतीति विचित्रता। यदि छन्दसः सानुकूल्यार्थं मेनकास्थाने मेनाप्रयोगो भवेत् तर्हि नामयुगलमेवान्वेषणीयम् । एवमम्लोचिकाया अम्लोचाया अभेदस्वीकारे [1]**महाभारते** आ[2]दिपर्वणि ११४तमेऽध्याये ५१२तमे पृष्ठे उम्लोचायाः पाठान्तर-($K_3$, $M_3$, v. l.) रूपेण 'अम्लोचा'शब्दो नयनगोचरीभवति ।

## (४) अष्टादश [3]श्रेणयः—

षोडशस्य सर्गस्य १९३ तमपद्यगतं 'अष्टादशभिः श्रेणी'त्युल्लेखमाश्रित्य किञ्चिदुच्यते। विविधाः श्रेणयो वर्तन्ते। तासु का अत्र अष्टादशसञ्ज्ञाधारिण्य इति सर्वमान्यो निर्णयो दुःशकः। अष्टादश श्रेणीत्युल्लेखः समस्ति षष्ठे जातके **मूगपक्खे** । विविधसाहित्यशिलालेखनिरीक्षणेनैकत्रीकृतानां श्रेणीनां च नामानि डॉ. **रमेशचन्द्र मजुम्दार** (Ramesh Chandra Majumdar, M. A., Ph. D.) कृते 'Corporate Life in ancient India' सञ्ज्ञे ग्रन्थे (पृ. १८–१९) सन्ति, यथाहि—

(1) Workers in wood. (Carpenters, including cabinet-makers, wheel-wrights, builders of houses, builders of ships and builders of vehicles of all sorts). (2) Workers in metal, including gold and silver. (3) Workers in stone. (4) Leather workers. (5) Ivory workers. (6) Workers fabricating hydraulic engines (Odayantrika). (7) Bamboo workers (Vasakara). (8) Braziers (Kasa-

१ प्राचीनविद्यासंशोधनमन्दिरात् प्रसिद्धचमाने । २ एतत्स्थलनिर्देशद्वाराऽनुगृहीतोऽस्मि Dr. V. Sukhthankar M. A., Ph. D., इत्येभिर्महाशयैः । ३ प्रेक्ष्यतां "Sir Asutosh Mookerjee Silver Jubilee Volumes. vol. III, orientalia" इति सञ्ज्ञात्मकस्य ग्रन्थस्य तृतीयो विभागः (पृ. १४०)।

kara). (9) Jewellers. (10) Weavers. (11) Potters. (12) Oilmillers (Tilapishaka). (13) Rush workers and basket makers. (14) Dyers. (15) Painters. (16) Corn-dealers (Dhaṁñika). (17) Cultivators. (18) Fisher folk. (19) Butchers. (20) Barbers and shampooers. (21) Garland makers and flower sellers. (22) Mariners. (23) Herdsmen. (24) Traders, includig caravan traders. (25) Robbers and freebooters. (26) Forest police who guarded the caravans. (27) Money-lenders.

**जम्बूद्वीपप्रज्ञप्तेः** श्रीशान्तिचन्द्रवाचकविहितायां **प्रमेयरत्नमञ्जूषा**-भिधायां टीकायां तु १९३तमे पृष्ठेऽष्टादशश्रेणिनिर्देशो यथा—

"अष्टादश श्रेणयश्चेमाः—

[1]कुंभार १ पट्टइल्ला २ सुवण्णकारा य ३ सूवकारा य ४ ।
गंधव्वा ५ कासवगा ६ मालाकारा य ७ कच्छकरा ८ ॥ १ ॥
तंबोलिआ ९ य एए नवप्पयारा य नारुआ भणिआ ।
अह णं णवप्पयारे कारुअवण्णे पवक्खामि ॥ २ ॥
चम्मयरु १ जंतपीलग २ गंछिअ ३ छिंपाय ४ कंसकारे ५ य ।
सीवग ६ गुआर ७ भिल्ला ८ धीवर ९ वण्णाइ अट्ठदस ॥ ३ ॥"

## (४) चान्द्रायणं व्रतम्

**तपोरत्नमहोदधौ** प्रथमे भागे त्रयोविंशे पृष्ठे चान्द्रायणप्रकारा एवम्—

"चान्द्रायणं च द्विविधं, प्रथमं यवमध्यकम् ।
द्वितीयं वज्रमध्यं तु, तयोश्चर्या विधीयते ॥
यवमध्ये प्रतिपदं, शुक्लामारभ्य वृद्धितः ।
एकैकयोर्ग्रासदत्त्यो, राकां यावत् समान(प ?)येत् ॥
ततः कृष्णप्रतिपद–मारभ्यैकैकहानितः ।
अमावास्यां तदेकत्वे, यवमध्यं च पूर्यते ॥

---

१ छाया—

कुम्भकाराः पट्टवन्तः (प्रधानकृषकाः) सुवर्णकाराश्च सूपकाराश्च ।
गान्धर्वाः काश्यपका (नापिता) मालाकाराश्च कच्छकराः ॥
ताम्बूलिकाश्च एते नवप्रकाराश्च नारुका भणिताः ।
अथ नवप्रकारान् कारुकवर्णान् प्रवक्ष्यामि ॥
चर्मकारो यन्त्रपीलको गन्छिकः छिम्पाकः कांस्यकारश्च ।
सूचिको गुआरः (?) भिल्लो धीवरो वर्णा अष्टादश ॥

वज्रमध्ये कृष्णपक्ष–मारभ्या प्रतिपत्तिथि ।
कार्या पञ्चदशग्रास–दत्तिभ्यां हानिरेकतः ॥
अमावास्याश्च परतो, ग्रासदत्तिं विवर्द्धयेत् ।
यावत् पञ्चदशैव स्युः, पौर्णमास्यां च मासतः ॥
एवं मासद्वयेन स्यात्, पूर्णं च यववज्रकम् ।
'चान्द्रायणं' यतेर्दत्तेः, सङ्ख्या ग्रासस्य गेहिनाम् ॥"

एकोनविंशे **पञ्चाशके**ऽपि—

"चंदायणाइय तहा अणुलोमविलोमओ तवोअवरे ।
भिक्खाकवलाण पुढो विण्णेओ वुड्ढिहाणीहिं ॥ १८ ॥
सुक्कंमि पडिवयाओ तहेव वुड्ढीए जाव पण्णरस ।
पंचदस पडिवयाहिं तो हाणी किण्ह पडिवक्खे ॥ १९ ॥
किण्हि पडिवय पण्णरस णाहाणीउ जाव इक्को उ ।
अवमस्स पडिवयाहिं वुड्ढीं पण्णरस पुण्णाए ॥ २० ॥
एत्तो भिक्खामाणं एगा दत्ती विचित्तरूवा वि ।
कुक्कुडिअंडयमेत्तं कवलस्स वि होइ विण्णेयं ॥ २१ ॥"

**पाराशरस्मृतेः** प्रायश्चित्तकाण्डस्य दशमाध्यायस्य माधवीयटीकायां ( पृ० २४१ ) यथा—

"द्विविधं चान्द्रायणं पिपीलिकामध्यं यवमध्यं च ।"

तद्विधिश्चायम्—

"अमावास्यां पौर्णमास्यां, व्रतं चान्द्रायणं चरेत् ।
ग्रासान् प्रवर्द्धयेत् सोमः, पञ्च पञ्च च पञ्च च ॥
एकैकं वर्द्धयेत् पिण्डं, शुक्ले कृष्णे च ह्रासयेत् ।
अमावास्यां न भुञ्जीत, एष 'चान्द्रायणो' विधिः ॥
एकैकं ह्रासयेत् पिण्डं, कृष्णे शुक्ले च वर्द्धयेत् ।
एतत् **पिपीलिकामध्यं**, 'चान्द्रायण'मुदाहृतम् ॥
वर्द्धयेत् पिण्डमेकैकं, शुक्ले कृष्णे च ह्रासयेत् ।
एत'च्चान्द्रायणं' नाम, **यवमध्यं** प्रकीर्तितम् ॥"

पुनरपि प्रकारान्तरेण चान्द्रायणं त्रिविधं ऋषिचान्द्रायणं, शिशुचान्द्रायणं यतिचान्द्रायणमिति तेषां स्वरूपं यम आह—

---

१ सन्तुल्यतां यदुक्तं **मनुस्मृतौ** ( अ. ११, श्लो. २१६–२१९ ) ।

त्रींस्त्रीन् पिण्डान् समश्नीया–न्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मास–मृषिचान्द्रायणं स्मृतम् ॥
चतुरः प्रातरश्नीया–च्चतुरः सायमेव च ।
पिण्डानेतद्धि बालानां, **शिशुचान्द्रायणं** स्मृतम् ॥
पिण्डानष्टौ समश्नीयान्–मासं मध्यन्दिने रवौ ।
**यतिचान्द्रायणं** ह्येतत्, सर्वकल्मषनाशनम् ॥"

## (५) कर्मचक्रवालतपः

कर्मचक्रवालतपो द्विविधं लघु, बृहच्च । लघु (**तपोरत्न॰** भा. १, पृ. ५) यथा—

"विधाय प्रथमं षष्ठं, षष्टिमेकान्तरांस्तथा ।
उपवासान् धर्मचक्रे, कुर्याद् त्र्यहयर्क(१२३)वासरे ॥"

बृहत्त्वेवम्—पूर्वमष्टमं ततश्चतुःषष्टिमुपवासानेकान्तरपारणाश्च । कुर्यात् प्रान्तेऽप्यष्टमम् । एवं ७० उपवासाः ६६ पारणाश्च ॥

## (६) द्वात्रिंशत्कल्याणकं तपः

एतत्स्वरूपं (**तपोरत्न॰** भा. १, पृ. ११०) यथा—

"उपवासत्रयं कृत्वा, द्वात्रिंशदुपवासकाः ।
एकभक्तान्तरास्तस्मा–दुपवासत्रयं वदेत् ॥"

## (७) आचाम्लवर्द्धमानतपः

अस्य स्वरूपं (**तपोरत्न॰** भा. १, पृ. ११६) एवम्—

"उपवासान्तरितानि च शतपर्यन्तं तथैकमारभ्य ।
वृद्ध्या निरन्तरया भवति तदा चाम्लवर्द्धमानं च ॥"



## ग–परिशिष्टम्

## छन्दःसूचिः

अनुष्टुप्—**१** १–१२७; **६**[1][१]; **७** १–६८९,[2](२); **१३** १–४४२,४५१,४५४,४५५,४५७,४६१, ४६६,४६७; **१४** ७५–८२, १०३–१०९, ११७, २०३, २०४, २०६, २२३(?), २२४, २४१, २४४, २४५, २४८,२५३, २५६–२६२, २६४,२७३–२७५, २७८–२८५,३०८; **१५** २२८–२४७,२५२–२५४, २५६–२६६; **१६** १–५७, ७९–२७९; **१७** ३९८,४००–४०५; **१८** १–७०, ७५–३२०; **१९** २७,३५,३७,३९,५४–५५,५८–५९.

आर्या—**१** १२८; **४** १–५,७–१०, १२–१९,२१–२३, २५–२७, ३०–३४, ३६,३७, ३९,४१, ४२, ४४–५४, ५६,५७, ५९–६३, ६५–७९, ८३,८४, ८७–९३, ९५–९७, ९९,१००, १०३–१०८, ११०–१२०,१२२–१३०,१३२–१५९,१६१–१७७,१७९, १८१–१९३,१९५–१९७,१९९–२०६, २०८–२१७, २१९, २२२–२३६, २३८–२४४; **१३** ४५०, ४५३, ४५८–४६०, ४६२–४६५; **१४** २१, २३, ४१–४३, ५१–५२, ६५, ८७–८८, ९१, ९५–१०१, १११, ११२,१४६, १६४,२२७, २३१,२३३–२३५, २३८–२४०, २४७, २८६–३०२, ३०४–३०७, ३०९–३१०; **१९** २८.

इन्द्रवंशा—**३** [3]१(?)–२३९; **८** १६४; **१०** ११४; **१४** ३–६, ८–१८,५७,५९,१०२, १३९, १६३,१८३,१८४,१९०–१९२,२७२; **१५** २४९,२५१; **१७** ३८१–३८३.

इन्द्रवज्रा—**२** २१, ३२,३३, ४२,५३, ६८, ७२,७५, ७९,८४, ८६,८८,९६, १०८,१२२, १२६, १३५, १३७, १६२, १७३, १७६, १८२,१८४, १९०, १९५,१९८, २१६,२२२, २२४, २३०, २४८, २५८,२६६,२७४,२७७,२७८,२८२,२८३,२८५,२९२,२९७,३०४,३२०; **६** ३–५,१७–१८,२०, २७,३०,५१, ५४–५५, ७२, ७६, ८९,९४,९६, १०२,१०५, ११३,११९,१२४, १२६,१२८,१३०–१३१, १३५, १४९–१५०, १५९, १६४–१६५, १७१,१७६, १८५,१८७, १९३,१९८,२११,२२२, २२८,२४१,२४६, २५४; **१४** २८, १४३,२२२,२२५–२२६, २३०,२५२,२५४; **१६** २८०; **१७** २६,३८, ५९,६१,६५,६९, ७२,७६,७९,८४,९१, १६४,१६९,१८४,१८७,१९०,१९८,२२२, २४१–२४२, २५५,२५९,२६१,२७१, ३११–३१२, ३१४,३१९,३२८, ३३०–३३१,३३३–३३४, ३४५–३४६, ३५३,३५८, **१७** ३६३,३६५,३७२; **१९** ५७.

उपजातिः—**२** १–२०, २२–३१,३४–४१, ४३–५२, ५४–६७, ६९–७१, ७३–७४, ७६–७८, ८०–८३,८५,८७,८९–९५,९७–१०७,१०९–१२१,१२३–१२५,१२७–१३४,१३६,१३८–१५३, १५५–१६१,१६३–१७२, १७४–१७५,१७७–१८१,१८३,१८५–१८९,१९१–१९४,१९६,१९७, १९९–२१३, २१५,२१७,२१८,२२०,२२१,२२३, २२५–२२९,२३१–२३३, २३५–२४७,२४९–२५७,२५९–२६५,२६७–२६९,२७१–२७३, २७५,२७६,२७९–२८१,२८४, २८६–२९१,२९३–२९६, २९८–३०३, ३०५–३१९, ३२१–३२४; **६** १–२, ६–१६, १९, २१, २३–२६, २८–२९, ३१–५०, ५२–५३, ५६–७१, ७३–७५, ७७–८८, ९०–९३, ९५, ९७–१०१, १०३–१०४, १०६–११२,११४–११७, १२०–१२३,१२७,१२९, १३२–१३४,१३६–१४८,१५१–१५३,१५५–१५८, १६०–१६३,१६६–१७०,१७२–१७५, १७७–१८१,१८३–१८४,१८६,१८८–१९२,१९४–१९७, १९९–२००,२०२–२०८,२१०,२१२–२२१,२२४–२२७,२२९–२४०,२४२–२४५,२४७–२५८;

१ अनेन सूच्यते पद्यस्य प्रक्षिप्तप्रायत्वम्। २ धनुश्चिह्नेन सूच्यते यदुतैतत् पद्यं सर्गान्ते वर्तते। ३ क्वचित् क्वचित् संशयो वर्तते इत्यनेन सूच्यते।

## घ-परिशिष्टम्

# पद्मानन्दमहाकाव्यान्तर्गतानां पद्यानामकाराद्यनुक्रमः

* एतच्चिह्नाङ्कितानि पद्यानि सर्गप्रान्तस्थानि ।

१ एकोनविंशसर्गप्रान्तेऽपीदमेव पद्यं वर्तते ।

१-२ अनयोः पद्ययोरग्रिमचरणद्वयस्य समानता ।

